विश्वेश्वरानन्द-वैदिकशोध-संस्थान-प्रकाशनम् —३३२
V. V. Research Institute Publication —332



विश्वेश्वरानन्द-भारतभारती-ग्रन्थमाला—२४
Vishveshvaranand Indological Series—24




संपादकः — विश्वबन्धुः
Editor — VISHVA BANDHU



भारते होशिआरपुरे वि. वै. शो. सं. मुद्रागृहे ।
शास्त्रिणा देवदत्तेन संमुद्राप्य प्रकाश्यते ॥
Printed and Published by DEV DATTA SHASTRI
at the V. V. R. I. Press, Hoshiarpur (Pb., India)

V. I. Series—24

# ṚGVEDA

*with*

**The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, the Vyākhyā by Veṅkaṭamādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya**

*Edited,*

**Critically, and annotated with text-comparative data from original manuscripts and other available materials**

*By*

**VISHVA BANDHU**

*In collaboration with*

BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI ŚĀSTRĪ AND PĪTĀMBAR DATTA

## PART VI

**(Maṇḍala-s IX and X, 1-45)**

**HOSHIARPUR**

**Vishveshvaranand Vedic Research Institute**

**1964**

वि. भाभा. ग्रन्थमाला—२४

# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं **स्कन्दस्वाम्युद्गीथीये** भाष्ये, **वेङ्कटमाधवीया**
व्याख्या, **सायणभाष्यानुसारिणी मुद्गलीया** वृत्तिर् इत्येतैश्च
पाठविमर्शौपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त
इत्येषां सायुज्यभाजा

**विश्वबन्धुना**

संपादितः



तत्र चाऽयं

**नवममण्डलादितो दशममण्डलस्य १-४५ सूक्तान्तः**

**षष्ठो भागः**

होशिआरपुरम्

विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्

२०२१ वि.

प्रथमं संस्करणम्, २०२१ वि.

प्रकाशकृत् — विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,

साधु-आश्रमः (प. गृ.), होशिआरपुरम् (पं., भारतम्)।



FIRST EDITION, 1964

*Publishers :*

**Vishveshvaranand Vedic Research Institute,**

**Sadhu Ashram (P.O.), Hoshiarpur (Pb. India)**






Prepared and Published under the Patronage of the Government of India in the erstwhile Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

अथ

# ऋग्वेदे सभाष्ये

नवममण्डलादितो दशममण्डलस्य १-४५ सूक्तान्तः

षष्ठो भागः

अथ

# ऋग्वेदे सभाष्ये

## नवमं मण्डलम्

वेङ्कट० नवमं मण्डलं सर्वं पावमानं सौम्यम् । त एव ऋषयः अपश्यन् । अहीनैकाहसत्राणां पावमानेषु सर्वाण्येव सूक्तानि पृथग् विनियुक्तानि । तत्तदहोऽनुगुणैः प्रकृतिभिः प्रत्ययैः देवताभिः छन्दोभिः विन्यासैश्च युक्तानि । तदिदं सर्वं शाट्यायनके अवगन्तव्यम् इति ।

### [ १ ]

[1]मधुच्छन्दा वैश्वामित्र ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥ १ ॥

स्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया । इन्द्राय । पातवे । सुतः ॥ १ ॥[2]

वेङ्कट० मधुच्छन्दा ऋषिः । स्वादुतमया[3] अत्यन्तमादयित्र्या क्षर[4] सोम! त्वम् धारया इन्द्राय[5] पातुम् अभिषुतः ॥ १ ॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहतम् । द्रुणा सधस्थमासदत् ॥ २ ॥

रक्षःऽहा । विश्वऽचर्षणिः । अभि । योनिम् । अयःऽहतम् । द्रुणा । सधऽस्थम् । आ । असदत् ॥ २ ॥

वेङ्कट० रक्षसां हन्ता सर्वस्य [6]द्रष्टा अभि आ सीदति[6] अभिषवस्थानं हिरण्येन हतम् । 'हिरण्यपाणिरभिषुणोति' इति हि ब्राह्मणम् । द्रोणकलशेन सह स्वं स्थानम् आसीदति[7] । यद्वा अधिषवणफलकाभ्यां सह इति ॥ २ ॥

वरिवोधातमो भव मंहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥ ३ ॥

वरिवःऽधातमः । भव । मंहिष्ठः । वृत्रहन्ऽतमः । पर्षि । राधः । मघोनाम् ॥ ३ ॥

वेङ्कट० अत्यन्तं धनस्य [8]दाता भव[8] दातृतमः वृत्रहन्तमः[8] । प्रयच्छ धनम् आढ्यानाम् स्वभूतम्[9] अस्मभ्यं चेति ॥ ३ ॥

अभ्यर्ष महानां देवानां वीतिमन्धसा । अभि वाजमुत श्रवः ॥ ४ ॥

अभि । अर्ष । महानाम् । देवानाम् । वीतिम् । अन्धसा । अभि । वाजम् । उत । श्रवः ॥ ४ ॥

---

१-१. नास्ति मूको. २. एष निगमः या. (११,३) द्र. ३. °तया वि[2] अ[1]. ४. अक्षर वि[2] अ[1]. ५. इन्द्रयवि[2] अ[1]. ६-६. °ष्टाभासीत् अति वि[2] अ[1]. ७. °तु वि[1]. ८. °म वि[2] अ[1]. ९. धनाभू° वि[2] अ[1].

वेङ्कट० अभि गच्छ रसात्मकेन अन्नेन सह महताम् देवानाम्[1] यज्ञम्। अभिगच्छन् च बलम् अन्नं च अभि गमयेति ॥ ४ ॥

त्वामच्छा चरामसि तदिदर्थं दिवेदिवे । इन्दो त्वे न आशसः ॥ ५ ॥

त्वाम् । अच्छ । चरामसि । तत् । इत् । अर्थम् । दिवेऽदिवे । इन्दो इति । त्वे इति । नः । आऽशसः ॥

वेङ्कट० त्वाम् प्रति वयं चरामः। तत् एव अन्वहम् अस्माकं कार्यम्। इन्दो! त्वयि अस्माकम् आशंसनानि ॥ ५ ॥

[2]इति षष्ठाष्टके सप्तमाध्याये षोडशो वर्गः[2] ॥

पुनाति ते परिस्रुतं सोमं सूर्यस्य दुहिता । वारेण शश्वता तना ॥ ६ ॥

पुनाति । ते । परिऽस्रुतम् । सोमम् । सूर्यस्य । दुहिता । वारेण । शश्वता । तना ॥ ६ ॥

वेङ्कट० ते क्षरन्तम् सोमम् सूर्यस्य दुहिता पुनाति[3]। अत्र वाजसनेयकम्— 'श्रद्धा वै सूर्यस्य दुहिता। श्रद्धा ह्येनं पुनाति' ( तु. माश १२,७,३,११ ) इति। वालमयेन दृढेन वस्त्रेण। 'वालेन हि सोमं पुनन्ति' ( तु. माश १२,७,३,११ ) इति ब्राह्मणम् ॥ ६ ॥

तमीमण्वीः समर्य आ गृभ्णन्ति योषणो दश । स्वसारः पार्ये दिवि ॥ ७ ॥

तम् । ईम् । अण्वीः[4]। सऽमर्ये । आ । गृभ्णन्ति । योषणः । दश । स्वसारः[4]। पार्ये । दिवि ॥७॥

वेङ्कट० तम् एनम् अङ्गुलयः समनुष्ये यज्ञे आ[3] गृह्णन्ति दश स्त्रियः स्वयं सरन्त्यः[5] [6]सौत्ये अह्नि[6] ॥ ७ ॥

तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम् । त्रिधातु वारणं मधु ॥ ८ ॥

तम् । ईम् । हिन्वन्ति । अग्रुवः[4]। धमन्ति । बाकुरम् । दृतिम् । त्रिऽधातु । वारणम् । मधु ॥ ८ ॥

वेङ्कट० तम् एनं प्रेरयन्ति अङ्गुलयः, धमन्ति[7] वाकुरम् दृतिम् भास्करम्। भासमानं दृतिसदृशम् अंशुम् अभिषुण्वन्तीत्यर्थः। तत् इदम् मधु त्रिधातु भवति शत्रूणां वारकम्। द्रोणकलश आधवनीयः पूतभृत् इति त्रिधातवः ॥ ८ ॥

अभी३ममघ्न्या उत श्रीणन्ति धेनवः शिशुम् । सोममिन्द्राय पातवे ॥ ९ ॥

अभि । इमम् । अघ्न्याः । उत । श्रीणन्ति । धेनवः । शिशुम् । सोमम् । इन्द्राय । पातवे ॥ ९ ॥

वेङ्कट० अभि श्रीणन्ति एनम् शिशुम् गावः अहन्तव्याः सोमम् इन्द्रस्य पातुम् ॥ ९ ॥

---

१. देवतानाम् वि[२] अ[१]. २-२. नास्ति मूको. ३. नास्ति मूको. ४. तु. निघ २,५. ५. °न्तः वि[१]. ६-६. स्नुत्ये नहि वि[२] अ[१]; स्युत्ये दिवि वि[१]. ७ नास्ति वि[१].

अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते । शूरो मघा च मंहते ॥ १० ॥

अस्य । इत् । इन्द्रः । मदेषु । आ । विश्वा । वृत्राणि । जिघ्नते । शूरः । मघा । च । मंहते ॥१०॥

**वेङ्कट०** अस्य एव इन्द्रः मदेषु विश्वान् शत्रून् हन्ति । शूरः[1] शृणातेः[2] । धनानि च प्रयच्छति[3] ॥ १० ॥

[4]इति षष्ठाष्टके सप्तमाध्याये सप्तदशो वर्गः[4] ॥

[ २ ]

[4]मेधातिथिः काण्व ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

पवस्व देववीरति पवित्रं सोम रंह्या । इन्द्रमिन्दो वृषा विश ॥ १ ॥

पवस्व । देवऽवीः । अति । पवित्रम् । सोम । रंह्या । इन्द्रम् । इन्दो इति । वृषा । आ । विश ॥१॥

**वेङ्कट०** मेधातिथिः । षष्ठेऽहनि बहिष्पवमानम् । अति क्षर[5] देवकामः पवित्रम् सोम![6] वेगेन । अथ इन्द्रम् इन्दो![7] वृषा आ विश ॥ १ ॥

आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः । आ योनिं धर्णसिः सदः ॥ २ ॥

आ । वच्यस्व । महि । प्सरः । वृषा । इन्दो इति । द्युम्नवत्ऽतमः । आ । योनिम् । धर्णसिः । सदः ॥ २ ॥

**वेङ्कट०** आ गमय महत् पानीयान्धः वृषा इन्दो! यशस्वितमः, आ सीद च स्थानम् धर्ता ॥ २ ॥

अधुक्षत प्रियं मधु धारा सुतस्य वेधसः । अपो वसिष्ट सुक्रतुः ॥ ३ ॥

अधुक्षत । प्रियम् । मधु । धारा । सुतस्य । वेधसः । अपः । वसिष्ट । सुऽक्रतुः ॥ ३ ॥

**वेङ्कट०** दुग्धे प्रियम् मधु अभिषुतस्य विधातुः सोमस्य धारा । सोऽयं सोमः वसतीवरीः आच्छादयति सुक्रतुः ॥ ३ ॥

महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः । यद्गोभिर्वासयिष्यसे ॥ ४ ॥

महान्तम् । त्वा । महीः । अनु । आपः । अर्षन्ति । सिन्धवः । यत् । गोभिः । वासयिष्यसे ॥४॥

**वेङ्कट०** महान्तम् त्वा[8] महत्यः आपः अनु गच्छन्ति स्यन्दमानाः, यदा त्वं यज्ञे गोविकारैः आच्छादयिष्यसे ॥ ४ ॥

समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः । सोमः पवित्रे अस्मयुः ॥ ५ ॥

समुद्रः । अप्ऽसु । ममृजे । विष्टम्भः । धरुणः । दिवः । सोमः । पवित्रे । अस्मऽयुः ॥ ५ ॥

---

१. शूर मूको. २. शृणो° वि[2] अ[1]. ३. °न्ति वि[2]. ४-४. नास्ति मूको. ५. रक्ष वि[1] अ[1]. ६. °मम् मूको. ७. इन्द्रो मूको. ८. त्वा वि[1].

वेङ्कट० समुद्रः[1] समुद्द्रवत्यस्माद् रस इति (तु. या २,१०)। सः अप्सु मृज्यते[2] विष्टम्भः धर्ता दिवः। सोमः पवित्रे च अभिषिच्यते अस्मत्कामः[3] ॥ ५ ॥

[4]इति षष्ठाष्टके सप्तमाध्याये अष्टादशो वर्गः[4] ॥

अचिक्रदद् वृषा हरिर्महान् मित्रो न दर्शतः। सं सूर्येण रोचते ॥ ६ ॥

अचिक्रदत्। वृषा। हरिः। महान्। मित्रः। न। दर्शतः। सम्। सूर्येण। रोचते ॥ ६ ॥

वेङ्कट० शब्दं करोति वृषा हरितवर्णः महान् सखा इव दर्शनीयः, यः सम्[5] रोचते सूर्येण दिवि सह इति ॥ ६ ॥

गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः। याभिर्मदाय शुम्भसे ॥ ७ ॥

गिरः। ते। इन्दो इति। ओजसा। मर्मृज्यन्ते। अपस्युवः। याभिः। मदाय। शुम्भसे ॥ ७ ॥

वेङ्कट० स्तुतयः ते इन्दो! बलेन शोध्यन्ते कर्मेच्छोः[6] स्वभूताः, याभिः त्वम् मदाय क्षरन् अलङ्क्रियसे ॥ ७ ॥

तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे। तव प्रशस्तयो महीः ॥ ८ ॥

तम्। त्वा। मदाय। घृष्वये। ऊँ इति। लोकऽकृत्नुम्। ईमहे। तव। प्रऽशस्तयः। महीः ॥८॥

वेङ्कट० [7]तम् त्वा[7] मदाय शत्रूणां घर्षणशीलाय[8] उत्तमस्य लोकस्य[9] कर्तारम् याचामहे। तव प्रशंसाः महत्यः ॥ ८ ॥

अस्मभ्यमिन्दविन्द्रयुर्मध्वः पवस्व धारया। पर्जन्यो वृष्टिमाँ इव ॥ ९ ॥

अस्मभ्यम्। इन्दो इति। इन्द्रऽयुः। मध्वः। पवस्व। धारया। पर्जन्यः। वृष्टिमान्ऽइव ॥ ९ ॥

वेङ्कट० अस्मभ्यम् इन्दो! त्वम् इन्द्रकामः मध्वः[10] पवस्व धारया पर्जन्यः वृष्टिमान् इव ॥ ९ ॥

गोषा इन्दो नृषा अस्यश्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः ॥ १० ॥

गोऽसाः। इन्दो इति। नृऽसाः। असि। अश्वऽसाः। वाजऽसाः। उत। आत्मा। यज्ञस्य। पूर्व्यः।

वेङ्कट० गवादीनां दाता भवसि त्वम् इन्दो! यज्ञस्य आत्मभूतः प्रत्नः ॥ १० ॥

[4]इति षष्ठाष्टके सप्तमाध्याये एकोनविंशो वर्गः[4] ॥

---

१. नास्ति मूको. २. ममृज्यते वि[1]; ममज्यते वि[2]. ३. तस्मात्कमः वि[2] अ[1]. ४-४. नास्ति मूको. ५. स अ[1]. ६. °च्छो वि[1]; °मेच्छिः वि[2]. ७-७. नास्ति वि[2] अ[1]; त त्वा वि[1]. ८. धर्ष° मूको. ९. नास्ति मूको. १०. मध वि[2] अ[1].

# [ ३ ]

[1]आजीगर्तिः शुनःशेपः, कृत्रिमो वैश्वामित्रो देवरात ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[1]।

एष देवो अमर्त्यः पर्णवीरिव दीयति । अभि द्रोणान्यासदम् ॥ १ ॥

एषः । देवः । अमर्त्यः । पर्णवीःऽइव । दीयति । अभि । द्रोणानि । आऽसदम् ॥ १ ॥

वेङ्कट० शुनश्शेपः। दशमे अहनि बहिष्पवमानम्। एषः देवः अमर्त्यः पक्षी इव गच्छति यज्ञेषु द्रोणकलशान् लक्ष्यीकृत्य[2] आसनाय ॥ १ ॥

एष देवो विपा कृतोऽति ह्वरांसि धावति । पवमानो अदाभ्यः ॥ २ ॥

एषः । देवः । विपा[3] । कृतः । अति । ह्वरांसि । धावति । पवमानः । अदाभ्यः ॥ २ ॥

वेङ्कट० एषः देवः अङ्गुल्या कृतः अति धावति शत्रून् पवमानः अहिंसितः ॥ २ ॥

एष देवो विपन्युभिः पवमान ऋतायुभिः । हरिर्वाजाय मृज्यते ॥ ३ ॥

एषः । देवः । विपन्युऽभिः । पवमानः । ऋतयुऽभिः । हरिः । वाजाय । मृज्यते ॥ ३ ॥

वेङ्कट० एषः देवः स्तोतृभिः पवमानः यज्ञकामैः अश्व इव सङ्ग्रामार्थम् मृज्यते[4] ॥ ३ ॥

एष विश्वानि वार्या शूरो यन्निव सत्वभिः । पवमानः सिषासति ॥ ४ ॥

एषः । विश्वानि । वार्या । शूरः । यन्ऽइव । सत्वऽभिः । पवमानः । सिसासति ॥ ४ ॥

वेङ्कट० एषः विश्वानि धनानि[5] शूरः गच्छन् इव बलैः पवमानः सम्भक्तुमिच्छति ॥ ४ ॥

एष देवो रथर्यति पवमानो दशस्यति । आविष्कृणोति वग्वनुम् ॥ ५ ॥

[6]एषः । देवः । रथर्यति[6] । पवमानः । दशस्यति । आविः । कृणोति । वग्वनुम् ॥ ५ ॥

वेङ्कट० एषः देवः रथं कामयते पवमानः, प्रयच्छति च अभिमतम्, प्रकटयति च अभियमाणः शब्दम् ॥ ५ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये विंशो वर्गः[1] ॥

एष विप्रैरभिष्टुतोऽपो देवो वि गाहते । दधद्रत्नानि दाशुषे ॥ ६ ॥

एषः । विप्रैः । अभिऽस्तुतः । अपः । देवः । वि । गाहते । दधत् । रत्नानि । दाशुषे ॥ ६ ॥

वेङ्कट० एषः विप्रैः अभिष्टुतः[7] वसतीवरीः देवः वि गाहते दधत् रत्नानि यजमानाय ॥ ६ ॥

---

१-१. नास्ति मूको. २. लक्ष्यी° अ[1]. ३. अङ्गुलिनाम (तु. निघ २,५). ४. ऋ° मूको. ५. धानि वि[2] अ[1]. ६-६. निगमो निर्वचनं च या. (६,२९) द्र. ७. अधितिष्ठतः वि[2] अ[1].

एष दिवं वि धावति तिरो रजांसि धारया । पवमानः कनिक्रदत् ॥ ७ ॥

एषः । दिवम् । वि । धावति । तिरः । रजांसि । धारया । पवमानः । कनिक्रदत् ॥ ७ ॥

वेङ्कट० एषः यज्ञात् दिवम् प्रति [1]वि धावति[1] तिरस्कुर्वन् लोकान् धारया पवमानः शब्दं कुर्वन् ॥ ७ ॥

एष दिवं व्यासरत् तिरो रजांस्यस्पृतः । पवमानः स्वध्वरः ॥ ८ ॥

एषः । दिवम् । वि । आ । असरत् । तिरः । रजांसि । अस्पृतः । पवमानः । सुऽअध्वरः ॥ ८ ॥

वेङ्कट० [2]एषः दिवम्[2] प्रति वि सरति तिरस्कुर्वन् रजांसि अहिंसितः[3] पवमानः सुयज्ञः ॥ ८ ॥

एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः । हरिः पवित्रे अर्षति ॥ ९ ॥

एषः । प्रत्नेन । जन्मना । देवः । देवेभ्यः । सुतः । हरिः । पवित्रे । अर्षति ॥ ९ ॥

वेङ्कट० एषः पुराणेन जन्मना देवः देवार्थम् अभिषुतो[4] हरितवर्णः[5] पवित्रे गच्छति ॥ ९ ॥

एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः । धारया पवते सुतः ॥ १० ॥

एषः । ऊँ इति । स्यः । पुरुऽव्रतः । जज्ञानः । जनयन् । इषः । धारया । पवते । सुतः ॥ १० ॥

वेङ्कट० सः[6] एषः बहुकर्मा जायमानः जनयन् अन्नानि धारया पवते अभिषुतः ॥ १० ॥

[1]इति षष्ठाष्टके सप्तमाध्याये एकविंशो वर्गः[1] ॥

## [ ४ ]

[1]हिरण्यस्तूप आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

सना च सोम जेषि च पवमान महि श्रवः । अथा नो वस्यसस्कृधि ॥ १ ॥

सन । च । सोम । जेषि । च । पवमान । महि । श्रवः । अथ । नः । वस्यसः । कृधि ॥ १ ॥

वेङ्कट० हिरण्यस्तूपः । भज च सोम!, जय च पवमान! महत् अन्नम् । अथ अस्मान्[7] श्रेयसः[8] कृधि[9] ॥ १ ॥

सना ज्योतिः सना स्व१र्विश्वा च सोम सौभगा । अथा नो वस्यसस्कृधि ॥२॥

सन । ज्योतिः । सन । स्वः । विश्वा । च । सोम । सौभगा । अथ । नः । वस्यसः । कृधि ॥२॥

वेङ्कट० प्रयच्छ ज्योतिः, प्रयच्छ च[6] स्वर्गम्, विश्वानि च सोम! सौभाग्यानि ॥ २ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[२] अ[१]. ३. अहित अ[१]. ४. °ता वि[२] अ[१]. ५. °र्णा वि[२] अ[१]. ६. नास्ति वि[१]. ७. अस्माकम् वि[१]. ८. श्रेयसे मूको. ९. नास्ति मूको.

सना दक्षमुत क्रतुमप सोम मृधो जहि । अथा नो वस्यसस्कृधि ॥ ३ ॥

सर्न । दक्षम् । उत । क्रतुम् । अप । सोम । मृधः । जहि । अर्थ । नः । वस्यसः । कृधि ॥३॥

वेङ्कट० सन बलम्, अपि च प्रज्ञानम्। अप[1] जहि च सोम! शत्रून् ॥ ३ ॥

पवीतारः पुनीतन सोममिन्द्राय पातवे । अथा नो वस्यसस्कृधि ॥ ४ ॥

पर्वितारः । पुनीतर्न । सोमम् । इन्द्राय । पातवे । अर्थ । नः । वस्यसः । कृधि ॥ ४ ॥

वेङ्कट० हे अभिषोतारः! अभिषुणुत[2] सोमम् इन्द्राय पातवे ॥ ४ ॥

त्वं सूर्ये न आ भज तव क्रत्वा तवोतिभिः । अथा नो वस्यसस्कृधि ॥ ५ ॥

त्वम् । सूर्ये । नः । आ । भज । तव । क्रत्वा । तव । ऊतिऽभिः । अर्थ । नः । वस्यसः । कृधि ॥५॥

वेङ्कट० त्वम् सूर्ये अस्मान् प्रापय तव प्रज्ञया तव[3] रक्षणैः च ॥ ५ ॥

[4]इति षष्ठाष्टके सप्तमाध्याये द्वाविंशो वर्गः[4] ॥

तव क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्यम् । अथा नो वस्यसस्कृधि ॥ ६ ॥

तव । क्रत्वा । तव । ऊतिऽभिः । ज्योक् । पश्येम । सूर्यम् । अर्थ । नः । वस्यसः । कृधि ॥६॥

वेङ्कट० तव प्रज्ञानेन तव ऊतिभिः च चिरम् पश्येम[5] सूर्यम् ॥ ६ ॥

अभ्यर्ष स्वायुध सोम द्विबर्हसं रयिम् । अथा नो वस्यसस्कृधि ॥ ७ ॥

अभि । अर्ष । सुऽआयुध । सोम । द्विऽबर्हसम् । रयिम् । अर्थ । नः । वस्यसः । कृधि ॥ ७ ॥

वेङ्कट० अभि गमय शोभनायुध! सोम! द्वयोः स्थानयोः परिवृढं[6] दिव्यं पार्थिवं च रयिम् ॥ ७ ॥

अभ्यर्षानपच्युतो रयिं समत्सु सासहिः । अथा नो वस्यसस्कृधि ॥ ८ ॥

अभि । अर्ष । अनपऽच्युतः । रयिम् । समत्ऽसु । ससहिः । अर्थ । नः । वस्यसः । कृधि ॥८॥

वेङ्कट० अभि गच्छ अनपच्युतः[7] शत्रुभिः रयिम् सङ्ग्रामेषु अभिभविता[8] ॥ ८ ॥

त्वां यज्ञैरवीवृधन् पवमान विधर्मणि । अथा नो वस्यसस्कृधि ॥ ९ ॥

त्वाम् । यज्ञैः । अवीवृधन् । पवमान । विऽधर्मणि । अर्थ । नः । वस्यसः । कृधि ॥ ९ ॥

वेङ्कट० त्वाम् यज्ञैः अवर्धयन् पवमान! विधारणार्थम् आत्मनः ॥ ९ ॥

---

१. भव मूको. २. °षुत मूको. ३. नास्ति वि[२] अ[१]. ४-४. नास्ति मूको. ५. अवश्यम् वि[२] अ[१]. ६. °वृल्हं वि[२]. ७. अनवच्युत मूको. ८. °तारः वि[२] अ[१].

रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर । अथा नो वस्यसस्कृधि ॥ १० ॥

रयिम् । नः । चित्रम् । अश्विनम् । इन्दो इति । विश्वऽआयुम् । आ । भर । अथ । नः । वस्यसः । कृधि ॥ १० ॥

**वेङ्कट०** रयिम् नः चित्रम् अश्ववन्तम्[1] इन्दो! सर्वगामिनम् आ हर इति ॥ १० ॥

[2]इति षष्ठाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[2] ॥

## [ ५ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः । आप्रीसूक्तम् (=आद्याया इध्मः समिद्धोऽग्निर्वा देवता, द्वितीयस्यास्तनूनपात्, तृतीयस्या इळः, चतुर्थ्या बर्हिः, पञ्चम्या देवीर्द्वारः, षष्ठ्या उषासानक्ता, सप्तम्या दैव्यौ होतारौ प्रचेतसौ, अष्टम्यास्तिस्रो देव्यः सरस्वतीळाभारत्यः, नवम्यास्त्वष्टा, दशम्या वनस्पतिः, एकादश्याः स्वाहाकृतयः)। गायत्री छन्दः, अन्त्याश्चतस्रोऽनुष्टुभः[3] ।

समिद्धो विश्वतस्पतिः पवमानो वि राजति । प्रीणन् वृषा कनिक्रदत् ॥ १ ॥

समऽइद्धः । विश्वतः । पतिः । पवमानः । वि । राजति । प्रीणन् । वृषा । कनिक्रदत् ॥ १ ॥

**वेङ्कट०** काश्यपः असितः देवलो वा । संदीप्तः[3] सर्वतः स्वामी पवमानः सोमः वि राजति प्रीणयन्[4] वर्षिता शब्दं कुर्वन् । आप्रीवत्सोमस्य स्तुतिः[5] ॥ १ ॥

तनूनपात् पवमानः शृङ्गे शिशानो अर्षति । अन्तरिक्षेण रारजत् ॥ २ ॥

तनूऽनपात् । पवमानः । शृङ्गे इति । शिशानः । अर्षति । अन्तरिक्षेण । रारजत् ॥ २ ॥

**वेङ्कट०** अपां पौत्रः सोमो भवति । 'अद्भ्योऽश्वो[6] जायन्ते, ततः सोमो जायते' । सः शृङ्गे तीक्ष्णीकुर्वन् गच्छति अन्तरिक्षेण गच्छन् द्रोणकलशं प्रति । 'द्वाभ्यां धाराभ्याम् आग्रायणं[7] गृह्णाति' ( तु. मै ४,६,४ ) इत्युक्तम् ॥ २ ॥

ईळेन्यः पवमानो रयिर्वि राजति द्युमान् । मधोर्धाराभिरोजसा ॥ ३ ॥

ईळेन्यः । पवमानः । रयिः । वि । राजति । द्युऽमान् । मधोः । धाराभिः । ओजसा ॥ ३ ॥

**वेङ्कट०** ईड्यः पवमानः दाता वि राजति दीप्तिमान् उदकस्य धाराभिः सह बलेन क्षरन् ॥ ३ ॥

बर्हिः प्राचीनमोजसा पवमानः स्तृणन् हरिः । देवेषु देव ईयते ॥ ४ ॥

बर्हिः । प्राचीनम् । ओजसा । पवमानः । स्तृणन् । हरिः । देवेषु । देवः । ईयते ॥ ४ ॥

---

१. °मन्तम् मूको. २-२. नास्ति मूको. ३. स° वि[२] अ[१]. ४. प्रियन् वि[२]; प्रीयन् अ[१].
५. °तिम् वि[२] अ[१]. ६. अद्भवोगवो मूको. ७. स्थाल्यग्रहणम् मूको.

**वेङ्कट०** बर्हिः प्राचीनाग्रम् बलेन यज्ञे स्तृणन् हरितवर्णः[1] देवः पवमानः देवेषु गच्छति । स्तृणन् स्तारयन्[2] इति ॥ ४ ॥

उदातैर्जिहते बृहद् द्वारो देवीर्हिरण्ययीः । पवमानेन सुष्टुताः ॥ ५ ॥

उत् । आतैः[3] । जिहते । बृहत् । द्वारः । देवीः । हिरण्ययीः । पवमानेन । सुऽस्तुताः ॥ ५ ॥

**वेङ्कट०** उद् गच्छन्ति दिग्भ्यः महतीभ्यः द्वारः देव्यः हिरण्मय्यः पवमानेन सोमेन सह सुष्टुताः[4] ॥५॥

[5]इति षष्ठाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[5] ॥

सुशिल्पे बृहती मही पवमानो वृषण्यति । नक्तोषासा न दर्शते ॥ ६ ॥

सुशिल्पे इति सुऽशिल्पे । बृहती इति । मही इति । पवमानः । वृषण्यति । नक्तोषसा । न । दर्शते इति ॥६॥

**वेङ्कट०** शोभनरूपे परिवृढे[6] महत्यौ पवमानः कामयते नक्तोषसौ[7] सम्प्रति दर्शनीये ॥ ६ ॥

उभा देवा नृचक्षसा होतारा दैव्या हुवे । पवमान इन्द्रो वृषा ॥ ७ ॥

उभा । देवा । नृऽचक्षसा । होतारा । दैव्या । हुवे । पवमानः । इन्द्रः । वृषा ॥ ७ ॥

**वेङ्कट०** उभौ देवौ मनुष्याणां द्रष्टारौ अहम् हुवे दैव्यौ[8] होतारौ । पवमानः भवति यज्ञे दीप्तः सोमः वृषा । तत्र यागार्थं[9] ह्वानम् इति ॥ ७ ॥

भारती पवमानस्य सरस्वतीळा मही ।
इमं नो यज्ञमा गमन् तिस्रो देवीः सुपेशसः ॥ ८ ॥

भारती । पवमानस्य । सरस्वती । इळा । मही ।
इमम् । नः । यज्ञम् । आ । गमन् । तिस्रः । देवीः । सुऽपेशसः ॥ ८ ॥

**वेङ्कट०** सोमस्य सम्बन्धिनम् अस्माकम् अमुम् यज्ञम् सुरूपाः तिस्रः देव्यः आ गच्छन्तु ॥ ८ ॥

त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे ।
इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः ॥ ९ ॥

त्वष्टारम् । अग्रऽजाम् । गोपाम् । पुरःऽयावानम् । आ । हुवे ।
इन्दुः । इन्द्रः । वृषा । हरिः । पवमानः । प्रजाऽपतिः ॥ ९ ॥

**वेङ्कट०** त्वष्टारम् अग्रेजातम् गोपायितारम्[10] पुरोगन्तारम् आ हुवे । इन्दुः स्वामी वर्षिता हरितवर्णः पवमानः भवति[11] प्रजानां[12] पालयिता ॥ ९ ॥

---

१. नास्ति मूको. २. धारयन् वि[1]; तारयन् वि[2] अ[1]. ३. दिङ्नाम ( तु॰ निघ १,६ ). ४. °ताम् वि[2] अ[1]; °ता वि[1]. ५-५. नास्ति मूको. ६. °बृहले वि[1]. ७. °षासा वि[2]; ग्रासौ वि अ[1]. ८. दे° मूको. ९. यज्ञार्थं अ[1]. १०. गोप° वि[2] अ[1]. ११. भवति दीप्त सोमः वृषा तत्र यागार्थं ह्वानम् इति भारती वि[2] अ[1]. १२. जानां वि[2] अ[1].

वनस्पतिं पवमान मध्वा समङ्ग्धि धारया ।
सहस्रवल्शं हरितं भ्राजमानं हिरण्ययम् ॥ १० ॥

वनस्पतिम् । पवमान । मध्वा । सम् । अङ्ग्धि । धारया ।
सहस्रऽवल्शम् । हरितम् । भ्राजमानम् । हिरण्ययम् ॥ १० ॥

**वेङ्कट०** वनस्पतिम् देवम् पवमान! मधुना [1]सम् अङ्ग्धि[1] धारामयेन[2] सहस्रशाखं[3] हरितवर्णम् भ्राजमानम् हिरण्मयवर्णम् ॥ १० ॥

विश्वे देवाः स्वाहाकृतिं पवमानस्या गत ।
वायुर्बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसः ॥ ११ ॥

विश्वे । देवाः । स्वाहाऽकृतिम् । पवमानस्य । आ । गत ।
वायुः । बृहस्पतिः । सूर्यः । अग्निः । इन्द्रः । सऽजोषसः ॥ ११ ॥

**वेङ्कट०** हे विश्वे देवाः! स्वाहाकृतिम् सोमस्य आ[4] गच्छत वाय्वादयः सङ्गताः[5] ॥ ११ ॥

[6]इति षष्ठाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[6] ॥

## [ ६ ]

[1]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

मन्द्रया सोम धारया वृषा पवस्व देवयुः । अव्यो वारेष्वस्मयुः ॥ १ ॥

मन्द्रया । सोम । धारया । वृषा । पवस्व । देवऽयुः । अव्यः । वारेषु । अस्मऽयुः ॥ १ ॥

**वेङ्कट०** मन्द्रया सोम! धारया वृषा त्वम् पवस्व देवकामः अवेः वालेषु दशापवित्रे अस्मत्कामः ॥१॥

अभि त्यं मद्यं मदमिन्दविन्द्र इति क्षर । अभि वाजिनो अर्वतः ॥ २ ॥

अभि । त्यम् । मद्यम् । मदम् । इन्दो इति । इन्द्रः । इति । क्षर । अभि । वाजिनः । अर्वतः ॥२॥

**वेङ्कट०** अभि क्षर[7] तं[8] मदहेतुम्[9] मदम् इन्दो! त्वम् इन्द्रः पाता इति कृत्वा । अभि क्षर च बलवतः अश्वान् अस्मभ्यम् ॥ २ ॥

अभि त्यं पूर्व्यं मदं सुवानो अर्ष पवित्र आ । अभि वाजमुत श्रवः ॥ ३ ॥

अभि । त्यम् । पूर्व्यम् । मदम् । सुवानः । अर्ष । पवित्रे । आ । अभि । वाजम् । उत । श्रवः ॥३॥

---

१. समदग्धि वि[2] अ[1]. २. सारा° वि[2] अ[1]; धार° वि[1]. ३. °ख वि[2] अ[1]. ४. नास्ति मूको. ५. °ता मूको. ६-६. नास्ति मूको. ७. रक्ष वि[1]. ८. कं वि[2]. ९. °तु वि[2] अ[1].

**वेङ्कट०** पूर्व्यम्[1] प्रत्नम्[2] अभि अर्ष तम् मदम्[3] सूयमानः[4] पवित्रे। अभि अर्ष बलम् अपि च अन्नम् ॥ ३ ॥

अनु द्रप्सास इन्दव आपो न प्रवतासरन् । पुनाना इन्द्रमाशत ॥ ४ ॥

अनु । द्रप्सासः । इन्दवः । आपः । न । प्रऽवता । असरन् । पुनानाः । इन्द्रम् । आशत ॥ ४ ॥

**वेङ्कट०** द्रुतगतयः[5] इन्दवः आपः इव प्रवणेन अनुगच्छन्ति । पुनानाः इन्द्रम् व्याप्नुवन्तु ॥ ४ ॥

यमत्यमिव वाजिनं मृजन्ति योषणो दश । वने क्रीळन्तमत्यविम् ॥ ५ ॥

यम् । अत्यम्ऽइव । वाजिनम् । मृजन्ति । [6]योषणः । दश[6] । वने । क्रीळन्तम् । अतिऽअविम् ॥ ५ ॥

**वेङ्कट०** यम् अश्वम् इव बलिनम् परिचरन्ति अङ्गुलयः दश वने क्रीडन्तम् अतिदशापवित्रम्[7] ॥ ५ ॥

[8]इति षष्ठाष्टके सप्तमाध्याये षड्विंशो वर्गः[8] ॥

तं गोभिर्वृषणं रसं मदाय देववीतये । सुतं भराय सं सृज ॥ ६ ॥

तम् । गोभिः । वृषणम् । रसम् । मदाय । देवऽवीतये । सुतम् । भराय । सम् । सृज ॥ ६ ॥

**वेङ्कट०** तम् गोविकारैः वर्षितारं देवम् रसम् देवानाम् मदाय पानाय च सुतम् सम् सृज सङ्ग्रामाय ॥ ६ ॥

देवो देवाय धारयेन्द्राय पवते सुतः । पयो यदस्य पीपयत् ॥ ७ ॥

देवः । देवाय । धारया । इन्द्राय । पवते । सुतः । पयः । यत् । अस्य । पीपयत् ॥ ७ ॥

**वेङ्कट०** देवः[9] देवाय धारया इन्द्राय पवते अभिषुतः, यत् अस्य सोमस्य इन्द्रम्[10] पयः आप्यायितवत्[11] ॥ ७ ॥

आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः । प्रत्नं नि पाति काव्यम् ॥ ८ ॥

आत्मा । यज्ञस्य । रंह्या । सुस्वानः । पवते । सुतः । प्रत्नम् । नि । पाति । काव्यम् ॥ ८ ॥

**वेङ्कट०** यज्ञस्य अस्य[12] आत्मभूतः वेगेन कामान् प्रेरयन् पवते अभिषुतः[13] सोमः[14] । प्रत्नम् च आत्मनः कवित्वम् अभिरक्षति ॥ ८ ॥

एवा पुनान इन्द्रयुर्मदं मदिष्ठ वीतये । गुहा चिद्दधिषे गिरः ॥ ९ ॥

---

१. °र्वेन् वि[2] अ[1]. २. नास्ति मूको. ३. मदम् प्रत्नम् मूको. ४. °न वि[2] अ[1]; °नं वि[1]. ५. °तनतयः वि[2] अ[1]. ६-६. तु. ऋ ९,१,७. ७. °वित्रे वि[1]. ८-८. नास्ति मूको. ९. °वा वि[1]. १०. °न्द्र वि[2] अ[1].; °न्द्रः वि[1]. ११. °तवान् वि[2]; °तवान् अ[1] वि[1]. १२. अपि वि[1]. १३ °षुततमः वि[2]. १४. °म वि[2] अ[1].

एव । पुनानः । इन्द्रऽयुः । मदम् । मदिष्ठ । वीतये । गुहा । चित् । दधिषे । गिरः ॥ ९ ॥

**वेङ्कट०** एवं क्षरन्[1] इन्द्रकामः मदम् मदिष्ठ![2] पानाय गुहायां च करोषि शब्दान् अभिषववेलायाम्[3] उपरवेषु ॥ ९ ॥

[4]इति षष्ठाष्टके सप्तमाध्याये सप्तविंशो वर्गः[4] ॥

## [ ७ ]

[4]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

**असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः । विदाना अस्य योजनम् ॥ १ ॥**

असृग्रम् । इन्दवः । पथा । धर्मन् । ऋतस्य । सुऽश्रियः । विदानाः । अस्य । योजनम् ॥ १ ॥

**वेङ्कट०** नवमेऽहनि बहिष्पवमानम् । सृज्यन्ते[5] सोमाः हविर्धानात् पथा कर्मणि यज्ञस्य शोभनश्रयणाः जानन्तः अस्य इन्द्रस्य योजनम् इति ॥ १ ॥

**प्र धारा मध्वो अग्रियो महीरपो वि गाहते । हविर्हविष्षु वन्द्यः ॥ २ ॥**

[6]प्र । धारा । मध्वः । अग्रियः । महीः । अपः । वि । गाहते[6] । हविः । हविष्षु । वन्द्यः ॥ २ ॥

**वेङ्कट०** (¿)प्र पतन्ति[7] धाराः सोमस्य मुख्याः(?) । महान्ति उदकानि[8] वसतीवरीः [9]वि गाहते[9] हविः सोमः हविषां मध्ये वन्द्यः ॥ २ ॥

**प्र युजो वाचो अग्रियो वृषाव चक्रदद्वने । सद्माभि सत्यो अध्वरः ॥ ३ ॥**

प्र । युजः । वाचः । अग्रियः । वृषा । अव । चक्रदत् । वने । सद्म । अभि । सत्यः । अध्वरः ॥ ३ ॥

**वेङ्कट०** प्र करोति युक्ताः वाचः मुख्यः । तदेवाह—वृषा सोमः अव क्रन्दति[9] उदके यज्ञगृहं प्रति सत्यः हिंसावर्जितः ॥ ३ ॥

**परि यत् काव्या कविर्नृम्णा वसानो अर्षति । स्वर्वाजी सिषासति ॥ ४ ॥**

परि । यत् । काव्या । कविः । नृम्णा । वसानः । अर्षति । स्वः । वाजी । सिसासति ॥ ४ ॥

**वेङ्कट०** परि गच्छति यदा काव्यानि कविः स्तोतॄणां धनानि आच्छादयन्[10], तदानीं स्वर्गं[11] वाजी सम्भक्तुमिच्छति ॥ ४ ॥

**पवमानो अभि स्पृधो विशो राजेव सीदति । यदीमृण्वन्ति वेधसः ॥ ५ ॥**

---

१. रक्षन् वि[२] अ[१]. २. ऊहिष्ठ वि[२] अ[१]. ३. °भिष्टुतवे° वि[२] अ[१]. ४-४. नास्ति मूको. ५. °ते मूको. ६-६. तु. ऋ ९,९८,३; ९९,७; ३,६. ७. °तप° वि[२] अ[१]. ८. °नि विगाहते मूको. ९. वन्दत मूको. १०. °य वि[२] अ[१]; यिता वि[१]. ११. °र्गम् वि[२] अ[१]; नास्ति वि[१].

पवमानः । अभि । स्पृधः । विशः । राजाऽइव । सीदति । यत् । ईम् । ऋण्वन्ति । वेधसः ॥५॥

**वेङ्कट०** पवमानः अभि नि सीदति स्पर्धमानान् शत्रून्, यथा राजा मनुष्यान् अभिनिषीदति, यदा एनं प्रेरयन्ति कर्तारः कर्मणाम् ॥ ५ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[1]।

अव्यो वारे परि प्रियो हरिर्वनेषु सीदति । रेभो वनुष्यते मती ॥ ६ ॥

अव्यः । वारे । परि । प्रियः । हरिः । वनेषु[2] । सीदति । रेभः । वनुष्यते । मती ॥ ६ ॥

**वेङ्कट०** अवेः वारे[3] परि नि सीदति प्रियः हरितवर्णः उदकेषु सम्पृक्तः[4]। शब्दं कुर्वन् स्तुत्या सेव्यते ॥ ६ ॥

स वायुमिन्द्रमश्विना साकं मदेन गच्छति । रणा यो अस्य धर्मभिः ॥ ७ ॥

सः । वायुम् । इन्द्रम् । अश्विना । साकम् । मदेन । गच्छति । रण । यः । अस्य । धर्मऽभिः ॥७॥

**वेङ्कट०** सः वाय्वादीन् सह मदेन गच्छति, यः यजमानः अस्य सोमस्य कर्मभिः रमते ॥ ७ ॥

आ मित्रावरुणा भगं मध्वः पवन्त ऊर्मयः । विदाना अस्य शक्मभिः ॥ ८ ॥

आ । मित्रावरुणा । भगम् । मध्वः । पवन्ते । ऊर्मयः । विदानाः । अस्य । शक्मऽभिः ॥ ८ ॥

**वेङ्कट०** मित्रादीन् प्रति मध्वः[5] ऊर्मयः आ पवन्ते । अस्य सोमस्य[6] एनं सोमं जानन्तः [7]जनाः सुखैः सङ्गच्छन्ते[7] ॥ ८ ॥

अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये । श्रवो वसूनि सं जितम् ॥ ९ ॥

अस्मभ्यम् । रोदसी इति । रयिम् । मध्वः । वाजस्य । सातये । श्रवः । वसूनि । सम् । जितम् ॥

**वेङ्कट०** अस्मभ्यम् हे द्यावापृथिव्यौ! धनम् मादयितुः अन्नस्य सोमात्मकस्य लाभाय [8]अन्नं धनानि च[8] सम् जयतम् इति ॥ ९ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः[1] ॥

## [८]

[1]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् । वर्धन्तो अस्य वीर्यम् ॥ १ ॥

---

१-१. नास्ति मूको. २. उदकनाम तु. (निघ १,१२). ३. वे वि[२] अ[१]. ४. संवृतः वि[२] अ[१]; संवृक्त वि[१]. ५. °ध्व वि[२] अ[१]. ६. °मस्य सुखैः मूको. ७-७. जना सङ्गः° मूको. ८-८. अन्न धनानिव मूको.

एते । सोमाः । अभि । प्रियम् । इन्द्रस्य । कामम् । अक्षरन् । वर्धन्तः । अस्य । वीर्यम् ॥ १ ॥

**वेङ्कट०** एते सोमाः अभि अक्षरन् प्रियम् इन्द्रस्य कामम् वर्धयन्तः अस्य वीर्यम्[1] ॥ १ ॥

पुनानासश्चमूषदो गच्छन्तो वायुमश्विना । ते नो धान्तु सुवीर्यम् ॥ २ ॥

पुनानासः । चमूऽसदः । गच्छन्तः । वायुम् । अश्विना । ते । नः । धान्तु । सुऽवीर्यम् ॥ २ ॥

**वेङ्कट०** अभिपूयमाणाः चमसेषु सीदन्तः गच्छन्तः वायुम्[2] अश्विनौ च ते नः यच्छन्तु सुवीर्यम् ॥२॥

इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय । ऋतस्य योनिमासदम् ॥ ३ ॥

इन्द्रस्य । सोम । राधसे । । पुनानः । हार्दि । चोदय । ऋतस्य । योनिम् । आऽसदम् ॥ ३ ॥

**वेङ्कट०** इन्द्रस्य सोम![3] संराधनाय अभिपूयमाणः अभिलषितम् चोदय, यज्ञस्य स्थानं यथा[4] इन्द्र आसीदति ॥ ३ ॥

मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः । अनु विप्रा अमादिषुः ॥ ४ ॥

मृजन्ति । त्वा । दश । क्षिपः[5] । हिन्वन्ति । सप्त । धीतयः । अनु । विप्राः । अमादिषुः ॥ ४ ॥

**वेङ्कट०** मृजन्ति त्वाम् दश अङ्गुलयः । प्रीणयन्ति त्वाम् सप्त होत्राः[6] । त्वां मेधाविनः अनु मादयन्ति ॥ ४ ॥

देवेभ्यस्त्वा मदाय कं सृजानमति मेष्यः । सं गोभिर्वासयामसि ॥ ५ ॥

देवेभ्यः । त्वा । मदाय । कम् । सृजानम् । अति । मेष्यः । सम् । गोभिः । वासयामसि ॥ ५ ।

**वेटङ्क०** देवानाम् मदार्थं त्वाम् अवेर्लोमानि [7]कम् उदकं (तु. निघ १,१२) च[7] अति सृजानम् सम् वासयामः गव्यैः ॥ ५ ॥

[7]इति षष्ठाष्टके सप्तमाध्याये त्रिंशो वर्गः[7] ॥

पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः । परि गव्यान्यव्यत ॥ ६ ॥

पुनानः । कलशेषु । आ । वस्त्राणि । अरुषः । हरिः । परि । गव्यानि । अव्यत ॥ ६ ॥

**वेङ्कट०** पूयमानः कलशेषु[8] निषिच्यमानः वस्त्राणि आरोचमानः हरितवर्णः परि आच्छादयति गव्यानि दध्यादीनि मिश्रणानि । तानि अस्य वासांसीव इति ॥ ६ ॥

मघोन आ पवस्व नो जहि विश्वा अप द्विषः । इन्दो सखायमा विश ॥ ७ ॥

---

१. सुवीर्यम् अ[1]. २. वा वि[2] अ[1]. ३. °मं मूको. ४. यदा वि[2] अ[1]. ५. तु. निघ २,५.
६. °त्राः वि[2] अ[1]. ७-७. नास्ति मूको. ८. कुशलेषु मूको.

मघोनः । आ । पवस्व । नः । जहि । विश्वाः । अप । द्विषः । इन्दो इति । सखायम् । आ । विश ॥७॥

**वेङ्कट०** **धनवतः** **अस्मान् प्रति** आ पवस्व । अप जहि **विश्वान्** **द्वेष्टॄन्** । इन्दो! सखायम् **इन्द्रम्** आ विश ॥ ७ ॥

**वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि । सहो नः सोम पृत्सु धाः ॥ ८ ॥**

वृष्टिम् । दिवः । परि । स्रव । द्युम्नम् । पृथिव्याः । अधि । सहः । नः । सोम । पृत्ऽसु । धाः ॥८॥

**वेङ्कट०** वृष्टिम् **द्युलोकात्** परि स्रव, **अन्नं च** पृथिव्याः **उत्थापय** । **बलम्** **अस्माकम्** [1]हे सोम![1] **सङ्ग्रामेषु** **धेहि**[2] ॥ ८ ॥

**नृचक्षसं त्वा वयमिन्द्रपीतं स्वर्विदम् । भक्षीमहि प्रजामिषम् ॥ ९ ॥**

नृऽचक्षसम् । त्वा । वयम् । इन्द्रऽपीतम् । स्वःऽविदम् । भक्षीमहि । प्रऽजाम् । इषम् ॥ ९ ॥

**वेङ्कट०** **नृणां द्रष्टारम्**[3] त्वा[4] वयम् इन्द्रपीतम् **सर्वज्ञम्** **पिबन्तः**[5] **भजेम** प्रजाम् **अन्नं च** ॥ ९ ॥

**[1]इति षष्ठाष्टके सप्तमाध्याये एकत्रिंशो वर्गः[1] ॥**

## [ ९ ]

**[1]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।**

**परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । सुवानो याति कविक्रतुः ॥ १ ॥**

परि । प्रिया । दिवः । कविः । वयांसि । नप्त्योः । हितः । सुवानः । याति । कविऽक्रतुः ॥ १ ॥

**वेङ्कट०** **चतुर्थेऽहनि आर्भवे** । परि याति **प्रियाणि द्युलोकस्य** कविः वयांसि **इति ब्राह्मणः आह** । '**श्येना अतिथयः पर्वतानां ककुभः**[6]' ( तैब्रा ३,७,९,१ ) **इति मन्त्रः** । **अधिषवणफलकयोः निहितः**[7] **अभिषूयमाणः क्रान्तप्रज्ञः** ॥ १ ॥

**प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहे । वीत्यर्ष चनिष्ठया ॥ २ ॥**

प्रऽप्र । क्षयाय । पन्यसे । जनाय । जुष्टः । अद्रुहे । वीती । अर्ष । चनिष्ठया ॥ २ ॥

**वेङ्कट०** प्र अर्ष **तव** **निवासभूताय** **अत्यन्तं स्तोत्रे** जनाय **पर्याप्तः** **अद्रोग्ध्रे** **भक्षणाय** **अन्नवत्तमया** **धारया** ॥ २ ॥

**स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् । महान् मही ऋतावृधा ॥ ३ ॥**

---

१-१. नास्ति मूको. २. देहि अ[1]. ३. त्वष्टा[?] वि[1]. ४. त्वाम् वि[1]. ५. °वतः मूको.
६. कुरुभः मूको. ७. नियुतः वि[3]; निष्टुतः अ[1]; निपुनः वि[1].

सः। सूनुः। मातरा। शुचिः। जातः। जाते इति। अरोचयत्। महान्। मही इति। ऋतऽवृधा ॥ ३ ॥

वेङ्कट० [1]सः पुत्रः[1] आत्मनो मातरौ द्यावापृथिव्यौ शुचिः जातः[2] जाते[3] जनयित्र्यौ रोचयति महान् महत्यौ यज्ञस्य वर्धयित्र्यौ ॥ ३ ॥

स सप्त धीतिभिर्हितो नद्यो अजिन्वदद्रुहः। या एकमक्षि वावृधुः ॥ ४ ॥

सः। सप्त। धीतिऽभिः[4]। हितः। नद्यः। अजिन्वत्। अद्रुहः। याः। एकम्। अक्षि। ववृधुः ॥ ४ ॥

वेङ्कट० सः सप्त [5]नदीः द्रोहवर्जिताः[5] अङ्गुलीभिः हितः प्रीणयति, याः [6]एनम् एकम्[6] अक्षीणम् वर्धयन्ति ॥ ४ ॥

ता अभि सन्तमस्तृतं महे युवानमा दधुः। इन्दुमिन्द्र तव व्रते ॥ ५ ॥

ताः। अभि। सन्तम्। अस्तृतम्। महे। युवानम्। आ। दधुः। इन्दुम्। इन्द्र। तव। व्रते ॥ ५ ॥

वेङ्कट० अङ्गुल्यः अभि आ दधुः सन्तम् अहिंसितम् महते कर्मणे युवानम् सोमं हे इन्द्र! तव कर्मणि[7] ॥ ५ ॥

[8]इति षष्ठाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः[8] ॥

अभि वह्निरमर्त्यः सप्त पश्यति वावहिः। क्रिविर्देवीरतर्पयत् ॥ ६ ॥

अभि। वह्निः। अमर्त्यः। सप्त। पश्यति। वावहिः। क्रिविः। देवीः। अतर्पयत् ॥ ६ ॥

वेङ्कट० अभि पश्यति वोढा[9] अमर्त्यः सप्त नदीः अत्यर्थं वोढा। [10]सोऽयम् क्रिविः[10] कूपः[11] ( तु. निघ ३,२३ ) देवीः नदीः तर्पयति ॥ ६ ॥

अवा कल्पेषु नः पुमस्तमांसि सोम योध्या। तानि पुनान जङ्घनः ॥ ७ ॥

अव। कल्पेषु। नः। पुमः। तमांसि। सोम। योध्या। तानि। पुनान। जङ्घनः ॥ ७ ॥

वेङ्कट० रक्ष अस्मान् कल्पनीयेषु अहस्सु हे पुमः!। तमांसि सोम! यः त्वं योधनीयानि युध्यसि, रक्षांसि तानि पुनान! विनाशय ॥ ७ ॥

नू नव्यसे नवीयसे सूक्ताय साधया पथः। प्रत्नवद्रोचया रुचः ॥ ८ ॥

नु। नव्यसे। नवीयसे। सुऽउक्ताय। साधय। पथः। प्रत्नऽवत्। रोचय। रुचः ॥ ८ ॥

---

१-१. सुपुत्रः वि[2] अ[1]. २. °तौ वि[2]. ३. °तः वि[2] अ[1]. ४. तु. निघ २,५. ५-५. नदी···भव° वि[2] अ[1]. ६-६. एकमेनम् वि[1]. ७. °मा° मूको. ८-८. नास्ति मूको. ९. वोल्हा वि[2]. १०-१०. सेयं कृते अ[1]. ११. नास्ति वि[1,2]; °पा अ[1].

वेङ्कट० क्षिप्रं नव्याय स्तुत्याय अस्माकम् सूक्ताय अभिगच्छ मार्गान्[1]। प्रत्नवत् यथापुरम् रोचय त्वा दीप्तीः[2] ॥ ८ ॥

पव॑मान॒ महि॒ श्रवो॒ गामश्वं॑ रासि वी॒रव॑त् । सना॑ मे॒धां स॒ना स्वः॑ ॥ ९ ॥

पव॑मान । महि॑ । श्रवः॑ । गाम् । अश्व॑म् । रा॒सि॒ । वी॒रऽव॑त् । सन॑ । मे॒धाम् । सन॑ । स्व१॒॑रिति॑ स्वः॑ ॥

वेङ्कट० पवमान! महत् अन्नम् पुत्रयुक्तम् गाम् अश्वम् प्रयच्छसि, स त्वं प्रयच्छ मेधाम्[3], प्रयच्छ सर्वम् इति ॥ ९ ॥

[4]इति षष्ठाष्टके सप्तमाध्याये त्रयस्त्रिंशो वर्गः[4] ॥

[ १० ]

[4]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

प्र स्वा॒नासो॒ रथा॑ इ॒वार्व॑न्तो॒ न श्र॑व॒स्यवः॑ । सोमा॑सो रा॒ये अ॑क्रमुः ॥ १ ॥

प्र । स्वा॒नासः॑ । रथाः॑ऽइव । अर्व॑न्तः । न । श्र॒व॒स्यवः॑ । सोमा॑सः । रा॒ये । अ॒क्र॒मुः॒ ॥ १ ॥

वेङ्कट० सप्तमे अहनि बहिष्पवमाने । [5]प्र अक्रमुः[5] स्वनन्तः रथाः इव अश्वाः इव च शत्रुभ्यः अन्नमिच्छन्तः सोमाः यजमानानां धनाय ॥ १ ॥

हि॒न्वा॒नासो॒ रथा॑ इव दधन्वि॒रे गभ॑स्त्योः । भरा॑सः का॒रिणा॑मिव ॥ २ ॥

हि॒न्वा॒नासः॑ । रथाः॑ऽइव । द॒ध॒न्वि॒रे । गभ॑स्त्योः[6] । भरा॑सः । का॒रिणा॑म्ऽइव ॥ २ ॥

वेङ्कट० गच्छन्तः[7] रथाः इव शीघ्रं बाह्वोः ध्रियन्ते[8] भाराः इव भारवाहानाम् हस्तयोः ॥ २ ॥

राजा॑नो॒ न प्रश॑स्तिभिः॒ सोमा॑सो॒ गोभि॑रञ्जते । य॒ज्ञो न स॒प्त धा॒तृभिः॑ ॥ ३ ॥

राजा॑नः । न । प्रश॑स्तिऽभिः । सोमा॑सः । गोभिः॑ । अ॒ञ्ज॒ते॒ । य॒ज्ञः । न । स॒प्त । धा॒तृऽभिः॑ ॥ ३ ॥

वेङ्कट० राजानः इव प्रशस्ताभिः स्तुतिवाग्भिः सोमाः गोभिः अज्यन्ते, यज्ञः इव च सप्तभिः धातृभिः[9] ॥ ३ ॥

परि॑ सुवा॒नास॒ इन्द॑वो॒ मदा॑य ब॒र्हणा॑ गि॒रा । सु॒ता अ॑र्षन्ति॒ धार॑या ॥ ४ ॥

परि॑ । सु॒वा॒नासः॑ । इन्द॑वः । मदा॑य । ब॒र्हणा॑ । गि॒रा । सु॒ताः । अ॒र्ष॒न्ति॒ । धार॑या ॥ ४ ॥

वेङ्कट० परितः गच्छन्ति अभिपूयमाणाः इन्दवः मदाय महत्या गिरा अभिपुताः धारया ॥ ४ ॥

---

१. °र्गात् वि[2] अ[1]. २. °प्तिम् वि[2]; °प्तिः वि[1]; °प्ति अ[1]. ३. मेधां मेधां वि[2] अ[1]. ४-४. नास्ति मूको. ५-५. प्रक्रम वि[2] अ[1]; प्राक्रमु वि[1]. ६. बाहुनाम (तु. निघ २,४). ७. नग° वि[2] अ[1]. ८. °यते वि[2] अ[1]. ९. होत्राभिः वि[1].

आपानासो विवस्वतो जनन्त उषसो भगम् । सूरा अण्वं वि तन्वते ॥ ५ ॥

आपानासः । विवस्वतः । जनन्तः । उषसः । भगम् । सूराः । अण्वम् । वि । तन्वते ॥ ५ ॥

**वेङ्कट०** आपानभूताः इन्द्रस्य जनयन्तः उषसः शोभाम् सरन्तः सोमाः शब्दम् कुर्वन्ति ॥ ५ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये चतुस्त्रिंशो वर्गः[1] ॥

अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः । वृष्णो हरस आयवः ॥ ६ ॥

अप । द्वारा । मतीनाम् । प्रत्नाः । ऋण्वन्ति । कारवः । वृष्णः । हरसे । आयवः ॥ ६ ॥

**वेङ्कट०** विवृण्वन्ति यज्ञस्य द्वाराणि स्तुतीनाम् कर्तारः ऋत्विजः प्रत्नाः सोमस्य आहर्तारः[2] (?) मनुष्याः ॥ ६ ॥

समीचीनास आसते होतारः सप्तजामयः । पदमेकस्य पिप्रतः ॥ ७ ॥

समऽईचीनासः । आसते । होतारः । सप्तऽजामयः । पदम् । एकस्य । पिप्रतः ॥ ७ ॥

**वेङ्कट०** समीचीनाः उपविशन्ति होतारः सप्तजामिसदृशाः स्थानम् एकस्य[3] सोमस्य[4] पूरयन्तः । होतारः[4] होत्रकाः ॥ ७ ॥

नाभा नाभिं न आ ददे चक्षुश्चित् सूर्ये सचा । कवेरपत्यमा दुहे ॥ ८ ॥

नाभा । नाभिम् । नः । आ । ददे । चक्षुः । चित् । सूर्ये । सचा । कवेः । अपत्यम् । आ । दुहे ॥

**वेङ्कट०** अस्माकम्[4] नाभिम् सोमं नाभौ अहम् आ ददे । चक्षुः अस्माकम् सूर्ये सक्तं भवति पीतसोमानाम् । कवेः[5] सोमस्य अपत्यम्[4] अंशुम् आ[4] दुहे ॥ ८ ॥

अभि प्रिया दिवस्पदमध्वर्युभिर्गुहा हितम् । सूरः पश्यति चक्षसा ॥ ९ ॥

अभि । प्रिया । दिवः । पदम् । अध्वर्युऽभिः । गुहा । हितम् । सूरः । पश्यति । चक्षसा ॥ ९ ॥

**वेङ्कट०** अभि पश्यति[6] दीप्तस्य आत्मनः प्रियम् पदम् सोमम् अध्वर्युभिः गुहायाम् निहितम् सुवीर्यः इन्द्रः चक्षुषा[7] ॥ ९ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये पञ्चत्रिंशो वर्गः[1] ॥

## [ ११ ]

[1]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ॥ १ ॥

---

१-१. नास्ति मूको. २. हर्तारः वि[2]. ३. एतस्य वि[2] अ[1]. ४. नास्ति मूको. ५. नास्ति वि[1]. ६. तपेः वि[2] अ[1]. ७. °न्ति वि[2] अ[1]. ८. °षोः वि[2] अ[1]; °षः वि[1].

उप॑ । अ॒स्मै॒ । गा॒य॒त॒ । न॒रः॒ । पव॑मानाय । इन्द॑वे । अ॒भि । दे॒वान् । इय॑क्षते ॥ १ ॥

वेङ्कट० उप गायत अस्मै [1]नरः! पवमानाय[1] इन्दवे आभिमुख्येन देवान् यष्टुमिच्छते ॥ १ ॥

अ॒भि ते॒ मधु॑ना॒ पयोऽथ॑र्वाणो अशिश्रयुः । दे॒वं दे॒वाय॑ देव॒यु ॥ २ ॥

अ॒भि । ते॒ । मधु॑ना । पयः॑ । अथ॑र्वाणः । अ॒शि॒श्र॒युः॒ । दे॒वम् । दे॒वाय॑ । दे॒व॒ऽयु ॥ २ ॥

वेङ्कट० [2]अभि अशिश्रयुः तव[2] रसम् मधुना गव्येन पयसा अथर्वाणः ऋषयः देवनशीलम् इन्द्राय देवकामम् ॥ २ ॥

स नः॑ पवस्व॒ शं गवे॒ शं जना॑य॒ शमर्व॑ते । शं रा॑ज॒न्नोष॑धीभ्यः ॥ ३ ॥

सः । नः॒ । प॒व॒स्व॒ । शम् । गवे॑ । शम् । जना॑य । शम् । अर्व॑ते । शम् । रा॒ज॒न् । ओष॑धीभ्यः ॥ ३ ॥

वेङ्कट० सः अस्माकं गवादिभ्यः सुखम् पवस्व इति ॥ ३ ॥

ब॒भ्रवे॒ नु स्वत॑वसेऽरु॒णाय॑ दिवि॒स्पृशे॑ । सोमा॑य गा॒थम॑र्चत ॥ ४ ॥

ब॒भ्रवे॑ । नु । स्वऽत॑वसे । अ॒रु॒णाय॑ । दि॒वि॒ऽस्पृशे॑ । सोमा॑य । गा॒थम् । अ॒र्च॒त ॥ ४ ॥

वेङ्कट० बभ्रुवर्णाय क्षिप्रं स्वबलाय अरुणवर्णाय दिवं स्पृशते सोमाय वाचम् उच्चारयत ॥ ४ ॥

ह॒स्त॑च्युतेभि॒रद्रि॑भिः सु॒तं सोमं॑ पुनीतन । मधा॒वा धा॑वता॒ मधु॑ ॥ ५ ॥

ह॒स्त॑ऽच्युतेभिः । अद्रि॑ऽभिः । सु॒तम् । सोम॑म् । पु॒नी॒त॒न॒ । मधौ॑ । आ । धा॒व॒त॒ । मधु॑ ॥ ५ ॥

वेङ्कट० हस्तप्रच्युतैः ग्रावभिः अभिषुतम् सोमम् पवित्रे[3] पुनीतन। मधौ सोमे प्रक्षिपत गव्यम् मधु ॥ ५ ॥

[4]इति षष्ठाष्टके सप्तमाध्याये षट्त्रिंशो वर्गः[4] ॥

न॒म॒सेदुप॑ सीदत द॒ध्नेद॒भि श्री॑णीतन । इन्दु॒मिन्द्रे॑ दधातन ॥ ६ ॥

नम॑सा । इत् । उप॑ । सी॒द॒त॒ । द॒ध्ना । इत् । अ॒भि । श्री॒णी॒त॒न॒ । इन्दु॑म् । इन्द्रे॑ । द॒धा॒त॒न॒ ॥ ६ ॥

वेङ्कट० नमसा एव सोमम् उप सीदत, दध्ना च अभि श्रीणीत। अथ इन्दुम् इन्द्रे धत्त ॥ ६ ॥

अ॒मि॒त्र॒हा विच॑र्षणि॒ः पव॑स्व सोम॒ शं गवे॑ । दे॒वेभ्यो॑ अनुकाम॒कृत् ॥ ७ ॥

अ॒मि॒त्र॒ऽहा । वि॒ऽच॑र्षणिः । पव॑स्व । सो॒म॒ । शम् । गवे॑ । दे॒वेभ्यः॑ । अ॒नु॒का॒म॒ऽकृत् ॥ ७ ॥

वेङ्कट० अमित्राणां हन्ता विद्रष्टा पवस्व सोम! शम् गवे देवेभ्यः[5] अभिलषितस्य कर्ता ॥ ७ ॥

---

१-१. °रपमिवमा वि[1] अ[1]. २-२. नास्ति वि[1] अ[1]; अभिशिश्र° वि[1]. ३. पवते वि[2] अ[1] ४-४. नास्ति मूको. ५. सोमेभ्यः वि[2] अ[1].

इन्द्राय सोम पातवे मदाय परि षिच्यसे । मनश्चिन्मनसस्पतिः ॥ ८ ॥

इन्द्राय । सोम । पातवे । मदाय । परि । सिच्यसे । मनःऽचित् । मनसः । पतिः ॥ ८ ॥

**वेङ्कट०** इन्द्रस्य सोम ! पानाय मदाय च त्वं परितः पात्रेषु सिच्यसे[1] मनसो ज्ञाता मनसः पतिः[2] ॥ ८ ॥

पवमान सुवीर्यं रयिं सोम रिरीहि नः । इन्दविन्द्रेण नो युजा ॥ ९ ॥

पवमान । सुऽवीर्यम् । रयिम् । सोम । रिरीहि । नः । इन्दो इति । इन्द्रेण । नः । युजा ॥९॥

**वेङ्कट०** पवमान ! सुवीर्यम् रयिम् सोम ! देहि अस्मभ्यम् इन्दो ! त्वम् इन्द्रेण सहायेन ॥ ९ ॥

[3]इति षष्ठाष्टके सप्तमाध्याये सप्तत्रिंशो वर्गः[3] ॥

## [ १२ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[3] ।

सोमा असृग्रमिन्दवः सुता ऋतस्य सादने । इन्द्राय मधुमत्तमाः ॥ १ ॥

सोमाः । असृग्रम् । इन्दवः । सुताः । ऋतस्य । सदने । इन्द्राय । मधुमत्ऽतमाः ॥ १ ॥

**वेङ्कट०** 'सोमा [4]असृग्रम्' नवर्चं[4] नवमेऽहनि बहिष्पवमानम्, उत्तरं च । सोमाः सृज्यन्ते[5] इन्दवः सुताः[6] यज्ञस्य सदने[7] इन्द्रार्थम् मधुमत्तमाः ॥ १ ॥

अभि विप्रा अनूषत गावो वत्सं न मातरः । इन्द्रं सोमस्य पीतये ॥ २ ॥

अभि । विप्राः । अनूषत । गावः । वत्सम् । न । मातरः । इन्द्रम् । सोमस्य । पीतये ॥ २ ॥

**वेङ्कट०** अभि शब्दयन्ति[8] मेधाविनः गावः इव वत्सम् प्रति मातरः इन्द्रम् सोमस्य पानाय ॥ २ ॥

मदच्युत् क्षेति सादने सिन्धोरूर्मा विपश्चित् । सोमो गौरी अधि श्रितः ॥३॥

मदऽच्युत् । क्षेति । सदने । सिन्धोः । ऊर्मा । विपःऽचित् । सोमः । गौरी इति । अधि । श्रितः ॥

**वेङ्कट०** मादकस्य रसस्य च्यावयिता निवसति स्थाने । तदेवाह — सिन्धोः ऊर्मौ[9] वसतीवरीषु[10] विपश्चित् सोमः गौर्याम् अधि श्रितः । गौरी इति माध्यमिकां वाचमाह ( तु. निघ १,११;५,५ ) ॥३॥

दिवो नाभा विचक्षणोऽव्यो वारे महीयते । सोमो यः सुक्रतुः कविः ॥ ४ ॥

---

१. °च्यते मूको. २. °तिम वि[2] अ[1]. ३-३. नास्ति मूको. ४-४. असृग्रवच्च वि[2]; °ग्रनवबर्चम् वि[1]; °ग्रन्नवच्च अ[1]. ५. असृजन्त वि[2] अ[1]; सृजन्ते वि[1]. ६. सुनाः वि[2] अ[1]. ७. सने वि[2] अ[1]. ८. शब्दापय° वि[2]. ९. °र्मा वि[1] १०. °रीः वि[2]; °री वि[1] अ[1].

दिवः । नाभा । विऽचक्षणः । अव्यः । वारे । महीयते । सोमः । यः । सुऽक्रतुः । कविः ॥ ४ ॥

**वेङ्कट०** अन्तरिक्षस्य नाभिभूते विचक्षणः अवेः वाले पूज्यते पूयमानः स्तूयते सोमः, यः सुप्रज्ञः[1] क्रान्तः ॥ ४ ॥

**यः सोमः कलशेष्वाँ अन्तः पवित्र आहितः । तमिन्दुः परि षस्वजे ॥ ५ ॥**

यः । सोमः । कलशेषु । आ । अन्तरिति । पवित्रे । आऽहितः । तम् । इन्दुः । परि । सस्वजे ॥

**वेङ्कट०** यः[2] सोमः[3] कलशेषु आस्ते, यः च पवित्रस्य अन्तः आहितः, तम्[4] स्वांशभूतम् इन्दुः देवः अनुप्रविशति ॥ ५ ॥

[5]इति षष्ठाष्टके सप्तमाध्याये अष्टात्रिंशो वर्गः[5] ॥

**प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि । जिन्वन् कोशं मधुश्चुतम् ॥ ६ ॥**

प्र । वाचम् । इन्दुः । इष्यति । समुद्रस्य । अधि । विष्टपि । जिन्वन् । कोशम् । मधुऽश्चुतम् ॥

**वेङ्कट०** प्रेरयति सोमः वाचम् अन्तरिक्षस्य विष्टब्धे स्थाने प्रीणयन् मेघम् मधुनः च्यावकम् इति ॥ ६ ॥

**नित्यस्तोत्रो वनस्पतिर्धीनामन्तः सबर्दुघः । हिन्वानो मानुषा युगा ॥ ७ ॥**

नित्यऽस्तोत्रः । वनस्पतिः । धीनाम् । अन्तरिति । सबःऽदुघः । हिन्वानः । मानुषा । युगा ॥७॥

**वेङ्कट०** सन्ततस्तोत्रः वनानां पालयिता कर्मणाम् अन्तः अमृतस्य दोग्धा प्रीणयन् [6]मानुषाणि अहानि[6] अहीनैकाहात्मकानि[7] इति ॥ ७ ॥

**अभि प्रिया दिवस्पदा सोमो हिन्वानो अर्षति । विप्रस्य धारया कविः ॥ ८ ॥**

अभि । प्रिया । दिवः । पदा । सोमः । हिन्वानः । अर्षति । विप्रस्य । धारया । कविः ॥ ८ ॥

**वेङ्कट०** अभि अर्षति प्रियाणि स्थानानि अन्तरिक्षात् सोमः प्रेर्यमाणः मेधाविनः धारया क्रान्तः ॥ ८ ॥

**आ पवमान धारय रयिं सहस्रवर्चसम् । अस्मे इन्दो स्वाभुवम् ॥ ९ ॥**

आ । पवमान । धारय । रयिम् । सहस्रऽवर्चसम् । अस्मे इति । इन्दो इति । सुऽआभुवम् ॥ ९ ॥

---

१. °ज्ञ वि[२] अ[१]. २. यः सोमयं वि[२] अ[१]. ३. °म मूको. ४. त्वम् वि[२] अ[१]. ५-५. नास्ति मूको. ६-६. °ण्याहा अ[१] वि[१]. ७. °नैकात्मकाहानि अ[१].

**वेङ्कट०** आ धारय पवमान! रयिम् बहुदीप्तिम् अस्मासु इन्दो! शोभनाऽऽभवनम् इति ॥ ९ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये एकोनचत्वारिंशो वर्गः[1] ॥

आत्मजो वेङ्कटो यस्य गोविन्दस्तदनन्तरम्[2] ।
षष्ठस्य सप्तमाध्यायमिति व्याख्यत् स माधवः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके सप्तमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके सप्तमोऽध्यायः ॥



१-१. नास्ति मूको. २. °दः वि°.

## अथ अष्टमोऽध्यायः ।

वेङ्कट०

'सोमः पुनानो अर्षति' व्याचिख्यासति माधवः ।
अवसानेषु वक्तव्यम् आदितः सम्प्रदर्शयन् ॥ १ ॥

तत्रर्चामवसानानि[1] प्रायेणार्थानुरूपतः ।
अवस्येदन्ततस्तत्र द्विपदैकपदा ऋचः ॥ २ ॥

अर्धर्चेऽवान्तरः[2] कश्चिद् वाक्यार्थः[3] पर्यवस्यति ।
बह्वीष्वृक्षु विशेषं [4]तं न विजानन्त्यपण्डिताः[4] ॥ ३ ॥

पादयोर्मुख्ययोः[5] [6]पङ्क्त्या एकार्थः[6] पर्यवस्थितः ।
त्रिषु चान्यस्ततस्तासु द्वावुक्त्वा त्रीनथो वदेत् ॥ ४ ॥

यत्रान्यथावसानं[7] स्यात् तत्रार्थोऽपि च तादृशः ।
पुरउष्णिक्षु[8] सर्वासु पादो मुख्यस्तथाविधः ॥ ५ ॥

[9]'भरद्वाजायाव धुक्षत द्विता'[9]
'द्यौरिव[10] तेऽवृकमस्तु सुख्यम्'[11] ।
'तच्चक्षुर्देवहितं शुक्रमुच्चरत्'[12]
'वृक्षाश्चिन्मे अभिपित्वे अरारणुः'[13] ॥ ६ ॥

मध्येऽवसानं तु चतुष्पदासु
त्रिभिस्समस्तैरपरैः परैर्वा ।
एतं[14] शंसन्त्रिभिराद्यैः[15] पदैः स्यात्
'अधीन्न्वत्र'[16] त्रिभिरेवापरैश्च ॥ ७ ॥

'इन्द्रो मदाय वावृधे'[17] 'नकिष्टं कर्मणा नशत्'[18] ।
अवस्येत्[19] पादयोरत्र मुख्ययोः क्वचिदन्यथा ॥ ८ ॥

---

१. °त्र्च्याम° वि² अ¹; °त्र्चंम° वि¹. २. °र्धर्चोऽवा° वि² अ¹. ३. °र्थं मूको. ४-४. ता अपिजा° वि² अ¹. ५. पद° वेंकअ. ६-६. एकोऽर्थः वेंकअ. ७. °न्यथोपसा° वि² अ¹. ८. पुर उष्णिक्षु च वि² अ¹; पुन उष्णीषु वि¹. ९-९. °जावधु (°धि अ¹) क्षिप्तपिना वि² अ¹; ऋ ६,४८,१३. १०. दिद्रवतेरि° वि² अ¹. ११. ऋ ६,४८,१८. १२. ऋ ७,६६,१६. १३. ऋ ८,४,२१. १४. एताः वि² अ¹. १५. °द्ये वि² अ¹. १६. ऋ १०,९३,१५. १७. ऋ १,८१,१. १८. ऋ ८,७०,३. १९. अपस्येत् वि² अ¹.

'नकिर्देवा मिनीमसि'[1] त्रिषु पादेष्ववस्यति ।
षट्पदायाश्च मध्ये स्याद् द्वयोर्वा पर्यवस्यति[2] ॥ ९ ॥

'स क्षपः परि षस्वजे'[3] 'निष्कं वा घा कृणवते'[4] ।
निदर्शनमृचौ तत्र दर्शयामास शौनकः ॥ १० ॥

'सुषुमा यातमद्रिभिः'[5], 'नहि वां वव्रयामहे'[6] ।
'प्रो ष्वस्मै पुरोरथम्'[7] इति सप्तपदा इमाः ॥ ११ ॥

एषु[8] मन्त्रेष्ववस्यन्ति द्वाभ्यां द्वाभ्यां ततः परम् ।
पादेषु त्रिष्ववस्थानं चतुर्ष्वपि[9] च कुर्वते ॥ १२ ॥

ऋच्यस्यां छान्दसा विप्राः 'नहि वां वव्रयामहे'[6] ।
द्वयोः पञ्चसु वाऽवस्येत्[10] सा 'प्रो ष्वस्मै पुरोरथम्'[7] ॥ १३ ॥

'स हि शर्धो न मारुतम्'[11] त्रिषु पूर्वमवस्यति ।
द्वावुक्त्वा त्रीनथो ब्रूयाद् अष्टौ पादा भवन्ति ते ॥ १४ ॥

पादे पादे समाप्यन्ते प्रायेणार्था अवान्तराः ।
विरोधेऽक्षरतः पादः 'इमं मे वरुण श्रुधि'[12] ॥ १५ ॥

[13]'श्रुधीमं हवं'[13] वरुण पादे मुख्ये [14]'समन्वयः ।
हवमित्यस्य'[14] पादान्तः श्रुधीत्यत्रेति शौनकः ॥ १६ ॥

अग्निमीळे[15] पुरोहितं यज्ञस्येत्यर्थसंस्थितिः ।
यदा तदोदाहरणं तत्रेदं च प्रदर्शयेत् ॥ १७ ॥

यदि यज्ञस्य देवोऽग्निरिति तत्रार्थ इष्यते ।
प्रतिपादमर्थभेदात् तदा[16] नैषा निदर्शनम् ॥ १८ ॥

---

१. ऋ १०,१३४,७. २. °वस्थितिः वि[2] अ ; °वस्थितः वि[1]. ३. ऋ ८,४१,३. ४. ऋ ८, ४७,१५, ५. ऋ १,१३७,१. ६. ऋ ८,४०,२. ७. ऋ १०,१३३,१. ८. हषु वि[2] अ[1]. ९. °र्ष्वे वि[2] अ[1]. १०. पापस्य वि[2] अ[1]; चापस्येत् वि[1]. ११. ऋ १,१२७,६. १२. ऋ १,२५,१९, १३-१३. श्रुधीमहं वि[2] अ[1]; श्रुधिमंह वि[1]. १४-१४. °यमवम् °यभव वि[2] अ[1]; °यहवम् वि[1]. १५. °मीळे वेंऋम. १६. तथा वि[1].

[1]अथाप्यर्थः स्वभावेन[1] न[2] पादेषु व्यवस्यति ।
'ऋतेन मित्रावरुणौ'[3] विद्यात् तत्र निदर्शनम् ॥ १९ ॥

सम्बोधनाद्युदात्तत्वम्[4] इह प्राप्तं न दृश्यते ।
ऋतावृधपदे[5] तस्माद् अविरामः प्रतीयते ॥ २० ॥

इदमत्रावगन्तव्यम् अवधानविवर्जितः ।
यावन्ति[6] शक्नुयाद् वक्तुम् अप्राणन्नेव [7]मानवः ॥ २१ ॥

तावद्भिरक्षरैरर्थः प्रायेण प्रतिपाद्यते ।
गायत्र्यादिजगत्यन्तम् अप्राणन्नेव[7] भाषते ॥ २२ ॥

[8]अथाप्यतिजगत्यादिम् उच्चारयति[8] मानवः ।
अवधानपरोऽप्राणन्[9] सप्तकं चतुरुत्तरम् ॥ २३ ॥

महता प्रणिधानेन यत्नेन महताऽपि च ।
[10]उत्तमं सप्तकं प्राहुरुत्कृत्यन्तमिति स्थितिः[10] ॥ २४ ॥

लौकिकार्थस्वभावेन सप्तकानां यथाक्रमम् ।
वेदे भूयान् प्रयोगोऽभूद् अल्पोऽथाल्पतरोऽपि च ॥ २५ ॥

इतिच्छन्दस्सु वक्तव्यम् अध्यायादिषु दर्शितम् ।
अस्माभिरष्टके षष्ठे जानन्नेतद् विमुच्यते ॥ २६ ॥ इति[11] ॥

[ १३ ]

[12]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[12] ।

सोमः पुनानो अर्षति सहस्रधारो अत्यविः । वायोरिन्द्रस्य निष्कृतम् ॥ १ ॥

सोमः । पुनानः । अर्षति । सहस्रऽधारः । अतिऽअविः । वायोः । इन्द्रस्य । निःऽकृतम् ॥ १ ॥

वेङ्कट० असितः[13] । सोमः[14] । सोमः[15] पुनानः गच्छति सहस्रधारः दशापवित्रमतिगच्छन्[16] वायोः इन्द्रस्य च पानाय संस्कृतं पात्रम् ॥ १ ॥

---

१-१. °र्थस्व° वि[१,२] अ[१]. २. नास्ति मूको. ३. ऋ १,२,८. ४. °बाधा° वि[२] अ[१]; °बाध° वि[१]. ५. °धे प° वि[२]. ६. पायं तु वि[२] अ[१]; नास्ति वि[१]. ७. °णं देव वि[१,२] अ[१]. ८-८. अथा··· जग° वि[१,२] अथा···जग···त्यु···च्चार° अ[१]. ९. अवसानपरोप्राणान् वि[१,२] अ[१]. १०-१० नास्ति वि[१]. ११. नास्ति वि[१]; इति कारिका अ[१]. १२-१२. नास्ति मूको. १३. °तम वि[२]. १४. °म मूको. १५. नास्ति वि[१]. १६. °मभिगच्छत् वि[२] अ[१]; °मभिगच्छान् वि[१].

पवमानमवस्यवो विप्रमभि प्र गायत । सुष्वाणं देववीतये ॥ २ ॥

पवमानम् । अवस्यवः । विप्रम् । अभि । प्र । गायत । सुस्वानम् । देवऽवीतये ॥ २ ॥

वेङ्कट० पवमानम् हे रक्षणकामाः![1] मेधाविनम् अभि [2]प्र गायत[2] अभिषूयमाणम् देवपानाय ॥ २॥

पवन्ते वाजसातये सोमाः सहस्रपाजसः । गृणाना देववीतये ॥ ३ ॥

पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः । गृणानाः । देवऽवीतये ॥ ३ ॥

वेङ्कट० [3]क्षरन्ति अन्नलाभाय[3] सोमाः[4] बहुबलाः स्तूयमानाः यज्ञार्थम् ॥ ३ ॥

उत नो वाजसातये पवस्व बृहतीरिषः । द्युमदिन्दो सुवीर्यम् ॥ ४ ॥

उत । नः । वाजऽसातये । पवस्व । बृहतीः । इषः । द्युऽमत् । इन्दो इति । सुऽवीर्यम् ॥ ४ ॥

वेङ्कट० अपि च अस्माकम् अन्नलाभाय पवस्व[5] महतीः इषः धाराः दीप्तिमत् इन्दो! सुवीर्यम् च । अपि वा आयुधं[6] वाजसातिः[7] ॥ ४ ॥

ते नः सहस्रिणं रयिं पवन्तामा सुवीर्यम् । सुवाना देवास इन्दवः ॥ ५ ॥

ते । नः । सहस्रिणम् । रयिम् । पवन्ताम् । आ । सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥५॥

वेङ्कट० ते नः[8] सहस्रसङ्ख्यम् धनम् आ पवन्ताम् सुवीर्यम् च अभिषूयमाणाः[9] देवाः इन्दवः ॥ ५ ॥

[10]इति षष्ठाष्टके अष्टमाध्याये प्रथमो वर्गः[10] ॥

अत्या हियाना न हेतृभिरसृग्रं वाजसातये । वि वारमव्यमाशवः ॥ ६ ॥

अत्याः । हियानाः । न । हेतृऽभिः । असृग्रम् । वाजऽसातये । वि । वारम् । अव्यम् । आशवः ॥६॥

वेङ्कट० अश्वाः प्रेर्यमाणाः इव प्रेरकैः वि अतिसृज्यन्ते[11] पवित्रम् युद्धाय सोमाः ॥ ६ ॥

वाश्रा अर्षन्तीन्दवोऽभि वत्सं न धेनवः । दधन्विरे गभस्त्योः ॥ ७ ॥

वाश्राः । अर्षन्ति । इन्दवः । अभि । वत्सम् । न । धेनवः । दधन्विरे । गभस्त्योः ॥ ७ ॥

वेङ्कट० शब्दकारिणः गच्छन्ति इन्दवः[12] वत्सम् इव धेनवः[13], ध्रियन्ते च बाह्वोः ॥ ७ ॥

जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत् । विश्वा अप द्विषो जहि ॥ ८ ॥

जुष्टः । इन्द्राय । मत्सरः । पवमान । कनिक्रदत् । विश्वाः । अप । द्विषः । जहि ॥ ८ ॥

---

१. °क्षका° मूको. २-२. प्रियागत वि[२] अ[१]. ३-३. °नंनला वि[२] अ[१]; °न्तेन्नला° वि[१]. ४. °म वि[२] अ[१]. ५. °वत्व वि[२] अ[१]. ६. °र्व वि[१]; °र्थ अ[१]. ७. °साति वि[१]; °सानि अ[१]. ८. न मूको. ९. °णान् वि[२] अ[१]. १०-१०. नास्ति मूको. ११. °सजन्ते वि[१]. १२. देवः वि[२] अ[१]; °देवः वि[१]. १३. येन वि[२] अ[१].

वेङ्कट० पर्याप्तः इन्द्राय सोमः। हे पवमान! शब्दं कुर्वन् विश्वाः द्विषः अप जहि ॥ ८ ॥

अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः। योनावृतस्य सीदत ॥ ९ ॥

अपऽघ्नन्तः। अराव्णः। पवमानाः। स्वःऽदृशः। योनौ। ऋतस्य। सीदत ॥ ९ ॥

वेङ्कट० अपघ्नन्तः अदातॄन् पवमानाः![1] सर्वस्य द्रष्टारः यज्ञस्य स्थाने सीदत ॥ ९ ॥

[2]इति षष्ठाष्टके अष्टमाध्याये द्वितीयो वर्गः[2] ॥

[ १४ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[3]।

परि प्रासिष्यदत् कविः सिन्धोरूर्मावधि श्रितः। कारं बिभ्रत् पुरुस्पृहम् ॥१॥

परि। प्र। असिस्यदत्। कविः। सिन्धोः। ऊर्मौ। अधि। श्रितः। कारम्। बिभ्रत्। पुरुऽस्पृहम् ॥

वेङ्कट० परि प्र स्यन्दते कविः मेधावी सिन्धोः ऊर्मौ अधि श्रितः शब्दम् धारयन् बहुभिः स्पृहणीयम् ॥ १ ॥

गिरा यदी सबन्धवः पञ्च व्राता अपस्यवः। परिष्कृण्वन्ति धर्णसिम् ॥ २ ॥

गिरा। यदि। सऽबन्धवः। पञ्च। व्राताः। अपस्यवः। परिऽकृण्वन्ति। धर्णसिम् ॥ २ ॥

वेङ्कट० स्तुत्या यदि एनं समानबन्धनाः पञ्च जनाः कर्मेच्छवः अलङ्कुर्वन्ति धारकम्। उत्तरत्र सम्बन्धः ॥ २ ॥

आदस्य शुष्मिणो रसे विश्वे देवा अमत्सत। यदी गोभिर्वसायते ॥ ३ ॥

आत्। अस्य। शुष्मिणः। रसे। विश्वे। देवाः। अमत्सत। यदि। गोभिः। वसायते ॥ ३ ॥

वेङ्कट० अनन्तरम् अस्य बलिनः रसे विश्वे देवाः माद्यन्ति, यदि गोविकारैः छाद्यते ॥ ३ ॥

निरिणानो वि धावति जहच्छर्याणि तान्वा। अत्रा सं जिघ्नते युजा ॥ ४ ॥

निऽरिणानः। वि। धावति। जहत्। शर्याणि। तान्वा। अत्र। सम्। जिघ्नते। युजा ॥ ४ ॥

वेङ्कट० दशापवित्रादधः गच्छन् विविधम् धावति विसृजन् वस्त्रसम्बन्धीनि[4] शर्याणि द्वाराणि। अथ अत्र[4] आहूतः[5] संस्तुत्या आगतो भवति सहायेन[6] इन्द्रेण इति ॥ ४ ॥

नप्तीभिर्यो विवस्वतः शुभ्रो न मामृजे युवा। गाः कृण्वानो न निर्णिजम् ॥ ५ ॥

---

१ °नः मूको. २-२. नास्ति मूको. ३. तु. ऋ ९,१८,१; बै १,१:५५ e,f. ४. नास्ति मूको. ५. आभूतः वि[1] अ[1]. ६. सखाये[1] वि[1] अ[1].

नप्तीभिः । यः । विवस्वतः । शुभ्रः । न । ममृजे । युवा । गाः । कृण्वानः । न । निःऽनिजम् ॥ ५ ॥

वेङ्कट० परिचरतः[1] हस्ताज्जाताभिः पौत्रस्थानीयाभिः अङ्गुलिभिः यः मृज्यते शोभमानः[2] [3]अश्व इव[3] युवा, गोविकारान्[4] च कुर्वन् आत्मनो रूपम् इति ॥ ५ ॥

[5]इति षष्ठाष्टके अष्टमाध्याये तृतीयो वर्गः[5] ॥

अति श्रिती तिरश्चता गव्या जिगात्यण्व्या । वग्नुमियर्ति यं विदे ॥ ६ ॥

अति । श्रिती । तिरश्चता । गव्या । जिगाति । अण्व्या[6] । वग्नुम् । इयर्ति । यम् । विदे ॥ ६ ॥

वेङ्कट० अंशुभ्यः अति गच्छति श्रयणार्थं तिरश्चीनं गव्यानि श्रयणानि[7] प्रति । [8]अङ्गुल्या अभिपूयमाणः[8] शब्दम्[9] च प्रेरयति, यम् अहं शब्दं जानामि शृणोमि[10] इति ॥ ६ ॥

अभि क्षिपः समग्मत मर्जयन्तीरिषस्पतिम् । पृष्ठा गृभ्णत वाजिनः ॥ ७ ॥

अभि । क्षिपः[9] । सम् । अग्मत । मर्जयन्तीः । इषः । पतिम् । पृष्ठा । गृभ्णत । वाजिनः ॥ ७ ॥

वेङ्कट० अभि सम् गच्छन्ते[11] अङ्गुलयः अभिमृशन्त्यः[12] अन्नानाम् पतिम् सोमम् । ताः बलवतः सोमस्य पृष्ठानि स्पृशन्ति अभिषवाय ॥ ७ ॥

परि दिव्यानि मर्मृशद् विश्वानि सोम पार्थिवा । वसूनि याह्यस्मयुः ॥ ८ ॥

परि । दिव्यानि । मर्मृशत् । विश्वानि । सोम । पार्थिवा । वसूनि । याहि । अस्मऽयुः ॥ ८ ॥

वेङ्कट० दिव्यानि पार्थिवानि च सर्वाणि वसूनि परि स्पृशन् [13]सोम! अस्मत्कामः[13] गच्छ ॥ ८ ॥

[5]इति षष्ठाष्टके अष्टमाध्याये चतुर्थो वर्गः[5] ॥

## [१५]

[5]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।

एष धिया यात्यण्व्या शूरो रथेभिराशुभिः । गच्छन्निन्द्रस्य निष्कृतम् ॥ १ ॥

एषः । धिया । याति । अण्व्या[6] । शूरः । रथेभिः । आशुऽभिः । गच्छन् । इन्द्रस्य । निःऽकृतम् ॥१॥

वेङ्कट० एषः कर्मणा गच्छति अङ्गुल्याऽभिषुतः[14] द्रुतः [15]सन् शूरः[15] रथैः शीघ्रैः[16] गच्छन् इन्द्रस्य स्थानं दिवम् इति ॥ १ ॥

---

१. °रिहर° वि[२] अ[१]. २. शोभनः वि[१]. ३-३. °श्वमे° वि[२] अ[१]. ४. नोवि° वि[२] अ[१]. ५-५. नास्ति मूको. ६ अङ्गुलिनाम (तु. निघ २,५). ७. °णाति वि[२] अ[१]. ८-८. °ल्यभि° वि[१]. ९. तु. निघ १,११ १०. °णोति मूको. ११. °च्छे वि[२] अ[१]. १२. °श्वन्तः वि[१२]; °हिमृशवन्त्यः अ[१]. १३-१३. सोऽस्म° वि[१]. १४. °पूयमाणा वि[१]. १५-१५. सञ्चरै वि[२]; संचूरै अ[१]; संज्ञारो वि[१]. १६. °प्रम् अ[१].

एष पुरू धियायते बृहते देवतातये । यत्रामृतास आसते ॥ २ ॥

एषः । पुरु । धियाऽयते । बृहते । देवऽतातये । यत्र । अमृतासः । आसते ॥ २ ॥

वेङ्कट० एषः[1] सोमः[2] बहु कर्म इच्छति महते यज्ञाय, यत्र देवाः वसन्ति ॥ २ ॥

एष हितो वि नीयतेऽन्तः शुभ्रावता पथा । यदी तुञ्जन्ति भूर्णयः ॥ ३ ॥

एषः । हितः । वि । नीयते । अन्तरिति । शुभ्रऽवता । पथा । यदि । तुञ्जन्ति । भूर्णयः ॥ ३ ॥

वेङ्कट० एषः [3]पात्रेषु निहितः[3] हविर्धानादाहवनीयं प्रति विविधम्[4] नीयते हविर्धानाऽऽहवनीययोः अन्तः[5] शोभावता मार्गेण, यदि एनं देवेभ्यः प्रयच्छन्ति हरणशीला ऋत्विजः ॥ ३ ॥

एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो॒ वृषा । नृम्णा दधान ओजसा ॥ ४ ॥

एषः । शृङ्गाणि । दोधुवत् । शिशीते । यूथ्यः । वृषा । नृम्णा । दधानः । ओजसा ॥ ४ ॥

वेङ्कट० एषः शृङ्गाणि कम्पयन्[1] निश्यति यूथभवः [6]वृषा धनानि[6] प्रयच्छन्[7] बलेन ॥ ४ ॥

एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः । पतिः सिन्धूनां भवन् ॥ ५ ॥

एषः । रुक्मिऽभिः । ईयते । वाजी । शुभ्रेभिः । अंशुऽभिः । पतिः । सिन्धूनाम् । भवन् ॥ ५ ॥

वेङ्कट० एषः मरुद्भिः सह गच्छति वाजी शोभमानैः अंशुभिः युक्तः पतिः सिन्धूनाम् भवन् ॥ ५ ॥

एष वसूनि पिब्दना परुषा ययिवाँ अति । अव शादेषु गच्छति ॥ ६ ॥

एषः । वसूनि । पिब्दना । परुषा । ययिऽवान् । अति । अव । शादेषु[8] । गच्छति ॥ ६ ॥

वेङ्कट० एषः आच्छादकानि पीडनानि रक्षांसि परुषा[1] अति[1] गच्छन् अव[9] गच्छति[10] शातनीयेषु रक्षस्सु ॥ ६ ॥

एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः । प्रचक्राणं महीरिषः ॥ ७ ॥

एतम् । मृजन्ति । मर्ज्यम् । उप । द्रोणेषु । आयवः । प्रऽचक्राणम् । महीः । इषः ॥ ७ ॥

वेङ्कट० एतम् उप मृजन्ति मार्जनीयम् द्रोणकलशेषु मनुष्याः प्रकुर्वाणम् महान्ति अन्नानि ॥ ७ ॥

एतमु त्यं दश क्षिपो मृजन्ति सप्त धीतयः । स्वायुधं मदिन्तमम् ॥ ८ ॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सप्त । धीतयः । सुऽआयुधम् । मदिन्ऽतमम् ॥ ८ ॥

---

१. कर्म एषः मूको. २. नास्ति मूको. ३-३. हितः पात्रेषु अ[1]. ४. ··· विधं वि[2]. ५. °यन्तः वि[2] अ[1]; °यन्तं वि[1]. ६-६. वृषधानि वि[1] अ[1]. ७. पृच्छन् वि[1] अ[1]. ८ अर्थः? (तु. ७मो मन्त्रे द्रोणेषु, ९,१७,४ प्रभृ. कलशेषु). ९. अप मूको. १०. गच्छन्ति वि[2].

वेङ्कट० तम् इमम् दश अङ्गुलयः परिचरन्ति सप्त च ऋत्विजः स्वायुधम् मादयितृतमम्। मृजिः[1] परिचरणकर्मा इति ॥ ८ ॥

[2]इति षष्ठाष्टके अष्टमाध्याये पञ्चमो वर्गः[2] ॥

[ १६ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[3]।

प्र ते॑ सो॒तार॑ ओ॒ण्यो॒३॑ रसं॒ मदा॑य घृ॒ष्वये॑ । सर्गो॒ न त॒क्त्येत॑शः ॥ १ ॥

प्र। ते॒। सो॒तारः॑। ओ॒ण्योः॑। रस॑म्। मदा॑य। घृ॒ष्वये॑। सर्गः॑। न। त॒क्ति॒। एत॑शः ॥ १ ॥

वेङ्कट० प्र स्थापयन्ति तव रसम् अभिषोतारः द्यावापृथिव्योः रसं देवानां च मनुष्याणां च[4] मदाय शत्रूणां घर्षणशीलाय। स च अभिपूयमानः[4] रसः अश्व इव विसृष्टः गच्छति ॥ १ ॥

क्रत्वा॒ दक्ष॑स्य र॒थ्य॑म॒पो वसा॑न॒मन्ध॑सा । गो॒षाम॒ण्वे॑षु सश्चिम ॥ २ ॥

क्रत्वा॑। दक्ष॑स्य। र॒थ्य॑म्। अ॒पः। वसा॑नम्। अन्ध॑सा। गो॒ऽसाम्। अण्वे॑षु। स॒श्चि॒म ॥ २ ॥

वेङ्कट० दक्षस्य कर्मणा प्राणस्य नेतारम् [5]उदकानि आच्छादयन्तम्[5] अन्धसा श्रयणाकेन सह गवाम्[6] दातारम् अङ्गुलीषु संयोजयामः[7] ॥ २ ॥

अन॑प्तम॒प्सु दु॒ष्टरं॒ सोमं॑ प॒वित्र॒ आ सृ॑ज । पु॒नी॒हीन्द्रा॑य॒ पात॑वे ॥ ३ ॥

अन॑प्तम्। अ॒प्ऽसु। दु॒स्तर॑म्। सोम॑म्। प॒वित्रे॑। आ। सृ॒ज॒। पु॒नी॒हि। इन्द्रा॑य। पात॑वे ॥ ३ ॥

वेङ्कट० शत्रुभिः अनाप्तम् आन्तरिक्षासु अप्सु स्थितम्[8] दुस्तरम्[9] सोमम् पवित्रे आ सृज। तदेवाह— पुनीहि इन्द्रस्य पानार्थम् इति ॥ ३ ॥

प्र पु॒नान॑स्य॒ चेत॑सा॒ सोमः॑ प॒वित्रे॑ अर्षति । क्रत्वा॑ स॒धस्थ॒मास॑दत् ॥ ४ ॥

प्र। पु॒नान॑स्य। चेत॑सा। सोमः॑। प॒वित्रे॑। अ॒र्ष॒ति॒। क्रत्वा॑। स॒धऽस्थ॑म्। आ। अ॒स॒द॒त् ॥ ४ ॥

वेङ्कट० प्र गच्छति पूयमानस्य [10]अंशः पवित्रे[10] [2]चेतसा बुद्धिपूर्वम् अभिपूयमाणस्य[2]। तदेवाह— सोमः पवित्रे अर्षति[11] इति। सोऽयं प्रज्ञानेन नीयमानः सस्थानम् आ सीदति ॥ ४ ॥

प्र त्वा॒ नमो॑भि॒रिन्द॑व॒ इन्द्र॒ सोमा॑ असृक्षत । म॒हे भरा॑य का॒रिणः॑ ॥ ५ ॥

प्र। त्वा॒। नमः॑ऽभिः। इन्द॑वः। इन्द्र॑। सोमाः॑। अ॒सृ॒क्ष॒त॒। म॒हे। भरा॑य। का॒रिणः॑ ॥ ५ ॥

---

१. ऋजिः मूको. २-२. नास्ति मूको. ३. नास्ति अ[1]. ४. °भिभूय° मूको. ५-५. °कमन्याच्छा° मूको. ६. भगवान् वि[2]; भगवान् भगवान् अ[1]. ७. म वि[2] अ[1]. ८. °ताम् मूको. ९. द्रष्टार° वि[1]; द्रष्टर° वि[1]. १०-१०. अंशप° वि[2] अ. ११. अर्षति चेतसा बुद्धिपूर्वमभिपूयमाणस्य मूको.

**वेङ्कट०** प्र असृजन् त्वाम् अश्वैः सह इन्द्र! दीप्ताः सोमाः महते सङ्ग्रामाय करणशीलाः ॥ ५ ॥

**पुनानो रूपे अव्यये विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ ६ ॥**

पुनानः । रूपे । अव्यये । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ ६ ॥

**वेङ्कट०** पूयमानः वस्त्रे अविमये विश्वाः श्रियः अभि गमयन् शूरः इव गोषु युद्धार्थं प्रविष्टः तिष्ठति ॥ ६ ॥

**दिवो न सानु पिप्युषी धारा सुतस्य वेधसः । वृथा पवित्रे अर्षति ॥ ७ ॥**

दिवः । न । सानु । पिप्युषी । धारा । सुतस्य । वेधसः । वृथा । पवित्रे । अर्षति ॥ ७ ॥

**वेङ्कट०** द्युलोकात् इव समुच्छ्रितमुदकम् वृद्धा सुतस्य सोमस्य धारा अनायासेन पवित्रे गच्छति ॥ ७ ॥

**त्वं सोम विपश्चितं तना पुनान आयुषु । अव्यो वारं वि धावसि ॥ ८ ॥**

त्वम् । सोम । विपःऽचितम् । तना । पुनानः । आयुषु । अव्यः । वारम् । वि । धावसि ॥ ८ ॥

**वेङ्कट०** त्वम् सोम! मनुष्याणां मध्ये वस्त्रेण पूयमानः विपश्चितम् रक्षसि[1] । तथा अवेः वालं च[2] वि धावसि ॥ ८ ॥

[3]इति षष्ठाष्टके अष्टमाध्याये षष्ठो वर्गः[3] ॥

## [ १७ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[3] ।

**प्र निम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः । सोमा असृग्रमाशवः ॥ १ ॥**

प्र । निम्नेनऽइव । सिन्धवः । घ्नन्तः । वृत्राणि । भूर्णयः । सोमाः । असृग्रम् । आशवः ॥ १ ॥

**वेङ्कट०** प्र गच्छन्ति निम्नेन इव सिन्धवः घ्नन्तः[4] शत्रून् क्षिप्राः[5] सोमाः व्याप्ताः[6] ॥ १ ॥

**अभि सुवानास इन्दवो वृष्टयः पृथिवीमिव । इन्द्रं सोमासो अक्षरन् ॥ २ ॥**

अभि । सुवानासः । इन्दवः । वृष्टयः । पृथिवीम्ऽइव । इन्द्रम् । सोमासः । अक्षरन् ॥ २ ॥

**वेङ्कट०** इन्द्रम् अभि अक्षरन्[7] सूयमानाः[8] इन्दवः वृष्टयः इव पृथिवीम् सोमाः ॥ २ ॥

**अत्यूर्मिर्मत्सरो मदः सोमः पवित्रे अर्षति । विघ्नन् रक्षांसि देवयुः ॥ ३ ॥**

---

१. °ति वि[२] अ[१]. २. नास्ति वि[१]. ३-३ नास्ति मूको. ४. °न्तम् वि[२] अ[१]. ५. °प्राम् वि[२] अ[१]; प्ताः वि[१]. ६. °प्ताम् वि[२] अ[१]. ७. °रत मूको ८. स्तूय° वि[२] अ[१].

अतिऽऊर्मिः । मत्सरः । मदः । सोमः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ ३ ॥

वेङ्कट० प्रवृद्धः मदनशीलः मदः सोमः[1] पवित्रे गच्छति विघ्नन् राक्षसान् देवकामः ॥ ३ ॥

आ कलशेषु धावति पवित्रे परि षिच्यते । उक्थैर्यज्ञेषु वर्धते ॥ ४ ॥

आ । कलशेषु । धावति । पवित्रे । परि । सिच्यते । उक्थैः । यज्ञेषु । वर्धते ॥ ४ ॥

वेङ्कट० आ धावति द्रोणकलशेषु पवित्रे परि सिच्यते शस्त्रैः च यज्ञेषु वर्धते ॥ ४ ॥

अति त्री सोम रोचना रोहन् न भ्राजसे दिवम् । इष्णन्त्सूर्यं न चोदयः ॥५॥

अति । त्री । सोम । रोचना । रोहन् । न । भ्राजसे । दिवम् । इष्णन् । सूर्यम् । न । चोदयः ॥ ५ ॥

वेङ्कट० त्रीन् लोकान् अति रोहन् च सोम! त्वं द्युलोकम् भ्राजसे प्रकाशयसि[2] । तथा गच्छन् सूर्यम् च चोदयसि ॥ ५ ॥

अभि विप्रा अनूषत मूर्धन् यज्ञस्य कारवः । दधानाश्चक्षसि प्रियम् ॥ ६ ॥

अभि । विप्राः । अनूषत । मूर्धन् । यज्ञस्य । कारवः । दधानाः । चक्षसि । प्रियम् ॥ ६ ॥

वेङ्कट० अभि स्तुवन्ति विप्राः मूर्धन् यज्ञस्य कर्तारः दधानाः तेजसि सोमे प्रियम् ॥ ६ ॥

तमु त्वा वाजिनं नरो धीभिर्विप्रा अवस्यवः । मृजन्ति देवतातये ॥ ७ ॥

तम् । ऊँ इति । त्वा । वाजिनम् । नरः । धीभिः । विप्राः । अवस्यवः । मृजन्ति । देवऽतातये ॥

वेङ्कट० तम् उ त्वा वाजिनम् मनुष्याः कर्मभिः विप्राः रक्षणेप्सवः[3] शोधयन्ति यज्ञाय ॥ ७ ॥

मधोर्धारामनु क्षर तीव्रः सधस्थमासदः । चारुर्ऋताय पीतये ॥ ८ ॥

मधोः । धाराम् । अनु । क्षर । तीव्रः । सधऽस्थम् । आ । असदः । चारुः । ऋताय । पीतये ॥

वेङ्कट० मधोः धाराम् [4]अनु क्षर तीव्ररसस्त्वम्[4] स्थानम् आ सीद चारुः त्वं यज्ञार्थं पानाय[5] इति ॥ ८ ॥

[6]इति षष्ठाष्टके अष्टमाध्याये सप्तमो वर्गः[6] ॥

[१८]

[6]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[6] ।

परि सुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः । मदेषु सर्वधा असि ॥ १ ॥

---

१. °म वि[1] अ[1]. २. °यस वि[3] अ[1]; नास्ति वि[1]. ३ नास्ति मूको. ४-४ °नु क्षर त्वं वि[1] अ[1]; °रतीव्ररसस्त्वं वि[1]. ५. पादाय वि[3]; पादय अ[1]. ६-६. नास्ति मूको.

परि॑ । सु॒वा॒नः । गि॒रि॒ऽस्थाः । प॒वित्रे॑ । सोमः॑ । अ॒क्षा॒रि॒ति॑ । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ १ ॥

**वेङ्कट०** परि क्षरति सूयमानः ग्रावसु स्थितः पवित्रे सोमः । स स्तोतृषु सर्वस्य धाता भवसि मादकेषु ॥ १ ॥

त्वं विप्र॒स्त्वं क॒विर्मधु॒ प्र जा॒तमन्ध॑सः । मदे॑षु सर्व॒धा अ॑सि ॥ २ ॥

त्वम् । विप्रः॑ । त्वम् । क॒विः । मधु॑ । प्र । जा॒तम् । अन्ध॑सः । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ २ ॥

**वेङ्कट०** त्वम् मेधावी, त्वम् क्रान्तः, मधु च प्र यच्छसि जातम् अन्नात्[1] ॥ २ ॥

तव॒ विश्वे॑ स॒जोष॑सो दे॒वासः॑ पी॒तिमा॑शत । मदे॑षु सर्व॒धा अ॑सि ॥ ३ ॥

तव॑ । विश्वे॑ । स॒ऽजोष॑सः । दे॒वासः॑ । पी॒तिम् । आ॒श॒त॒ । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ ३ ॥

**वेटङ्क०** तव सर्वे देवाः सङ्गताः प्राप्नुवन् पानम् ॥ ३ ॥

आ यो विश्वा॑नि॒ वार्या॑ वसू॑नि॒ हस्त॑योर्द॒धे । मदे॑षु सर्व॒धा अ॑सि ॥ ४ ॥

आ । यः । विश्वा॑नि । वार्या॑ । वसू॑नि । हस्त॑योः । द॒धे । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ ४ ॥

**वेङ्कट०** आ दधाति यः[2] सर्वाणि वरणीयानि धनानि हस्तयोः स्तोतुः ॥ ४ ॥

य इ॒मे रोद॑सी म॒ही सं मा॒तरे॑व॒ दोह॑ते । मदे॑षु सर्व॒धा अ॑सि ॥ ५ ॥

यः । इ॒मे इति॑ । रोद॑सी॒ इति॑ । म॒ही इति॑ । सम् । मा॒तरा॑ऽइव । दोह॑ते । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ ५ ॥

**वेङ्कट०** [3]यः इमे द्यावापृथिव्यौ महत्यौ सम् दोहते, यथा† एकः वत्सो[3] द्वे मातरौ इति ॥ ५ ॥

परि॒ यो रोद॑सी उ॒भे स॒द्यो वाजे॑भि॒रर्ष॑ति । मदे॑षु सर्व॒धा अ॑सि ॥ ६ ॥

परि॑ । यः । रोद॑सी॒ इति॑ । उ॒भे इति॑ । स॒द्यः । वाजे॑भिः । अर्ष॑ति । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ ६ ॥

**वेङ्कट०** यः उभे द्यावापृथिव्यौ अन्नैः सद्यः परि गच्छति ॥ ६ ॥

स शु॒ष्मी क॒लशे॒ष्वा पु॑ना॒नो अ॑चिक्रदत् । मदे॑षु सर्व॒धा अ॑सि ॥ ७ ॥

सः । शु॒ष्मी । क॒लशे॑षु । आ । पु॒ना॒नः । अ॒चि॒क्र॒द॒त् । मदे॑षु । स॒र्व॒ऽधाः । अ॒सि॒ ॥ ७ ॥

**वेङ्कट०** सः बलवान् कलशेषु पूयमानः शब्दं करोति ॥ ७ ॥

[4]इति षष्ठाष्टके अष्टमाध्याये अष्टमो वर्गः[4] ॥

---

१. अन्नम् वि[2]; अन्नाः अ[1]; [2]न्नात् वि[1]. २. च वि[2] अ[1]. ३-३. नास्ति वि[1]. † यदा वि[1] अ[1]. ४-४. नास्ति मूको.

[ १९ ]

[1]काश्यपोऽसितो देवलो वा ऋषिः। पवमानः सोमो देवता । गायत्री छन्दः[1] ।

यत् सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नः पुनान आ भर ॥ १ ॥

यत् । सोम । चित्रम् । उक्थ्यम् । दिव्यम् । पार्थिवम् । वसु । तत् । नः । पुनानः । आ । भर ॥१॥

**वेङ्कट०** यत् सोम! चायनीयम्[2] प्रशस्यम् दिव्यम् पार्थिवम् च [3]धनम्, तत् † नः पूयमानः आ हर[3] ॥ १ ॥

युवं हि स्थः स्वर्पती इन्द्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥ २ ॥

युवम् । हि । स्थः । स्वःपती इति स्वःऽपती । इन्द्रः । च । सोम । गोपती इति गोऽपती । ईशाना । पिप्यतम् । धियः ॥ २ ॥

**वेङ्कट०** [4]युवम् हि स्थः सर्वस्य स्वामिनौ, इन्द्रः त्वम् † च हे सोम![4] गवां च स्वामिनौ । तौ अस्माकम् ईश्वरौ आप्याययतम् कर्माणि ॥ २ ॥

वृषा पुनान आयुषु स्तनयन्नधि बर्हिषि । हरिः सन् योनिमासदत् ॥ ३ ॥

वृषा । पुनानः । आयुषु । स्तनयन् । अधि । बर्हिषि । हरिः । सन् । योनिम् । आ । असदत् ॥३॥

**वेङ्कट०** वर्षिता पूयमानः[5] मनुष्येषु शब्दं कुर्वन् अधि बर्हिषि हरितवर्णः[6] सन् आ सीदति स्थानम् ॥ ३ ॥

अवावशन्त धीतयो वृषभस्याधि रेतसि । सूनोर्वत्सस्य मातरः ॥ ४ ॥

अवावशन्त । धीतयः । वृषभस्य । अधि । रेतसि । सूनोः । वत्सस्य । मातरः ॥ ४ ॥

**वेङ्कट०** अभिकामं [7]कुर्वन्ति धीयमाना वसतीवर्यः वृषभस्य रेतसि । सोमं कामयन्त इत्यर्थः[7] । तदेवाह—आत्मना सूतस्य वत्सस्य सोमस्य रेतसि अवावशन्त[8] मातरः आप[9] इति ॥ ४ ॥

कुविद् वृषण्यन्तीभ्यः पुनानो गर्भमादधत् । याः शुक्रं दुहते पयः ॥ ५ ॥

कुवित् । वृषण्यन्तीभ्यः । पुनानः । गर्भम् । आऽदधत् । याः । शुक्रम् । दुहते । पयः ॥ ५ ॥

**वेङ्कट०** अत्यन्तं वृषणम् आत्मानम् [10]इच्छन्तीभ्यः वसतीवरीभ्यः[10] पूयमानः सोमः गर्भम् आधत्ते । याः[11] वसतीवर्यो भूत्वा [4]दीप्तम् पयः दुहते इति[4] ॥ ५ ॥

उप शिक्षापतस्थुषो भियसमा धेहि शत्रुषु । पवमान विदा रयिम् ॥ ६ ॥

---

१-१. नास्ति मूको. २. पाय॰ मूको ३-३. ध… वि[1]. † नास्ति वि[1] अ[1]. ४-४. त्रुटितम् वि[1]. † नास्ति वि[2] अ[1]. ५. सूय॰ वि[2]. ६. हरिव॰ वि[2] अ[2]. ७-७. कु…र्थः वि[1]. ८. अवाव॰ मूको. ९. अप मूको. १०-१०. इच्छन्ति … वि[2] अ[1]; नास्ति वि[1]. ११. नास्ति वि[2]; य अ[2].

उप॑ । शि॒क्ष॒ । अ॒प॒ऽत॒स्थुषः॑ । भि॒यस॑म् । आ । धे॒हि॒ । शत्रु॑षु । पव॑मान । वि॒दाः । र॒यिम् ॥६॥

**वेङ्कट०** [1]समीपे कुरु विमुखान् असङ्गतान्, भयम्[1] च आ धेहि शत्रुषु पवमान! तेषां धनम् च विन्द इति ॥ ६ ॥

नि शत्रोः॑ सोम॒ वृष्ण्यं॒ नि शुष्मं॒ नि वय॑स्तिर । दू॒रे वा॑ स॒तो अन्ति॑ वा ॥ ७ ॥

नि । शत्रोः॑ । सो॒म॒ । वृष्ण्य॑म् । नि । शुष्म॑म् । नि । वयः॑ । ति॒र॒ । दू॒रे । वा॒ । स॒तः । अन्ति॑ । वा॒ ॥

**वेङ्कट०** विनाशय[2] सोम! शत्रोः[3] बलम् तेजः अन्नम् च दूरे वा अन्तिके वा विद्यमानस्य ॥७॥

[4]इति षष्ठाष्टके अष्टमाध्याये नवमो वर्गः[4] ॥

## [ २० ]

[5]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।

प्र क॒विर्दे॒ववी॑तये॒ऽव्यो॒ वारे॑भिरर्षति । सा॒ह्वान् विश्वा॑ अ॒भि स्पृधः॑ ॥ १ ॥

प्र । क॒विः । दे॒वऽवी॑तये । अव्यः॑ । वारे॑भिः । अ॒र्ष॒ति॒ । स॒ह्वान् । विश्वाः॑ । अ॒भि । स्पृधः॑ ॥१॥

**वेङ्कट०** प्र गच्छति कविः यज्ञाय अवेः वालेभ्यः [5]अभिभवन्† सर्वान् शत्रून्[5] ॥ १ ॥

स हि ष्मा॑ जरि॒तृभ्य॒ आ वाजं॒ गोम॑न्तमि॒न्वति॑ । पव॑मानः सह॒स्रिण॑म् ॥ २ ॥

सः । हि । स्म॒ । ज॒रि॒तृऽभ्यः॑ । आ । वाज॑म् । गोऽम॑न्तम् । इ॒न्वति॑ । पव॑मानः । स॒ह॒स्रिण॑म् ॥२॥

**वेङ्कट०** [6]सः हि खलु स्तोतृभ्यः अन्नं गोमत्[6] प्रेरयति पवमानः सहस्रसङ्ख्यम् ॥ २ ॥

परि॒ विश्वा॑नि॒ चेत॑सा मृ॒शसे॒ पव॑से म॒ती । स नः॑ सोम॒ श्रवो॑ विदः ॥ ३ ॥

परि॑ । विश्वा॑नि । चेत॑सा । मृ॒शसे॑ । पव॑से । म॒ती । सः । नः॒ । सो॒म॒ । श्रवः॑ । वि॒दः॒ ॥ ३ ॥

**वेङ्कट०** परि मृशसि विश्वानि धनानि चेतसा, क्षरसि[7] च स्तुत्या सह। सः अस्मभ्यम् सोम! अन्नम् देहि ॥ ३ ॥

अ॒भ्य॑र्ष बृ॒हद्यशो॑ म॒घव॑द्भ्यो ध्रु॒वं र॒यिम् । इषं॑ स्तो॒तृभ्य॒ आ भ॑र ॥ ४ ॥

अ॒भि । अ॒र्ष॒ । बृ॒हत् । यशः॑ । म॒घव॑त्ऽभ्यः । ध्रु॒वम् । र॒यिम् । इष॑म् । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ ॥४॥

**वेङ्कट०** [6]अभि गमय महतीम् कीर्तिम् हविष्मद्भ्यः[6] ध्रुवम् च रयिम्। इषम् च स्तोतृभ्यः आ भर ॥४॥

त्वं राजे॑व सुव्र॒तो गिरः॑ सो॒मा वि॑वेशिथ । पु॒ना॒नो व॑ह्ने अद्भुत ॥ ५ ॥

---

१-१. त्रुटितम् मूको. २. °शाय वि[1]. ३. °त्रो वि[2] अ[1]. ४-४. नास्ति मूको. ५-५. अभि ··· वि[1]. † °वत् वि[2] अ[1]. ६-६. त्रुटितम् वि[1]. ७. °रति वि[2] अ[1].

त्वम् । राजाऽइव । सुऽव्रतः । गिरः । सोम । आ । विवेशिथ । पुनानः । वह्ने । अद्भुत ॥ ५ ॥

वेङ्कट० [1]त्वम् राजा इव[1] सुकर्मा स्तुतीः सोम! आ विशसि पूयमानः [2]वोढः! महन्![2] ॥ ५ ॥

**स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः । सोमश्चमूषु सीदति ॥ ६ ॥**

सः । वह्निः । अप्ऽसु । दुस्तरः । मृज्यमानः । गभस्त्योः । सोमः । चमूषु । सीदति ॥ ६ ॥

वेङ्कट० सः वोढा अन्तरिक्षे स्थितः दुस्तरः शोध्यमानः बाहुभ्याम् सोमः चमूषु सीदति ॥ ६ ॥

**क्रीळुर्मखो न मंहयुः पवित्रं सोम गच्छसि । दधत् स्तोत्रे सुवीर्यम् ॥ ७ ॥**

क्रीळुः । मखः । न । मंहयुः । पवित्रम् । सोम । गच्छसि । दधत् । स्तोत्रे । सुऽवीर्यम् ॥ ७ ॥

वेङ्कट० [3]क्रीडनशीलः दाता इव दानमिच्छन् पवित्रम् सोम! अति-गच्छसि प्रयच्छन्†[3] स्तोत्रे शोभनं वीर्यम् इति ॥ ७ ॥

[4]इति षष्ठाष्टके अष्टमाध्याये दशमो वर्गः[4] ॥

## [ २१ ]

[4]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

**एते धावन्तीन्दवः सोमा इन्द्राय घृष्वयः । मत्सरासः स्वर्विदः ॥ १ ॥**

एते । धावन्ति । इन्दवः । सोमाः । इन्द्राय । घृष्वयः । मत्सरासः । स्वःऽविदः ॥ १ ॥

वेङ्कट० एते धावन्ति दीप्ताः सोमाः इन्द्राय वर्षणशीलाः[5] मादयितारः स्वर्लोकस्य लम्भयितारः ॥ १ ॥

**प्रवृण्वन्तो अभियुजः सुष्वये वरिवोविदः । स्वयं स्तोत्रे वयस्कृतः ॥ २ ॥**

प्रऽवृण्वन्तः । अभिऽयुजः । सुस्वये । वरिवःऽविदः । स्वयम् । स्तोत्रे । वयःऽकृतः ॥ २ ॥

वेङ्कट० सुन्वानं वितृण्वन्तः शत्रूणाम् [6]अभियोक्तारः सुस्वये† यजमानाय अन्नस्य लम्भयितारः भवन्ति‡, स्वयम् एव स्तोत्रे[6] अन्नस्य कर्तारः ॥ २ ॥

**वृथा क्रीळन्त इन्दवः सधस्थमभ्येकमित् । सिन्धोरूर्मा व्यक्षरन् ॥ ३ ॥**

वृथा । क्रीळन्तः । इन्दवः । सधऽस्थम् । अभि । एकम् । इत् । सिन्धोः । ऊर्मा । वि । अक्षरन् ॥

वेङ्कट० अनायासेन क्रीडन्तः इन्दवः एकम् सधस्थम्[7] अभि अक्षरन् । सिन्धोः ऊर्मौ[8] वसतीवरीषु वि अक्षरन् इति ॥ ३ ॥

---

१-१. ··· व वि[१]. २-२. वोढुम् वि[२]; वोढम् अ[१]. ३-३. क्रीड ··· वि[१]. † °प्रयच्छ वि[२]; °प्रयच्छस्य अ[१]. ४-४. नास्ति मूको. ५. धर्ष° वि[२]. ६-६. अभि···त्रे वि[१]. † सुषिये वि[२]. ‡ नास्ति वि[२]. ७. सधस्तम् वि[२]. ८. ऊर्मोः वि[२]; उर्वो अ[१].

एते विश्वानि वार्या पवमानास आशत । हिता न सप्तयो रथे ॥ ४ ॥

एते । विश्वानि । वार्या । पवमानासः । आशत । हिताः । न । सप्तयः । रथे ॥ ४ ॥

**वेङ्कट०** एते विश्वानि **वरणीयानि धनानि** [1]पूयमानाः व्याप्नुवन्[1] **नियुक्ताः** **इव अश्वाः** रथे[2] ॥४॥

आस्मिन् पिशङ्गमिन्दवो दधाता वेनमादिशे । यो अस्मभ्यमरावा ॥ ५ ॥

आ । अस्मिन् । पिशङ्गम् । इन्दवः । दधात । वेनम् । आऽदिशे । यः । अस्मभ्यम् । अरावा ॥

**वेङ्कट०** [2]आ दधात अस्मिन्[2] **पुरुषे बहुरूपम्** इन्दवः ! **कामम्** आदिशे[3,4], यः[4] अस्मभ्यम् **न**[5] **प्रयच्छति । सञ्जातकामो**[6] **हि**[7] **प्रयच्छति** ॥ ५ ॥

ऋभुर्न रथ्यं नवं दधाता केतमादिशे । शुक्राः पवध्वमर्णसा ॥ ६ ॥

ऋभुः । न । रथ्यम् । नवम् । दधात । केतम् । आऽदिशे । शुक्राः । पवध्वम् । अर्णसा ॥६॥

**वेङ्कट०** उरु भातीति[8] ऋभुः (तु. या ११,१५) **स्वामी रथस्य । [9]स यथा रथस्य**[9] नेतारं **सारथिम्** नवम्[7] **अग्र आधत्ते,** तथा **अस्मिन् प्रज्ञानम् आधत्त** आदिशे[7] । **यः अस्मभ्यम् न** [9]**प्रयच्छति । दीप्ताः** पवध्वम् **उदकेन**[9] ॥ ६ ॥

एत उ त्ये अवीवशन् काष्ठां वाजिनो अक्रत । सतः प्रासाविषुर्मतिम् ॥ ७ ॥

एते । ऊँ इति । त्ये । अवीवशन् । काष्ठाम् । वाजिनः । अक्रत । सतः । प्र । असाविषुः । मतिम् ॥

**वेङ्कट०** [10]त **इमे यज्ञं कामयन्ते**[10] । **कान्त्वा**[11] **च वासस्थानम्**[12] वाजिनः[4] **अकृण्वन् द्रोणकलशान्** । सतः **च** प्र असाविषुः **स्तोत्रम् अपि वा बुद्धिम्** । 'त्वं सोमासि सत्पतिः'[13] ( ऋ १,९१,५ ) **इति उक्तम्** ॥ ७ ॥

[14]**इति षष्ठाष्टके अष्टमाध्याये एकादशो वर्गः**[14] ॥

## [ २२ ]

[17]**काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः**[17] ।

एते सोमास आशवो रथा इव प्र वाजिनः । सर्गाः सृष्टा अहेषत ॥ १ ॥

एते । सोमासः । आशवः । रथाःऽइव । प्र । वाजिनः । सर्गाः । सृष्टाः । अहेषत ॥ १ ॥

**वेङ्कट०** एते **सोमाः**[15] **शीघ्राः**[15] रथाः इव प्र **हेषन्ते**[17] [18]**बलवन्तः अश्वाः इव च विसृष्टाः इति**[18] ॥१॥

---

१-१. पूय ··· वि[1]. † न्या° वि[2]. ‡ अभिनि° अ[1]. २-२. त्रुटितम् वि[1]; अस्मिन् आद° वि[2] अ[1]. ३. तु. वें ऋ ६,४८,१४. ४. नास्ति मूको. ५. अतं मूको. ६. °तरामः वि[2]. ७. अभि वि[2]. ८. भो° वि[2] अ[1]. ९-९. नास्ति वि[1]. १०-१०. ··· न्ते वि[1]. ११. क्रान्ता मूको. १२. वाचस्था° वि[1,2]; वाच° अ[1]. १३. पतिः वि[2] अ[1]. १४-१४. नास्ति मूको. १५. °मासः वि[1]. १६. °ग्र वि[2] अ[1]. १७. °हेन्त° वि[2]. १८-१८. न ··· वि[1].

एते वाता इवोरवः पर्जन्यस्येव वृष्टयः । अग्नेरिव भ्रमा वृथा ॥ २ ॥

एते । वाताःऽइव । उरवः । पर्जन्यस्यऽइव । वृष्टयः । अग्नेःऽइव । भ्रमाः । वृथा ॥ २ ॥

**वेङ्कट०** [1]एते वाताः इव महान्तः[1] पर्जन्यस्य इव च वृष्टयः अग्नेः इव च भ्रमाः अनायासेन निस्सरन्ति ॥२॥

एते पूता विपश्चितः सोमासो दध्याशिरः । विपा व्यानशुर्धियः ॥ ३ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः । विपा । वि । आनशुः । धियः ॥ ३ ॥

**वेङ्कट०** एते पूताः प्राज्ञाः सोमाः दधिमिश्रणाः[2] प्रज्ञानेन वि आनशुः कर्माणि ॥ ३ ॥

एते मृष्टा अमर्त्याः ससृवांसो न शश्रमुः । इयक्षन्तः पथो रजः ॥ ४ ॥

एते । मृष्टाः । अमर्त्याः । ससृऽवांसः । न । शश्रमुः । इयक्षन्तः । पथः । रजः ॥ ४ ॥

**वेङ्कट०** एते [3]पवित्रेण मृष्टाः अमृताः हविर्धानात् सरन्तः न श्राम्यन्ति दातुमिच्छन्तः[3] मार्गान् लोकान् च स्तोतॄणाम् ॥ ४ ॥

एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः । उतेदमुत्तमं रजः ॥ ५ ॥

एते । पृष्ठानि । रोदसोः । विऽप्रयन्तः । वि । आनशुः । उत । इदम् । उत्ऽतमम् । रजः ॥५॥

**वेङ्कट०** [4]एते पृष्ठानि[4] द्यावापृथिव्योः विविधं प्रयन्तः वि आप्नुवन्ति, अपि[5] च इमम् उत्तमम् लोकम् ॥ ५ ॥

तन्तुं तन्वानमुत्तममनु प्रवत आशत । उतेदमुत्तमाय्यम् ॥ ६ ॥

तन्तुम् । तन्वानम् । उत्ऽतमम् । अनु । प्रऽवतः । आशत । उत । इदम् । उत्तमाय्यम् ॥ ६ ॥

**वेङ्कट०** यज्ञम् तन्वानम् सोमम् उत्तमम् अनु [6]आशत अधःस्थिताः । अपि च† इदम् उत्तमाय्यम्‡[6] रजः अन्वश्नुते[7] । पृथिव्या अन्तरिक्षेण च उत्तमीकृतम् उत्तमाय्यम्[8] इति ॥ ६ ॥

त्वं सोम पणिभ्य आ वसु गव्यानि धारयः । ततं तन्तुमचिक्रदः ॥ ७ ॥

त्वम् । सोम । पणिऽभ्यः । आ । वसु । गव्यानि । धारयः । ततम् । तन्तुम् । अचिक्रदः ॥ ७ ॥

**वेङ्कट०** त्वम् सोम! पणिभ्यः गोहितानि वसूनि आहृत्य धारयसि, [9]यज्ञम् प्रति[9] अनुस्यूतम् शब्दं च अकार्षीः[10] ॥ ७ ॥

[1]इति षष्ठाष्टके अष्टमाध्याये द्वादशो वर्गः[1] ॥

---

१-१. ···न्तः वि[1]. २. °मिश्रिणा वि[2]. ३-३. प···न्तो वि[1]. ४-४. नास्ति वि[1].
५. नास्ति वि[1]. ६-६. °शता अवि चे ··· उत्तमार्य्यम् वि[1]. †-† चेत् वि[2]. ‡ °मार्यम् वि[2] अ[1].
७. अनुअते वि[1,2]; अन्व आते अ[1]. ८. °मार्यम् वि[2] अ[1]; °मार्य्यम् वि[1]. ९-९. नास्ति मूको.
१०. कार्षीत् वि[2] अ[1]; अकार्षीत् वि[1].

[ २३ ]

[1]काश्यपोऽसितो देवलो वा ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[1]।

सोमा असृग्रमाशवो मधोर्मदस्य धारया। अभि विश्वानि काव्या ॥ १ ॥

सोमाः। असृग्रम्। आशवः। मधोः। मदस्य। धारया। अभि। विश्वानि। काव्या ॥ १ ॥

**वेङ्कट०** सोमाः मृज्यन्ते[2] आशवः मदकरस्य मधोः धारया [3]लक्षीकृत्य सर्वाणि स्तोत्राणि[3] ॥ १ ॥

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः। रुचे जनन्त सूर्यम् ॥ २ ॥

अनु। प्रत्नासः। आयवः। पदम्। नवीयः। अक्रमुः। रुचे। जनन्त। सूर्यम् ॥ २ ॥

**वेङ्कट०** [4]प्रत्नाः केचिद् अश्वाः नवतरम्[4] पदम् अनु क्रमन्त इति पततः सोमान् आह। ते दीप्त्यै च कुर्वन्ति सूर्यम् इति ॥ २ ॥

आ पवमान नो भरार्यो अदाशुषो गयम्। कृधि प्रजावतीरिषः ॥ ३ ॥

आ। पवमान। नः। भर। अर्यः। अदाशुषः। गयम्। कृधि। प्रजाऽवतीः। इषः ॥ ३ ॥

**वेङ्कट०** आ भर पवमान! अस्मभ्यम् [5]अरेः अप्रयच्छतः[5] गृहम्, कुरु च प्रजावन्ति अन्नानि ॥३॥

अभि सोमास आयवः पवन्ते मद्यं मदम्। अभि कोशं मधुश्चुतम् ॥ ४ ॥

अभि। सोमासः। आयवः। पवन्ते। मद्यम्। मदम्। अभि। कोशम्। मधुऽश्चुतम् ॥ ४ ॥

**वेङ्कट०** अभि पवन्ते [6]सोमाः गच्छन्तः मदकरं रसम्। अभि पवन्ते कोशम्† मधुच्यावकम्‡ इति रसम्[6] आह इति ॥ ४ ॥

सोमो अर्षति धर्णसिर्दधान इन्द्रियं रसम्। सुवीरो अभिशस्तिपाः ॥ ५ ॥

सोमः। अर्षति। धर्णसिः। दधानः। इन्द्रियम्। रसम्। सुऽवीरः। अभिशस्तिऽपाः ॥ ५ ॥

**वेङ्कट०** सोमः[7] पवते धारयिता कुर्वन्[8] [9]इन्द्रस्य प्रियकरम्[9] रसम् सुवीरः अभिशस्तेः पाता ॥५॥

इन्द्राय सोम पवसे देवेभ्यः सधमाद्यः। इन्दो वाजं सिषाससि ॥ ६ ॥

इन्द्राय। सोम। पवसे। देवेभ्यः। सधऽमाद्यः। इन्दो इति। वाजम्। सिसाससि ॥ ६ ॥

**वेङ्कट०** [10]इन्द्राय सोम! पवसे[10] देवेभ्यः च सधमादहेतुः[11]। इन्दो![12] त्वम् अन्नम् दातुमिच्छसि ॥६॥

---

१-१. नास्ति मूको. २. स्पृश्यन्ते अ[1]. ३-३. लक्षी ··· वि[1]. ४-४. त्रुटितम् वि. ५-५. अरेः प्र° वि[1]; अरे प्र° वि[2] अ[1]. ६-६. सोमम् वि[1]. † क्रोशम् वि[2] अ[1]. ‡ अधःश्याव° वि[2] अ[1]. ७. °मन् वि[2]. ८. °र्वन्ति वि[2] अ[1]. ९-९. °न्द्रप्रि° वि[1]. १०-१०. नास्ति वि[2] अ[1]. ११. सद्दमा° अ[1] वि[1]. १२. इन्द्र वि[2]; °न्द्रः अ[1].; °न्द्रो वि[1].

अस्य पीत्वा मदानामिन्द्रो वृत्राण्यप्रति । जघान जघनच्च नु ॥ ७ ॥

अस्य । पीत्वा । मदानाम् । इन्द्रः । वृत्राणि । अप्रति । जघान । जघनत् । च । नु ॥ ७ ॥

वेङ्कट० [1]मदकराणां मध्ये अमुम् पीत्वा इन्द्रः शत्रून् अप्रतिगतोऽन्यैः† जघान, हन्तु‡ च क्षिप्रम्[1] इति ॥ ७ ॥

[2]इति षष्ठाष्टके अष्टमाध्याये त्रयोदशो वर्गः[2] ॥

## [ २४ ]

[3]काश्यपोऽसितो देवलो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[3] ।

प्र सोमासो अधन्विषुः पवमानास इन्दवः । श्रीणाना अप्सु मृञ्जत ॥ १ ॥

प्र । सोमासः । अधन्विषुः । पवमानासः । इन्दवः । श्रीणानाः । अप्ऽसु । मृञ्जत ॥ १ ॥

वेङ्कट० प्र गच्छन्ति[3] सोमाः पूयमानाः दीप्ताः । गोभिः श्रीयमाणाः[4] वसतीवरीषु च मृज्यन्ते ॥१॥

अभि गावो अधन्विषुरापो न प्रवता यतीः । पुनाना इन्द्रमाशत ॥ २ ॥

अभि । गावः । अधन्विषुः । आपः । न । प्रऽवता । यतीः । पुनानाः । इन्द्रम् । आशत ॥ २ ॥

वेङ्कट० अभि गच्छन्ति गमनशीलाः[5] इव[6] इन्दवः आपः इव प्रवणेन गच्छन्त्यः । [7]पूयमानाः च इन्द्रम् व्याप्नुवन्ति[7] ॥ २ ॥

प्र पवमान धन्वसि सोमेन्द्राय पातवे । नृभिर्यतो वि नीयसे ॥ ३ ॥

प्र । पवमान । धन्वसि । सोम । इन्द्राय । पातवे । नृऽभिः । यतः । वि । नीयसे ॥ ३ ॥

वेङ्कट० [8]प्र गच्छसि पवमान! सोम![8] इन्द्रस्य पानाय नृभिः च गृहीतः, वि नीयसे च हविर्धानात् ॥ ३ ॥

त्वं सोम नृमादनः पवस्व चर्षणीसहे । सस्निर्यो अनुमाद्यः ॥ ४ ॥

त्वम् । सोम । नृऽमादनः । पवस्व । चर्षणिऽसहे । सस्निः । यः । अनुऽमाद्यः ॥ ४ ॥

वेङ्कट० त्वम् सोम ! नृणां मदयिता पवस्व चर्षणीनाम्[9] अभिभवित्रे इन्द्राय, शुद्धः यः स्तोतव्यः ॥ ४ ॥

इन्दो यदद्रिभिः सुतः पवित्रं परिधावसि । अरमिन्द्रस्य धाम्ने ॥ ५ ॥

---

१-१. म ··· क्षि° वि[2]. † अभिगतः वि[2] अ[1]. ‡ हन्तु वि[2]. २-२. नास्ति मूको. ३. यच्छति वि[2] अ[1]; यच्छन्ति वि[1]. ४. श्रय° वि[2] अ[1]. ५ मदन° वि[2] अ[1]. ६. नास्ति वि[1]. ७-७. नास्ति वि[1]. ८-८. ··· वि[1]. ९. वर्षणीयानाम् वि[1].

इन्दो इति । यत् । अद्रिऽभिः । सुतः । पवित्रम् । परिऽधावसि । अरम् । इन्द्रस्य । धाम्ने ॥५॥

**वेङ्कट०** इन्दो![1] यदा त्वं ग्रावभिः सुतः पवित्रम् परिधावसि, तदा पर्याप्तं भवसि इन्द्रस्य शरीराय ॥ ५ ॥

**पवस्व वृत्रहन्तमोक्थेभिरनुमाद्यः । शुचिः पावको अद्भुतः ॥ ६ ॥**

पवस्व । वृत्रहन्ऽतम । उक्थेभिः । अनुऽमाद्यः । शुचिः । पावकः । अद्भुतः ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

**शुचिः पावक उच्यते सोमः सुतस्य मध्वः । देवावीरघशंसहा ॥ ७ ॥**

शुचिः । पावकः । उच्यते । सोमः । सुतस्य । मध्वः । देवऽअवीः । अघशंसऽहा ॥ ७ ॥

**वेङ्कट०** निर्मलः शोधकः उच्यते सोमः अभिषुतस्य मधोः[2] सबन्धीति अंशुभ्यः सुतं सोममाह । सोऽयं देवानामविता रक्षसां [3]हन्ता इति[3] ॥ ७ ॥

[4]इति षष्ठाष्टके अष्टमाध्याये चतुर्दशो वर्गः[4] ॥

## [ २५ ]

[4]दृळहच्युत आगस्त्य ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

**पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥ १ ॥**

पवस्व । दक्षऽसाधनः । देवेभ्यः । पीतये । हरे । मरुत्ऽभ्यः । वायवे । मदः ॥ १ ॥

**वेङ्कट०** [5]दृढच्युत आगस्त्यः । पवस्व बलस्य साधयिता[5] देवपानार्थं हे हरितवर्ण! मरुद्भ्यः वायवे च मदकरः ॥ १ ॥

**पवमान धिया हितो३भि योनिं कनिक्रदत् । धर्मणा वायुमा विश ॥ २ ॥**

पवमान । धिया । हितः । अभि । योनिम् । कनिक्रदत् । धर्मणा । वायुम् । आ । विश ॥ २ ॥

**वेङ्कट०** पवमान! अङ्गुल्या धृतः अभि विश स्थानम् शब्दं कुर्वन् । एतदेवाह— कर्मणा वायुम् आ विश इति । वायुः वायव्यं [6]पात्रम् इति[6] ॥ २ ॥

**सं देवैः शोभते वृषा कविर्योनावधि प्रियः । वृत्रहा देववीतमः ॥ ३ ॥**

सम् । देवैः । शोभते । वृषा । कविः । योनौ । अधि । प्रियः । वृत्रऽहा । देवऽवीतमः ॥ ३ ॥

---

१. इ ··· इन्द्रस्य वि[1]. २. मेधाः वि[2] अ[1]. ३-३. इ वि[1] ४-४. नास्ति मूको. ५-५. ··· ता वि[1]. ६-६. त्रुटितम् वि[1].

वेङ्कट० [1]देवैः सह शोभते वृषा कविः[1] स्थाने अधिवसन् प्रियः अमित्राणां हन्ता देवान् अत्यन्तं कामयमानः[2] ॥ ३ ॥

विश्वा॑ रू॒पाण्या॑वि॒शन् पु॑ना॒नो या॑ति हर्य॒तः । यत्रा॒मृता॑स॒ आस॑ते ॥ ४ ॥

विश्वा॑ । रू॒पाणि॑ । आ॒ऽवि॒शन् । पु॒ना॒नः । या॒ति॒ । ह॒र्य॒तः । यत्र॑ । अ॒मृता॑सः । आस॑ते ॥ ४ ॥

वेङ्कट० सर्वाणि रूपाणि आविशन् पूयमानः गच्छति[3] कमनीयः, यत्र देवाः आसते ॥ ४ ॥

अ॒रु॒षो ज॒नय॒न् गिरः॒ सोमः॑ पवत आयु॒षक् । इन्द्रं॑ गच्छ॑न् क॒विक्र॑तुः ॥ ५ ॥

अ॒रु॒षः । ज॒नय॑न् । गिरः॑ । सोमः॑ । प॒व॒ते॒ । आ॒यु॒षक् । इन्द्र॑म् । गच्छ॑न् । क॒विऽक्र॑तुः ॥ ५ ॥

वेङ्कट० [4]आरोचमानः जनयन् शब्दान् सोमः पवते अनुषक्तम् इन्द्रम्[4] गच्छन् क्रान्तप्रज्ञः ॥ ५ ॥

आ प॑वस्व मदिन्तम प॒वित्रं॒ धार॑या कवे । अ॒र्कस्य॒ योनि॑मा॒सद॑म् ॥ ६ ॥

आ । प॒व॒स्व॒ । म॒दि॒न्ऽत॒म॒ । प॒वित्र॑म् । धार॑या । क॒वे॒ । अ॒र्कस्य॑ । योनि॑म् । आ॒ऽसद॑म् ॥ ६ ॥

वेङ्कट० आभिमुख्येन पवस्व मादयितृतम! पवित्रम् अतीत्य[5] धारया कवे! अर्चनीयस्य इन्द्रस्य स्थानम् प्राप्तुम् ॥ ६ ॥

[6]इति षष्ठाष्टके अष्टमाध्याये पञ्चदशो वर्गः[6] ॥

## [ २६ ]

[1]इध्मवाहो दार्ढच्युत ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

तम॑मृक्षन्त वा॒जिन॑मु॒पस्थे॒ अदि॑ते॒रधि॑ । विप्रा॑सो॒ अण्व्या॑ धि॒या ॥ १ ॥

तम् । अ॒मृ॒क्ष॒न्त॒ । वा॒जिन॑म् । उ॒पऽस्थे॑ । अदि॑तेः । अधि॑ । विप्रा॑सः । अण्व्या॑ । धि॒या ॥ १ ॥

वेङ्कट० इध्मवाहो[7] [8]दार्ढच्युतः† । तम् परिमृजन्ति अश्वम् पृथिव्याः उपस्थे विप्राः सूक्ष्मया अङ्गुल्या[8] ॥ १ ॥

तं गावो॑ अ॒भ्य॑नूषत स॒हस्र॑धार॒मक्षि॑तम् । इन्दुं॑ ध॒र्तार॒मा दि॒वः ॥ २ ॥

तम । गावः॑ । अ॒भि । अ॒नू॒ष॒त॒ । स॒हस्र॑ऽधारम् । अक्षि॑तम् । इन्दु॑म् । ध॒र्तार॑म् । आ । दि॒वः ॥

वेङ्कट० तम् शब्दाः अभि स्तुवन्ति बहुधारम्[9] अक्षीणम् इन्दुम्[10] धर्तारम् स्वर्गस्य[11] ॥ २ ॥

---

१-१. त्रुटितम् वि[1]. २. °मानम वि[2] अ[1]. ३. अ छं° वि[2] अ[1]. ४-४. आ ··· न्द्रं वि[1]. ५. अधीत्य वि[1]. ६-६. नास्ति मूको. ७. इदावा° वि[2] अ[1]. ८-८. दार्ढच्यु ··· वि[1]. † दा(द क[1])र्धच्युतय वि[2] अ[1]. ९. °धारणम् वि[1]. १०. °न्दुः वि[2] अ[1]. ११. नास्ति अ[1].

तं वेधां मेधयांह्यन् पवंमानमधि द्यवि । धर्णसिं भूरिंधायसम् ॥ ३ ॥

तम् । वेधाम् । मेधयां । अह्यन् । पवंमानम् । अधि । द्यवि । धर्णसिम् । भूरिंऽधायसम् ॥ ३ ॥

**वेङ्कट०** तम् विधातारम् [1]मेधया प्रहिण्वन्ति पवमानम् द्युलोके प्रति धारयितारम् बहूनां धर्तारम्[1] ॥ ३ ॥

तमंह्यन् भुरिजोंर्धिया संवसानं विवस्वंतः । पतिं वाचो अदाभ्यम् ॥ ४ ॥

तम् । अह्यन् । भुरिजोंः । धिया । सम्ऽवसानम् । विवस्वंतः । पतिम् । वाचः । अदाभ्यम् ॥

**वेङ्कट०** तम्[2] प्रहिण्वन्ति[3] बाह्वोः अङ्गुल्या सह वसन्तम्[4] परिचरन्तः पतिम् वा[:]ः अहिंस्यम् ॥ ४ ॥

तं सानावधि जामयो हरिं हिन्वन्त्यद्रिभिः । हर्यतं भूरिंच[क्ष]सम् ॥ ५ ॥

तम् । सानौं । अधि । जामयः । हरिम् । हिन्वन्ति । अद्रिंऽभिः । हर्यतम् । भूरिंऽचक्षसम् ॥ ५ ॥

**वेङ्कट०** [5]तम् समुच्छ्रिते[5] देशे अङ्गुलयः हरितवर्णम् प्रेरयन्ति ग्रावभिः कमनीयम् बहोः द्रष्टारम् ॥ ५ ॥

तं त्वां हिन्वन्ति वेधसः पवंमान गिरावृधम् । इन्दविन्द्राय मत्सरम् ॥ ६ ॥

तम् । त्वा । हिन्वन्ति । वेधसः । पवंमान । गिराऽवृधम् । इन्दो इति । इन्द्राय । मत्सरम् ॥ ६ ॥

**वेङ्कट०** तम् त्वा[6] प्रेरयन्ति विधातारः पवमान ! स्तुत्या वृद्धम् इन्दुम् इन्दो ![7] इन्द्राय मदकरम् ॥ ६ ॥

[8]इति षष्ठाष्टके अष्टमाध्याये षोडशो वर्गः[8] ॥

## [ २७ ]

[1]नृमेध आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

एष कविरभिष्टुतः पवित्रे अधि तोशते । पुनानो घ्नन्नप स्रिधः ॥ १ ॥

एषः । कविः । अभिऽस्तुतः । पवित्रे । अधि । तोशते । पुनानः । घ्नन् । अप । स्रिधः ॥१॥

**वेङ्कट०** नृमेधः । एषः कविः अभिष्टुतः पवित्रे पूयते । तोशतिः[9] वधकर्मसु पठितः ( तु. निघ २,१९ ) पीडनकर्मा । पूयमानः अप[10] घ्नन् राक्षसान् ॥ १ ॥

एष इन्द्राय वायवे स्वर्जित् परि षिच्यते । पवित्रे दक्षसाधनः ॥ २ ॥

एषः । इन्द्राय । वायवे । स्वःऽजित् । परि । सिच्यते । पवित्रे । दक्षऽसाधनः ॥ २ ॥

---

१-१. नास्ति वि[२]. २. नास्ति वि[२] अ[१]. ३. प्रहिण्वन् वि[१]. ४. °न्तः वि[१]; °न्त अ[१]. ५-५. संप्रति वि[१]. ६. त्वाम् वि[१]. ७. नास्ति मूको. ८-८. नास्ति मूको. ९. अतोगतिः वि[२]; तो गतिः वि[१] अ[१]. १०. अव वि[२] अ[१]; अपि वि[२].

वेङ्कट० एषः इन्द्राय वायवे सर्वस्य जेता परि सिच्यते पवित्रे बलसाधनः ॥ २ ॥

एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः । सोमो वनेषु विश्ववित् ॥ ३ ॥

एषः । नृऽभिः । वि । नीयते । दिवः । मूर्धा । वृषा । सुतः । सोमः । वनेषु । विश्वऽवित् ॥३॥

वेङ्कट० एषः नृभिः विविधम् नीयते द्युलोकस्य मूर्धस्थानः[1] वृषा [2]अभिषुतः सोमः[2] पात्रेषु सर्वज्ञः ॥ ३ ॥

एष गव्युरचिक्रदत् पवमानो हिरण्ययुः । इन्दुः सत्राजिदस्तृतः ॥ ४ ॥

एषः । गव्युः । अचिक्रदत् । पवमानः । हिरण्यऽयुः । इन्दुः । सत्राऽजित् । अस्तृतः ॥ ४ ॥

वेङ्कट० एषः गा इच्छन् शब्दं[3] करोति पवमानः हिरण्यं [4]च इच्छन्[4] उभयम् आहर्तुमिच्छन्[4] शत्रुभ्यः इन्दुः महतो जेता अहिंसितः ॥ ४ ॥

एष सूर्येण हासते पवमानो अधि द्यवि । पवित्रे मत्सरो मदः ॥ ५ ॥

एषः । सूर्येण । हासते । पवमानः । अधि । द्यवि । पवित्रे । मत्सरः । मदः ॥ ५ ॥

वेङ्कट० एषः सूर्येण त्यज्यते पवमानः अन्तरिक्षे पवित्रे मत्सरः[5] सोमः ॥ ५ ॥

एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः । पुनान इन्दुरिन्द्रमा ॥ ६ ॥

एषः । शुष्मी । असिष्यदत् । अन्तरिक्षे । वृषा । हरिः । पुनानः । इन्दुः । इन्द्रम् । आ ॥६॥

वेङ्कट० एषः बलवान् स्यन्दते[7] अन्तरिक्षे वृषा हरिः पूयमानः इन्दुः इन्द्रम् च अभिगच्छति[8] ॥ ६ ॥

[9]इति षष्ठाष्टके अष्टमाध्याये सप्तदशो वर्गः[9] ॥

## [ २८ ]

[1]प्रियमेध आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः । अव्यो वारं वि धावति ॥ १ ॥

एषः । वाजी । हितः । नृऽभिः । विश्वऽवित् । मनसः । पतिः । अव्यः । वारम् । वि । धावति ॥

वेङ्कट० प्रियमेधः । एषः वाजी हितः नृभिः सर्ववित् मनसः पाता दशापवित्रम्[10] वि धावति ॥ १ ॥

एष पवित्रे अक्षरत् सोमो देवेभ्यः सुतः । विश्वा धामान्याविशन् ॥ २ ॥

---

१. स्थानः वि[1,2]; स्थाने अ[1]. २-२. [°]पुत तत् सोमः वि[1] अ[1]; [°]षुत सोमः वि[1]. ३. दिग्धम् वि[2]; दुग्धम् अ[1]. ४-४. चेत्सन् वि[1] अ[1]. ५. इत् वि[2] अ[1]. ६. मरुत्सर मूको. ७. [°]न्दति मूको. ८. [°]च्छतीति अ[1]. ९-९. नास्ति मूको. १०. दिशा[°] मूको.

एषः । पवित्रे । अक्षरत् । सोमः । देवेभ्यः । सुतः । विश्वा । धामानि । आऽविशन् ॥ २ ॥

वेङ्कट० एषः [1]पवित्रे क्षरति[1] सोम. देवार्थम् अभिषुतः विश्वानि देवशरीराणि आविशन्[2] ॥ २ ॥

एष देवः शुभायतेऽधि योनावमर्त्यः । वृत्रहा देववीतमः ॥ ३ ॥

एषः । देवः । शुभायते । अधि । योनौ । अमर्त्यः । वृत्रऽहा । देवऽवीतमः ॥ ३ ॥

वेङ्कट० एषः देवः राजते[3] स्थाने अमर्त्यः वृत्रहा [4]अत्यन्तं देवकामः[4] ॥ ३ ॥

एष वृषा कनिक्रदद् दशभिर्जामिभिर्यतः । अभि द्रोणानि धावति ॥ ४ ॥

एषः । वृषा । कनिक्रदत् । दशऽभिः । जामिऽभिः । यतः । अभि । द्रोणानि । धावति ॥ ४ ॥

वेङ्कट० [5]एषः वृषा[5] शब्दं कुर्वन् दशभिः[6] अङ्गुलीभिः[7] संयतः अभि धावति द्रोणकलशान्[8] ॥ ४ ॥

एष सूर्यमरोचयत् पवमानो विचर्षणिः । विश्वा धामानि विश्ववित् ॥ ५ ॥

एषः । सूर्यम् । अरोचयत् । पवमानः । विऽचर्षणिः । विश्वा । धामानि । विश्वऽवित् ॥ ५ ॥

वेङ्कट० एषः[7] सूर्यम् रोचयति पवमानः विद्रष्टा सर्वाणि च तेजांसि विश्ववित् ॥ ५ ॥

एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति । देवावीरघशंसहा ॥ ६ ॥

एषः । शुष्मी । अदाभ्यः । सोमः । पुनानः । अर्षति । देवऽअवीः । अघशंसऽहा ॥ ६ ॥

वेङ्कट० निगदसिद्धा ॥ ६ ॥

[9]इति षष्ठाष्टके अष्टमाध्याये अष्टादशो वर्गः[9] ।

[ २९ ]

[9]नृमेध आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[9] ।

प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसा । देवाँ अनु प्रभूषतः ॥ १ ॥

प्र । अस्य । धाराः । अक्षरन् । वृष्णः । सुतस्य । ओजसा । देवान् । अनु । प्रऽभूषतः ॥ १ ॥

वेङ्कट० प्र अक्षरन् अस्य धाराः वृष्णः[10] अभिषुतस्य बलेन[11] देवान् प्रभवितुम्[12] इच्छतः[13] ॥ १ ॥

सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा । ज्योतिर्जज्ञानमुक्थ्यम् ॥ २ ॥

---

१-१. क्षरति पवित्रे अ[1]; °अक्षरति वि[1]. २. °शत् वि[2] अ[1]. ३. राजा तत वि[2] अ[1]. ४-४. °न्तदे° वि[1]. ५-५. नास्ति वि[2] अ[1]. ६. अङ्गुलीभिः वि[2] अ[1]. ७. नास्ति वि[1]. ८. °शात् मूको. ९-९. नास्ति मूको. १०. विष्णः वि[2]; विणः अ[1]. ११. °न न वि[2] अ[1]. १२. प्रतिम° मूको. १३. °त वि[2] अ[1].

सप्तिम् । मृजन्ति । वेधसः । गृणन्तः । कारवः । गिरा । ज्योतिः । जज्ञानम् । उक्थ्यम् ॥ २ ॥

**वेङ्कट०** अश्वम् मृजन्ति वेधसः स्तुवन्तः[1] कारवः[2] स्तुत्या[3] ज्योतिः जायमानम् प्रशस्यम्। 'अयं हि ज्योतिर्यत् सोमः' (तु. माश ५,१,२,१०) इति ॥ २ ॥

सुषहा सोम तानि ते पुनानाय प्रभूवसो । वर्धा समुद्रमुक्थ्यम् ॥ ३ ॥

सुऽसहा । सोम । तानि । ते । पुनानाय । प्रभुवसो इति प्रभुऽवसो । वर्ध । समुद्रम् । उक्थ्यम् ॥ ३ ॥

**वेङ्कट०** शोभनाऽभिभवानि तानि तेजांसि तव सूयमानस्य प्रभूतधन! सोम! वर्धय[4] द्रोणकलशम् प्रशस्यं पूरय इति ॥ ३ ॥

विश्वा वसूनि संजयन् पवस्व सोम धारया । इनु द्वेषांसि सध्र्यक् ॥ ४ ॥

विश्वा । वसूनि । सम्ऽजयन् । पवस्व । सोम । धारया । इनु । द्वेषांसि । सध्र्यक् ॥ ४ ॥

**वेङ्कट०** सर्वाणि वसूनि संजयन्[5] पवस्व सोम! धारया, प्रेरय[6] च द्वेष्याणि सह ॥ ४ ॥

रक्षा सु नो अररुषः स्वनात् समस्य कस्य चित् । निदो यत्र मुमुच्महे ॥ ५ ॥

रक्ष । सु । नः । अररुषः । स्वनात् । समस्य । कस्य । चित् । निदः । यत्र । मुमुच्महे ॥ ५ ॥

**वेङ्कट०** रक्ष अस्मान् अप्रयच्छतः[7] शब्दात्[8] सर्वस्य यस्य कस्य चित् अपि निन्दायाः। यस्मिन् रक्षणे सति मुमुच्महे[9] ॥ ५ ॥

एन्दो पार्थिवं रयिं दिव्यं पवस्व धारया । द्युमन्तं शुष्ममा भर ॥ ६ ॥

आ । इन्दो इति । पार्थिवम् । रयिम् । दिव्यम् । पवस्व । धारया । द्युऽमन्तम् । शुष्मम् । आ । भर ॥ ६ ॥

**वेङ्कट०** आ पवस्व इन्दो! दिव्यम् पार्थिवम् च धनम् धारया, दीप्तिमत् बलम् च आ हर[10] ॥ ६ ॥

[11]इति षष्ठाष्टके अष्टमाध्याये एकोनविंशो वर्गः[11] ॥

## [ ३० ]

[11]बिन्दुराङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[11] ।

प्र धारा अस्य शुष्मिणो वृथा पवित्रे अक्षरन् । पुनानो वाचमिष्यति ॥ १ ॥

प्र । धाराः । अस्य । शुष्मिणः । वृथा । पवित्रे । अक्षरन् । पुनानः । वाचम् । इष्यति ॥ १ ॥

**वेङ्कट०** बिन्दुः[12] । प्र अक्षरन् अस्य बलवतः धाराः अनायासेन पवित्रे[13] । पूयमानः वाचम् प्रेरयति[14] ॥ १ ॥

---

१. °न्ति वि[२]. २. तारव मूको. ३. °ता वि[२] अ[१]. ४. °यन् वि[१]. ५. °यत् वि[१] अ[१]. ६. °यसि अ[१]. ७. °त मूको. ८. °ब्दान् मूको. ९. मुमूर्च्छेहे मूको. १०. भार वि[१]. ११-११. नास्ति मूको. १२. इन्दुः वि[१] अ[१]; विन्द्रः वि[१]. १३. °त्रः वि[२]; °त्र अ[१]. १४. °यतीत्यर्थः अ[१].

इन्दुर्हियानः सोतृभिर्मृज्यमानः कनिक्रदत् । इयर्ति वग्नुमिन्द्रियम् ॥ २ ॥

इन्दुः । हियानः । सोतृऽभिः । मृज्यमानः । कनिक्रदत् । इयर्ति । वग्नुम् । इन्द्रियम् ॥ २ ॥

**वेङ्कट०** इन्दुः प्रेर्यमाणः सोतृभिः[1] शोध्यमानः शब्दं कुर्वन् प्रेरयति शब्दम् इन्द्रस्य प्रियकरम् ॥२॥

आ नः शुष्मं नृषाह्यं वीरवन्तं पुरुस्पृहम् । पवस्व सोम धारया ॥ ३ ॥

आ । नः । शुष्मम् । नृऽसह्यम् । वीरऽवन्तम् । पुरुऽस्पृहम् । पवस्व । सोम । धारया ॥ ३ ॥

**वेङ्कट०** आ पवस्व [2]अस्माकं बलम्[2] नृणामभिभावुकम् पुत्रयुक्तम् बहुभिः स्पृहणीयम् सोम! धारया ॥३॥

प्र सोमो अति धारया पवमानो असिष्यदत् । अभि द्रोणान्यासदम् ॥ ४ ॥

प्र । सोमः । अति । धारया । पवमानः । असिस्यदत् । अभि । द्रोणानि । आऽसदम् ॥ ४ ॥

**वेङ्कट०** प्र स्यन्दते सोमः धारया पूयमानः द्रोणकलशान्[3] प्रति आसदनाय ॥ ४ ॥

अप्सु त्वा मधुमत्तमं हरिं हिन्वन्त्यद्रिभिः । इन्दविन्द्राय पीतये ॥ ५ ॥

अप्ऽसु । त्वा । मधुमत्ऽतमम् । हरिम् । हिन्वन्ति । अद्रिऽभिः । इन्दो इति । इन्द्राय । पीतये ॥

**वेङ्कट०** वसतीवरीषु त्वाम् मधुमत्तमम् हरिम् प्रेरयन्ति ग्रावभिः इन्दो![4] इन्द्रस्य पानाय ॥ ५ ॥

सुनोता मधुमत्तमं सोममिन्द्राय वज्रिणे । चारुं शर्धाय मत्सरम् ॥ ६ ॥

सुनोत । मधुमत्ऽतमम् । सोमम् । इन्द्राय । वज्रिणे । चारुम् । शर्धाय । मत्सरम् ॥ ६ ॥

**वेङ्कट०** सुनोत सुनुत[5] मधुरसम् सोमम् इन्द्राय वज्रिणे चारुम् बलवते[6] मदकरम् ॥ ६ ॥

[7]इति षष्ठाष्टके अष्टमाध्याये विंशो वर्गः[7] ॥

## [ ३१ ]

[7]गोतमो राहूगण ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[7] ।

प्र सोमासः स्वाध्यः पवमानासो अक्रमुः । रयिं कृण्वन्ति चेतनम् ॥ १ ॥

प्र । सोमासः । सुऽआध्यः । पवमानासः । अक्रमुः । रयिम् । कृण्वन्ति । चेतनम् ॥ १ ॥

**वेङ्कट०** गोतमः[8] । प्र अक्रमुः सोमाः सुकर्माणः[9] पूयमानाः[10], धनम् च कुर्वन्ति प्रज्ञापनम्[11] ॥१॥

---

१. स्तो° वि[२] अ[१]. २-२. आत्मानं बलैः वि[२] अ[१]. ३ °शात् मूको. ४. °दुम् मूको. ५. नास्ति वि[१]. ६. °वतः मूको. ७-७. नास्ति मूको. ८. म वि[२] अ[१]. ९. सनवर्मणः वि[१]. १०. पूर्यमन्तः वि[२] अ[१]. ११. प्रज्ञानम् वि[२] अ[१].

दिवस्पृथिव्या अधि भवेन्दो द्युम्नवर्धनः । भवा वाजानां पतिः ॥ २ ॥

दिवः । पृथिव्याः । अधि । भव । इन्दो इति । द्युम्नऽवर्धनः । भव । वाजानाम् । पतिः ॥ २ ॥

**वेङ्कट०** द्यावापृथिव्योः[1] भव इन्दो! **अन्नस्य वर्धकः ।** भव त्वम् **अन्नानाम्** पतिः ॥ २ ॥

तुभ्यं वाता अभिप्रियस्तुभ्यमर्षन्ति सिन्धवः । सोम वर्धन्ति ते महः ॥ ३ ॥

तुभ्यम् । वाताः । अभिऽप्रियः । तुभ्यम् । अर्षन्ति । सिन्धवः । सोम । वर्धन्ति । ते । महः ॥३॥

**वेङ्कट०** तुभ्यम् वाताः[2] **अभितर्पयितारः । त्वदर्थमेव गच्छन्ति नद्यः ।** सोम! [3]**उभये ते**[3] **तव महत्त्वम् वर्धयन्ति ॥ ३ ॥**

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥ ४ ॥

आ । प्यायस्व । सम् । एतु । ते । विश्वतः । सोम । वृष्ण्यम् । भव । वाजस्य । सम्ऽगथे ॥ ४ ॥

**वेङ्कट०** गतेति ( ऋ १,९१,१६ ) ॥ ४ ॥

तुभ्यं गावो घृतं पयो बभ्रो दुदुह्रे अक्षितम् । वर्षिष्ठे अधि सानवि ॥ ५ ॥

तुभ्यम् । गावः । घृतम् । पयः । बभ्रो इति । दुदुह्रे । अक्षितम् । वर्षिष्ठे । अधि । सानवि ॥५॥

**वेङ्कट०** तुभ्यम् गावः घृतम् **च** [4]**पयः च** हे **बभ्रुवर्ण!**[4] दुदुह्रे **अक्षीणम्**[5] **वृद्धतमे समुच्छ्रिते स्थिताय इति ॥ ५ ॥**

स्वायुधस्य ते सतो भुवनस्य पते वयम् । इन्दो सखित्वमुश्मसि ॥ ६ ॥

सुऽआयुधस्य । ते । सतः । भुवनस्य । पते । वयम् । इन्दो इति । सखिऽत्वम् । उश्मसि ॥ ६ ॥

**वेङ्कट०** स्वायुधस्य एव ते सतः हे भुवनस्य पते! वयम् इन्दो! सखित्वम् **कामयामहे ॥ ६ ॥**

**[6]इति षष्ठाष्टके अष्टमाध्याये एकविंशो वर्गः[6] ॥**

## [ ३२ ]

**[6]श्यावाश्व आत्रेय ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[6] ।**

प्र सोमासो मदच्युतः श्रवसे नो मघोनः । सुता विदथे अक्रमुः ॥ १ ॥

प्र । सोमासः । मदऽच्युतः । श्रवसे । नः । मघोनः । सुताः । विदथे । अक्रमुः ॥ १ ॥

**वेङ्कट०** श्यावाश्वः[7] । प्र अक्रमुः **सोमाः**[8] मदं **क्षरन्तः** श्रवसे मम हविष्मतः सुताः **यज्ञे ॥ १ ॥**

आदीं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ २ ॥

---

१. °व्या वि[२] अ[१]. २. पाता वि[२] अ[१]; पाताः वि[१]. ३-३. उभयेति मूको. ४-४. बलश्च पृथुः° वि[२]; पयश्च बभ्र° वि[१]. ५. °ण मूको. ६-६. नास्ति मूको. ७. °श्वाश्व अ[१]. ८. सोमो वि[२] अ[१].

आत । ईम् । त्रितस्य॑ । योष॑णः । हरि॑म् । हिन्वन्ति । अद्रि॑ऽभिः । इन्दु॑म् । इन्द्रा॑य । पीतये॑ ॥२॥

**वेङ्कट०** [1]किञ्च एनम्[1] त्रितस्य ऋषेः अङ्गुलयः हरिम् प्रेरयन्ति ग्रावभिः इन्दुम् इन्द्राय पानार्थम्, इति त्रितं यजमानं दृष्ट्वा वदति श्यावाश्वः ॥ २ ॥

**आदीं हंसो यथा गणं विश्व॑स्यावीवशन्मतिम् । अत्यो न गोभि॑रज्यते ॥ ३ ॥**

आत् । ईम् । हंसः । यथा॑ । गणम् । विश्व॑स्य । अवीवशत् । मतिम् । अत्यः । न । गोभि॑ः । अज्यते ॥

**वेङ्कट०** किञ्च अयम् मनुष्यगणम्[2] यथा हंसः[3] वशं नयति शब्देन, तथा विश्वस्य बुद्धिम् वशं नयति सोमः अश्व[4] इव शीघ्रगः[5] पयोभिः अज्यते ॥ ३ ॥

**उभे सो॑मावचाकशन्मृगो न तक्तो अ॑र्षसि । सीद॑न्नृतस्य योनिमा ॥ ४ ॥**

उभे इति॑ । सोम । अवऽचाक॑शत् । मृगः । न । तक्तः । अर्षसि । सीद॑न् । ऋतस्य॑ । योनि॑म् । आ ॥

**वेङ्कट०** द्यावापृथिव्यौ सोम![6] अवेक्षमाणः[7] मृगः इव गच्छसि[8] गोभिः तक्तः[9] यज्ञस्य स्थानम् आ सीदन्[10] ॥ ४ ॥

**अभि गावो॑ अनूषत योषा॑ जार॑मिव प्रियम् । अग॑न्नाजिं यथा॑ हितम् ॥ ५ ॥**

अभि । गाव॑ः । अनूषत । योषा॑ । जारम्ऽइ॑व । प्रियम् । [11]अग॑न् । आजिम् । यथा॑[11] । हितम् ॥

**वेङ्कट०** अभि स्तुवन्ति त्वां शब्दाः योषा जारम् इव प्रियम् सोमम् । सोमम् गच्छन्ति आजिम् यथा कश्चित् मित्रम् अभिगच्छति ॥ ५ ॥

**अस्मे धे॑हि द्युमद्यशो॑ मघव॑द्भ्यश्च मह्यं॑ च । सनिं॑ मेधामुत श्रव॑ः ॥ ६ ॥**

अस्मे इति॑ । धेहि । द्युऽमत् । यश॑ः । मघव॑त्ऽभ्यः । च । मह्य॑म् । च । सनिम् । मेधाम् । उत । श्रव॑ः ॥

**वेङ्कट०** अस्मभ्यम् धेहि[12] दीप्तम् अन्नम् [13]हविष्मद्भ्यः च, मह्यम् च[13] धनम् प्रज्ञाम्, अपि च कीर्तिम् इति ॥ ६ ॥

[14]इति षष्ठाष्टके अष्टमाध्याये द्वाविंशो वर्गः[14] ॥

## [ ३३ ]

[14]त्रित आप्त्य ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[14] ।

**प्र सोमा॑सो विपश्चितोऽपां न य॑न्त्यूर्मय॑ः । वना॑नि महिषा इ॑व ॥ १ ॥**

---

१-१. एनं किंच अ[१]. २. °ण वि[२]; °णो अ[१]. ३. हंसोम वि[२] अ[१]. ४. सोम वि[२] अ[१]. ५. शीघ्रम् वि[१]. ६. नास्ति मूको. ७. अपेक्ष° मूको. ८. °च्छति मूको. ९ तेरेता वि[२] अ[१]; ततः वि[१]. १०. °दत् वि[२] अ[१]. ११-११. तु. ऋ ४,४१,८; ५,४१,४; ६,२४,६. १२. देहि अ[१]. १३-१३. हविष्मन् ··· वि[२] अ[१]; °ष्मतुभ्योश्च मह्यश्च वि[१]. १४-१४. नास्ति मूको.

प्र । सोमा॑सः । वि॒पः॒ऽचितः॑ । अ॒पाम् । न । य॒न्ति॒ । ऊ॒र्मयः॑ । वना॑नि । म॒हि॒षाः॒ऽइ॑व ॥ १ ॥

**वेङ्कट०** त्रितः । प्र गच्छन्ति[1] सोमाः[2] मेधाविनः अपाम् इव ऊर्मयः । यथा वनानि महिषाः अभिसरन्ति । वनानि[3] उदकानि ॥ १ ॥

अ॒भि द्रोणा॑नि ब॒भ्रवः॑ शु॒क्रा ऋ॒तस्य॒ धार॑या । वाजं॒ गोम॑न्तमक्षरन् ॥ २ ॥

अ॒भि । द्रोणा॑नि । ब॒भ्रवः॑ । शु॒क्राः । ऋ॒तस्य॑ । धार॑या । वाज॑म् । गोऽम॑न्तम् । अ॒क्ष॒र॒न् ॥ २ ॥

**वेङ्कट०** अभि द्रवन्ति[4] द्रोणकलशान्[5] सोमाः बभ्रुवर्णाः[3] दीप्ताः उदकस्य धारया । यजमानानाम् अन्नं च गोमत्[6] अभिक्षरन्ति ॥ २ ॥

सु॒ता इन्द्रा॑य वा॒यवे॒ वरु॑णाय म॒रुद्भ्यः॑ । सोमा॑ अर्षन्ति॒ विष्ण॑वे ॥ ३ ॥

सु॒ताः । इन्द्रा॑य । वा॒यवे॑ । वरु॑णाय । म॒रुत्ऽभ्यः॑ । सोमाः॑ । अ॒र्ष॒न्ति॒ । विष्ण॑वे ॥ ३ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

ति॒स्रो वाच॒ उदी॑रते॒ गावो॑ मिमन्ति धे॒नवः॑ । हरि॑रेति॒ कनि॑क्रदत् ॥ ४ ॥

ति॒स्रः । वाचः॑ । उत् । ई॒र॒ते॒ । गावः॑ । मि॒म॒न्ति॒ । धे॒नवः॑ । हरिः॑ । ए॒ति॒ । कनि॑क्रदत् ॥ ४ ॥

**वेङ्कट०** ऋग्यजुःसामलक्षणाः[7] '[8]तिस्रः वाचः[8] ऋत्विजः प्रेरयन्ति । गावः च शब्दायन्ते धेनवः आशिरस्य दोग्ध्र्यः । सोमः च गच्छति शब्दं कुर्वन् ॥ ४ ॥

अ॒भि ब्र॒ह्मीर॑नूषत य॒ह्वीर्ऋ॒तस्य॑ मा॒तरः॑ । म॒र्मृ॒ज्यन्ते॑ दि॒वः शिशु॑म् ॥ ५ ॥

अ॒भि । ब्र॒ह्मीः । अ॒नू॒ष॒त॒ । य॒ह्वीः । ऋ॒तस्य॑ । मा॒तरः॑ । म॒र्मृ॒ज्यन्ते॑ । दि॒वः । शिशु॑म् ॥ ५ ॥

**वेङ्कट०** ब्राह्मणप्रेरिता वाचः अभि स्तुवन्ति महत्यः यज्ञस्य मातृभूताः शोधयन्ति च दिवः सूनुम् ॥ ५ ॥

रा॒यः स॑मु॒द्रांश्च॒तुरो॑ऽस्मभ्यं॑ सोम वि॒श्वतः॑ । आ प॑वस्व सह॒स्रिणः॑ ॥ ६ ॥

रा॒यः । स॒मु॒द्रान् । च॒तुरः॑ । अ॒स्मभ्य॑म् । सो॒म॒ । वि॒श्वतः॑ । आ । प॒व॒स्व॒ । स॒ह॒स्रिणः॑ ॥ ६ ॥

**वेङ्कट०** धनस्य[9] पूर्णान्[10] चतुरः समुद्रान् अस्मभ्यम् सोम! सर्वतः आ पवस्व बहुसङ्ख्याकान् इति महत् धनम् आशास्ते ॥ ६ ॥

[11]इति षष्ठाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[11] ।

---

१. यच्छ' मूको. २. °म मूको. ३. नास्ति मूको. ४. क्षरन्ति वि[1]. ५. °शात् मूको. ६. गोभिः अ[1]. ७. 'लक्षाः वि[1]. ८-८. नास्ति अ[1]. ९. समुद्रात् ब° वि[1] अ[1]. १०. °र्णां वि[1]. ११-११. नास्ति मूको.

[ ३४ ]

[1]त्रित आप्त्य ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

प्र सुवानो धारया तनेन्दुर्हिन्वानो अर्षति । रुजद् दृळ्हा व्योजसा ॥ १ ॥

प्र । सुवानः । धारया । तना । इन्दुः । हिन्वानः । अर्षति । रुजत् । दृळ्हा । वि । ओजसा ॥

**वेङ्कट०** प्र गच्छति धारया पवित्रेण इन्दुः प्रेर्यमाणः वि-श्लथयन्[2] दृढानि अपि [3]पुराणि बलेन[3]। नुमभावः छान्दसः ॥ १ ॥

सुत इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमो अर्षति विष्णवे ॥ २ ॥

सुतः । इन्द्राय । वायवे । वरुणाय । मरुत्ऽभ्यः । सोमः । अर्षति । विष्णवे ॥ २ ॥

**वेङ्कट०** निगदसिद्धा ॥ २ ॥

वृषाणं वृषभिर्यतं सुन्वन्ति सोममद्रिभिः । दुहन्ति शक्मना पयः ॥ ३ ॥

वृषाणम् । वृषऽभिः । यतम् । सुन्वन्ति । सोमम् । अद्रिऽभिः । दुहन्ति । शक्मना । पयः ॥३॥

**वेङ्कट०** वृषाणम्[4] सोमम्[4] वृषभिः[5] ग्रावभिः नियतम् अभि-षुण्वन्ति । दुहन्ति कर्मणा सोमस्य पयः ॥३॥

भुवत् त्रितस्य मर्ज्यो भुवदिन्द्राय मत्सरः । सं रूपैरज्यते हरिः ॥ ४ ॥

भुवत् । त्रितस्य । मर्ज्यः । भुवत् । इन्द्राय । मत्सरः । सम् । रूपैः । अज्यते । हरिः ॥ ४ ॥

**वेङ्कट०** भवति त्रितस्य[6] मार्ष्टव्यः, भवति च इन्द्राय मदकरः, सम् अज्यते च दध्यादिभिः हरितवर्णः ॥ ४ ॥

अभीमृतस्य विष्टपं दुहते पृश्निमातरः । चारु प्रियतमं हविः ॥ ५ ॥

अभि । ईम् । ऋतस्य । विष्टपम् । दुहते । पृश्निऽमातरः । चारु । प्रियऽतमम् । हविः ॥ ५ ॥

**वेङ्कट०** अभि दुहन्ति एनं यज्ञस्य स्थानम् मरुतः चारु[8] प्रियतमम् हविः । मरुतो वृष्ट्या[9] ईशते, यतो सोमो जायते ॥ ५ ॥

समेनमह्रुता इमा गिरो अर्षन्ति सस्रुतः । धेनूर्वाश्रो अवीवशत् ॥ ६ ॥

सम् । एनम् । अह्रुताः । इमाः । गिरः । अर्षन्ति । सऽस्रुतः । धेनूः । वाश्रः । अवीवशत् ॥६॥

---

१-१. नास्ति मूको. २. विश्लथं मूको. ३-३. बलेन पुराणि अ[1]. ४. नास्ति वि[2] अ[1]. ५. नास्ति मूको. ६. अभि वि[1]. ७. °तव्य वि[1] अ[1]. ८. चारुं वि[1]. ९. अभिवृ° वि[2] अ[1].

वेङ्कट० सम् गच्छन्ते एनम्[1] अकुटिलाः[2] इमाः गिरः सरन्त्यः। धेनूः स्तुतीः[3] वाशनशीलः[4] सोमः[5] कामयते[6] ॥ ६ ॥

[7]इति षष्ठाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[7] ॥

[ ३५ ]

[9]प्रभूवसुराङ्गिरस ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[9]।

आ नः पवस्व धारया पवमान रयिं पृथुम्। यया ज्योतिर्विदासि नः ॥१॥

आ। नः। पवस्व। धारया। पवमान। रयिम्। पृथुम्। यया। ज्योतिः। विदासि। नः ॥१॥

वेङ्कट० प्रभूवसुः[8]। आ पवस्व अस्माकम् धारया पवमान! रयिम् विस्तीर्णम्, यया धारया अस्मान् ज्योतिः लम्भयसि ॥ १ ॥

इन्दो समुद्रमीङ्खय पवस्व विश्वमेजय। रायो धर्ता न ओजसा ॥ २ ॥

इन्दो इति। समुद्रम्ऽईङ्खय। पवस्व। विश्वम्ऽएजय। रायः। धर्ता। नः। ओजसा ॥ २ ॥

वेङ्कट० इन्दो! त्वम् उदकस्य प्रेरक!† विश्वस्य[10] च कम्पयितः! धनस्य[10] धर्ता भव अस्माकं बलेन ॥ २ ॥

त्वया वीरेण वीरवोऽभि ष्याम पृतन्यतः। क्षरा णो अभि वार्यम् ॥ ३ ॥

त्वया। वीरेण। वीरऽवः। अभि। स्याम। पृतन्यतः। क्षर। नः। अभि। वार्यम् ॥ ३ ॥

वेङ्कट० त्वया वीरेण हे वीरवन्! अभि भवेम शत्रून्। अभि क्षर[11] अस्माकं धनम् ॥ ३ ॥

प्र वाजमिन्दुरिष्यति सिषासन् वाजसा ऋषिः। व्रता विदान आयुधा ॥ ४ ॥

प्र। वाजम्। इन्दुः। इष्यति। सिसासन्। वाजऽसाः। ऋषिः। व्रता। विदानः। आयुधा ॥

वेङ्कट० प्र ईरयति अन्नम् इन्दुः सम्भक्तुमिच्छन् स्तोतॄन् अन्नस्य दाता द्रष्टा कर्माणि आयुधानि च जानन् ॥ ४ ॥

तं गीर्भिर्वाचमीङ्खयं पुनानं वासयामसि। सोमं जनस्य गोपतिम् ॥ ५ ॥

तम्। गीःऽभिः। वाचम्ऽईङ्खयम्। पुनानम्। वासयामसि। सोमम्। जनस्य। गोऽपतिम् ॥५॥

---

१. यन वि[२]. २. कु° वि[२] अ[१]. ३. नास्ति मूको. ४. °ला वि[२] अ[१]. ५. °म मूको. ६. °ते स्तुतीः मूको. ७-७. नास्ति मूको. ८. प्रभूतवसु वि[२] अ[१]. ९-९. नास्ति वि[१]. † प्रेरयिना अ[१]. १०. वन° वि[२] अ[१]. ११. रक्ष वि[१] अ[१].

वेङ्कट० तम् गीर्भिः [१]अवोचम् । स्तुतिगन्तारम्[१](?) पूयमानम् गोभिः वासयामः[२] सोमम् जनस्य गवां पालयितारम् ॥ ५ ॥

विश्वो यस्य व्रते जनो दाधार धर्मणस्पतेः । पुनानस्य प्रभूवसोः ॥ ६ ॥

विश्वः । यस्य । व्रते । जनः । दाधार । धर्मणः । पतेः । पुनानस्य । प्रभुऽवसोः ॥ ६ ॥

वेङ्कट० विश्वः यस्य कर्मणि जनः ध्रियते कर्मणः पतेः[३] पूयमानस्य प्रभूतधनस्य, [४]तं गीर्भिः[४] अवोचम् इति ॥ ६ ॥

[५]इति षष्ठाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[५] ॥

[ ३६ ]

[६]प्रभुवसुराङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[६] ।

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः । कार्ष्मन् वाजी न्यक्रमीत् ॥ १ ॥

असर्जि । रथ्यः । यथा । पवित्रे । चम्वोः । सुतः । कार्ष्मन् । वाजी । नि । अक्रमीत् ॥ १ ॥

वेङ्कट० विसृष्टः[६] अश्व इव पवित्रे अधिषवणफलकयोः सुतः[७] । कार्ष्मन्[८] युद्धं भवति इतरेतरं कृषन्तीति । तस्मिन् अश्वः[९] नि अक्रमीत् इति सोममाह ॥ १ ॥

स वह्निः सोम जागृविः पवस्व देववीरति । अभि कोशं मधुश्चुतम् ॥ २ ॥

सः । वह्निः । सोम । जागृविः । पवस्व । देवऽवीः । अति । अभि । कोशम् । मधुऽश्चुतम् ॥

वेङ्कट० सः वोढा सोम! जागरणशीलः मधुस्त्रुतम् कोशम् दशापवित्रम् अतीत्य अभि पवस्व देवकामः[१०] ॥ २ ॥

स नो ज्योतींषि पूर्व्य पवमान वि रोचय । क्रत्वे दक्षाय नो हिनु ॥ ३ ॥

सः । नः । ज्योतींषि । पूर्व्य । पवमान । वि । रोचय । क्रत्वे । दक्षाय । नः । हिनु ॥ ३ ॥

वेङ्कट० [११]सः अस्माकम् ज्योतींषि[११] प्रत्न! पवमान! वि रोचय दिव्यानि, कर्मणे बलाय च अस्मान् प्रेरय ॥ ३ ॥

शुम्भमान ऋतायुभिर्मृज्यमानो गभस्त्योः । पवते वारे अव्यये ॥ ४ ॥

शुम्भमानः । ऋतयुऽभिः । मृज्यमानः । गभस्त्योः । पवते । वारे । अव्यये ॥ ४ ॥

---

१-१. स्तौतिग° मूको. । वें. अन्यत्र ऋ ( ९,१०१,६ ) वाचः प्रेरयितेत्याह । २. °यामास वि[२] अ[१]. ३. पते वि[२] अ[१]; पातेः वि[१]. ४-४. द्विरुक्तिः वि[२]. ५-५. नास्ति मूको. ६. विशिष्टः मूको. ७. सितः वि[२] अ[१]. ८. नास्ति मूको. ९. अश्वा मूको. १०. °म मूको. ११-११. नास्ति वि[२] अ[१].

**वेङ्कट०** अलङ्क्रियमाणः यज्ञकामैः मृज्यमानः बाहुभ्याम् पवते वाले[1] अविमये[2] ॥ ४ ॥

स विश्वा दाशुषे वसु सोमो दिव्यानि पार्थिवा । पर्वतामान्तरिक्ष्या ॥ ५ ॥

सः । विश्वा । दाशुषे । वसु । सोमः । दिव्यानि । पार्थिवा । पर्वताम् । आ । अन्तरिक्ष्या ॥५॥

**वेङ्कट०** निगदसिद्धा ॥ ५ ॥

आ दिवस्पृष्ठमश्वयुर्गव्ययुः सोम रोहसि । वीरयुः शवसस्पते ॥ ६ ॥

आ । दिवः । पृष्ठम् । अश्वऽयुः । गव्यऽयुः । सोम । रोहसि । वीरऽयुः । शवसः । पते ॥ ६ ॥

**वेङ्कट०** [3]हे शवसः पते! सोम![3] स्तोतॄणाम् एतान्[4] अश्वादीन्[4] इच्छन् दिवः पृष्ठम् आ रोहसि इति ॥६॥

[3]इति षष्ठाष्टके अष्टमाध्याये षड्विंशो वर्गः[3] ॥

## [ ३७ ]

[3]रहूगण आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[3] ।

स सुतः पीतये वृषा सोमः पवित्रे अर्षति । विघ्नन् रक्षांसि देवयुः ॥ १ ॥

सः । सुतः । पीतये । वृषा । सोमः ।[6] पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः[6] ॥ १ ॥

**वेङ्कट०** रहूगणः । सः सुतः पीतये वृषा सोमः पवित्रे गच्छति[7] विघ्नन् रक्षांसि देवकामः ॥ १ ॥

स पवित्रे विचक्षणो हरिरर्षति धर्णसिः । अभि योनिं कनिक्रदत् ॥ २ ॥

सः । पवित्रे । विऽचक्षणः । हरिः । अर्षति । धर्णसिः । अभि । योनिम् । कनिक्रदत् ॥ २ ॥

**वेङ्कट०** सः[5] पवित्रे अभिपूयमानः द्रोणकलशम् प्रति गच्छति इति[8] ॥ २ ॥[5]

स वाजी रोचना दिवः पवमानो वि धावति । रक्षोहा वारमव्ययम् ॥ ३ ॥

सः । वाजी । रोचना । दिवः । पवमानः । वि । धावति । रक्षःऽहा । वारम् । अव्ययम् ॥ ३ ॥

**वेङ्कट०** सः वाजी द्युलोकस्य रोचनः पवमानः वि धावति रक्षसां हन्ता दशापवित्रम् ॥ ३ ॥

स त्रितस्याधि सानवि पवमानो अरोचयत् । जामिभिः सूर्यं सह ॥ ४ ॥

सः । त्रितस्य । अधि । सानवि । पवमानः । अरोचयत् । जामिऽभिः । सूर्यम् । सह ॥ ४ ॥

**वेङ्कट०** सः त्रितस्य यज्ञे पवमानः अरोचयत्[10] अन्यैः तेजोभिः सह सूर्यम् ॥ ४ ॥

---

१. न वि[2] अ[1]. २. अपियमः वि[1] अ[1]; अपिमये वि[1]. ३-३. नास्ति मूको. ४. एतत् वि[1]. ५. नास्ति मूको. ६-६. तु. ऋ ९,१७,३. ७. निघ्नन् वि[1]. ८. इत्यर्थः वि[2]. ९. तु. ऋ ९,२५,२; ३८,६.;९६,११ प्रभृ. १०. आरो° मूको.

स वृ॒त्र॒हा वृषा॑ सु॒तो व॑रिवो॒विददा॑भ्यः । सोमो॒ वाज॑मिवासरत् ॥ ५ ॥

सः । वृत्र॒ऽहा । वृषा॑ । सु॒तः । व॒रि॒वः॒ऽवित् । अदा॑भ्यः । सोम॑ः । वाज॑म्ऽइव । अ॒स॒र॒त् ॥ ५ ॥

**वेङ्कट०** सः वृत्रहा वृषा[1] सुतः **धनस्य लम्भकः अहिंसितः**[2] सोमः **युद्धम्** इव **द्रोणकलशान्**[3] **अभिसरति ॥ ५ ॥**

स दे॒वः क॒विने॑षि॒तो॑३ऽभि द्रोणा॑नि धावति । इन्दु॒रिन्द्रा॑य मं॒हना॑ ॥ ६ ॥

सः । दे॒वः । क॒विना॑ । इ॒षि॒तः । अ॒भि । द्रोणा॑नि । धा॒व॒ति॒ । इन्दु॑ः । इन्द्रा॑य । मं॒हना॑ ॥ ६ ॥

**वेङ्कट०** सः देवः **अध्वर्युणा प्रेरितः द्रोणकलशान्** अभि धावति[4] इन्दुः **इन्द्राय महान् इति ॥ ६ ॥**

**[5]इति षष्ठाष्टके अष्टमाध्याये सप्तविंशो वर्गः[5] ॥**

## [ ३८ ]

**[5]रहूगण आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।**

ए॒ष उ॒ स्य वृषा॒ रथोऽव्यो॒ वारे॑भिरर्षति । गच्छ॒न् वाजं॑ सह॒स्रिण॑म् ॥ १ ॥

ए॒षः । ऊँ इति॑ । स्यः । वृषा॑ । रथ॑ः । अव्य॑ः । वारे॑भिः । अ॒र्ष॒ति॒ । गच्छ॑न् । वाज॑म् । स॒ह॒स्रिण॑म् ॥

**वेङ्कट०** **सः** एषः वर्षिता रथः **अवेः वालेभ्यः गच्छति** गच्छन् **युद्धम् अनेकपुरुषम् इति संस्तवः ॥ १ ॥**

ए॒तं त्रि॒तस्य॒ योष॑णो॒ हरिं॑ हिन्व॒न्त्यद्रि॑भिः । इन्दु॒मिन्द्रा॑य पी॒तये॑ ॥ २ ॥

ए॒तम् । त्रि॒तस्य॑ । योष॑णः । हरि॑म् । हि॒न्व॒न्ति॒ । अद्रि॑ऽभिः । इन्दु॑म् । इन्द्रा॑य । पी॒तये॑ ॥ २ ॥

**वेङ्कट०** एतम् त्रितस्य **अङ्गुलयः हरितवर्णम् प्रेरयन्ति** ग्रावभिः इन्दुम् **इन्द्रस्य** पानार्थम् ॥ २ ॥

ए॒तं त्यं ह॒रितो॒ दश॑ मर्मृ॒ज्यन्ते॑ अप॒स्युव॑ः । याभि॒र्मदा॑य॒ शुम्भ॑ते ॥ ३ ॥

ए॒तम् । त्यम् । ह॒रित॑ः[6] । दश॑ । म॒र्मृ॒ज्यन्ते॑ । अ॒प॒स्युव॑ः । याभि॑ः । मदा॑य । शुम्भ॑ते ॥३॥

**वेङ्कट०** **तम्** एतम् दश **अङ्गुलयः शोधयन्ति कर्म इच्छन्त्यः**, याभिः **इन्द्रस्य** मदाय **शोध्यते ॥ ३ ॥**

ए॒ष स्य मानु॑षी॒ष्वा श्ये॒नो न वि॒क्षु सी॑दति । गच्छ॑ञ्जा॒रो न यो॒षित॑म् ॥ ४ ॥

ए॒षः । स्यः । मानु॑षीषु । आ । श्ये॒नः । न । वि॒क्षु । सी॒द॒ति॒ । गच्छ॑न् । जा॒रः । न । यो॒षित॑म् ॥

---

**१.** °ष वि[2] अ[1]. **२.** °त मूको. **३** द्रोणान् मूको. **४.** °न्ति वि[2] अ[2]; °ति वि[1]. **५-५.** नास्ति मूको. **६.** अङ्गुलिनाम (तु. निघ २,५).

वेङ्कट० स.[1] एषः मानुषीषु विक्षु श्येनः इव शीघ्रम् आगत्य सीदति, गच्छन् च जारः इव योषितम् ॥ ४ ॥

एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः । य इन्दुर्वारमाविशत् ॥ ५ ॥

एषः । स्यः । मद्यः । रसः । अव । चष्टे । दिवः । शिशुः । यः । इन्दुः । वारम् । आ । अविशत् ॥ ५ ॥

वेङ्कट० [2]सः एषः[2] मदनिमित्तः रसः पश्यति[3] दिवः सूनुः, यः इन्दुः दशापवित्रम् आ विशति ॥ ५ ॥

एष स्य पीतये सुतो हरिरर्षति धर्णसिः । क्रन्दन् योनिमभि प्रियम् ॥ ६ ॥

एषः । स्यः । पीतये । सुतः । हरिः । अर्षति । धर्णसिः । क्रन्दन् । योनिम् । अभि । प्रियम् ॥

वेङ्कट० सः[1] एषः पीतये सुतः हरिः गच्छति धारयिता शब्दं कुर्वन् प्रियम् द्रोणम् प्रति ॥ ६ ॥

[4]इति षष्ठाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[4] ॥

[ ३९ ]

[4]बृहन्मतिराङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

आशुरर्ष बृहन्मते परि प्रियेण धाम्ना । यत्र देवा इति ब्रवन् ॥ १ ॥

आशुः । अर्ष । बृहत्ऽमते । परि । प्रियेण । धाम्ना । यत्र । देवाः । इति । ब्रवन् ॥ १ ॥

वेङ्कट० बृहन्मतिराङ्गिरसः । शीघ्रं परितः स्रव महामते! प्रियेण शरीरेण धारया यत्र देवाः तत्र मया गन्तव्यम् इति ब्रुवन् ॥ १ ॥

परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः । वृष्टिं दिवः परि स्रव ॥ २ ॥

परिऽकृण्वन् । अनिःऽकृतम् । जनाय । यातयन् । इषः । वृष्टिम् । दिवः । परि । स्रव ॥ २ ॥

वेङ्कट० संस्कुर्वन् असंस्कृतं स्थानम् जनाय निर्गमयन् अन्नानि वृष्टिम् दिवः परि स्रव ॥ २ ॥

सुत एति पवित्र आ त्विषिं दधान ओजसा । विचक्षाणो विरोचयन् ॥ ३ ॥

सुतः । एति । पवित्रे । आ । त्विषिम् । दधानः । ओजसा । विऽचक्षाणः । विऽरोचयन् ॥ ३ ॥

वेङ्कट० अभिषुतः सन् एति दशापवित्रे दीप्तिम्[5] दधानः वेगेन विविधं पश्यन् देवान् च विरोचयन्[6] ॥ ३ ॥

अयं स यो दिवस्परि रघुयामा पवित्र आ । सिन्धोरूर्मा व्यक्षरत् ॥ ४ ॥

---

१. नास्ति वि[1]. २-२. एष स्य वि[1]. ३. अपप° वि[1]. ४-४. नास्ति मूको. ५. °प्तम् मूको. ६. °यत् वि[2] अ[1].

अयम् । सः । यः । दिवः । परि । रघुऽयामा । पवित्रे । आ । सिन्धोः । ऊर्मा । वि । अक्षरत् ॥

वेङ्कट० अयम् सः यः दिवः लघुगमनः पवित्रे निषिच्यमानः जलस्य सङ्घाते[1] वि अक्षरत् ॥ ४ ॥

आविवासन् परावतो अथो अर्वावतः सुतः । इन्द्राय सिच्यते मधु ॥ ५ ॥

आऽविवासन् । पराऽवतः । अथो इति । अर्वाऽवतः । सुतः । इन्द्राय । सिच्यते । मधु ॥ ५ ॥

वेङ्कट० परिचरन् दूरस्थान् समीपस्थान् च यत्नेन[2] सुतः सोमः इन्द्राय सिच्यते मधुसदृशः ॥ ५ ॥

समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः । योनावृतस्य सीदत ॥ ६ ॥

सम्ऽईचीनाः । अनूषत । हरिम् । हिन्वन्ति । अद्रिऽभिः । योनौ । ऋतस्य । सीदत ॥ ६ ॥

वेङ्कट० सङ्गताः स्तुवन्ति[3] । हरितवर्णम् गमयन्ति ग्रावभिः । तम् इमं [4]पातुं यज्ञे[4] नि-षीदत ॥ ६ ॥

[5]इति षष्ठाष्टके अष्टमाध्याये एकोनत्रिंशो वर्गः[5] ॥

[ ४० ]

[5]बृहन्मतिराङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुम्भन्ति विप्रं धीतिभिः ॥ १ ॥

पुनानः । अक्रमीत् । अभि । विश्वाः । मृधः । विऽचर्षणिः । शुम्भन्ति । विप्रम् । धीतिऽभिः ॥१॥

वेङ्कट० पूयमानः अभि अक्रमीत् सर्वान् शत्रून् विद्रष्टा । तम् इमं मेधाविनम् शोधयन्ति अङ्गुलीभिः ॥ १ ॥

आ योनिमरुणो रुहद्गमदिन्द्रं वृषा सुतः । ध्रुवे सदसि सीदति ॥ २ ॥

आ । योनिम् । अरुणः । रुहत् । गमत् । इन्द्रम् । वृषा । सुतः । ध्रुवे । सदसि । सीदति ॥२॥

वेङ्कट० आ रोहति[6] स्थानम् अरुणवर्णः[7], गच्छति च इन्द्रम् वृषा अभिषुतः, निश्चले च स्थाने सीदति ॥ २ ॥

नू नो रयिं महामिन्दोऽस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणम् ॥ ३ ॥

नु । नः । रयिम् । महाम् । इन्दो इति । अस्मभ्यम् । सोम । विश्वतः । आ । पवस्व । सहस्रिणम् ॥

वेङ्कट० क्षिप्रम् अस्मभ्यम् रयिम् महान्तम् हे दीप्त! अनेकसङ्ख्यम् आ पवस्व सोम! सर्वतः । नः इति पूरणम् इति ॥ ३ ॥

---

१. °तो मूको. २. यथेन वि[१]; यतेन अ[१]; यत्तेन वि[२]. ३. °वति मूको. ४-४. नास्ति वि[१]. ५-५. नास्ति मूको. ६. °हसि वि[२]; °हरि अ[१]. ७. हरितवर्णः वि[१].

विश्वा॑ सोम पवमान द्युम्नानी॑न्दवा भ॑र । विदाः स॑हस्रिणी॒रिषः॑ ॥ ४ ॥

विश्वा॑ । सोम॑ । पवमान । द्युम्नानि॑ । इन्दो॒ इति॑ । आ । भर॒ । विदाः । सहस्रिणीः॑ । इषः॑ ॥ ४ ॥

**वेङ्कट०** विश्वानि सोम! पवमान![1] अन्नानि इन्दो! आ भर। लम्भय[2] बहुसङ्ख्यकानि[3] अन्नानि ॥ ४ ॥

स नः॑ पुनान आ भ॑र र॒यिं स्तो॒त्रे सु॒वीर्य॑म् । ज॒रि॒तुर्व॑र्धया॒ गिरः॑ ॥ ५ ॥

सः । नः॒ । पुनानः॑ । आ । भर॒ । र॒यिम् । स्तो॒त्रे । सु॒ऽवीर्य॑म् । ज॒रि॒तुः । व॒र्धय॑ । गिरः॑ ॥ ५ ॥

**वेङ्कट०** सः मह्यं पूयमानः आ भर[4] रयिम् स्तोत्रे सुवीर्यम्। स्तोतुः वर्धय च स्तुतीः अभिमत-दानेन इति ॥ ५ ॥

पु॒नान इ॑न्दवा भ॑र॒ सोम॑ द्वि॒बर्ह॑सं र॒यिम् । वृष॑न्निन्दो न उ॒क्थ्य॑म् ॥ ६ ॥

पु॒नानः॑ । इ॒न्दो॒ इति॑ । आ । भ॒र॒ । सोम॑ । द्वि॒ऽबर्ह॑सम् । र॒यिम् । वृष॑न् । इ॒न्दो॒ इति॑ । नः॒ । उ॒क्थ्य॑म् ॥

**वेङ्कट०** पुनानः दीप्त! आ भर सोम! द्वयो स्थानयोः परिवृढम् धनम् दिव्यं पार्थिवं च वर्षितः! इन्दो! अस्मभ्यं प्रशस्यम् इति ॥ ६ ॥

[5]इति पञ्चाष्टके अष्टमाध्याये त्रिंशो वर्गः[5] ॥

[ ४१ ]

[5]मेध्यातिथिः काण्व ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[5]।

प्र ये गावो॒ न भूर्ण॑यस्त्वे॒षा अ॒यासो॒ अक्र॑मुः । घ्नन्तः॑ कृ॒ष्णामप॒ त्वच॑म् ॥ १ ॥

प्र । ये । गावः॑ । न । भूर्ण॑यः । त्वे॒षाः । अ॒यासः॑ । अक्र॑मुः । घ्नन्तः॑ । कृ॒ष्णाम् । अप॑ । त्वच॑म् ॥

**वेङ्कट०** मेध्यातिथिः[6]। प्र अक्रमुः ये गावः इव क्षिप्राः दीप्ताः गमनशीलाः अप[7] घ्नन्तः कृष्णाम् त्वचम्। कृष्णा[8] त्वग् रक्षः। त्वचिः[9] संवरणकर्मा ॥ १ ॥

सु॒वि॒तस्य॑ मनाम॒हेऽति॒ सेतुं॑ दुरा॒व्य॑म् । सा॒ह्वांसो॒ दस्यु॑मव्र॒तम् ॥ २ ॥

सु॒वि॒तस्य॑ । म॒नाम॒हे॒ । अति॑ । सेतु॑म् । दुः॒ऽआ॒व्य॑म् । स॒ह्वांसः॑ । दस्यु॑म् । अ॒व्र॒तम् ॥ २ ॥

**वेङ्कट०** शोभनस्य सोमस्य रक्षोविषयं बन्धनम् [10]दुर्गम् अति[10] स्तुमः अभिभवन्तः दस्युम् अकर्माणम् ॥ २ ॥

शृ॒ण्वे वृ॒ष्टेरि॑व स्व॒नः पव॑मानस्य शु॒ष्मिणः॑ । चर॑न्ति वि॒द्युतो॑ दि॒वि ॥ ३ ॥

शृ॒ण्वे । वृ॒ष्टेःऽइ॑व । स्व॒नः । पव॑मानस्य । शु॒ष्मिणः॑ । चर॑न्ति । वि॒ऽद्युतः॑ । दि॒वि ॥ ३ ॥

---

१. नास्ति वि[2]; पवमान वि[1]. २. ... भय वि[2] अ[1]. ३. °ख्यानि अ[1] वि[1]. ४. °रत वि[2] अ[1]. ५-५. नास्ति मूको. ६. मे°ा° वि[2]. ७. अपाप वि[2] अ[1]. ८. कृष्णाम् मूको. ९. त्वचिः मूको. १०-१०. °र्गमिति मूको.

वेङ्कट० श्रूयते वृष्टेः इव शब्दः[१] पवमानस्य बलिनः, चरन्ति च दीप्तयः अन्तरिक्षे ॥ ३ ॥

आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् । अश्वावद्वाजवत् सुतः ॥ ४ ॥

आ । पवस्व । महीम् । इषम् । गोऽमत् । इन्दो इति । हिरण्यऽवत् । अश्वऽवत् । वाजऽवत् । सुतः ॥४॥

वेङ्कट० गवादियुक्तम् महत् अन्नम् [२]इन्दो! सुतः[२] आ पवस्व इति ॥ ४ ॥

स पवस्व विचर्षण आ मही रोदसी पृण । उषाः सूर्यो न रश्मिभिः ॥ ५ ॥

सः । पवस्व । विऽचर्षणे । आ । मही इति । रोदसी इति । पृण । उषाः । सूर्यः । न । रश्मिऽभिः ॥

वेङ्कट० सः पवस्व विद्रष्टः![३], महत्यौ द्यावापृथिव्यौ आ पूरय, यथा उषसम्[४] सूर्यः रश्मिभिः आपूरयति[५]। बहुवचन उषश्शब्दः ॥ ५ ॥

परि णः शर्मयन्त्या धारया सोम विश्वतः । सरा रसेव विष्टपम् ॥ ६ ॥

परि । नः । शर्मऽयन्त्या । धारया । सोम । विश्वतः । सर । रसाऽइव । विष्टपम् ॥ ६ ॥

वेङ्कट० परि सर अस्मान्[६] सुखयन्त्या धारया सोम! सर्वतः नदी इव स्थानं प्रपन्नम् ॥ ६ ॥

[२]इति षष्ठाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[२] ॥

[ ४२ ]

[२]मेध्यातिथिः काण्व ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[२] ।

जनयन् रोचना दिवो जनयन्नप्सु सूर्यम् । वसानो गा अपो हरिः ॥ १ ॥

जनयन् । रोचना । दिवः । जनयन् । अप्ऽसु । सूर्यम् । वसानः । गाः । अपः । हरिः ॥१॥

वेङ्कट० जनयन् दिवः नक्षत्राणि, जनयन् अन्तरिक्षे च सूर्यम्, आच्छादयन् गव्यीः अपः, हरितवर्णः ॥ १ ॥

एष प्रत्नेन मन्मना देवो देवेभ्यस्परि । धारया पवते सुतः ॥ २ ॥

एषः । प्रत्नेन । मन्मना । देवः । देवेभ्यः । परि । धारया । पवते । सुतः ॥ २ ॥

वेङ्कट० अयं पुराणेन स्तोत्रेण युक्तः देवः देवेभ्यः सुतः धारया परितः पवते ॥ २ ॥

वावृधानाय तूर्वये पवन्ते वाजसातये । सोमाः सहस्रपाजसः ॥ ३ ॥

---

१. °ब्दम् वि[२] अ[१]. २-२. नास्ति मूको. ३. °ष्टम् वि[१] अ[१]. ४. °सा वि[२]; °सः वि[१].
५. पूर° मूको. ६. °स्मात् वि[१] अ[१].

वर्धानाय । तूर्वये । पवन्ते । वाजऽसातये । सोमाः । सहस्रऽपाजसः ॥ ३ ॥

**वेङ्कट०** वर्धमानाय क्षिप्राय क्षरन्ति युद्धाय सोमाः सहस्रवेगाः ॥ ३ ॥

दुहानः प्रत्नमित् पयः पवित्रे परि षिच्यते । क्रन्दन् देवाँ अजीजनत् ॥ ४ ॥

दुहानः । प्रत्नम् । इत् । पयः । पवित्रे । परि । सिच्यते । क्रन्दन् । देवान् । अजीजनत् ॥ ४ ॥

**वेङ्कट०** दुहानः प्रत्नम् रसम् पवित्रे परि सिच्यते । क्रन्दन् देवान्[1] च जनयति[2] स्वसमीपे[3] ॥ ४ ॥

अभि विश्वानि वार्याभि देवाँ ऋतावृधः । सोमः पुनानो अर्षति ॥ ५ ॥

अभि । विश्वानि । वार्या । अभि । देवान् । ऋतऽवृधः । सोमः । पुनानः । अर्षति ॥ ५ ॥

**वेङ्कट०** विश्वानि[4] धनानि [5]देवान् च[5] यज्ञस्य वर्धकान् लक्षीकृत्य सोमः पूयमानः गच्छति[6] ॥ ५ ॥

गोमन्नः सोम वीरवदश्वावद्वाजवत् सुतः । पवस्व बृहतीरिषः ॥ ६ ॥

गोऽमत् । नः । सोम । वीरऽवत् । अश्वऽवत् । वाजऽवत् । सुतः । पवस्व । बृहतीः । इषः ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा इति ॥ ६ ॥

[7]इति षष्ठाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः[7] ॥

[ ४३ ]

[5]मेध्यातिथिः काण्व ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।

यो अत्य इव मृज्यते गोभिर्मदाय हर्यतः । तं गीर्भिर्वासयामसि ॥ १ ॥

यः । अत्यःऽइव । मृज्यते । गोभिः । मदाय । हर्यतः । तम् । गीःऽभिः । वासयामसि ॥ १ ॥

**वेङ्कट०** यः अश्वः इव पाणिभिः[8] मृज्यते गोविकारैः मदार्थम् कान्तः, तम् स्तुतिभिः[9] वासयामः[10] ॥ १ ॥

तं नो विश्वा अवस्युवो गिरः शुम्भन्ति पूर्वथा । इन्दुमिन्द्राय पीतये ॥ २ ॥

तम् । नः । विश्वाः । अवस्युवः । गिरः । शुम्भन्ति । पूर्वऽथा । इन्दुम् । इन्द्राय । पीतये ॥ २ ॥

**वेङ्कट०** तम् अस्माकं सर्वाः रक्षणमिच्छन्त्यः स्तुतयः अलङ्कुर्वन्ति प्रत्नाः[11] इव इन्दुम् इन्द्राय पातुम् ॥ २ ॥

पुनानो याति हर्यतः सोमो गीर्भिः परिष्कृतः । विप्रस्य मेध्यातिथेः ॥ ३ ॥

---

१. °वाः मूको. २. °यित्रीम् वि[2] अ[1]; 'यतिम् वि[1]. ३. क्स° मूको. ४. दैवानि वि[1]; देवानि अ[1]. ५-५. नास्ति वि[1]. ६. °न्ति अ[1]. ७-७. नास्ति मूको. ८. पणि° वि[2]. ९. °भिः मादयाम वि[2] अ[1]. १०. °म वि[1] अ[1]. ११. °त्न वि[1] अ[1].

पुनानः । याति । हर्यतः । सोमः । गीःऽभिः । परिऽकृतः । विप्रस्य । मेध्यऽअतिथेः ॥ ३ ॥

वेङ्कट० पूयमानः याति स्पृहणीयः सोमः [1]विप्रस्य मेध्यातिथेः[1] गीर्भिः अलङ्कृतः मदार्थम् इति ॥ ३ ॥

पवमान विदा रयिमस्मभ्यं सोम सुश्रियम् । इन्दो सहस्रवर्चसम् ॥ ४ ॥

पवमान । विदाः । रयिम् । अस्मभ्यम् । सोम । सुऽश्रियम् । इन्दो इति । सहस्रऽवर्चसम् ॥ ४ ॥

वेङ्कट० पवमान! देहि रयिम् अस्मभ्यम् सोम! कान्तम् इन्दो! बहुदीप्तिम्[2] ॥ ४ ॥

इन्दुरत्यो न वाजसृत् कनिक्रन्ति पवित्र आ । यदक्षारति देवयुः ॥ ५ ॥

इन्दुः । अत्यः । न । वाजऽसृत् । कनिक्रन्ति । पवित्रे । आ । यत् । अक्षाः । अति । देवऽयुः ॥

वेङ्कट० इन्दुः अश्व इव सङ्ग्रामसृत् शब्दं करोति पवित्रे यदा अति क्षरति देवकामः ॥ ५ ॥

पवस्व वाजसातये विप्रस्य गृणतो वृधे । सोम रास्व सुवीर्यम् ॥ ६ ॥

पवस्व । वाजऽसातये । विप्रस्य । गृणतः । वृधे । सोम । रास्व । सुऽवीर्यम् ॥ ६ ॥

वेङ्कट० पवस्व अन्नदानाय, विप्रस्य स्तुवतः वर्धनाय च । सोम! देहि सुवीर्यम् इति ॥ ६ ॥

[1]इति षष्ठाष्टके अष्टमाध्याये त्रयस्त्रिंशो वर्गः[1] ॥

ऋगर्थदीपिका सेयं तथा षष्ठोऽयमष्टकः ।
कर्ता श्रीवेङ्कटाऽऽर्यस्य तनयो माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टकेऽष्टमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके अष्टमोऽध्यायः ॥



१-१. नास्ति मूको. २. °प्तम् वि[2] अ[1].

## अथ सप्तमाऽष्टके प्रथमोऽध्यायः ।

वेङ्क० सप्तमोऽथाष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यत्किञ्चिदिह वक्तव्यं देवतास्वस्ति बह्वृचैः[१] ॥ १ ॥

तपोविशेषयुक्तानां युगेष्वन्येषु देवताः[२] ।
आसन् ऋषीणां प्रत्यक्षाः[३] प्रभावैर्विविधैर्युताः[४] ॥ २ ॥

आगोपालं विप्रथितां प्रसिद्धिमिह[५] लौकिकीम् ।
देवतास्तित्वविषयां तन्मूलां कवयो विदुः ॥ ३ ॥

मन्त्रार्थवादैर्ननु च देवताः सम्प्रदर्शिताः ।
सेयं प्रसिद्धिस्तन्मूला [६]ते च न[६] स्वार्थतत्पराः ॥ ४ ॥

[७]अत्र ब्रूमोऽविगीतेयम् † अतर्कज्ञेषु दृश्यते ।
ततः प्रत्यक्षमूलेयं यद्वा ‡मन्त्राश्च तत्पराः‡[७] ॥ ५ ॥

यथाशब्दमिह प्रीताश्चेतनाः केचिदीश्वराः ।
ददत्यभिमतानर्थान् इति वक्तुं च युज्यते ॥ ६ ॥

किञ्च वैदिकवाक्यानि सदृशानीह लौकिकैः ।
तेषु[८] स्तुतिश्च सत्यं च स्वरूपादवगम्यते[९] ॥ ७ ॥

कन्याकुब्जे[१०] [११]देवदत्तम् उदारं दृष्टवानहम्[११] ।
धनं याचस्व तं[१२] पुत्र! वचः सत्यमिदं[१३] मतम् ॥ ८ ॥

प्रयच्छति स सर्वेभ्यः प्रतीक्ष्यास्ते च भिक्षुकान् ।
न च क्रुध्यति कस्मैचिद् इति श्रद्धापनं भवेत्[१४] ॥ ९ ॥

एवं मन्त्रार्थवादेषु सन्ति सत्यानि कानिचित् ।
भाक्तानि कानिचित् सन्ति तानि जानन्ति पण्डिताः ॥ १० ॥

---

१. °ह्वृचे वि[२] अ[१]. २. °वता वि[१,२] अ[१]. ३. °त्यक्षा वि[२]; °त्यक्षैः अ[१]. ४. °ता वि[१,२] अ[१]. ५. प्रशस्तिमिह वेंकश. ६-६. केचन वि[२] अ[१] वेंकश. ७-७. इयं कारिका सप्तम्याः कारिकाया अग्रे पूर्वार्धोत्तरार्धविपर्ययेण अ[१]. † नूमो ··· तेयम् वि[२] अ[१]. ‡-‡ °न्त्रार्थतत्पराः वि[२] अ[१]. ८. तेकेषु वि[१,२] अ[१]. ९. °रूपादाव° अ[१]. १०. कान्यकु° वेंकश (तु. औंध-संस्करणम्). ११-११. देवदत्तमु अ[१]. १२. यम् वि[१]. १३. °मितम् वि[१]. १४. त्रुटितम् वि[२] अ[१].

किञ्चात्यन्तमसत्यैश्च यदि श्रद्धापयेदिह ।
अपौरुषेयतादीनि मृगयन्ते न पण्डिताः ॥ ११ ॥

कन्याकुब्जे[1] देवदत्तः कनकं सम्प्रयच्छति ।
जनयामास यं वन्ध्या सोऽनाप्तो वचनाद्भवेत् ॥ १२ ॥

धर्मस्य देवतानाञ्च व्यासेन द्रौपदीमते ।
अस्तित्वं हेतुभिः प्रोक्तं नेमोऽद्राक्षीच्छचीपतिम् ॥ १३ ॥

'नेन्द्रो अस्तीति'[2] नेमेन कथिते[3] स्वयमागतः[4] ।
'अयमस्मी( स्मि'[5] इ )त्युवाचेन्द्रो वसिष्ठश्च ददर्श तम् ॥ १४ ॥

किञ्चैके[6] ददृशुर्मन्त्रान् 'कया शुभा सवयसः'[7] ।
'एना[8] वयं पयसे( ऽसा'[9] इ)ति [10]पश्यामस्तत् परार्थकम्[10] ॥ १५ ॥

तार्किकेष्वपि[11] चेच्छन्ति केचिन्मन्त्रार्थवादयोः ।
परार्थेऽपि यथार्थत्वं पुराणानि ततोऽभवन् ॥ १६ ॥

यजुषामिव पारार्थ्यम् ऋचामपि च नेष्यते ।
नानाविधैर्ह्यभिप्रायैर्ऋचो दृष्टा महर्षिभिः ॥ १७ ॥

यदा पश्यत्यृचः सर्वा न तदा हेतुमिच्छति ।
बुद्धिमान् देवतास्तित्वे सूर्यश्च देति सर्वदा ॥ १८ ॥ इति ॥

## [ ४४ ]

[12]अयास्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[12] ।

**प्र ण॑ इन्दो म॒हे तन॑ ऊ॒र्मिं न बिभ्र॑दर्षसि । अ॒भि दे॒वाँ अ॒यास्यः॑ ॥ १ ॥**

प्र । नः॒ । इ॒न्दो॒ इति॑ । म॒हे । तने॑ । ऊ॒र्मिम् । न । बिभ्र॑त् । अ॒र्ष॒सि॒ । अ॒भि । दे॒वान् । अ॒यास्यः॑ ॥

**वेङ्कट०** अयास्य आङ्गिरसः[13] । प्र गच्छसि अस्माकम्[14] इन्दो! धनाय महते ऊर्मिम् इदानीम् बिभ्रन् । अयास्यः च अयम् अभि[15] गच्छति देवान् ॥ १ ॥

**म॒ती जु॒ष्टो धि॒या हि॒तः सोमो॑ हिन्वे परा॒वति॑ । विप्र॑स्य॒ धार॑या क॒विः ॥ २ ॥**

---

१. कान्यकु॰ वेंऋअ ( तु. औंध-संस्करणम् )। २. ऋ ८,१००,३. ३. कुपिते वि[2] अ[1]. ४. °तम् वि[2] अ[1]. ५. ऋ ८,१००,४. ६. किञ्चैते वि[1]; किञ्चैतद् वि[2] अ[1]. ७. ऋ १,१६५,१. ८. स एनास्मि वि[2] अ[1]. ९. ऋ ३,३३,४ १०-१०. °म परिसारकम् वि[2] वि[1]. ११. तर्कितेष्वपि वि[2] अ[1]. १२-१२ नास्ति मूको. १३. आवङ्गि° वि[1]; अवाङ्गि अ[1]. १४. आस्मा° मूको. १५ अधि वि[2] अ[1].

मती । जुष्टः । धिया । हितः । सोमः । हिन्वे । पराऽवति । विप्रस्य । धारया । कविः ॥ २ ॥

**वेङ्कट०** जुष्टः स्तुत्या सेवितः कर्मणा निहितः[1] सोमः प्रेर्यते पवित्राद् दूरे देशे विप्रस्य यज्ञे धारया कविः ॥ २ ॥

अयं देवेषु जागृविः सुत एति पवित्र आ । सोमो याति विचर्षणिः ॥ ३ ॥

अयम् । देवेषु । जागृविः । सुतः । एति । पवित्रे । आ । सोमः । याति । विऽचर्षणिः ॥ ३ ॥

**वेङ्कट०** अयम् देवार्थम् जागरणशीलः सुतः गच्छति पवित्रे । [2]पवनाय सोमः[2] याति विद्रष्टा ॥ ३ ॥

स नः पवस्व वाजयुश्चक्राणश्चारुमध्वरम् । बर्हिष्माँ आ विवासति ॥ ४ ॥

सः । नः । पवस्व । वाजऽयुः । चक्राणः । चारुम् । अध्वरम् । बर्हिष्मान् । आ । विवासति ॥ ४ ॥

**वेङ्कट०** सः नः पवस्व अन्नमिच्छन् कुर्वाणः कल्याणम् यज्ञम् । अयम् बर्हिष्मान् ऋत्विक् त्वां परिचरति ॥ ४ ॥

स नो भगाय वायवे विप्रवीरः सदावृधः । सोमो देवेष्वा यमत् ॥ ५ ॥

सः । नः । भगाय । वायवे । विप्रऽवीरः । सदाऽवृधः । सोमः । देवेषु । आ । यमत् ॥ ५ ॥

**वेङ्कट०** सः अस्माकम् भगाय वायवे च [3]प्रेरितः विप्रैः[3] सदावृद्धो भवन्[4] सोमः देवेषु स्थितं धनम् आ प्रयच्छतु ॥ ५ ॥

स नो अद्य वसुत्तये क्रतुविद्गातुवित्तमः । वाजं जेषि श्रवो बृहत् ॥ ६ ॥

सः । नः । अद्य । वसुत्तये । क्रतुऽवित् । गातुवित्ऽतमः । वाजम् । जेषि । श्रवः । बृहत् ॥ ६ ॥

**वेङ्कट०** सः अस्माकम् अद्य वसुदानाय क्रतोः [5]लम्भकः अत्यन्तं मार्गं[5] [6]जानन् अन्नम् जय[6] श्रवणीयम् महत् ॥ ६ ॥

[7]इति सप्तमाष्टके प्रथमाध्याये प्रथमो वर्गः[7] ॥

## [४५]

[7]अयास्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[7] ।

स पवस्व मदाय कं नृचक्षा देववीतये । इन्दविन्द्राय पीतये ॥ १ ॥

सः । पवस्व । मदाय । कम् । नृऽचक्षाः । देवऽवीतये । इन्दो इति । इन्द्राय । पीतये ॥ १ ॥

---

१. नास्ति वि[२]. २-२. °माना सोमः वि[२] अ[१]. ३-३. °तविप्रः मूको. ४. भवत् मूको. ५-५. लभकोऽत्यन्तर्म्मार्गं वि[१]; लभरोत्यन्तमार्गं वि[२] अ[१] ६-६. जानन्नन्नय वि[१]; जानन्नय वि[२] अ[१]. ७-७. नास्ति मूको.

वेङ्कट० सः पवस्व मदार्थम् नृणां द्रष्टा [1]यज्ञाय इन्दो! इन्द्रस्य[1] पातुम्[2] ॥ १ ॥

स नो अर्षाभि दूत्यं१ त्वमिन्द्राय तोशसे । देवान्त्सखिभ्य आ वरम् ॥ २ ॥

सः । नः । अर्ष । अभि । दूत्यम् । त्वम् । इन्द्राय । तोशसे । देवान् । सखिऽभ्यः । आ । वरम् ॥

वेङ्कट० सः अस्माकम् अभि गच्छ दूत्यम्, त्वम् इन्द्राय पीडयसे । स त्वम् देवान् सखिभ्यः अस्मभ्यम् आ याच धनमिति ॥ २ ॥

उत त्वामरुणं वयं गोभिरञ्ज्मो मदाय कम् । वि नो राये दुरो वृधि ॥ ३ ॥

उत । त्वाम् । अरुणम् । वयम् । गोभिः । अञ्ज्मः । मदाय । कम् । वि । नः । राये । दुरः । वृधि ॥

वेङ्कट० अपि च[3] त्वाम् अरुणवर्णम् वयम् गोविकारैः वासयामः मदार्थम् । स त्वम् अस्माकं धनाय[4] द्वाराणि विवृतानि कुरु ॥ ३ ॥

अत्यू पवित्रमक्रमीद् वाजी धुरं न यामनि । इन्दुर्देवेषु पत्यते ॥ ४ ॥

अति । ऊँ इति । पवित्रम् । अक्रमीत् । वाजी । धुरम् । न । यामनि । इन्दुः । देवेषु । पत्यते ॥४॥

वेङ्कट० पवित्रम् अति अक्रमीत् अश्वः इव रथधुरम् गमने । इन्दुः देवेषु गच्छति ॥ ४ ॥

समी सखायो अस्वरन् वने क्रीळन्तमत्यविम् । इन्दुं नावा अनूषत ॥ ५ ॥

सम् । ईमिति । सखायः । अस्वरन् । वने । क्रीळन्तम् । अतिऽअविम् । इन्दुम् । नावाः । अनूषत ॥५॥

वेङ्कट० सम् स्तुवन्ति एनम् सखायः उदके क्रीडन्तम् अतिक्रान्तदशापवित्रम् इन्दुम् वाचः अस्तुवन् ॥ ५ ॥

तया पवस्व धारया यया पीतो विचक्षसे । इन्दो स्तोत्रे सुवीर्यम् ॥ ६ ॥

तया । पवस्व । धारया । यया । पीतः । विऽचक्षसे । इन्दो इति । स्तोत्रे । सुऽवीर्यम् ॥ ६ ॥

वेङ्कट० तया पवस्व धारया, यया पीतः[5] [6]विचक्षणाय इन्दो![6] स्तोत्रे सुवीर्यम् प्रयच्छसीति[7] ॥ ६ ॥

[8]इति सप्ताष्टके प्रथमाध्याये द्वितीयो वर्गः[8] ॥

## [ ४६ ]

[8]अयास्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[8] ।

असृग्रन् देववीतयेऽत्यासः कृत्व्या इव । क्षरन्तः पर्वतावृधः ॥ १ ॥

असृग्रन् । देवऽवीतये । अत्यासः । कृत्व्याःऽइव । क्षरन्तः । पर्वतऽवृधः ॥ १ ॥

---

१-१. °ज्ञा ··· विन्द्र° वि[२] अ[१]. २. तु. ऋ ९,३०,५. ३. नास्ति वि[१]. ४. धना वि[२] अ[१]. ५. चितः मूको. ६-६. °णायोमौ वि[२] अ[१]. ७. °च्छतीति मूको. ८-८. नास्ति मूको.

वेङ्कट० सृज्यन्ते यज्ञाय [1]अश्वाः कर्मण्याः[1] इव क्षरन्तः ग्रावभिर्वृद्धाः पर्वतेषु वा जाताः ॥ १ ॥

परिष्कृतास इन्दवो योषेव पित्र्यावती । वायुं सोमा असृक्षत ॥ २ ॥

परिऽकृतासः । इन्दवः । योषाऽइव । पित्र्यऽवती । वायुम् । सोमाः । असृक्षत ॥ २ ॥

वेङ्कट० अलङ्कृताः इन्दवः कन्यका इव पितृमती[2] वायुम् प्रति गच्छन्ति सोमाः ॥ २ ॥

एते सोमास इन्दवः प्रयस्वन्तश्चमू सुताः । इन्द्रं वर्धन्ति कर्मभिः ॥ ३ ॥

एते । सोमासः । इन्दवः । प्रयस्वन्तः । चमू इति । सुताः । इन्द्रम् । वर्धन्ति । कर्मऽभिः ॥ ३ ॥

वेङ्कट० एते सोमाः दीप्ताः हविष्मन्तः अधिषवणफलकयोः सुताः इन्द्रम् वर्धयन्ति कर्मभिः ॥ ३ ॥

आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना । गोभिः श्रीणीत मत्सरम् ॥४॥

आ । धावत । सुऽहस्त्यः । शुक्रा । गृभ्णीत । मन्थिना । [3]गोभिः । श्रीणीत । मत्सरम्[3] ॥ ४ ॥

वेङ्कट० आ गच्छत हे शोभनहस्ता ऋत्विजः!, शुक्रम् च गृह्णीत ग्रहम् मन्थिना सह, गोभिः श्रीणीत सोमम्[4] ॥ ४ ॥

स पवस्व धनंजय प्रयन्ता राधसो महः । अस्मभ्यं सोम गातुवित् ॥ ५ ॥

सः । पवस्व । धनम्ऽजय । प्रऽयन्ता । राधसः । महः । अस्मभ्यम् । सोम । गातुऽवित् ॥ ५ ॥

वेङ्कट० सः पवस्व हे धनानां जेतः! प्रदाता धनस्य महतः अस्मभ्यम् सोम! मार्गस्य लम्भकः[5] ॥५॥

एतं मृजन्ति मर्ज्यं पवमानं दश क्षिपः । इन्द्राय मत्सरं मदम् ॥ ६ ॥

एतम् । मृजन्ति । मर्ज्यम् । पवमानम् । दश । क्षिपः । इन्द्राय । मत्सरम् । मदम् ॥ ६ ॥

वेङ्कट० एतम्[6] मृजन्ति मार्जनीयम्[7] पवमानम् दश अङ्गुलयः इन्द्रस्य पानाय मदकरम् सोमम् इति ॥ ६ ॥

[8]इति सप्तमाष्टके प्रथमाध्याये तृतीयो वर्गः[8] ॥

[ ४७ ]

[8]कविर्भार्गव ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[8] ।

अया सोमः सुकृत्यया महश्चिदभ्यवर्धत । मन्दान उद्वृषायते ॥ १ ॥

अया । सोमः । सुऽकृत्यया । महः । चित् । अभि । अवर्धत । मन्दानः । उत् । वृषऽयते ॥१॥

---

१-१. कर्मण्याइव वि[२] अ[१]. २. पवित्रमती वि[२] अ[१]; पवित्रम° वि[१]. ३-३. या २,५ द्र. ४. सोममिति अ[१]. ५. लम्भकाः वि[२]; लम्भकम् वि[२]; लम्भक अ[१]. ६. एनं अ[१]. ७. मर्ज्ये° मूको. ८-८. नास्ति मूको.

वेङ्कट० कविर्भार्गवः। अनया सोमः शोभनया क्रियया महतो देवान् प्रति अभि अवर्धत, मोदमानः ऋषभ इवाचरति ॥ १ ॥

कृतानीद॑स्य॒ कर्त्वा॒ चेत॑न्ते दस्यु॒तर्ह॑णा । ऋ॒णा च॑ धृ॒ष्णुश्च॑यते ॥ २ ॥

कृ॒तानि॑ । इत् । अ॒स्य॒ । कर्त्वा॑ । चेत॑न्ते । द॒स्यु॒ऽतर्ह॑णा । ऋ॒णा । च॒ । धृ॒ष्णुः । च॒य॒ते॒ ॥ २ ॥

वेङ्कट० कृतानि अस्य कर्माणि ज्ञायन्ते असुराणां हिंसकानि। सोऽयं यजमानानाम् ऋणानि च धृष्टः चातयति कामप्रदानेन ॥ २ ॥

आत् सोम॑ इन्द्रि॒यो रसो॒ वज्रः॑ सहस्र॒सा भु॑वत् । उ॒क्थं यद॑स्य॒ जाय॑ते ॥ ३ ॥

आत् । सोमः॑ । इ॒न्द्रि॒यः । रसः॑ । वज्रः॑ । स॒ह॒स्र॒ऽसाः । भु॒व॒त् । उ॒क्थम् । यत् । अ॒स्य॒ । जाय॑ते ॥

वेङ्कट० अस्य इन्द्रस्य शस्त्रम् यदा[1] प्रादुर्भवति, अनन्तरम् सोमः इन्द्रस्य प्रियकरः रसः बलवान् वज्रः सहस्रस्य दाता भवति ॥ ३ ॥

स्व॒यं क॒विर्वि॑ध॒र्तरि॒ विप्रा॑य॒ रत्न॑मिच्छति । यदी॑ मर्मृ॒ज्यते॒ धियः॑ ॥ ४ ॥

स्व॒यम् । क॒विः । वि॒ऽध॒र्तरि॑ । विप्रा॑य । रत्न॑म् । इ॒च्छ॒ति॒ । यदि॑ । म॒र्मृ॒ज्यते॑ । धियः॑ ॥ ४ ॥

वेङ्कट० स्वयम् एव मेधाविने विधातरि इन्द्रे सोमः रत्नम् इच्छति, यदि अयं शोध्यते अङ्गुलीभिः ॥ ४ ॥

सि॒षा॒सतू॑ र॒यी॒णां वाजे॒ष्वर्व॑तामिव । भरे॑षु जि॒ग्युषा॑मसि ॥ ५ ॥

सि॒सा॒सतुः॑ । र॒यी॒णाम् । वाजे॑षु । अर्व॑ताम्ऽइव । भरे॑षु । जि॒ग्युषा॑म् । अ॒सि॒ ॥ ५ ॥

वेङ्कट० सङ्ग्रामेषु शत्रून् जयताम् धनानाम् सिषासतुः भवसि, जयद्भ्यः[2] प्रयच्छसि[3]। यथा सङ्ग्रामेषु प्रविशताम् अश्वानां घासं प्रयच्छन्तीति[4] ॥ ५ ॥

[5]इति सप्तमाष्टके प्रथमाध्याये चतुर्थो वर्गः[5] ॥

[ ४८ ]

[6]कविर्भार्गव ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः[6]।

तं त्वा॑ नृ॒म्णानि॒ बिभ्र॑तं स॒धस्थे॑षु म॒हो दि॒वः । चारुं॑ सुकृ॒त्यये॑महे ॥ १ ॥

तम् । त्वा॒ । नृ॒म्णानि॑ । बिभ्र॑तम् । स॒धऽस्थे॑षु । म॒हः । दि॒वः । चारु॑म् । सु॒ऽकृ॒त्यया॑ । ई॒म॒हे॒ ॥ १ ॥

---

१. नास्ति मूको. २. जयाय मूको. ३. °च्छति वि[2] अ[1]. ४. °च्छन्तीति वि[1]. ५-५. नास्ति मूको.

वेङ्कट० [1]तम् त्वां धनानि[1] धारयन्तम् महत्याः दिवः स्थानेषु स्थितम् कल्याणम् शोभनया क्रियया याचामहे ॥ १ ॥

संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् । शतं पुरो रुरुक्षणिम् ॥ २ ॥

संवृक्तऽधृष्णुम् । उक्थ्यम् । महाऽमहिव्रतम् । मदम् । शतम् । पुरः । रुरुक्षणिम् ॥ २ ॥

वेङ्कट० धनं[2] संछिन्नधृष्टशत्रुम्[3] प्रशस्यम् महाकर्माणम्[4] मदम् बहूनि पुराणि शत्रूणां विनाशयन्तम् । ईमहे इति सम्बन्धः ॥ २ ॥

अतस्त्वा रयिमभि राजानं सुक्रतो दिवः । सुपर्णो अव्यथिर्भरत् ॥ ३ ॥

अतः । त्वा । रयिम् । अभि । राजानम् । सुक्रतो इति सुऽक्रतो । दिवः । सुऽपर्णः । अव्यथिः । भरत् ॥

वेङ्कट० अतः दिवः त्वां धनम् प्रति राजानम् सुप्रज्ञ! श्येनः व्यथारहितः आहरदिति[5] ॥ ३ ॥

विश्वस्मा इत् स्वर्दृशे साधारणं रजस्तुरम् । गोपामृतस्य विर्भरत् ॥ ४ ॥

विश्वस्मै । इत् । स्वः । दृशे । साधारणम् । रजःऽतुरम् । गोपाम् । ऋतस्य । विः । भरत् ॥४॥

वेङ्कट० सर्वस्मै देवाय साधारणम् उदकस्य प्रेरकम् गोपायितारम्[6] यज्ञस्य श्येनः[2] आहरत् ॥ ४ ॥

अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे । अभिष्टिकृद्विचर्षणिः ॥ ५ ॥

अध । हिन्वानः । इन्द्रियम् । ज्यायः । महिऽत्वम् । आनशे । अभिष्टिऽकृत् । विऽचर्षणिः ॥५॥

वेङ्कट० अथ प्रेरयन् बलम् प्रशस्यतरम् महत्त्वम् प्राप्नोति यजमानानामभीष्टस्य कर्ता विद्रष्टेति ॥ ५ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये पञ्चमो वर्गः[1] ॥

## [ ४९ ]

[1]कविर्भार्गव ऋषिः पवमानः सोमो देवता । गायत्री छन्दः[1] ।

पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि । अयक्ष्मा बृहतीरिषः ॥ १ ॥

पवस्व । वृष्टिम् । आ । सु । नः । अपाम् । ऊर्मिम् । दिवः । परि । अयक्ष्माः । बृहतीः । इषः ॥

वेङ्कट० [7]आ पवस्व वृष्टिम्[7] दिवः अस्माकं सुष्ठु[8] । [9]तदेवाह—अपाम्[9] ऊर्मिम् दिवः पवस्वेति, यक्ष्मरहितानि[10] महान्ति चाऽन्नानि ॥ १ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[1]. ३. छिन्नधृष्टशस्त्रं वि[2] अ[1]. ४. °माणम् अपि वा मंहनीयबहुकर्माणं वि[1]. ५. तु. ऋ ४,२६,७. ६. गोपयि° वि[2] अ[1]. ७-७. विश्वं वृष्टिम् आ वि[2] अ[1], ८. सुष्टु वि[2] अ[1]. ९-९. °वावाम् वि[1]; °वा भवाम् वि[2] अ[1]. १०. रहितानि वि[2] अ[1].

तया॑ पवस्व॒ धार॑या य॒या गाव॑ इ॒हाग॑मन् । जन्या॑स॒ उप॑ नो गृ॒हम् ॥ २ ॥

तया॑ । प॒व॒स्व॒ । धार॑या । यया॑ । गाव॑ः । इ॒ह । आ॒ऽगम॑न् । जन्या॑सः । उप॑ । न॒ः । गृ॒हम् ॥२॥

वेङ्कट० तया पवस्व धारया यया गावः इह[1] उप आगच्छन्ति[2] शत्रुजनपदभवाः मदीयम् गृहम् ॥२॥

घृ॒तं प॑वस्व॒ धार॑या य॒ज्ञेषु॑ देव॒वीत॑मः । अ॒स्मभ्य॑ं वृ॒ष्टिमा प॑व ॥ ३ ॥

घृ॒तम् । प॒व॒स्व॒ । धार॑या । य॒ज्ञेषु॑ । दे॒व॒ऽवीत॑मः । अ॒स्मभ्य॑म् । वृ॒ष्टिम् । आ । प॒व ॥ ३ ॥

वेङ्कट० उदकम् पवस्व धारया यज्ञेषु अत्यन्तं देवकामः । अस्मभ्यम् वृष्टिम् च आ पवस्व ॥ ३ ॥

स न॑ ऊ॒र्जे व्य१॒॑व्यय॑ं प॒वित्र॑ं धाव॒ धार॑या । दे॒वास॑ः शृ॒णव॒न् हि क॑म् ॥ ४ ॥

सः । न॒ः । ऊ॒र्जे । वि । अ॒व्यय॑म् । प॒वित्र॑म् । धा॒व॒ । धार॑या । दे॒वास॑ः । शृ॒णव॑न् । हि । क॒म् ॥

वेङ्कट० सः अस्माकम् [3]अन्नाय अविमयम्[3] पवित्रम् वि धाव धारया । देवाः[4] शृण्वन्तु तव शब्दम् ॥ ४ ॥

पव॑मानो असिष्यद॒द्रक्षां॑स्यप॒जङ्घ॑नत् । प्र॒त्न॒वद्रो॒चय॒न् रुच॑ः ॥ ५ ॥

पव॑मानः । अ॒सि॒स्य॒द॒त् । रक्षां॑सि । अ॒प॒ऽजङ्घ॑नत् । प्र॒त्न॒ऽवत् । रो॒चय॑न् । रुच॑ः ॥ ५ ॥

वेङ्कट० पवमानः स्यन्दते रक्षांसि[5] अपघ्नन् आत्मीया दीप्तीः पुराण इव च रोचयन् ॥ ५ ॥

[6]इति सप्तमाष्टके प्रथमाध्याये षष्ठो वर्गः[6] ॥

[ ५० ]

[6]उचथ्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[6] ।

उत् ते॒ शुष्मा॑स ई॒रते॒ सिन्धो॑रू॒र्मेरि॑व स्व॒नः । वा॒णस्य॑ चोदया प॒विम् ॥ १ ॥

उत् । ते॒ । शुष्मा॑सः । ई॒रते॒ । सिन्धो॑ः । ऊ॒र्मेःऽइ॑व । स्व॒नः । वा॒णस्य॑ । चो॒द॒य॒ । प॒विम्[7] ॥ १ ॥

वेङ्कट० उचथ्य आङ्गिरसः । उत् गच्छन्ति तव वेगाः, यथा समुद्रस्य ऊर्मेः[8] स्वनः उद्गच्छति[9] । स त्वम् इषोः विसृष्टायाः शब्दम् प्रेरय ॥ १ ॥

प्र॒स॒वे त॒ उदी॑रते ति॒स्रो वाचो॑ मख॒स्युव॑ः । यद॒व्य॒ एषि॒ सान॑वि ॥ २ ॥

प्र॒ऽस॒वे । ते॒ । उत् । ई॒रते॒ । ति॒स्रः । वाच॑ः । म॒ख॒स्युव॑ः । यत् । अव्ये॑ । एषि॑ । सान॑वि ॥ २ ॥

---

१. इव अ[1]. २. °च्छति मूको. ३-३. मन्नायादेयं वि[2] अ[1]. ४. देवा देवाः वि[2] अ[1]. ५ पुनरुक्तम् वि[2] अ[1]. ६-६. नास्ति मूको. ७. वाङ्नाम ( तु. निघ १,११ ). ८. ऊर्मयः अ[1]. ९. °च्छन्ति अ[3].

**वेङ्कट०** प्रसवे ते उत् गच्छन्ति ऋचो यजूंषि सामानि च यज्ञमिच्छतो यजमानस्य। यदा त्वं समुच्छ्रिते पवित्रे अविमये गच्छसि ॥ २ ॥

**अव्यो वारे परि प्रियं हरिं हिन्वन्त्यद्रिभिः । पवमानं मधुश्चुतम् ॥ ३ ॥**

अव्यः । वारे । परि । प्रियम् । हरिम् । हिन्वन्ति । अद्रिऽभिः । पवमानम् । मधुऽश्चुतम् ॥ ३ ॥

**वेङ्कट०** अवेः वाले परि प्रेरयन्ति प्रियम् हरिम् ग्रावभिः अभिषुतम् पवमानम् मधुरसस्य च्यावकम् ॥ ३ ॥

**आ पवस्व मदिन्तम पवित्रं धारया कवे । अर्कस्य योनिमासदम् ॥ ४ ॥**

आ । पवस्व । मदिन्ऽतम । पवित्रम् । धारया । कवे । अर्कस्य । योनिम् । आऽसदम् ॥ ४ ॥

**वेङ्कट०** गता ( ऋ ९,२५,६ ) ॥ ४ ॥

**स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः । इन्दविन्द्राय पीतये ॥ ५ ॥**

सः । पवस्व । मदिन्ऽतम । गोभिः । अञ्जानः । अक्तुऽभिः । इन्दो इति । इन्द्राय । पीतये ॥ ५ ॥

**वेङ्कट०** निगदव्याख्याता[1] ॥ ५ ॥

[2]इति सप्तमाष्टके प्रथमाध्याये सप्तमो वर्गः[2] ॥

## [ ५१ ]

[2]उचथ्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[2] ।

**अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ सृज । पुनीहीन्द्राय पातवे ॥ १ ॥**

अध्वर्यो इति । अद्रिऽभिः । सुतम् । सोमम् । पवित्रे । आ । सृज । पुनीहि । इन्द्राय । पातवे ॥ १ ॥

**वेङ्कट०** अध्वर्यो! अद्रिभिः सुतम् सोमम् पवित्रे आ सृज इति । एतदेवाह — पुनीहि इति ॥ १ ॥

**दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे । सुनोता मधुमत्तमम् ॥ २ ॥**

दिवः । पीयूषम् । उत्ऽतमम् । सोमम् । इन्द्राय । वज्रिणे । सुनोत । मधुमत्ऽतमम् ॥ २ ॥

**वेङ्कट०** दिवः पीयूषम् दिवो रसम् उत्तमम् इति ॥ २ ॥

**तव त्य इन्दो अन्धसो देवा मधोर्व्यश्नते । पवमानस्य मरुतः ॥ ३ ॥**

तव । त्ये । इन्दो इति । अन्धसः । देवाः । मधोः । वि । अश्नते । पवमानस्य । मरुतः ॥ ३ ॥

---

१. °व्याख्येति वि[1] अ[1]. २-२. नास्ति मूको.

वेङ्कट० तव मदकरम् अन्नम् इमे देवाः वि आप्नुवन्ति पूयमानस्य मरुतः च ॥ ३ ॥

त्वं हि सोम वर्धयन्त्सुतो मदाय भूर्णये । वृषन्त्स्तोतारमूतये ॥ ४ ॥

त्वम् । हि । सोम । वर्धयन् । सुतः । मदाय । भूर्णये । वृषन् । स्तोतारम् । ऊतये ॥ ४ ॥

वेङ्कट० त्वम् हि सोम! वर्धयन् अभिषुतः, मदाय क्षिप्राय वृषन्! स्तोतारम् रक्षणाय चाभिगच्छसि ॥ ४ ॥

अभ्यर्ष विचक्षण पवित्रं धारया सुतः । अभि वाजमुत श्रवः ॥ ५ ॥

अभि । अर्ष । विऽचक्षण । पवित्रम् । धारया । सुतः । अभि । वाजम् । उत । श्रवः ॥ ५ ॥

वेङ्कट० अभि गच्छ विद्रष्टः! पवित्रम् धारया अभिषुतः, अस्माकम् अन्नम् कीर्तिम् अभि क्षर ॥५॥

[1]इति सप्तमाष्टके प्रथमाध्याये अष्टमो वर्गः[1] ॥

[ ५२ ]

[1]उचथ्य आङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

परि द्युक्षः सनद्रयिर्भरद्वाजं नो अन्धसा । सुवानो अर्ष पवित्र आ ॥ १ ॥

परि । द्युक्षः । सनत्ऽरयिः । भरत् । वाजम् । नः । अन्धसा । सुवानः । अर्ष । पवित्रे । आ ॥

वेङ्कट० परि हरतु दीप्तो दीयमानधनः अस्माकम् बलम् अन्नेन सह अभिपूयमाणः क्षर पवित्रे ॥ १ ॥

तव प्रत्नेभिरध्वभिरव्यो वारे परि प्रियः । सहस्रधारो यात् तना ॥ २ ॥

तव । प्रत्नेभिः । अध्वऽभिः । अव्यः । वारे । परि । प्रियः । सहस्रऽधारः । यात् । तना ॥ २ ॥

वेङ्कट० तव[2] प्रत्नैः मार्गैः दशापवित्रे परि गच्छति प्रियः बहुधारः विस्तृतः सारः ॥ २ ॥

चरुर्न यस्तमीङ्खयेन्दो न दानमीङ्खय । वधैर्वधस्नवीङ्खय ॥ ३ ॥

चरुः । न । यः । तम् । ईङ्खय । [3]इन्दो इति । न । दानम् । ईङ्खय[3] ।
वधैः । वधस्नो इति वधऽस्नो । ईङ्खय ॥ ३ ॥

वेङ्कट० चरुः इव [4]पूर्णौदनः यः भवति[4] रसः तम् ईङ्खय, [5]इन्दो! इदानीम् दानम्† ईङ्खय[5] ग्राव्णां प्रहारैः प्रह्रियमाण! ॥ ३ ॥

---

१-१. नास्ति मूको. २. हि तव वि[2] अ[1]. ३-३. तु. ऋ १,१२८,५. ४-४. °र्णौदयो भवन्ति वि[2] अ[1]. ५-५. इन्दवमीङ्खय वि[1] अ[2]; °देवमीङ्खय वि[3]. † नास्ति मूको.

नि शुष्ममिन्दवेषां पुरुहूत जनानाम् । यो अस्माँ आदिदेशति ॥ ४ ॥

नि । शुष्मम् । इन्दो इति । एषाम् । पुरुऽहूत । जनानाम् । यः । अस्मान् । आऽदिदेशति ॥ ४ ॥

**वेङ्कट०** न्यक्कुरु बलम् एषाम् पुरुहूत ! जनानाम् । यद् बलम् अस्मान् बाधार्थम् आह्वयति[1] ॥ ४ ॥

शतं न इन्द ऊतिभिः सहस्रं वा शुचीनाम् । पवस्व मंहयद्रयिः ॥ ५ ॥

शतम् । नः । इन्दो इति । ऊतिऽभिः । सहस्रम् । वा । शुचीनाम् । पवस्व । मंहयत्ऽरयिः ॥५॥

**वेङ्कट०** अस्माकं रक्षणाय इन्दो ! शुचीनाम् सोमानाम् शतम् सहस्रम् वा पवस्व प्रदीयमानधनः ॥५॥

[2]इति सप्तमाष्टके प्रथमाध्याये नवमो वर्गः[2] ॥

[ ५३ ]

[2]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[2] ।

उत् ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः । नुदस्व याः परिस्पृधः ॥१॥

उत् । ते । शुष्मासः । अस्थुः । रक्षः । भिन्दन्तः । अद्रिऽवः । नुदस्व । याः । परिऽस्पृधः ॥१॥

**वेङ्कट०** अवत्सारः । तव वेगाः उत् तिष्ठन्ति रक्षः भिन्दन्तः ग्राववन् ! । बाधस्व येऽस्मान् परिबाधन्ते ॥ १ ॥

अया निजघ्निरोजसा रथसङ्गे धने हिते । स्तवा अबिभ्युषा हृदा ॥ २ ॥

अया । निऽजघ्निः । ओजसा । रथऽसङ्गे । धने । हिते । स्तवै । अबिभ्युषा । हृदा ॥ २ ॥

**वेङ्कट०** त्वम् अनेन शत्रून् बलेन हननशीलः । तं त्वाम् अस्मदीयानां रथानां सङ्गे धने च शत्रुषु निहिते[3] स्तौमि अभीतेन मनसा युक्तः ॥ २ ॥

अस्य व्रतानि नाधृषे पवमानस्य दूढ्या । रुज यस्त्वा पृतन्यति ॥ ३ ॥

अस्य । व्रतानि । न । आऽधृषे । पवमानस्य । दुःऽध्या । रुज । यः । त्वा । पृतन्यति ॥ ३ ॥

**वेङ्कट०** अस्य कर्माणि आधर्षयितुम् अशक्यानि पवमानस्य दुर्बुद्धिना राक्षसेन । बाधस्व यः त्वां योद्धुमिच्छति ॥ ३ ॥

तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम् । इन्दुमिन्द्राय मत्सरम् ॥ ४ ॥

तम् । हिन्वन्ति । मदऽच्युतम् । हरिम् । नदीषु । वाजिनम् । इन्दुम् । इन्द्राय । मत्सरम् ॥ ४ ॥

---

१. °ति शुष्म वि[2] अ[1]; °ति शुष्मः वि[1]. २-२. नास्ति मूको. ३. °ते त्वां मूको.

वेङ्कट० तम् प्रेरयन्ति मदस्य च्यावकम् हरिम्[1] वसतीवरीषु बलिनम् इन्दुम् इन्द्राय मदकरम् ॥ ४ ॥

[2]इति सप्तमाष्टके प्रथमाध्याये दशमो वर्गः[2] ॥

[ ५४ ]

[2]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[2] ।

**अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ १ ॥**

अस्य । प्रत्नाम् । अनु । द्युतम् । [3]शुक्रम् । दुदुह्रे । अह्रयः । पयः[3] । सहस्रऽसाम् । ऋषिम् ॥१॥

वेङ्कट० अस्य प्रत्नाम् द्योतमानां लताम् रसम् अनु दुहन्ति कवयः पातव्यं सहस्रस्य दातारम् द्रष्टारम् ॥ १ ॥

**अयं सूर्य इवोपदृगयं सरांसि धावति । सप्त प्रवत आ दिवम् ॥ २ ॥**

अयम् । सूर्यःऽइव । उपऽदृक् । अयम् । सरांसि । धावति । सप्त । प्रऽवतः । आ । दिवम् ॥ २ ॥

वेङ्कट० अयम् सूर्यः इव उपद्रष्टा । अयम् सरांसि धावति इत्यहोरात्राभिप्रायम् । 'एकया प्रतिधाऽपिबत्' ( ऋ ८,७७,४ ) इत्युक्तम् । सप्त च नदीः आ तिष्ठति च दिवम्[4] ॥ २ ॥

**अयं विश्वानि तिष्ठति पुनानो भुवनोपरि । सोमो देवो न सूर्यः ॥ ३ ॥**

अयम् । विश्वानि । तिष्ठति । पुनानः । भुवना । उपरि । सोमः । देवः । न । सूर्यः ॥ ३ ॥

वेङ्कट० पूयमानः अयम्[5] विश्वानि भुवनानि उपरि तिष्ठति सोमः देवः इव सूर्यः ॥ ३ ॥

**परि णो देववीतये वाजाँ अर्षसि गोमतः । पुनान इन्दविन्द्रयुः ॥ ४ ॥**

परि । नः । देवऽवीतये । वाजान् । अर्षसि । गोऽमतः । पुनानः । इन्दो इति । इन्द्रऽयुः ॥ ४ ॥

वेङ्कट० परि क्षर अस्माकं यज्ञाय अन्नानि गोयुक्तानि पूयमानः[6] इन्दो! त्वम् इन्द्रकामः ॥ ४ ॥

[2]इति सप्तमाष्टके प्रथमाध्याये एकादशो वर्गः[2] ॥

[ ५५ ]

[2]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[2] ।

**यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव । सोम विश्वा च सौभगा ॥ १ ॥**

यवम्ऽयवम् । नः । अन्धसा । पुष्टम्ऽपुष्टम् । परि । स्रव । सोम । विश्वा । च । सौभगा ॥ १ ॥

---

१. नास्ति अ[1].　२-२. नास्ति मूको.　३-३ तु. ऋ ९,१९,५.　४ दिव: वि[1]　५. नास्ति वि[1].　६. °नः त्वम् अ[1].

वेङ्कट० सोम! धारया सर्वदा अस्माकम् यवम् पुष्टम् परि स्रव विश्वानि च[१] धनानि ॥ १ ॥

इन्दो यथा तव स्तवो यथा ते जातमन्धसः । नि बर्हिषि प्रिये सदः ॥ २ ॥

इन्दो इति । यथा । तव । स्तवः । यथा । ते । जातम् । अन्धसः । नि । बर्हिषि । प्रिये । सदः ॥२॥

वेङ्कट० इन्दो! यथा तव स्तवः भवति, यथा वा तुभ्यं हविषो जननम्, उभयं कर्तुम् अस्मिन् नि-षीद बर्हिषि प्रिये ॥ २ ॥

उत नो गोविदश्ववित् पवस्व सोमान्धसा । मक्षूतमेभिरहभिः ॥ ३ ॥

उत । नः । गोऽवित् । अश्वऽवित् । पवस्व । सोम । अन्धसा । मक्षुऽतमेभिः । अहऽभिः ॥३॥

वेङ्कट० अपि च अस्माकं गोदः अश्वदश्च पवस्व सोम! धारया शीघ्रतमैः अहोभिः हेतुभिः[२]। सूक्तमिदं पञ्चमेऽहनि बहिष्पवमाने विनियुक्तम् ॥ ३ ॥

यो जिनाति न जीयते हन्ति शत्रुमभीत्य । स पवस्व सहस्रजित् ॥ ४ ॥

यः । जिनाति । न । जीयते । हन्ति । शत्रुम् । अभिऽइत्य । सः । पवस्व । सहस्रऽजित् ॥४॥

वेङ्कट० यः हिनस्ति शत्रून्, न च जीयते[३] शत्रुभिः । हन्ति च शत्रुम्[४] स्वयमभ्येत्य । अथ प्रत्यक्षः । सः पवस्व सहस्रस्य जेतः! ॥ ४ ॥

[५]इति सप्तमाष्टके प्रथमाध्याये द्वादशो वर्गः[५] ॥

## [ ५६ ]

[५]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[५] ।

परि सोम ऋतं बृहदाशुः पवित्रे अर्षति । विघ्नन् रक्षांसि देवयुः ॥ १ ॥

परि । सोमः । ऋतम् । बृहत् । आशुः । पवित्रे । अर्षति । विऽघ्नन् । रक्षांसि । देवऽयुः ॥ १ ॥

वेङ्कट० परि गमयति[६] सोमः अन्नम् महद् आशुः पवित्रे विघ्नन् रक्षांसि देवकामः ॥ १ ॥

यत् सोमो वाजमर्षति शतं धारा अपस्युवः । इन्द्रस्य सख्यमाविशन् ॥ २ ॥

यत् । सोमः । वाजम् । अर्षति । शतम् । धाराः । अपस्युवः । इन्द्रस्य । सख्यम् । आऽविशन् ॥

वेङ्कट० यदा सोमः अन्नम् गमयति शतम् सोमधाराः कर्मेच्छन्तीः[७] इन्द्रस्य सख्यम् आविशन् । उत्तरस्यां सम्बन्ध, सा प्रत्यक्षेति ॥ २ ॥

---

१. नास्ति वि१. २. नास्ति त्रि१ अ१. ३. जीयते मूको. ४. शत्रू त्रि१. ५-५. नास्ति मूको. ६. गच्छति वि१. ७. °च्छन्तिरर्षति मूको.

अभि त्वा योषणो दश जारं न कन्यानूषत । मृज्यसे सोम सातये ॥ ३ ॥

अभि । त्वा । योषणः । दश । जारम् । न । कन्या । अनूषत । मृज्यसे । सोम । सातये ॥३॥

वेङ्कट० [1]त्वाम् अभि[1] शब्दायन्ते दश अङ्गुलयः, यथा कन्या जारम् अभिशब्दायते । ताभिस्त्वम् मृज्यसे सोम! धनलाभाय[2] ॥ ३ ॥

त्वमिन्द्राय विष्णवे स्वादुरिन्दो परि स्रव । नॄन्त्स्तोतॄन् पाह्यंहसः ॥ ४ ॥

त्वम् । इन्द्राय । विष्णवे । स्वादुः । इन्दो इति । परि । स्रव । नॄन् । स्तोतॄन् । पाहि । अंहसः ॥

वेङ्कट० निगदसिद्धा ॥ ४ ॥

[3]इति सप्तमाष्टके प्रथमाध्याये त्रयोदशो वर्गः[3] ॥

[ ५७ ]

[3]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[3] ।

प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः । अच्छा वाजं सहस्रिणम् ॥ १ ॥

प्र । ते । धाराः । असश्चतः । दिवः । न । यन्ति । वृष्टयः । अच्छ । वाजम् । सहस्रिणम् ॥१॥

वेङ्कट० प्र यन्ति तव धाराः निःसङ्गाः, यथा दिवः वृष्टयः यन्ति बहुसङ्ख्यम् अन्नम् प्रति ॥ १ ॥

अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति । हरिस्तुञ्जान आयुधा ॥ २ ॥

अभि । प्रियाणि । काव्या । विश्वा । चक्षाणः । अर्षति । हरिः । तुञ्जानः । आयुधा ॥ २ ॥

वेङ्कट० अभि गच्छति प्रियाणि कर्माणि सर्वाण्येव पश्यन् हरितवर्णः प्रेरयन् आयुधानि ॥ २ ॥

स मर्मृजान आयुभिरिभो राजेव सुव्रतः । श्येनो न वंसु षीदति ॥ ३ ॥

सः । मर्मृजानः । आयुऽभिः । इभः । राजाऽइव । सुऽव्रतः । श्येनः । न । वंसु । सीदति ॥ ३ ॥

वेङ्कट० सः शोध्यमानो मनुष्यैः गतभयः[4] राजा इव सुकर्मा श्येनः इव च आगत्य उदकेषु सीदति ॥ ३ ॥

स नो विश्वा दिवो वसूतो पृथिव्या अधि । पुनान इन्दवा भर ॥ ४ ॥

सः । नः । विश्वा । दिवः । वसु । उतो इति । पृथिव्याः । अधि । पुनानः । इन्दो इति । आ । भर ॥

---

१-१. अहि त्वां अ[1]; °अहि वि[2]. २. °भावेन्दो मूको. ३-३. नास्ति मूको. ४. जनहयो वि[2] अ[2].

वेङ्कट० सः अस्माकं विश्वानि दिव्यानि वसूनि पार्थिवानि च पूयमानः सोम! आ हर ॥ ४ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये चतुर्दशो वर्गः[1] ॥

## [ ५८ ]

[1]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

तरत् स मन्दी धावति धारा सुतस्यान्धसः । तरत् स मन्दी धावति ॥ १ ॥

तरत् । सः । मन्दी । धावति । धारा । सुतस्य । अन्धसः । तरत् । सः । मन्दी । धावति ॥१॥[2]

वेङ्कट० स्तोतॄन् तारयन् सः हर्षकः सोमः पवते । तदेवाह — धारा सुतस्य सोमस्य पवते[3] इति । नुमभावश्छान्दसः ॥ १ ॥

उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत् स मन्दी धावति ॥ २ ॥

उस्रा । वेद । वसूनाम् । मर्तस्य । देवी । अवसः । तरत् । सः । मन्दी । धावति ॥ २ ॥

वेङ्कट० वसूनाम् उत्सरणशीला[4] देवी सोमधारा मर्तम् रक्षितुं जानाति ॥ २ ॥

ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे । तरत् स मन्दी धावति ॥ ३ ॥

ध्वस्रयोः । पुरुऽसन्त्योः । आ । सहस्राणि । दद्महे । तरत् । सः । मन्दी । धावति ॥ ३ ॥

वेङ्कट० ध्वस्रश्च पुरुषन्तिश्च कौचित् तयोः वयं धनानाम् सहस्राणि आ दद्महे । [5]तत्रोत्तमं प्रतिगृहीतम्[5] अस्माकमस्त्विति सोमस्य स्तवः । यथाऽवत्सार एतयोः[6] धनानि प्रतिजग्राह[7] एवं[8] तरन्तपुरुमीळ्हौ च प्रतिजगृहतुः । तत्र शाट्यायनकम् — 'अथ ह वै तरन्तपुरुमीळ्हौ वैददश्वी ध्वस्रयोः पुरुषन्त्योर्बहु प्रतिगृह्य गरगिराविव मेनाते । तौ ह[9] स्माङ्गुत्या सातं प्रतिमृशाते । तावकामयेतामसातं नाविदं सातं स्यादात्तमिवैव न प्रतिगृहीतमिति । तावेतच्चतुर्ऋचमपश्यताम् । तेन प्रत्यैताम् ततो वै तयोरसातं सातमभवत् । [10]आत्तमिवैव न प्रतिगृहीतम्[10] । स यः प्रतिगृह्य कामयेत' ( जैमि ३,१३९ [ तु. तां १३,७,१२ ] ) इत्यादि ॥ ३ ॥

आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे । तरत् स मन्दी धावति ॥ ४ ॥

आ । ययोः । त्रिंशतम् । तना । सहस्राणि । च । दद्महे । तरत् । सः । मन्दी । धावति ॥ ४ ॥

वेङ्कट० आ दद्महे ययोः[11] त्रिंशतम् वस्त्राणि सहस्राणि च गवाम् मन्दी[12] तत् अप्रतिगृहीतं भवत्विति । यद्वा दुरितेभ्य उत्तीर्णो भवति, स दुरितेभ्यो धावति चेति[13] ॥ ४ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये पञ्चदशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. अर्थः या. ( १३,६ ) द्र. ३. पवन मूको. ४. °णशीलाः वि[1]; वरणशीला वि[2] अ[1]. ५-५. °त्तम प्र मूको. ६. तयोः प्रपते तदेवाह धारासु तस्य सोमस्य पवत इति । नुमभावः मूको. ७. नास्ति मूको. ८. चैवं अ[1]. ९. नास्ति वि[1]. १०-१०. °वैव…प्रति° वि[2] अ[1]. ११. त्वयोः वि[1] अ[1]. १२. मन्दिन् वि[2] अ[1]; मंदि वि[1]. १३. चेति धाव वि[1] अ[1].

[ ५९ ]

[1]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

पव॑स्व गो॒जिद॑श्व॒जिद्वि॑श्व॒जित् सो॑म रण्य॒जित् । प्र॒जाव॒द्रत्न॒मा भ॑र ॥ १ ॥

पव॑स्व । गो॒ऽजित् । अ॒श्व॒ऽजित् । वि॒श्व॒ऽजित् । सो॒म॒ । र॒ण्य॒ऽजित् । प्र॒जाऽव॑त् । रत्न॑म् । आ । भ॒र॒ ॥

वेङ्कट० पवस्व गवादीनां जेता । रमणीयं धनं रण्यम् । प्रजावत् च धनम् अस्मभ्यम् आ हर[2] ॥१॥

पव॑स्वा॒द्भ्यो अदा॑भ्यः॒ पव॒स्वौष॑धीभ्यः । पव॑स्व धि॒षणा॑भ्यः ॥ २ ॥

पव॑स्व । अ॒त्ऽभ्यः । अदा॑भ्यः । पव॑स्व । ओष॑धीभ्यः । पव॑स्व । धि॒षणा॑भ्यः ॥ २ ॥

वेङ्कट० वसतीवरीभ्यः अंशुभ्यः ग्रावभ्यश्च पवस्व इति ॥ २ ॥

त्वं सो॑म॒ पव॑मानो॒ विश्वा॑नि दुरि॒ता त॑र । क॒विः सी॑द॒ नि ब॒र्हिषि॑ ॥ ३ ॥

त्वम् । सो॒म॒ । पव॑मानः । विश्वा॑नि । दुः॒ऽइ॒ता । त॒र॒ । क॒विः । सी॒द॒ । नि । ब॒र्हिषि॑ ॥ ३ ॥

वेङ्कट० निगदसिद्धा ॥ ३ ॥

पव॑मान॒ स्व॑र्विदो॒ जाय॑मानोऽभवो म॒हान् । इन्दो॒ विश्वाँ॑ अ॒भीद॑सि ॥ ४ ॥

पव॑मान । स्वः॑ । वि॒दः॒ । जाय॑मानः । अ॒भ॒वः॒ । म॒हान् । इन्दो॒ इति॑ । विश्वा॑न् । अ॒भि । इत् । अ॒सि॒ ॥

वेङ्कट० पवमान! [3]सर्वम् प्रयच्छ[3] यजमानस्य, प्रादुर्भवन् भवसि मंहनीयः । इन्दो! सर्वांश्च शत्रून् अभि भवसि ॥ ४ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये षोडशो वर्गः[1] ॥

[ ६० ]

[1]अवत्सारः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

प्र गा॑य॒त्रेण॑ गायत॒ पव॑मानं॒ विच॑र्षणिम् । इन्दुं॑ स॒हस्र॑चक्षसम् ॥ १ ॥

प्र । गा॒य॒त्रेण॑ । गा॒य॒त॒ । पव॑मानम् । विऽच॑र्षणिम् । इन्दु॑म् । स॒हस्र॑ऽचक्षसम् ॥ १ ॥

वेङ्कट० प्र गायत गायत्रेण साम्ना पवमानम् विद्रष्टारम् इन्दुम् बहुदर्शनम् ॥ १ ॥

तं त्वा॑ स॒हस्र॑चक्षसम॒थो॑ स॒हस्र॑भर्णसम् । अति॒ वार॑मपाविषुः ॥ २ ॥

तम् । त्वा॒ । स॒हस्र॑ऽचक्षसम् । अथो॒ इति॑ । स॒हस्र॑ऽभर्णसम् । अति॑ । वार॑म् । अ॒पा॒वि॒षुः॒ ॥२॥

---

१-१. नास्ति मूको. २. भर वि[2]. ३-३. संप्रय° वि[2] अ[2].

वेङ्कट० तम् त्वा बहुदर्शनम् अपि च बहुभरणम् ऋत्विजः 'वालम् अति पावयन्ति[1] ॥ २ ॥

अति वारान् पवमानो असिष्यदत् कलशाँ अभि धावति । इन्द्रस्य हार्द्याविशन् ॥३॥

अति । वारान् । पवमानः । असिस्यदत् । कलशान् । अभि । धावति ।
इन्द्रस्य । हार्दि । आऽविशन् ॥ ३ ॥

वेङ्कट० वालान् अति स्यन्दते पवमानः, द्रोणानि च अभि धावति इन्द्रस्य हृदयम् आ विशन् ॥३॥

इन्द्रस्य सोम राधसे शं पवस्व विचर्षणे । प्रजावद्रेत आ भर ॥ ४ ॥

इन्द्रस्य । सोम । राधसे । शम् । पवस्व । विऽचर्षणे । प्रजाऽवत् । रेतः । आ । भर ॥ ४ ॥

वेङ्कट० [2]इन्द्रस्य सोम! राधनाय[2] सुखकरम् रसम् पवस्व विद्रष्टः!, अस्माकं च प्रजायुक्तम् रेतः आ हर[3] ॥ ४ ॥

[4]इति सप्तमाष्टके प्रथमाध्याये सप्तदशो वर्गः[4] ॥

## [ ६१ ]

[4]अमहीयुराङ्गिरस ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

अया वीती परि स्रव यस्त इन्दो मदेष्वा । अवाहन् नवतीर्नव ॥ १ ॥

अया । वीती । परि । स्रव । यः । ते । इन्दो इति । मदेषु । आ । अवऽअहन् । नवतीः । नव ॥१॥

वेङ्कट० अमहीयुराङ्गिरसः । अनेन रसेन भक्षणाय परि स्रव । यः ते इन्दो! रसः मदेषु नवतीः नव च शत्रुपुरीः अवाऽहन् । अमुं हि पीत्वा मत्तः पुरीः[5] जघान इन्द्र इति ॥ १ ॥

पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम् । अध त्यं तुर्वशं यदुम् ॥ २ ॥

पुरः । सद्यः । इत्थाऽधिये । दिवःऽदासाय । शम्बरम् । अध । त्यम् । तुर्वशम् । यदुम् ॥ २ ॥

वेङ्कट० पुराणि अवाहन् एकस्मिन्नेव अह्नि सत्यकर्मणे दिवोदासाय शम्बरम् च दिवोदासशत्रुं पुराणां स्वामिनम् । 'दिवोदासं शम्बरहत्य आवतम्' ( ऋ १,११२,१४ ) इत्युक्तम् । अथ तम् तुर्वशम् यदुम् च तस्मै वशमनय इति ॥ २ ॥

परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् । क्षरा सहस्रिणीरिषः ॥ ३ ॥

परि । नः । अश्वम् । अश्वऽवित् । गोऽमत् । इन्दो इति । हिरण्यऽवत् । क्षर । सहस्रिणीः । इषः ॥३॥

---

१-१. वालमवोपयन्ति वि[2]; बालमवोपयन्ति अ[1]; वालमिति वापयन्ति वि[1]. २-२. धनाय वि[2] अ[1], ३. भर वि[1]. ४-४. नास्ति मूको. ५. पुरीं मूको.

**वेङ्कट०** परि क्षर अस्माकम् अश्वम् अश्वस्य लम्भकः गवादियुक्तं धनं च । परि क्षर च[1] बहूनि अन्नानि ॥ ३ ॥

पवमानस्य ते वयं पवित्रमभ्युन्दतः । सखित्वमा वृणीमहे ॥ ४ ॥

पवमानस्य । ते । वयम् । पवित्रम् । अभिऽउन्दतः । सखिऽत्वम् । आ । वृणीमहे ॥ ४ ॥

**वेङ्कट०** क्षरतः ते वयम् पवित्रम् च अभिक्लेदयतः सखित्वम् आ वृणीमहे ॥ ४ ॥

ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर्नः सोम मृळय ॥ ५ ॥

ये । ते । पवित्रम् । ऊर्मयः । अभिऽक्षरन्ति । धारया । तेभिः । नः । सोम । मृळय ॥ ५ ॥

**वेङ्कट०** ये ते ऊर्मयः पवित्रम् अभिक्षरन्ति धारया, तैः अस्मान् सोम! सुखय ॥ ५ ॥

[2]इति सप्तमाष्टके प्रथमाध्याये अष्टादशो वर्गः[2] ॥

स नः पुनान आ भर रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ६ ॥

सः । नः । पुनानः । आ । भर । रयिम् । वीरऽवतीम् । इषम् । ईशानः । सोम । विश्वतः ॥६॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् । समादित्येभिरख्यत ॥ ७ ॥

एतम् । ऊँ इति । त्यम् । दश । क्षिपः । मृजन्ति । सिन्धुऽमातरम् । सम् । आदित्येभिः । अख्यत ॥

**वेङ्कट०** तम् इमम् दश अङ्गुलयः मृजन्ति, यस्य सिन्धवो मातरो भवन्ति । सोऽयम् आदित्यैः सम् गच्छते ॥ ७ ॥

समिन्द्रेणोत वायुना सुत एति पवित्र आ । सं सूर्यस्य रश्मिभिः ॥ ८ ॥

सम् । इन्द्रेण । उत । वायुना । सुतः । एति । पवित्रे । आ । सम् । सूर्यस्य । रश्मिऽभिः ॥८॥

**वेङ्कट०** सुतः अयम् इन्द्रादिभिः सम् गच्छत इति ॥ ८ ॥

स नो भगाय वायवे पूष्णे पवस्व मधुमान् । चारुर्मित्रे वरुणे च ॥ ९ ॥

सः । नः । भगाय । वायवे । पूष्णे । पवस्व । मधुऽमान् । चारुः । मित्रे । वरुणे । च ॥ ९ ॥

**वेङ्कट०** सः नः भगाद्यर्थम्[3] पवस्व मधुरसः कल्याणः मित्रावरुणार्थं[4] चेति ॥ ९ ॥

---

१. नास्ति अ॰. २-२. नास्ति मूको. ३. भागाभ्य॰ अ॰; भगाभ्यर्थं वि॰. ४. ॰णं वि॰ अ॰; ॰णार्थं वि॰.

उच्चा ते जातमन्धसो दिवि षद् भूम्या ददे । उग्रं शर्म महि श्रवः ॥ १० ॥

उच्चा । ते । जातम् । अन्धसः । दिवि । सत् । भूमिः । आ । ददे । उग्रम् । शर्म । महि । श्रवः ॥

**वेङ्कट०** उपरि त्वदीयस्य अन्धसः रसस्य जन्म । दिवि च सत् तदन्धः भूमिः आ दत्ते भूमिष्ठैरादीयते उद्गूर्णम् सुखम् महच्च अन्नम् ॥ १० ॥

[1]इति सप्तमाष्टके प्रथमाध्याये एकोनविंशो वर्गः[1] ॥

एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सिषासन्तो वनामहे ॥ ११ ॥

एना । विश्वानि । अर्यः । आ । द्युम्नानि । मानुषाणाम् । सिसासन्तः । वनामहे ॥ ११ ॥

**वेङ्कट०** अनेन सोमेन विश्वानि अभिगच्छन्तो वयम् अन्नानि मानुषाणाम् सम्भक्तुमिच्छन्तः भजामहे ॥ ११ ॥

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित् परि स्रव ॥ १२ ॥

सः । नः । इन्द्राय । यज्यवे । वरुणाय । मरुत्ऽभ्यः । वरिवःऽवित् । परि । स्रव ॥ १२ ॥

**वेङ्कट०** सः अस्माकम् इन्द्राय यष्टव्याय वरुणाय मरुद्भ्यः च परि स्रव धनस्य लम्भकः ॥ १२ ॥

उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ १३ ॥

उपो इति । सु । जातम् । अप्ऽतुरम् । गोभिः । भङ्गम् । परिऽकृतम् । इन्दुम् । देवाः । अयासिषुः ॥

**वेङ्कट०** उप आगच्छन्ति[2] जातम् वसतीवरीभिः प्रेरितम् गोविकारैः[3] अलङ्कृतम् भञ्जकं शत्रूणाम् इन्दुम् देवाः ॥ १३ ॥

तमिद्वर्धन्तु नो गिरो वत्सं संशिश्वरीरिव । य इन्द्रस्य हृदंसनिः ॥ १४ ॥

तम् । इत् । वर्धन्तु । नः । गिरः । वत्सम् । संशिश्वरीःऽइव । यः । इन्द्रस्य । हृदम्ऽसनिः ॥

**वेङ्कट०** [4]तम् एव[4] वर्धयन्तु नः गिरः वत्सम् इव वृद्धपयस्काः[5] मातरः, यः [6]सोमः इन्द्रस्य[6] हृदंसनिः भवति हृदयस्य सम्भक्तेति ॥ १४ ॥

अर्षा णः सोम शं गवे धुक्षस्व पिप्युषीमिषम् । वर्धा समुद्रमुक्थ्यम् ॥ १५ ॥

अर्ष । नः । सोम । शम । गवे । धुक्षस्व । पिप्युषीम् । इषम् । वर्ध । समुद्रम् । उक्थ्यम् ॥१५॥

---

१-१ नास्ति मूको. २. ग° वि[1]. ३. °विरागैः वि[2] अ[1]. ४-४. नास्ति वि[2] अ[1]. ५. वृद्धवयस्काः वि[1]; बद्धपयस्काः वि[2] अ[1]. ६-६. इन्द्रः सोमस्य वि[1].

वेङ्कट० क्षर अस्माकम् सोम! सुखम् गवे, धुक्षस्व च वृद्धम् अन्नम्। वर्धय च उदकम् प्रशस्यम् ॥ १५ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये विंशो वर्गः[1] ॥

पवमानो अजीजनद् दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ १६ ॥

पवमानः । अजीजनत् । दिवः । चित्रम् । न । तन्यतुम् । ज्योतिः । वैश्वानरम् । बृहत् ॥१६॥

वेङ्कट० पवमानः अजीजनत् महद् वैश्वानराख्यम् ज्योतिः दिवः चित्रम् इव अशनिम् ॥ १६ ॥

पवमानस्य ते रसो मदो राजन्नदुच्छुनः । वि वारमव्यमर्षति ॥ १७ ॥

पवमानस्य । ते । रसः । मदः । राजन् । अदुच्छुनः । वि । वारम् । अव्यम् । अर्षति ॥ १७ ॥

वेङ्कट० पवमानस्य ते रसः मदकरः राजन्! रक्षोवर्जितः[2] अपिगच्छति वालम् अविमयम् ॥ १७ ॥

पवमान रसस्तव दक्षो वि राजति द्युमान् । ज्योतिर्विश्वं स्वर्दृशे ॥ १८ ॥

पवमान । रसः । तव । दक्षः । वि । राजति । द्युऽमान् । ज्योतिः । विश्वम् । स्वः । दृशे ॥१८॥

वेङ्कट० पवमान! तव रसः वृद्धः वि राजति दीप्तिमान्। ज्योतिः च व्याप्तम् सर्वम्[3] करोति दर्शनाय ॥ १८ ॥

यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥ १९ ॥

यः । ते । मदः । वरेण्यः । तेन । पवस्व । अन्धसा । देवऽअवीः । अघशंसऽहा ॥ १९ ॥

वेङ्कट० यः ते मदः वरणीयः, तेन क्षर अदनीयेन देवकामः रक्षोहा[4] ॥ १९ ॥

जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे । गोषा उ अश्वसा असि ॥ २० ॥

जघ्निः । वृत्रम् । अमित्रियम् । सस्निः । वाजम् । दिवेऽदिवे । गोऽसाः । ऊँ इति । अश्वऽसाः । असि ॥

वेङ्कट० हन्ता उपद्रवम् अमित्रभवम् सम्भक्ता सङ्ग्रामम् अन्वहम् गवाम् अश्वानां च दाता भवसि ॥ २० ॥

[1]इति सप्तमाष्टके प्रथमाध्याये एकविंशो वर्गः[1] ॥

संमिश्लो अरुषो भव सूपस्थाभिर्न धेनुभिः । सीदञ्छ्येनो न योनिमा ॥२१॥

सम्ऽमिश्लः । अरुषः । भव । सुऽउपस्थाभिः । न । धेनुऽभिः । सीदन् । श्येनः । न । योनिम् । आ ॥

---

१-१. नास्ति मूको. २. रक्षिनोवर्जि° वि[1]; रक्षिनो वर्जितः अ[1]. ३. नास्ति वि[1]. ४. रक्षोह वि[1].

वेङ्कट० संमिश्रः त्वम् आरोचमानः भव सूपस्थाभिः[1] इदानीम् धेनुभिः श्येनः इव शीघ्रमागत्य स्थानम् आ सीदन्[2] ॥ २१ ॥

स प॑वस्व॒ य आवि॒थेन्द्रं॑ वृ॒त्राय॒ हन्त॑वे । व॒व्रि॒वांसं॑ म॒हीर॒पः ॥ २२ ॥

सः । प॒व॒स्व॒ । यः । आवि॑थ । इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । व॒व्रि॒ऽवांस॑म् । म॒हीः । अ॒पः ॥ २२ ॥

वेङ्कट० सः[3] पवस्व, यः त्वम् अरक्षः इन्द्रम् [4]वृत्रं हन्तुम्[4] निरुन्धानम् महान्ति उदकानि ॥ २२ ॥

सु॒वीरा॑सो व॒यं धना॒ जये॑म सोम मीढ्वः । पु॒ना॒नो व॑र्ध नो॒ गिरः॑ ॥ २३ ॥

सु॒ऽवीरा॑सः । व॒यम् । धना॑ । जये॑म । सोम॒ । मी॒ढ्वः॒ । पु॒ना॒नः । व॒र्ध॒ । नः॒ । गिरः॑ ॥ २३ ॥

वेङ्कट० सुपुत्राः वयम् धनानि जयेम सोम! सेक्तः!। पुनानः वर्धय अस्माकं स्तुतीः ॥ २३ ॥

त्वोता॑स॒स्तवाव॑सा॒ स्याम॑ व॒न्वन्त॑ आ॒मुरः॑ । सोम॑ व्र॒तेषु॑ जागृहि ॥ २४ ॥

त्वाऽऊ॑तासः । तव॑ । अव॑सा । स्याम॑ । व॒न्वन्तः॑ । आ॒ऽमुरः॑ । सोम॑ । व्र॒तेषु॑ । जा॒गृ॒हि॒ ॥ २४ ॥

वेङ्कट० त्वया[5] रक्षिताः तव रक्षणेन स्याम[6] शत्रून् भजमानाः तेषाम् अभिमारकाः[7]। सोम! कर्मसु अस्माकम् जागृहि ॥ २४ ॥

अ॒प॒घ्नन् प॑वते॒ मृधोऽप॒ सोमो॒ अरा॑व्णः । गच्छ॒न्निन्द्र॑स्य निष्कृ॒तम् ॥ २५ ॥

अ॒प॒ऽघ्नन् । प॒व॒ते॒ । मृधः॑ । अप॑ । सोमः॑ । अरा॑व्णः । गच्छ॑न् । इन्द्र॑स्य । निः॒ऽकृ॒तम् ॥ २५ ॥

वेङ्कट० शत्रून्[8] अपघ्नन् पवते सोमः अदातॄंश्च गच्छन् इन्द्रस्य स्थानम् ॥ २५ ॥

[8]इति सप्तमाष्टके प्रथमाध्याये द्वाविंशो वर्गः[8] ॥

म॒हो नो॑ रा॒य आ भ॑र॒ पव॑मान ज॒ही मृधः॑ । रास्वे॑न्दो वी॒रव॒द्यशः॑ ॥ २६ ॥

म॒हः । नः॒ । रा॒यः । आ । भ॒र॒ । पव॑मान । ज॒हि । मृधः॑ । रास्व॑ । इ॒न्दो॒ इति॑ । वी॒रऽव॑त् । यशः॑ ॥

वेङ्कट० महान्ति धनानि अस्माकम् आ हर[9] पवमान!। जहि शत्रून्। देहि इन्दो![10] पुत्रयुक्ताम् कीर्तिम् ॥ २६ ॥

न त्वा॑ श॒तं च॒न ह्रुतो॒ राधो॒ दित्स॑न्त॒मा मि॑नन् । यत् पु॑ना॒नो म॑ख॒स्यसे॑ ॥२७॥

---

१. °स्थानाभिः वि[2] अ[1]. २. °दत वि[2] अ[1]. ३. नास्ति वि[1]. ४-४. वृत्रहन्तारं अ[1]; वृत्रहन्तुं वि[1,2]. ५. स त्वया मूको. ६. न स्याम मूको. ७. °मितार° वि[2] अ[1]. ८-८. नास्ति मूको. ९. मर वि[1]. १०. इन्द्रस्य मूको.

न । त्वा । शतम् । चन । ह्रुतः । राधः । दित्सन्तम् । आ । मिनन् । यत् । पुनानः । मखस्यसे ॥

वेङ्कट० न त्वा बहवोऽपि हिंसका धनं दित्सन्तम्[1] आ हिंसन्ति, यदा त्वं पूयमानः मघं दातुमिच्छसि ॥ २७ ॥

पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने । विश्वा अप द्विषो जहि ॥ २८ ॥

पवस्व । इन्दो इति । वृषा । सुतः । कृधि । नः । यशसः । जने । विश्वाः । अप । द्विषः । जहि ॥

वेङ्कट० पवस्व इन्दो! वृषा अभिषुतः, कुरु अस्मान् यशस्विनः जनपदेषु, अप जहि च सर्वान् शत्रून् ॥ २८ ॥

अस्य ते सख्ये वयं तवेन्दो द्युम्न उत्तमे । सासह्याम पृतन्यतः ॥ २९ ॥

अस्य । ते । सख्ये । वयम् । तव । इन्दो इति । द्युम्ने । उत्ऽतमे । ससह्याम । पृतन्यतः ॥२९॥

वेङ्कट० अस्य तव सख्ये सति वयम् इन्दो! त्वदीये उत्तमे अन्ने[2] भवेम, अभिभवेम[3] च शत्रून् ॥२९॥

या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे । रक्षा समस्य नो निदः ॥३०॥

या । ते । भीमानि । आयुधा । तिग्मानि । सन्ति । धूर्वणे । रक्ष । समस्य । नः । निदः ॥३०॥

वेङ्कट० भीमानि[4] यानि ते भयङ्कराणि आयुधानि तीक्ष्णानि सन्ति वधार्थम्, तैरायुधैः अस्मान् रक्ष सर्वस्य शत्रोर्निन्दायाः ॥ ३० ॥

[5]इति सप्तमाष्टके प्रथमाध्याये त्रयोविंशो वर्गः[5] ॥

[ ६२ ]

[5]जमदग्निर्भार्गव ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[5] ।

एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभि सौभगा ॥ १ ॥

एते । असृग्रम् । इन्दवः । तिरः । पवित्रम् । आशवः । विश्वानि । अभि । सौभगा ॥ १ ॥

वेङ्कट० जमदग्निर्भार्गवः । एते सृज्यन्ते सोमाः तिरः पवित्रम् शीघ्राः विश्वानि धनानि अभि ॥ १ ॥

विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः । तना कृण्वन्तो अर्वते ॥ २ ॥

विऽघ्नन्तः । दुःऽइता । पुरु । सुऽगा । तोकाय । वाजिनः । तना । कृण्वन्तः । अर्वते ॥ २ ॥

---

१. दीप्ते मूको. २. तु. या ५,५. ३. हवेम वि[3]; हवामहे अ[3]. ४. नास्ति वि[3]. ५-५. नास्ति मूको.

वेङ्कट० विघ्नन्तः[1] दुरितानि बहूनि, सुखानि च पुत्राय बलवन्तः धनानि कृण्वन्तः अश्वाय च ॥ २ ॥

कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् । इळामस्मभ्यं संयतम् ॥ ३ ॥

कृण्वन्तः । वरिवः । गवे । अभि । अर्षन्ति । सुऽस्तुतिम् । इळाम् । अस्मभ्यम् । सम्ऽयतम् ॥३॥

वेङ्कट० कृण्वन्तः धनम् गवे अभि गच्छन्ति मदीयाम् सुष्टुतिम् अन्नं च अस्मभ्यम्[2] कुर्वन्तः यत् अन्नम् अस्मान्[3] संयच्छति ॥ ३ ॥

असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ ४ ॥

असावि । अंशुः । मदाय । अप्ऽसु । दक्षः । गिरिऽस्थाः । श्येनः । न । योनिम् । आ । असदत् ॥

वेङ्कट० सुतः अंशुः मदार्थं वसतीवरीषु प्रवृद्धः पर्वते जातः । श्येनः इव च स्थानम् आ सीदति ॥ ४ ॥

शुभ्रमन्धो देववातमप्सु धूतो नृभिः सुतः । स्वदन्ति गावः पयोभिः ॥ ५ ॥

शुभ्रम् । अन्धः । देवऽवातम् । अप्ऽसु । धूतः । नृऽभिः । सुतः । स्वदन्ति । गावः । पयःऽभिः ॥

वेङ्कट० शोभनम् अन्नम् देवैः प्रार्थितम् स्वदयन्ति पशवः आशिरैः । सोऽयं सोमो वसतीवरीषु धूतः[4] ऋत्विग्भिः अभिषुतः ॥ ५ ॥

[5]इति सप्तमाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[5] ॥

आदीमश्वं न हेतारोऽशूशुभन्नमृताय । मध्वो रसं सधमादे ॥ ६ ॥

आत् । ईम् । अश्वम् । न । हेतारः । अशूशुभन् । अमृताय । मध्वः । रसम् । सधऽमादे ॥ ६ ॥

वेङ्कट० अनन्तरम् अश्वम् इव प्रेरकाः शोभयन्ति अमरणाय सोमस्य रसम् यज्ञे ॥ ६ ॥

यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये । ताभिः पवित्रमासदः ॥ ७ ॥

याः । ते । धाराः । मधुऽश्चुतः । असृग्रम् । इन्दो इति । ऊतये । ताभिः । पवित्रम् । आ । असदः ॥

वेङ्कट० याः ते धाराः मधुनश्चोतयित्र्यः सृज्यन्ते सोम! रक्षणाय[6], ताभिः त्वम् पवित्रम् आ सीद ॥ ७ ॥

सो अर्षेन्द्राय पीतये तिरो रोमाण्यव्यया । सीदन् योना वनेष्वा ॥ ८ ॥

---

१. अविघ्न° वि[2] अ[1]. २. अत्यन्तं अ[1]. ३. अस्मभ्यं अ[1]. ४. धुतः मूको. ५-५. नास्ति मूको. ६. रक्षाय वि[2].

सः । अर्ष । इन्द्राय । पीतये । तिरः । रोमाणि । अव्यया । सीदन् । योना । वनेषु । आ ॥८॥

वेङ्कट० सः क्षर इन्द्रस्य पानाय तिरः-कुर्वन् अविमयानि वालानि, सीदन् स्थाने पात्रेषु ॥ ८ ॥

त्वमिन्दो परि स्रव स्वादिष्ठो अङ्गिरोभ्यः । वरिवोविद् घृतं पयः ॥ ९ ॥

त्वम् । इन्दो इति । परि । स्रव । स्वादिष्ठः । अङ्गिरःऽभ्यः । वरिवःऽवित् । घृतम् । पयः ॥ ९ ॥

वेङ्कट० त्वम् इन्दो! परि स्रव स्वादुतमः अङ्गिरसामर्थाय धनस्य लम्भकः घृतम् पयः च ॥ ९ ॥

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ १० ॥

अयम् । विऽचर्षणिः । हितः । पवमानः । सः । चेतति । हिन्वानः । आप्यम् । बृहत् ॥ १० ॥

वेङ्कट० अयम् विद्रष्टा पात्रेषु हितः पवमानः । सः ज्ञायते प्रेरयन् अप्सु भवम् महदन्नम् ॥ १० ॥

[1]इति सप्तमाष्टके प्रथमाध्याये पञ्चविंशो वर्गः[1] ॥

एष वृषा वृषव्रतः पवमानो अशस्तिहा । करद्वसूनि दाशुषे ॥ ११ ॥

एषः । वृषा । वृषऽव्रतः । पवमानः । अशस्तिऽहा । करत् । वसूनि । दाशुषे ॥ ११ ॥

वेङ्कट० एषः वृषा वृषकर्मा पवमानः [2]रक्षोहा करोति धनानि[2] यजमानाय ॥ ११ ॥

आ पवस्व सहस्रिणं रयिं गोमन्तमश्विनम् । पुरुश्चन्द्रं पुरुस्पृहम् ॥ १२ ॥

आ । पवस्व । सहस्रिणम् । रयिम् । गोऽमन्तम् । अश्विनम् । पुरुऽचन्द्रम् । पुरुऽस्पृहम् ॥ १२ ॥

वेङ्कट० आ पवस्व बहुसङ्ख्यम् रयिम् गवाश्वयुक्तम् बहूनां हर्षकम् स्पृहणीयम्[3] चेति ॥ १२ ॥

एष स्य परि षिच्यते मर्मृज्यमान आयुभिः । उरुगायः कविक्रतुः ॥ १३ ॥

एषः । स्यः । परि । सिच्यते । मर्मृज्यमानः । आयुऽभिः । उरुऽगायः । कविऽक्रतुः ॥ १३ ॥

वेङ्कट० सः[4] एषः परि सिच्यते शोध्यमानः[5] मनुष्यैः बहुस्तुतिः[6] क्रान्तप्रज्ञः ॥ १३ ॥

सहस्रोतिः शतामघो विमानो रजसः कविः । इन्द्राय पवते मदः ॥ १४ ॥

सहस्रऽऊतिः । शतऽमघः । विऽमानः । रजसः । कविः । इन्द्राय । पवते । मदः ॥ १४ ॥

वेङ्कट० सहस्ररक्षणः[7] शतधनः निर्माता लोकस्य कविः इन्द्रस्य पवते सोमः ॥ १४ ॥

---

१-१. नास्ति मूको. २-२. रक्षोहारको निधनानि वि[1] अ[1]. ३. °णीयर्क वि[1]. ४. नास्ति वि[1]. ५. शोच्यमानः वि[2] अ[1]. ६. °स्तुति वि[1]; °स्तुतिभिः वि[2] अ[1]. ७. °सरक्षः वि[1].

गिरा जात इह स्तुत इन्दुरिन्द्राय धीयते । विर्योना वसताविव ॥ १५ ॥

गिरा । जातः । इह । स्तुतः । इन्दुः । इन्द्राय । धीयते । विः । योना । वसतौऽइव ॥ १५ ॥

वेङ्कट० स्तुत्या स्तुतः जातः इन्दुः इह इन्द्राय नि-धीयते पक्षी इव स्थाने स्ववासे[1] ॥ १५ ॥

[2]इति सप्तमाष्टके प्रथमाध्याये षड्विंशो वर्गः[2] ॥

पवमानः सुतो नृभिः सोमो वाजमिवासरत् । चमूषु शक्मनासदम् ॥ १६ ॥

पवमानः । सुतः । नृऽभिः । सोमः । वाजम्ऽइव । असरत् । चमूषु । शक्मना । आऽसदम् ।१६।

वेङ्कट० पवमानः अभिषुतः नृभिः सोमः युद्धम् इव स्थानं सरति चमूषु बलेन आसत्तुम् ॥१६॥

तं त्रिपृष्ठे त्रिवन्धुरे रथे युञ्जन्ति यातवे । ऋषीणां सप्त धीतिभिः ॥ १७ ॥

तम् । त्रिऽपृष्ठे । त्रिऽवन्धुरे । रथे । युञ्जन्ति । यातवे । ऋषीणाम् । सप्त । धीतिऽभिः ॥ १७ ॥

वेङ्कट० तम् त्रिषवणपृष्ठे त्रिवेदबन्धुरे यज्ञरथे युञ्जन्ति ऋत्विजः देवान् प्रति गन्तुम् ऋषीणाम् सप्तभिः छन्दोभिः ॥ १७ ॥

तं सोतारो धनस्पृतमाशुं वाजाय यातवे । हरिं हिनोत वाजिनम् ॥ १८ ॥

तम् । सोतारः । धनऽस्पृतम् । आशुम् । वाजाय । यातवे । हरिम् । हिनोत । वाजिनम् ॥ १८ ॥

वेङ्कट० तम् हे सोतारः! धनस्य स्प्रष्टारम् शीघ्रम् सङ्ग्रामं गन्तुम् अश्वम् प्रेरयत बलिनम् ॥१८॥

आविशन् कलशं सुतो विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ १९ ॥

आऽविशन् । कलशम् । सुतः । विश्वाः । अर्षन् । अभि । श्रियः । शूरः । न । गोषु । तिष्ठति ॥ १९ ॥

वेङ्कट० आविशन् कलशम् सुतः विश्वाः च श्रियः अभि-गमयन् शूरः इव शत्रूणाम् गोषु तिष्ठति ॥ १९ ॥

आ त इन्दो मदाय कं पयो दुहन्त्यायवः । देवा देवेभ्यो मधु ॥ २० ॥

आ । ते । इन्दो इति । मदाय । कम् । पयः । दुहन्ति । आयवः । देवाः । देवेभ्यः । मधु ॥ २० ॥

वेङ्कट० आ दुहन्ति ते इन्दोः! मदार्थम् [3]पयः आयवः मनुष्याः[3] स्तोतारो देवेभ्यो मधुभूतम् ॥२०॥

[2]इति सप्तमाष्टके प्रथमाध्याये सप्तविंशो वर्गः[2] ॥

---

१. स्वपासे वि[१]; सात्रासे वि[२]; सत्रासे अ[१]. २-२. नास्ति मूको. ३-३. वयो मनुष्याः वि[१]; अवयोर्मनुष्याः अ[१].

आ नः सोमं पवित्र आ सृजता मधुमत्तमम् । देवेभ्यो देवश्रुत्तमम् ॥ २१ ॥

आ । नः । सोमम् । पवित्रे । आ । सृजत । मधुमत्ऽतमम् । देवेभ्यः । देवश्रुत्ऽतमम् ॥ २१ ॥

**वेङ्कट०** आ सृजत अस्माकम् सोमम् पवित्रे मधुमत्तमम् देवेभ्यः योऽत्यन्तं श्रूयते देवैरिति ॥ २१ ॥

एते सोमा असृक्षत गृणानाः श्रवसे महे । मदिन्तमस्य धारया ॥ २२ ॥

एते । सोमाः । असृक्षत । गृणानाः । श्रवसे । महे । मदिन्ऽतमस्य । धारया ॥ २२ ॥

**वेङ्कट०** एते सोमाः सृज्यन्ते स्तूयमानाः महते अन्नाय मादयितृतमस्य रसस्य धारया इति ॥२२॥

अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि । सनद्वाजः परि स्रव ॥ २३ ॥

अभि । गव्यानि । वीतये । नृम्णा । पुनानः । अर्षसि । सनत्ऽवाजः । परि । स्रव ॥ २३ ॥

**वेङ्कट०** अभि अर्षसि[1] रक्षणाय[2] पूयमानः त्वम् गव्यानि धनानि । स त्वं दीयमानान्नः परि स्रव ॥२३॥

उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः । गृणानो जमदग्निना ॥ २४ ॥

उत । नः । गोऽमतीः । इषः । विश्वाः । अर्ष । परिऽस्तुभः । गृणानः । जमत्ऽअग्निना ॥ २४ ॥

**वेङ्कट०** अपि च अस्माकं गोमन्ति अन्नानि [3]सर्वाणि अर्ष परितः[3] स्तोतव्यानि स्तूयमानः मया ॥२४॥

पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः । अभि विश्वानि काव्या ॥ २५ ॥

पवस्व । वाचः । अग्रियः । सोम । चित्राभिः । ऊतिऽभिः । अभि । विश्वानि । काव्या ॥ २५ ॥

**वेङ्कट०** मुख्यः त्वम् सोम! स्तुतीः प्रति पवस्व[4] पूजनीयैः सह रक्षणैः । तदेवाह—अभि पवस्व सर्वाणि स्तोत्राणीति ॥ २५ ॥

[5]इति सप्तमाष्टके प्रथमाध्याये अष्टाविंशो वर्गः[5] ॥

त्वं समुद्रिया अपोऽग्रियो वाचं ईरयन् । पवस्व विश्वमेजय ॥ २६ ॥

त्वम् । समुद्रियाः । अपः । अग्रियः । वाचः । ईरयन् । पवस्व । विश्वम्ऽएजय ॥ २६ ॥

**वेङ्कट०** त्वम् आन्तरिक्षाणि [6]उदकानि मुख्यः[6] वाचः[7] प्रेरयन् पवस्व । यः [8]सर्वं चलयति[8] स विश्वमेजय इति ॥ २६ ॥

तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे । तुभ्यमर्षन्ति सिन्धवः ॥ २७ ॥

---

१. °र्षय वि[1] अ[1]. २. रक्षाय वि[2]; अ[1]. ३-३. °र्वाण्यपरितः मूको. ४. पचस्व मूको. ५-५. नास्ति मूको ६-६. °कानिमुख्या वि[1]; °काभिमुख्यो वि[2]; °काभिमुखो अ[1]. ७. वाचम् वि[2] अ[1]; वचः वि[1]. ८-८. सं चलः° वि[2] अ[1].

तुभ्यं । इमा । भुवना । कवे । महिम्ने । सोम । तस्थिरे । तुभ्यम् । अर्षन्ति । सिन्धवः ॥ २७ ॥

वेङ्कट० तुभ्यम् इमानि भुवनानि कवे! महिम्ने सोम! तिष्ठन्ति, त्वाम् एव पुरस्कुर्वन्ति। तुभ्यम् एव गच्छन्ति नद्यः त्वदाज्ञामनुपालयन्त्य इति ॥ २७ ॥

प्र ते दिवो न वृष्टयो धारा यन्त्यसश्चतः । अभि शुक्रामुपस्तिरम् ॥ २८ ॥

प्र । ते । दिवः । न । वृष्टयः । धाराः । यन्ति । असश्चतः । अभि । शुक्राम् । उपऽस्तिरम् ॥२८॥

वेङ्कट० प्र यन्ति तव धाराः दिवः इव वृष्टयः असङ्गाः शुक्रवर्णाम् उपस्तिरम् अभि इति। शुक्रैः अन्यैः निर्मितं पवित्रमाह उपस्तीर्यमाणमिति ॥ २८ ॥

इन्द्रायेन्दुं पुनीतनोग्रं दक्षाय साधनम् । ईशानं वीतिराधसम् ॥ २९ ॥

इन्द्राय । इन्दुम् । पुनीतन । उग्रम् । दक्षाय । साधनम् । ईशानम् । वीतिऽराधसम् ॥ २९ ॥

वेङ्कट० इन्द्राय इन्दुम् पुनीतन उद्गूर्णम् बलस्य साधकम् ईश्वरम् दत्तधनम् ॥ २९ ॥

पवमान ऋतः कविः सोमः पवित्रमासदत् । दधत् स्तोत्रे सुवीर्यम् ॥ ३० ॥

पवमानः । ऋतः । कविः । सोमः । पवित्रम् । आ । असदत् । दधत् । स्तोत्रे । सुऽवीर्यम् ॥३०॥

वेङ्कट० पवमानः[1] [2]सत्यः कविः[2] सोमः[3] पवित्रम् आ सीदति प्रयच्छन् स्तोत्रे सुवीर्यम् ॥ ३० ॥

[4]इति सप्तमाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः[4] ॥

[ ६३ ]

[4]निध्रुविः काश्यप ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[4] ।

आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम् । अस्मे श्रवांसि धारय ॥ १ ॥

आ । पवस्व । सहस्रिणम् । रयिम् । सोम । सुऽवीर्यम् । अस्मे इति । श्रवांसि । धारय ॥ १ ॥

वेङ्कट० निध्रुविः[5] काश्यपः[6]। आ पवस्व[7] बहुसङ्ख्यम् रयिम् सोम! सुवीर्यम्। अस्मासु अन्नानि च स्थापय ॥ १ ॥

इषमूर्जं च पिन्वस इन्द्राय मत्सरिन्तमः । चमूष्वा नि षीदसि ॥ २ ॥

इषम् । ऊर्जम् । च । पिन्वसे । इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ २ ॥

वेङ्कट० अन्नम् रसम् च क्षरसि[8] इन्द्राय अत्यन्तं मादयितृतमः। चमसेषु [9]च आ[9] नि सीदसि ॥२॥

---

१. °मानः वि[२] अ[१]. २-२. सत्यकविः वि[२] अ[१]. ३. सोम वि[२] अ[१]. ४-४. नास्ति मूको. ५. °ध्रुव मूको. ६. नास्ति वि[२] अ[१]. ७. °स्वम वि[२] अ[१]. ८. क्षर वि[२] अ[१]. ९-९. मा वि[२] अ[१].

सुत इन्द्राय विष्णवे सोमः कलशे अक्षरत् । मधुमाँ अस्तु वायवे ॥ ३ ॥

सुतः । इन्द्राय । विष्णवे । सोमः । कलशे । अक्षरत् । मधुऽमान् । अस्तु । वायवे ॥ ३ ॥

**वेङ्कट०** इन्द्राय विष्णवे[1] सुतः सोमः कलशे क्षरति । सोऽयं रसवान् अस्तु वायवे चेति ॥ ३ ॥

एते असृग्रमाशवोऽति ह्वरांसि बभ्रवः । सोमा ऋतस्य धारया ॥ ४ ॥

एते । असृग्रम् । आशवः । अति । ह्वरांसि । बभ्रवः । सोमाः । ऋतस्य । धारया ॥ ४ ॥

**वेङ्कट०** एते सृज्यन्ते शीघ्राः, अति[2] गच्छन्ति च बाधकानि रक्षांसि बभ्रुवर्णाः सोमाः उदकस्य धारया इति ॥ ४ ॥

इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्यम् । अपघ्नन्तो अराव्णः ॥ ५ ॥

इन्द्रम् । वर्धन्तः । अप्ऽतुरः । कृण्वन्तः । विश्वम् । आर्यम् । अपऽघ्नन्तः । अराव्णः ॥ ५ ॥

**वेङ्कट०** इन्द्रम् वर्धयन्तः[3] उदकस्य प्रेरकाः कुर्वन्तः सर्वम्[4] [5]कल्याणं कर्म †अपघ्नन्तः अदातॄन्†[5] ॥ ५ ॥

[6]इति सप्तमाष्टके प्रथमाध्याये त्रिंशो वर्गः[6] ॥

सुता अनु स्वमा रजोऽभ्यर्षन्ति बभ्रवः । इन्द्रं गच्छन्त इन्दवः ॥ ६ ॥

सुताः । अनु । स्वम् । आ । रजः । अभि । अर्षन्ति । बभ्रवः । इन्द्रम् । गच्छन्तः । इन्दवः ॥६॥

**वेङ्कट०** सुताः स्वम् स्थानम् प्रति अभि अर्षन्ति बभ्रवः इन्द्रम् आ गच्छन्तः सोमाः ॥ ६ ॥

अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ७ ॥

अया । पवस्व । धारया । यया । सूर्यम् । अरोचयः । हिन्वानः । मानुषीः । अपः ॥ ७ ॥

**वेङ्कट०** अनया[7] पवस्व धारया, यया सूर्यम् अरोचयः प्रेरयन् मनुष्यहितानि उदकानि ॥ ७ ॥

अयुक्त सूर एतशं पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ ८ ॥

अयुक्त । सूरः । एतशम्[8] । पवमानः । मनौ । अधि । अन्तरिक्षेण । यातवे ॥ ८ ॥

**वेङ्कट०** युङ्क्ते सूर्यस्य अश्वम् पवमानः मनुष्येषु अन्तरिक्षेण गन्तुम् ॥ ८ ॥

उत त्या हरितो दश सूरो अयुक्त यातवे । इन्दुरिन्द्र इति ब्रुवन् ॥ ९ ॥

---

१. विष्णवेः मूको. २. अभि वि[२]. ३. °यन्ति वि[२] अ[१]. ४. सद्रान्तन् वि[१]. ५-५. नास्ति वि[१]. †-† अवधन्तोदकातॄन् वि[२] अ[१]. ६-६. नास्ति मूको. ७ अया वि[१]. ८. तु निघ १,१४.

उत । त्याः । हरितः । दश । सूर्ः । अयुक्त । यातवे । इन्दुः । इन्द्रः । इति । ब्रुवन् ॥ ९ ॥

**वेङ्कट०** अपि च [1]ताः दश[1] दिशः [2]सूर्यस्य युनक्ति[2] गमनाय इन्दुः इन्द्रः इति ब्रुवन् ॥ ९ ॥

परीतो वायवे सुतं गिर इन्द्राय मत्सरम् । अव्यो वारेषु सिञ्चत ॥ १० ॥

परि । इतः । वायवे । सुतम् । गिरः । इन्द्राय । मत्सरम् । अव्यः । वारेषु । सिञ्चत ॥ १० ॥

**वेङ्कट०** हे स्तोतारः! इतः वायवे अभिषुतम् इन्द्राय च मदकरम् अवेः वालेषु परि सिञ्चत ॥ १० ॥

[3]इति सप्तमाष्टके प्रथमाध्याये एकत्रिंशो वर्गः[3] ॥

पवमान विदा रयिमस्मभ्यं सोम दुष्टरम् । यो दूणाशो वनुष्यता ॥ ११ ॥

पवमान । विदाः । रयिम् । अस्मभ्यम् । सोम । दुस्तरम् । यः । दुःऽनशः । वनुष्यता ॥ ११ ॥

**वेङ्कट०** पवमान! देहि रयिम् अस्मभ्यम् सोम! शत्रुभिः दुस्तरम्, यः रयिः[4] नाशयितुमशक्यः हिंसित्रा[5] ॥ ११ ॥

अभ्यर्ष सहस्रिणं रयिं गोमन्तमश्विनम् । अभि वाजमुत श्रवः ॥ १२ ॥

अभि । अर्ष । सहस्रिणम् । रयिम् । गोऽमन्तम् । अश्विनम् । अभि । वाजम् । उत । श्रवः ॥

**वेङ्कट०** अभि गमय बहुसङ्ख्यम् रयिम् गवाश्वयुक्तम्[6] । अभि अर्ष बलम् अपि च अन्नम् ॥ १२ ॥

सोमो देवो न सूर्योऽद्रिभिः पवते सुतः । दधानः कलशे रसम् ॥ १३ ॥

सोमः । देवः । न । सूर्यः । अद्रिऽभिः । पवते । सुतः । दधानः । कलशे । रसम् ॥ १३ ॥

**वेङ्कट०** सोमः देवः इव सूर्यः रोचमानः ग्रावभिः अभिषुतः पवते दधानः कलशे रसम् ॥ १३ ॥

एते धामान्यार्या शुक्रा ऋतस्य धारया । वाजं गोमन्तमक्षरन् ॥ १४ ॥

एते । धामानि । आर्या । शुक्राः । ऋतस्य । धारया । वाजम् । गोऽमन्तम् । अक्षरन् ॥ १४ ॥

**वेङ्कट०** एते गृहान्[7] प्रति आर्याणां[8] स्वभूतान्[9] सोमा उदकस्य धारया पशुमन्[10] अन्नम् क्षरन्ति[11] ॥ १४ ॥

---

१-१. तादृश वि[1,2]; तादृशा अ[1]. २-२. °स्यानक्ति मूको. ३-३. नास्ति मूको. ४. रायें मूको. ५. प्रिसिता वि[1]; हिंसिता वि[3] अ[1]. ६. गवां च युक्तम् वि[1,2]. ७. °हात मूको. ८. अर्याणं वि[2] अ[1]; अर्याणां वि[1]. ९. °भूतात् मूको. १०. °शुम् वि[2] अ[1]. ११. इति वि[2] अ[1]; रक्षन्ति वि[1].

सुता इन्द्राय वज्रिणे सोमासो दध्याशिरः । पवित्रमत्यक्षरन् ॥ १५ ॥

सुताः । इन्द्राय । वज्रिणे । सोमासः । दधिऽआशिरः । पवित्रम् । अति । अक्षरन् ॥ १५ ॥

**वेङ्कट०** निगदसिद्धा ॥ १५ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः[1] ॥

प्र सोम मधुमत्तमो राये अर्ष पवित्र आ । मदो यो देववीतमः ॥ १६ ॥

प्र । सोम । मधुमत्ऽतमः । राये । अर्ष । पवित्रे । आ । मदः । यः । देवऽवीतमः ॥ १६ ॥

**वेङ्कट०** प्र आ अर्ष सोम! मधुमत्तमः [2]धनाय पवित्रे[2] रसः यः तव अत्यन्तं देवकामो भवति[3] तमिति ॥ १६ ॥

तमीं मृजन्त्यायवो हरिं नदीषु वाजिनम् । इन्दुमिन्द्राय मत्सरम् ॥ १७ ॥

तम् । ईम् इति । मृजन्ति । आयवः । हरिम् । नदीषु । वाजिनम् । इन्दुम् । इन्द्राय । मत्सरम् ॥ १७ ॥

**वेङ्कट०** तम् एनं मार्जयन्ति[4] मनुष्याः हरिम् वसतीवरीषु बलिनम् इन्दुम् इन्द्राय मदकरम् ॥ १७ ॥

आ पवस्व हिरण्यवदश्वावत् सोम वीरवत् । वाजं गोमन्तमा भर ॥ १८ ॥

आ । पवस्व । हिरण्यऽवत् । अश्वऽवत् । सोम । वीरऽवत् । वाजम् । गोऽमन्तम् । आ । भर ॥

**वेङ्कट०** आ पवस्व हिरण्यादियुक्तं धनम् । आ हर[5] च गोयुक्तम् अन्नमिति ॥ १८ ॥

परि वाजे न वाजयुमव्यो वारेषु सिञ्चत । इन्द्राय मधुमत्तमम् ॥ १९ ॥

परि । वाजे । न । वाजऽयुम् । अव्यः । वारेषु । सिञ्चत । इन्द्राय । मधुमत्ऽतमम् ॥ १९ ॥

**वेङ्कट०** परि सिञ्चत युद्धे[6] इव युद्धकामम् अव्यः वालेषु इन्द्राय मधुमत्तमम् सोमम् ॥ १९ ॥

कविं मृजन्ति मर्ज्यं धीभिर्विप्रा अवस्यवः । वृषा कनिक्रदर्षति ॥ २० ॥

कविम् । मृजन्ति । मर्ज्यम् । धीभिः । विप्राः । अवस्यवः । वृषा । कनिक्रत् । अर्षति ॥ २० ॥

**वेङ्कट०** कविम् मृजन्ति मार्जनीयम् अङ्गुलीभिः[7] मेधाविनः रक्षणकामाः । सः वृषा शब्दं कुर्वन् गच्छति ॥ २० ॥

[1]इति सप्तमाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २-२. °नाय योधनाय पवित्रो अ[1]. ३. नास्ति वि[1,3]. ४. अर्ज मूको. ५. भर वि[1]. ६. युद्धम् वि[2] अ[1]. ७. °ङ्गुलिभिः अ[1].

वृषणं धीभिरप्तुरं सोमम्‌तस्य धारया । मती विप्राः समस्वरन् ॥ २१ ॥

वृषणम् । धीभिः । अप्ऽतुरम् । सोमम् । ऋतस्य । धारया । मती । विप्राः । सम् । अस्वरन् ॥

वेङ्कट० वृषणम् अङ्गुलीभिः[1] अपां प्रेरकम् सोमम् उदकस्य धारया स्तुत्या च मेधाविनः प्रेरयन्ति ॥ २१ ॥

पवस्व देवायुषगिन्द्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥ २२ ॥

पवस्व । देव । आयुषक् । इन्द्रम् । गच्छतु । ते । मदः । वायुम् । आ । रोह । धर्मणा ॥२२॥

वेङ्कट० पवस्व देव ! अनुषक्तम् इन्द्रम् गच्छतु तव मदः । वायुम् च आ रोह धारकेण रसेन ॥ २२ ॥

पवमान नि तोशसे रयिं सोम श्रवाय्यम् । प्रियः समुद्रमा विश ॥ २३ ॥

पवमान । नि । तोशसे । रयिम् । सोम । श्रवाय्यम् । प्रियः । समुद्रम् । आ । विश ॥ २३ ॥

वेङ्कट० पवमान! सोम! रयिम् श्रवणीयम् [2]नि पीडयसि[2] शत्रूणाम् । स त्वम् प्रियः सन् द्रोणकलशम् आ विश ॥ २३ ॥

अपघ्नन् पवसे मृधः क्रतुवित् सोम मत्सरः । नुदस्वादेवयुं जनम् ॥ २४ ॥

अपऽघ्नन् । पवसे । मृधः । क्रतुऽवित् । सोम । मत्सरः । नुदस्व । अदेवऽयुम् । जनम् ॥२४॥

वेङ्कट० अपघ्नन्[3] पवसे शत्रून् प्रज्ञानं प्रयच्छन् सोम! मदकरः । स त्वम् नुदस्व[4] अदेवकामम् जनम् ॥ २४ ॥

पवमाना असृक्षत सोमाः शुक्रास इन्दवः । अभि विश्वानि काव्या ॥ २५ ॥

पवमानाः । असृक्षत । सोमाः । शुक्रासः । इन्दवः । अभि । विश्वानि । काव्या ॥ २५ ॥

वेङ्कट० पवमानाः सृज्यन्ते सोमाः उज्ज्वलाः[5] दीप्ताः सर्वाणि स्तोत्राणि अभि ॥ २५ ॥

[6]इति सप्तमाष्टके प्रथमाध्याये चतुस्त्रिंशो वर्गः[6] ॥

पवमानास आशवः शुभ्रा असृग्रमिन्दवः । घ्नन्तो विश्वा अप द्विषः ॥ २६ ॥

पवमानासः । आशवः । शुभ्राः । असृग्रम् । इन्दवः । घ्नन्तः । विश्वाः । अप । द्विषः ॥ २६ ॥

वेङ्कट० पवमानाः शीघ्राः शोभमानाः सृज्यन्ते दीप्ताः अप घ्नन्तः सर्वान् शत्रून् ॥ २६ ॥

---

१. °ङ्गुलिभिः अ[1]. २-२. निष्पीडयसि वि[2] अ[1]. ३. नास्ति वि[1]. ४. °दस्वा वि[1]. ५. °लान् वि[1]. ६-६. नास्ति मूको.

पव॑माना दि॒वस्पर्य॒न्तरि॑क्षादसृक्षत । पृ॒थि॒व्या अधि॒ सान॑वि ॥ २७ ॥

पव॑मानाः । दि॒वः । परि॑ । अ॒न्तरि॑क्षात् । अ॒सृ॒क्ष॒त । पृ॒थि॒व्याः । अधि॑ । सान॑वि ॥ २७ ॥

**वेङ्कट०** [1]पवमानाः दिवः अन्तरिक्षात्[1] च सृज्यन्ते पृथिव्याः समुच्छ्रिते देवयजने[2] ॥ २७ ॥

पु॒ना॒नः सो॑म॒ धार॑येन्दो॒ विश्वा॒ अप॒ स्रिधः॑ । ज॒हि रक्षां॑सि सुक्रतो ॥ २८ ॥

पु॒ना॒नः । सो॒म॒ । धार॑या । इन्दो॒ इति॑ । विश्वाः॑ । अप॑ । स्रिधः॑ । ज॒हि । रक्षां॑सि । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥२८॥

**वेङ्कट०** पुनानः सोम! धारया इन्दो! सर्वान् द्वेष्टॄन् अप जहि, रक्षांसि च सुकर्मन्! ॥ २८ ॥

अ॒प॒घ्नन्त्सो॑म र॒क्षसो॒ऽभ्य॑र्ष॒ कनि॑क्रदत् । द्यु॒मन्तं॒ शुष्म॑मुत्त॒मम् ॥ २९ ॥

अ॒प॒ऽघ्नन् । सो॒म॒ । र॒क्षसः॑ । अ॒भि । अ॒र्ष॒ । कनि॑क्रदत् । द्यु॒ऽमन्त॑म् । शुष्म॑म् । उ॒त्ऽत॒मम् ॥२९॥

**वेङ्कट०** अपघ्नन् सोम! रक्षांसि अभि पवस्व शब्दं कुर्वन् दीप्तिमद् बलम् उत्तमम् ॥ २९ ॥

अ॒स्मे वसू॑नि धारय॒ सोम॑ दि॒व्यानि॒ पार्थि॑वा । इन्दो॒ विश्वा॑नि॒ वार्या॑ ॥ ३० ॥

अ॒स्मे इति॑ । वसू॑नि । धा॒र॒य॒ । सोम॑ । दि॒व्यानि॑ । पार्थि॑वा । इन्दो॒ इति॑ । विश्वा॑नि । वार्या॑ ॥ ३० ॥

**वेङ्कट०** अस्मासु उभयानि वसूनि धारय इन्दो! विश्वानि च वरणीयानि ॥ ३० ॥

[3]इति सप्तमाष्टके प्रथमाध्याये पञ्चत्रिंशो वर्गः[3] ॥

## [ ६४ ]

[1]कश्यपो मारीच ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[1] ।

वृषा॑ सोम द्यु॒माँ अ॑सि॒ वृषा॑ देव॒ वृष॑व्रतः । वृषा॒ धर्मा॑णि दधिषे ॥ १ ॥

वृषा॑ । सो॒म॒ । द्यु॒ऽमान् । अ॒सि॒ । वृषा॑ । दे॒व॒ । वृष॑ऽव्रतः । वृषा॑ । धर्मा॑णि । द॒धि॒षे॒ ॥ १ ॥

**वेङ्कट०** कश्यपः । वृषा सोम! दीप्तिमान् भवसि, वृषा देव! वर्षणशीलकर्मा[4] । वृषा त्वं कर्माणि धारयसि ॥ १ ॥

वृष्ण॑स्ते॒ वृष्ण्यं॒ शवो॒ वृषा॒ वनं॒ वृषा॒ मदः॑ । स॒त्यं वृ॑ष॒न् वृषेद॑सि ॥ २ ॥

वृष्णः॑ । ते॒ । वृष्ण्य॑म् । शवः॑ । वृषा॑ । वन॑म् । वृषा॑ । मदः॑ । स॒त्यम् । वृ॒ष॒न् । वृषा॑ । इत् । अ॒सि॒ ॥

**वेङ्कट०** वर्षितुः ते वर्षणशीलम् बलम्, वर्षणशीलं च भजनम्, [5]वृषा च मदकरः[5], सः सत्यम् एव हे वर्षितः! त्वम् वृषा एव भवसि ॥ २ ॥

---

१-१. °मानोऽन्तरि° वि[2] अ[1]. २. देवजनो वि[2]; देवजनः अ[1]. ३-३. नास्ति मूको. ४. वर्षणकर्मा वि[1]. ५-५. वृषे चकरः वि[2] अ[1].

अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः । वि नो राये दुरो वृधि ॥ ३ ॥

अश्वः । न । चक्रदः । वृषा । सम् । गाः । इन्दो इति । सम् । अर्वतः । वि । नः । राये । दुरः । वृधि ॥

वेङ्कट० अश्वः इव क्रन्दसे वृषा[1] सम् प्रयच्छ अस्मभ्यम् गाः अश्वांश्च इन्दो ! । विवृतानि कुरु द्वाराणि अस्माकं धनायेति ॥ ३ ॥

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ ४ ॥

असृक्षत । प्र । वाजिनः । गव्या । सोमासः । अश्वऽया । शुक्रासः । वीरऽया । आशवः ॥ ४ ॥

वेङ्कट० प्र सृज्यन्ते[2] वाजिनः सोमाः गवाश्वेच्छया उज्ज्वलाः शीघ्राः वीरेच्छया[3] च ॥ ४ ॥

शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे अव्यये ॥ ५ ॥

शुम्भमानाः । ऋतयुऽभिः । मृज्यमानाः । गभस्त्योः । पवन्ते । वारे । अव्यये ॥ ५ ॥

वेङ्कट० अलङ्क्रियमाणाः यज्ञकामैः मृज्यमानाः च बाहुभ्याम् पवन्ते पवित्रे ॥ ५ ॥

[4]इति सप्तमाष्टके प्रथमाध्याये षट्त्रिंशो वर्गः[4] ॥

ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवन्तामान्तरिक्ष्या ॥ ६ ॥

ते । विश्वा । दाशुषे । वसु । सोमाः । दिव्यानि । पार्थिवा । पवन्ताम् । आ । अन्तरिक्ष्या ॥६॥

वेङ्कट० ते विश्वानि यजमानाय वसूनि सोमाः आ पवन्ताम् दिव्यानि पार्थिवानि अन्तरिक्ष्याणि च ॥ ६ ॥

पवमानस्य विश्ववित् प्र ते सर्गा असृक्षत । सूर्यस्येव न रश्मयः ॥ ७ ॥

पवमानस्य । विश्वऽवित् । प्र । ते । सर्गाः । असृक्षत । सूर्यस्यऽइव । न । रश्मयः ॥ ७ ॥

वेङ्कट० पवमानस्य हे विश्ववित् ! प्र सृज्यन्ते[5] तव सर्गाः धाराः[6] सृज्यमानाः[7] सूर्यस्य इव रश्मयः ॥ ७ ॥

केतुं कृण्वन् दिवस्परि विश्वा रूपाभ्यर्षसि । समुद्रः सोम पिन्वसे ॥ ८ ॥

केतुम् । कृण्वन् । दिवः । परि । विश्वा । रूपा । अभि । अर्षसि । समुद्रः । सोम । पिन्वसे ॥८॥

वेङ्कट० प्रज्ञानम् कृण्वन् दिवः[8] सर्वाणि रूपाणि अभि पवसे प्रयच्छसि नानाविधानि धनानि[9] । यस्माद् रसाः समुद्द्रवन्ति स समुद्रः । स त्वम् सोम ! पवसे ॥ ८ ॥

हिन्वानो वाचमिष्यसि पवमान विधर्मणि । अक्रान् देवो न सूर्यः ॥ ९ ॥

---

१. द्रष्टा वि[२] अ[१]. २. सृ° वि[२] अ[१]. ३. विरेच्छया वि[२] अ[१]; वीच्छैय वि[१]. ४-४. नास्ति मूको. ५. सज्यन्ते मूको. ६. धारा मूको. ७. °माना मूको. ८. इव मूको. ९. नास्ति वि[२] अ[१].

हिन्वानः । वाचम् । इष्यसि । पवमान । विऽधर्मणि । अक्रान्[1] । देवः । न । सूर्यः ॥ ९ ॥

**वेङ्कट०** प्रेर्यमाणः वाचम् प्रेरयसि पवमान! विधारके[2] यज्ञे[3] । सोम![4] न्यक्रमीः (?) देवः इव सूर्यः ॥९॥

इन्दुः पविष्ट चेतनः प्रियः कवीनां मती । सृजदश्वं रथीरिव ॥ १० ॥

इन्दुः । पविष्ट । चेतनः । प्रियः । कवीनाम् । मती । सृजत् । अश्वम् । रथीःऽइव ॥ १० ॥

**वेङ्कट०** इन्दुः अपवत[5] प्रज्ञापनः प्रियः कवीनाम् स्तोत्रेण । सृजति ऊर्मिम् अश्वम्[6] इव रथीः ॥१०॥

[6]इति सप्तमाष्टके प्रथमःध्याये सप्तत्रिंशो वर्गः[6] ॥

ऊर्मिर्यस्ते पवित्र आ देवावीः पर्यक्षरत् । सीदन्नृतस्य योनिमा ॥ ११ ॥

ऊर्मिः । यः । ते । पवित्रे । आ । देवऽअवीः । परिऽअक्षरत् । सीदन् । ऋतस्य । योनिम् । आ ॥

**वेङ्कट०** ऊर्मिः यः ते पवित्रे देवकामः पर्यक्षरत् आ सीदन् यज्ञस्य स्थानम् । [8]पूर्वत्र सम्बन्धः[8] ॥११॥

स नो अर्ष पवित्र आ मदो यो देववीतमः । इन्दविन्द्राय पीतये ॥ १२ ॥

सः । नः । अर्ष । पवित्रे । आ । मदः । यः । देवऽवीतमः । इन्दो इति । इन्द्राय । पीतये ॥१२॥

**वेङ्कट०** सः नः पवस्व पवित्रे मदकरः, यः भवसि देवकामः इन्दो! इन्द्राय पानाय ॥ १२ ॥

इषे पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रुचाभि गा इहि ॥ १३ ॥

इषे । पवस्व । धारया । मृज्यमानः । मनीषिऽभिः । इन्दो इति । रुचा । अभि । गाः । इहि ॥१३॥

**वेङ्कट०** अन्नाय पवस्व धारया [9]मृज्यमानः ऋत्विग्भिः, इन्दो! रोचमानेन अन्धसा[9] अभि गच्छ गाः गोभिः श्रितो[10] भवेति[11] ॥ १३ ॥

पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः । हरे सृजान आशिरम् ॥ १४ ॥

पुनानः । वरिवः । कृधि । ऊर्जम् । जनाय । गिर्वणः । हरे । सृजानः । आऽशिरम् ॥ १४ ॥

**वेङ्कट०** पूयमानः धनम् [12]कुरु अन्नं[12] च जनाय गीर्भिर्वननीय! हरितवर्ण! विसृज्यमानः आशिरम्[13] प्रति ॥ १४ ॥

पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् । द्युतानो वाजिभिर्यतः ॥ १५ ॥

पुनानः । देवऽवीतये । इन्द्रस्य । याहि । निःऽकृतम् । द्युतानः । वाजिऽभिः । यतः ॥ १५ ॥

---

१. सपा. कौ २,३१०; जै ३,२५,६ क्रन्दन् इति पाभे. २. विधायके वि[2] अ[1]. ३. ययज्ञे अ[1]. ४. सोमं मूको. ५. अववत वि[1]; अवतत वि[2] अ[1]. ६. नास्ति वि[1]. ७-७. नास्ति मूको. ८-८. पूर्वसं[0] वि[2]. ९. [0]मानान्धसा वि[1]. १०. अति मूको. ११. भवति वि[2] अ[1]. १२-१२. कुर्वन्नन्नं वि[1]. १३. आङ्गिरं मूको.

वेङ्कट० पूयमानः यज्ञाय इन्द्रस्य गच्छ स्थानम् दीप्यमानः बलिभिः सङ्गृहीतः ॥ १५ ॥

[1]इति सप्तमाष्टके प्रथमाध्याये अष्टात्रिंशो वर्गः[1] ॥

प्र हिन्वानास इन्दवोऽच्छा समुद्रमाशवः । धिया जूता असृक्षत ॥ १६ ॥

प्र । हिन्वानासः । इन्दवः । अच्छ । समुद्रम् । आशवः । धिया । जूताः । असृक्षत ॥ १६ ॥

वेङ्कट० प्र असृक्षत प्रेर्यमाणाः इन्दवः अन्तरिक्षं प्रति आशवः अङ्गुल्या कृष्टाः ॥ १६ ॥

मर्मृजानास आयवो वृथा समुद्रमिन्दवः । अग्मन्नृतस्य योनिमा ॥ १७ ॥

मर्मृजानासः । आयवः । वृथा । समुद्रम् । इन्दवः । अग्मन् । ऋतस्य । योनिम् । आ ॥ १७ ॥

वेङ्कट० मर्मृज्यमानाः[2] गन्तारः अनायासेन समुद्रम् प्रति गच्छन्ति इन्दवः । [3]तदेवाह—अग्मन्[3] इति । गच्छन्ति उदकस्य स्थानम् अन्तरिक्षमिति ॥ १७ ॥

परि णो याह्यस्मयुर्विश्वा वसून्योजसा । पाहि नः शर्म वीरवत् ॥ १८ ॥

परि । नः । याहि । अस्मऽयुः । विश्वा । वसूनि । ओजसा । पाहि । नः । शर्म । वीरऽवत् ॥१८॥

वेङ्कट० परि गच्छ अस्माकम् अस्मत्कामः विश्वानि धनानि बलेन रक्षार्थम् । रक्ष चास्माकं गृहम् वीरयुक्तम् ॥ १८ ॥

मिमाति वह्निरेतशः पदं युजान ऋक्वभिः । प्र यत् समुद्र आहितः ॥ १९ ॥

मिमाति । वह्निः । एतशः । पदम् । युजानः । ऋक्वऽभिः । प्र । यत् । समुद्रे । आऽहितः ॥१९॥

वेङ्कट० शब्दं करोति वहनशीलः कश्चिद् अश्वः पदम् निदधद् यज्ञे स्तोतृभिः स्तोत्रश्रवणार्थमागच्छन्[4], यदा स उदके प्र आहितः भवति ॥ १९ ॥

आ यद्योनिं हिरण्ययमाशुर्ऋतस्य सीदति । जहात्यप्रचेतसः ॥ २० ॥

आ । यत् । योनिम् । हिरण्ययम् । आशुः । ऋतस्य । सीदति । जहाति । अप्रऽचेतसः ॥२०॥

वेङ्कट० यज्ञस्य हिरण्मयम् योनिम् । 'हिरण्यपाणिरभिषुणोति'[5] इत्युक्तम् । आ सीदति यदा आशुः[6] तदानीं विसृजति अप्रचेतसः । नाभिगच्छति अस्तोतॄणां यज्ञमिति ॥ २० ॥

[1]इति सप्तमाष्टके प्रथमाध्याये एकोनचत्वारिंशो वर्गः[1] ॥

अभि वेना अनूषतेयक्षन्ति प्रचेतसः । मज्जन्त्यविचेतसः ॥ २१ ॥

अभि । वेनाः । अनूषत । इयक्षन्ति । प्रऽचेतसः । मज्जन्ति । अविऽचेतसः ॥ २१ ॥

---

१-१. नास्ति मूको. २. ममृज्य° मूको. ३-३. °देवाहमन्निति वि[२] अ[१]; °देवाहाऽमन्निति वि[१]. ४. °च्छत मूको. ५. °णिभिरिषु° वि[१]. ६. आशुः वि[२] अ[१]; आशः वि[१].

वेङ्कट० अभि स्तुवन्ति कान्ताः, यष्टुं चेच्छन्ति सुमतयः, निमज्जन्ति विपरीताः ॥ २१ ॥

इन्द्रा॑येन्दो म॒रुत्व॑ते॒ पव॑स्व॒ मधु॑मत्तमः । ऋ॒तस्य॒ योनि॑मा॒सद॑म् ॥ २२ ॥

इन्द्रा॑य । इन्दो॒ इति॑ । म॒रुत्व॑ते । पव॑स्व । मधु॑मत्ऽतमः । ऋ॒तस्य॑ । योनि॑म् । आ॒ऽसद॑म् ॥२२॥

वेङ्कट० मरुत्वते इन्द्राय इन्दो! पवस्व मधुमत्तमः यज्ञस्य स्थानम् आसत्तुम्[1] ॥ २२ ॥

तं त्वा॒ विप्रा॑ वचो॒विदः॒ परि॑ष्कृण्वन्ति वे॒धसः॑ । सं त्वा॑ मृजन्त्या॒यवः॑ ॥२३॥

तम् । त्वा॒ । विप्राः॑ । व॒चः॒ऽविदः॑ । परि॑ । कृ॒ण्व॒न्ति॒ । वे॒धसः॑ । सम् । त्वा॒ । मृ॒ज॒न्ति॒ । आ॒यवः॑ ॥

वेङ्कट० तम् त्वा मेधाविनः स्तोतारः अलम् कुर्वन्ति कर्तारः । सम् मृजन्ति त्वा मनुष्याः ॥२३॥

रसं॑ ते मि॒त्रो अ॑र्य॒मा पिब॑न्ति॒ वरु॑णः कवे । पव॑मानस्य म॒रुतः॑ ॥ २४ ॥

रस॑म् । ते॒ । मि॒त्रः । अ॒र्य॒मा । पिब॑न्ति । वरु॑णः । क॒वे॒ । पव॑मानस्य । म॒रुतः॑ ॥ २४ ॥

वेङ्कट० निगदसिद्धा ॥ २४ ॥

त्वं सो॑म विप॒श्चितं॑ पुना॒नो वाच॑मिष्यसि । इन्दो॑ स॒हस्र॑भर्णसम् ॥ २५ ॥

त्वम् । सो॒म॒ । वि॒पः॒ऽचित॑म् । पु॒ना॒नः । वाच॑म् । इ॒ष्य॒सि॒ । इन्दो॒ इति॑ । स॒हस्र॑ऽभर्णसम् ॥२५॥

वेङ्कट० त्वम् सोम! प्रज्ञापयित्रीम् पूयमानः वाचम् प्रेरयसि अपि च बहुभरणाम्[2] ॥ २५ ॥

[3]इति सप्तमाष्टके प्रथमाध्याये चत्वारिंशो वर्गः[3] ॥

उ॒तो स॒हस्र॑भर्णसं॒ वाचं॑ सोम मख॒स्युव॑म् । पु॒नान॑ इन्द॒वा भ॑र ॥ २६ ॥

उ॒तो इति॑ । स॒हस्र॑ऽभर्णसम् । वाच॑म् । सो॒म॒ । म॒ख॒स्युव॑म् । पु॒ना॒नः । इन्दो॒ इति॑ । आ । भ॒र॒ ॥२६॥

वेङ्कट० [4]अपि च बहुभरणाम्[4] वाचम् सोम! धनकामाम् पूयमानः इन्दो! आ भर ॥ २६ ॥

पु॒नान॑ इन्द॒वेषां॑ पुरु॑हूत॒ जना॑नाम् । प्रि॒यः स॑मु॒द्रमा वि॑श ॥ २७ ॥

पु॒ना॒नः । इन्दो॒ इति॑ । ए॒षा॒म् । पुरु॑ऽहूत । जना॑नाम् । प्रि॒यः । स॒मु॒द्रम् । आ । वि॒श॒ ॥ २७ ॥

वेङ्कट० पूयमानः[5] इन्दो! एषाम् पुरुहूत! जनानाम् प्रियः सन् द्रोणकलशम् आ विश ॥ २७ ॥

दवि॑द्युतत्या रु॒चा परि॒ष्टोभ॑न्त्या कृ॒पा । सोमाः॑ शु॒क्रा गवा॑शिरः ॥ २८ ॥

दवि॑द्युतत्या । रु॒चा । प॒रि॒ऽस्तोभ॑न्त्या । कृ॒पा । सोमाः॑ । शु॒क्राः । गोऽआ॑शिरः ॥ २८ ॥

---

१. °सत्तुम् मूको. २. बभुभरणम् वि[1]; बहुहरणाम् वि[2]. ३-३. नास्ति मूको. ४-४. नास्ति अ[1]. ५. इन्दो पू° मूको.

**वेङ्कट०** द्योतमानया रुचा परितः शब्दायमानया धारया च युक्ताः सोमाः ज्वलन्तः गवाशिरः ॥ २८ ॥

**हिन्वानो हेतृभिर्यत आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥ २९ ॥**

हिन्वानः । हेतृऽभिः । यतः । आ । वाजम् । वाजी । अक्रमीत् । सीदन्तः । वनुषः । यथा ॥

**वेङ्कट०** प्रेर्यमाणः प्रेरकैः संयतः आ क्रामति वाजम् वाजी, यथा युद्धं प्रविशन्तः हन्तारः ॥ २९ ॥

**ऋधक् सोम स्वस्तये संजग्मानो दिवः कविः । पवस्व सूर्यो दृशे ॥ ३० ॥**

ऋधक् । सोम । स्वस्तये । सम्ऽजग्मानः । दिवः । कविः । पवस्व । सूर्यः । दृशे ॥ ३० ॥

**वेङ्कट०** ऋद्धः सोम! स्वस्तये सङ्गच्छमानः दिवः क्रान्तः पवस्व सुवीर्यः[1] दर्शनायेति ॥ ३० ॥

[2]इति सप्तमाष्टके प्रथमाध्याये एकचत्वारिंशो वर्गः[2] ॥

सप्तमस्याष्टकस्याद्यमध्यायं व्याकरोदिति ।
जाता वसिष्ठस्य कुले सुन्दरी यमजीजनत् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके प्रथमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके प्रथमोऽध्यायः ॥



१. सूर्यो वि[१]. २-२. नास्ति मूको.

अथ द्वितीयोऽध्यायः ।

वेङ्कट०

'हिन्वन्ति सूरम्'[1] अध्यायं व्याचिख्यासति माधवः ।
तत्र प्रत्यक्षदेवेषु वक्तव्यं सम्प्रदर्श्यते ॥ १ ॥

प्रत्यक्षाश्च परोक्षाश्च द्विविधास्तत्र देवताः ।
तत्प्रवादैर्विजानीमो द्वैविध्यमिह वैदिकैः ॥ २ ॥

अग्निर्वायुश्च सूर्यश्च मरुतः पृथिवी तथा ।
आपो रात्रिरुषा गावः [2]प्रत्यक्षैः कर्मभिस्स्तुताः ॥ ३ ॥

स्तूयन्ते †च परोक्षैश्च† 'श्रुत्कर्णं सप्रथस्तमम्'‡ ।
'अग्निर्होता कविक्रतुः'¶, 'वायो तव प्रपृञ्चती'§[2] ॥ ४ ॥

[3]सरस्वती च मन्युश्च सोम ओषधयः पितुः ।
अपरोक्षैः स्तुताः कार्यैः परोक्षाश्च भवन्ति ते ॥ ५ ॥

तत्र प्रत्यक्षकार्याणां सर्वथाऽसम्भवे सति ।
परोक्षेष्ववगन्तव्यम्[3] अग्न्यादिष्विति निश्चयः ॥ ६ ॥

'के ष्ठा नरः श्रेष्ठतमाः'‡ सूक्तेऽस्मिन्बहवो गुणाः[3] ।
परोक्षा मरुतामुक्ताः प्रत्यक्षा बहुशः स्तुताः ॥ ७ ॥

प्रत्यक्षाश्च परोक्षाणां महिमान इति स्थितिः[4] ।
तेषु [5]ते सन्निदधति[5] भवन्त्यपि च तन्मयाः ॥ ८ ॥

देवतातत्त्वविज्ञानं महता तपसा भवेत् ।
शक्यते किं तदस्माभिः याथातथ्येन भाषितुम् ॥ ९ ॥ इति ।

[ ६५ ]

[6]भृगुर्वारुणिर्जमदग्निर्भार्गवो वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः[6] ।

हि॒न्वन्ति॒ सूर॒मुस्र॑यः॒ स्वसा॑रो जा॒मय॒स्पति॑म् । म॒हामिन्दुं॑ म॒ही॒युवः॑ ॥ १ ॥

---

१. सूर्यम् वि[2] अ[1]. २-२. नास्ति वि[1]. †-† चापरो° वि[1]. ‡ ऋ १,४५,७; १०,१४०,६. ¶ ऋ १,१,५. § ऋ १,२,३. ३-३. नास्ति वि[1]. † °ष्वथ ग° वि[2] अ[1]. ‡ ऋ ५,६१,१. ४. स्थिते वि[2] अ[1] वेंकश. ५-५. ते सन्ति दध° बेंकश; तेषु त्रिदश° वि[1]. ६-६. नास्ति मूको.

हि॒न्वन्ति॑ । सूर॑म् । उस्र॑यः । स्वसा॑रः । जा॒मय॑ः । पति॑म् । म॒हाम् । इन्दु॑म् । म॒ही॒युव॑ः ॥ १ ॥

**वेङ्कट०** वारुणिर्भृगुर्भार्गवो वा जमदग्निः । प्रेरयन्ति सुवीर्यम् अङ्गुलयः एकस्मात् पाणेरुत्पन्नाः गन्त्र्यः पतिम् महान्तम् इन्दुम् कामयमानाः ॥ १ ॥

**पव॑मान रु॒चारु॑चा दे॒वो दे॒वेभ्य॒स्परि॑ । विश्वा॒ वसू॒न्या वि॑श ॥ २ ॥**

पव॑मान । रु॒चाऽरु॑चा । दे॒वः । दे॒वेभ्य॑ः परि॑ । विश्वा॑ । वसू॑नि । आ । वि॒श ॥ २ ॥

**वेङ्कट०** पवमान! सर्वेण तेजसा देवः देवानां सकाशात् अस्माकं विश्वानि धनानि प्रापय ॥ २ ॥

**आ प॑वमान सुष्टु॒तिं वृ॒ष्टिं दे॒वेभ्यो॒ दुव॑ः । इ॒षे प॑वस्व सं॒यत॑म् ॥ ३ ॥**

आ । प॒व॒मा॒न॒ । सु॒ऽस्तु॒तिम् । वृ॒ष्टिम् । दे॒वेभ्य॑ः । दुव॑ः । इ॒षे । प॒व॒स्व॒ । स॒म्ऽयत॑म् ॥ ३ ॥

**वेङ्कट०** आ पवस्व पवमान! शोभनस्तुतिकाम् वृष्टिम् देवानां[1] परिचरणाय अन्नार्थं च अस्माकम्, या अस्मान् सङ्गच्छति वृष्टिः ॥ ३ ॥

**वृषा॒ ह्यसि॑ भा॒नुना॑ द्यु॒मन्तं॑ त्वा हवामहे । पव॑मान स्वा॒ध्य॑ः ॥ ४ ॥**

वृषा॑ । हि । असि॑ । भा॒नुना॑ । द्यु॒ऽमन्त॑म् । त्वा॒ । ह॒वा॒म॒हे॒ । पव॑मान । सु॒ऽआ॒ध्य॑ः ॥ ४ ॥

**वेङ्कट०** वर्षिता [2]हि भवसि[2] । तेजसा दीप्तिमन्तम् त्वा हवामहे पवमान! सुकर्माणः ॥ ४ ॥

**आ प॑वस्व सु॒वीर्यं॒ मन्द॑मानः स्वायुध । इ॒हो ष्वि॑न्दवा ग॑हि ॥ ५ ॥**

आ । प॒व॒स्व॒ । सु॒ऽवीर्य॑म् । मन्द॑मानः । सु॒ऽआ॒यु॒ध॒ । इ॒हो इति॑ । सु । इ॒न्दो॒ इति॑ । आ । ग॒हि॒ ॥ ५ ॥

**वेङ्कट०** आ पवस्व अस्माकम् सुवीर्यम् मोदमानः[3] स्वायुध! । इह इन्दो! आ गच्छ ॥ ५ ॥

[4]इति सप्तमाष्टके द्वितीयाध्याये प्रथमो वर्गः[4] ॥

**यद॒द्भिः प॑रिषि॒च्यसे॑ मृ॒ज्यमा॑नो॒ गभ॑स्त्योः । द्रुणा॑ स॒धस्थ॑मश्नुषे ॥ ६ ॥**

यत् । अ॒त्ऽभिः । प॒रि॒ऽसि॒च्यसे॑ । मृ॒ज्यमा॑नः । गभ॑स्त्योः । द्रुणा॑ । स॒ध॒ऽस्थ॑म् । अ॒श्नु॒षे॒ ॥ ६ ॥

**वेङ्कट०** [5]यत् त्वम् अद्भिः[5] परिषिच्यसे मृज्यमानः बाहुभ्याम्, तदानीं पात्रेण गृह्यमाणः स्थानम् प्राप्नोषि ॥ ६ ॥

**प्र सोमा॑य व्यश्व॒वत् पव॑मानाय गायत । म॒हे स॒हस्र॑चक्षसे ॥ ७ ॥**

प्र । सोमा॑य । व्य॒श्व॒ऽवत् । पव॑मानाय । गा॒य॒त॒ । म॒हे । स॒हस्र॑ऽचक्षसे ॥ ७ ॥

---

१. देवता वि[१]. २-२. हरसि वि[१]. ३. °मान वि[१]. ४-४. नास्ति मूको. ५-५. नास्ति वि[२] अ[१].

**वेङ्कट०** प्र गायत [1]सोमाय व्यश्ववत्। व्यश्वो[1] नाम ऋषिः। पवमानाय **महते सहस्रदर्शनाय** ॥ ७ ॥

यस्य वर्णं मधुश्चुतं हरिं हिन्वन्त्यद्रिभिः। इन्दुमिन्द्राय पीतये ॥ ८ ॥

यस्य। वर्णम्। मधुऽश्चुतम्। हरिम्। हिन्वन्ति। अद्रिऽभिः। इन्दुम्। इन्द्राय। पीतये ॥८॥

**वेङ्कट०** यस्य शत्रूणाम् वारकम्[2] मधुरसस्य च्यावकम्[3] अंशुं हरितवर्णम् हिन्वन्ति ग्रावभिः[4] दीप्तम् इन्द्रस्य पानाय ॥ ८ ॥

तस्य ते वाजिनो वयं विश्वा धनानि जिग्युषः। सखित्वमा वृणीमहे ॥ ९ ॥

तस्य। ते। वाजिनः। वयम्। विश्वा। धनानि। जिग्युषः। सखिऽत्वम्। आ। वृणीमहे ॥९॥

**वेङ्कट०** तस्य ते बलिनः वयम् विश्वानि धनानि जितवतः सखित्वम् आ वृणीमहे ॥ ९ ॥

वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा दधान ओजसा ॥ १० ॥

वृषा। पवस्व। धारया। मरुत्वते। च। मत्सरः। विश्वा। दधानः। ओजसा ॥ १० ॥

**वेङ्कट०** वृषा पवस्व धारया मरुत्वते इन्द्राय मादनः विश्वानि धनानि प्रयच्छन् बलेन ॥ १० ॥

[5]इति सप्तमाष्टके द्वितीयाध्याये द्वितीयो वर्गः[5] ॥

तं त्वा धर्तारमोण्योः पवमान स्वर्दृशम्। हिन्वे वाजेषु वाजिनम् ॥ ११ ॥

तम्। त्वा। धर्तारम्। ओण्योः। पवमान। स्वःऽदृशम्। हिन्वे। वाजेषु। वाजिनम् ॥ ११ ॥

**वेङ्कट०** तम् त्वा धर्तारम् द्यावापृथिव्योः[6] पवमान! सर्वस्य द्रष्टारम् प्रेरयामि सङ्ग्रामेषु बलिनम् ॥ ११ ॥

अया चित्तो विपानया हरिः पवस्व धारया। युजं वाजेषु चोदय ॥ १२ ॥

अया। चित्तः। विपा। अनया। हरिः। पवस्व। धारया। युजम्। वाजेषु। चोदय ॥ १२ ॥

**वेङ्कट०** अनया गच्छन्त्याऽङ्गुल्या ज्ञातः हरिः पवस्व धारया, सखायम् च सङ्ग्रामेषु चोदय ॥१२॥

आ न इन्दो महीमिषं पवस्व विश्वदर्शतः। अस्मभ्यं सोम गातुवित् ॥१३ ॥

आ। नः। इन्दो इति। महीम्। इषम्। पवस्व। विश्वऽदर्शतः। अस्मभ्यम्। सोम। गातुऽवित् ॥

**वेङ्कट०** आ पवस्व अस्मभ्यम् इन्दो! महद् अन्नम् विश्वस्य दर्शनीयः, अस्मभ्यम् सोम! मार्गस्य दाता ॥ १३ ॥

---

१-१. सोमाय व्यश्व वध्यश्वो वि[1]; सोमा अर्प्यं च वध्यश्वो वि[3]; सोमा आर्प्यं च वध्यश्वो अ[1].
२. पारकं मूको. ३. च्यावयम वि[2] अ[1]. ४. नास्ति वि[2] अ[1]. ५-५. नास्ति मूको. ६. °थिव्यौ वि[2] अ[1].

आ कलशा अनूषतेन्दो धाराभिरोजसा । एन्द्रस्य पीतये विश ॥ १४ ॥

आ । कलशाः । अनूषत । इन्दो इति । धाराभिः । ओजसा । आ । इन्द्रस्य । पीतये । विश ॥ १४ ॥

**वेङ्कट०** आभिमुख्येन स्तूयन्ते[1] कलशाः । इन्दो! धाराभिः बलेन त्वं कलशान् इन्द्रस्य पानाय [2]आ विश[2] ॥ १४ ॥

यस्य ते मद्यं रसं तीव्रं दुहन्त्यद्रिभिः । स पवस्वाभिमातिहा ॥ १५ ॥

यस्य । ते । मद्यम् । रसम् । तीव्रम् । दुहन्ति । अद्रिऽभिः । सः । पवस्व । अभिमातिऽहा ॥ १५ ॥

**वेङ्कट०** यस्य ते मदकरम् रसम् तीव्रम् दुहन्ति ग्रावभिः, सः पवस्व शत्रूणां हन्ता ॥ १५ ॥

इति सप्तमाष्टके द्वितीयाध्याये तृतीयो वर्गः ॥

राजा मेधाभिरीयते पवमानो मनावधि । अन्तरिक्षेण यातवे ॥ १६ ॥

राजा । मेधाभिः । ईयते । पवमानः । मनौ । अधि । अन्तरिक्षेण । यातवे ॥ १६ ॥

**वेङ्कट०** राजा सोमः मेधाभिः सह गच्छति [3]पवमानः अधि यजमाने अन्तरिक्षेण[3] द्रोणकलशं प्रति यातुम् ॥ १६ ॥

आ न इन्दो शतग्विनं गवां पोषं स्वश्व्यम् । वहा भगत्तिमूतये ॥ १७ ॥

आ । नः । इन्दो इति । शतऽग्विनम् । गवाम् । पोषम् । सुऽअश्व्यम् । वह । भगत्तिम् । ऊतये ॥

**वेङ्कट०** आ वह अस्माकम् इन्दो! बह्वीभिः[4] गोभिर्युक्तम् गवाम् पोषम् शोभनाश्वसङ्घयुक्तम्, धनदानम् च रक्षणायेति ॥ १७ ॥

आ नः सोम सहो जुवो रूपं न वर्चसे भर । सुष्वाणो देववीतये ॥ १८ ॥

आ । नः । सोम । सहः । जुवः । रूपम् । न । वर्चसे । भर । सुस्वानः । देवऽवीतये ॥ १८ ॥

**वेङ्कट०** आ भर सोम! अस्माकं बलम् वेगम् च तथा रूपम् च वर्चसे सूयमानः देवपानाय ॥ १८ ॥

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदञ्छ्येनो न योनिमा ॥ १९ ॥

अर्ष । सोम । द्युमत्ऽतमः । अभि । द्रोणानि । रोरुवत् । सीदन् । श्येनः । न । योनिम् । आ ॥

**वेङ्कट०** अर्ष सोम![5] दीप्ततमः द्रोणकलशान् लक्षीकृत्य शब्दं कुर्वन् आ सीदन् श्येनः इव स्थानम् ॥ १९ ॥

---

१. स्तूयते मूको. २-२. विश वि[१]; अभिषुत अ[१]. ३-३. °मानेतियजमानेन्त° वि[२] अ[१]; °मानो यजमानोऽन्तरि° वि[१]. ४. बलिभिः वि[२] अ[१]. ५. सः वि[२] अ[१].

अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः । सोमो अर्षति विष्णवे ॥ २० ॥

अप्साः । इन्द्राय । वायवे । वरुणाय । मरुत्ऽभ्यः । सोमः । अर्षति । विष्णवे ॥ २० ॥

**वेङ्कट०** अपां सम्भक्ता[1] सोमः एतेभ्यः पवते ॥ २० ॥

[2]इति सप्तमाष्टके द्वितीयाध्याये चतुर्थो वर्गः[2] ॥

इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः । आ पवस्व सहस्रिणम् ॥ २१ ॥

इषम् । तोकाय । नः । दधत् । अस्मभ्यम् । सोम । विश्वतः । आ । पवस्व । सहस्रिणम् ॥२१॥

**वेङ्कट०** अन्नम् पुत्राय अस्माकं प्रयच्छन् अस्मभ्यम् च सोम! विश्वतः आ पवस्व सहस्रिणम् रयिम् ॥२१॥

ये सोमासः परावति ये अर्वावति सुन्विरे । ये वादः शर्यणावति ॥ २२ ॥

ये । सोमासः । पराऽवति । ये । अर्वाऽवति । सुन्विरे । ये । वा । अदः । शर्यणाऽवति ॥२२॥

**वेङ्कट०** ये सोमासः दूरे सुन्विरे ये वा अन्तिके सुताः ये वा अस्मिन् शर्यणावति[3] सरसि ॥ २२ ॥

य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् । ये वा जनेषु पञ्चसु ॥ २३ ॥

ये । आर्जीकेषु । कृत्वऽसु । ये । मध्ये । पस्त्यानाम् । ये । वा । जनेषु । पञ्चऽसु ॥ २३ ॥

**वेङ्कट०** [2]ये आर्जीकेषु कृत्वसु[2] । आर्जीकाः कृत्वानश्च नाम [4]देशाः । ये वा[4] नदीनाम् मध्ये, ये वा जनेषु पञ्चसु ॥ २३ ॥

ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् । सुवाना देवास इन्दवः ॥ २४ ॥

ते । नः । वृष्टिम् । दिवः । परि । पवन्ताम् । आ । सुऽवीर्यम् । सुवानाः । देवासः । इन्दवः ॥

**वेङ्कट०** ते अस्माकम् अन्तरिक्षात् आ पवन्ताम् वृष्टिम् सुवीर्यम् च सूयमानाः देवाः इन्दवः ॥ २४ ॥

पवते हर्यतो हरिर्गृणानो जमदग्निना । हिन्वानो गोरधि त्वचि ॥ २५ ॥

पवते । हर्यतः । हरिः । गृणानः । जमत्ऽअग्निना । हिन्वानः । गोः । अधि । त्वचि ॥ २५ ॥

**वेङ्कट०** पवते श्रद्धेयः हरितवर्णः स्तूयमानः जमदग्निना प्रेर्यमाणः गोः त्वचि ॥ २५ ॥

[2]इति सप्तमाष्टके द्वितीयाध्याये पञ्चमो वर्गः[2] ॥

प्र शुक्रासो वयोजुवो हिन्वानासो न सप्तयः । श्रीणाना अप्सु मृञ्जत ॥२६॥

---

१. सुभक्ता वि[1] अ[1]. २-२. नास्ति मूको. ३. जर्मणापर्ति वि[2]; जर्यणावर्ति अ[1]. ४-४. ये वा देवाः वि[1] अ[1].

प्र । शुक्रासः । वयःऽजुवः । हिन्वानासः । न । सप्तयः । श्रीणानाः । अप्ऽसु । मृञ्जत ॥२६॥

वेङ्कट० प्र मृज्यन्ते शुक्राः अन्नं प्रेरयन्तः प्रेर्यमाणाः इव अश्वाः गोभिः श्रीयमाणाः[1] वसतीवरीषु ॥२६॥

तं त्वा सुतेष्वाभुवो हिन्विरे देवतातये । स पवस्वानया रुचा ॥ २७ ॥

तम् । त्वा । सुतेषु । आऽभुवः । हिन्विरे । देवऽतातये । सः । पवस्व । अनया । रुचा ॥२७॥

वेङ्कट० तम् त्वां यज्ञेषु ऋत्विजः अभिषुण्वन्ति देवेभ्यः। सः पवस्व अनया धारया ॥ २७ ॥

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ २८ ॥

आ । ते । दक्षम् । मयःऽभुवम् । वह्निम् । अद्य । वृणीमहे । पान्तम् । आ । पुरुऽस्पृहम् ॥२८॥

वेङ्कट० आ वृणीमहे अद्य तव दक्षम् बलम् सुखस्य भावयितारम् वोढारम् रक्षन्तम् बहुभिः स्पृणीयम् ॥ २८ ॥

आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् । पान्तमा पुरुस्पृहम् ॥ २९ ॥

आ । मन्द्रम् । आ । वरेण्यम् । आ । विप्रम् । आ । मनीषिणम् । पान्तम् । आ । पुरुऽस्पृहम् ॥

वेङ्कट० आ वृणीमहे मदकरम् वरणीयम्[2] मेधाविनम् प्राज्ञमिति ॥ २९ ॥

आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा । पान्तमा पुरुस्पृहम् ॥ ३० ॥

आ । रयिम् । आ । सुऽचेतुनम् । आ । सुक्रतो इति सुऽक्रतो । तनूषु । आ । पान्तम् । आ । पुरुऽस्पृहम् ॥

वेङ्कट० आ वृणीमहे धनम् सुज्ञानम् च हे सुप्रज्ञ! । आ वृणीमहे पुत्रार्थमिति ॥ ३० ॥

[3]इति सप्तमाष्टके द्वितीयाध्याये षष्ठो वर्गः[3] ॥

[ ६६ ]

[1]शतं वैखानसा ऋषयः । पवमानः सोमो देवता, एकोनविंश्याद्येकविंश्यन्तानाम् अग्निः पवमानः । गायत्री छन्दः, अष्टादशी अनुष्टुप्[1] ।

पवस्व विश्वचर्षणेऽभि विश्वानि काव्या । सखा सखिभ्य ईड्यः ॥ १ ॥

पवस्व । विश्वऽचर्षणे । अभि । विश्वानि । काव्या । सखा । सखिऽभ्यः । ईड्यः ॥ १ ॥

वेङ्कट० शतं वैखानसाः । पवस्व हे सर्वस्य द्रष्टः! सर्वाणि स्तोत्राणि लक्ष्यीकृत्य सखा सखिभ्यः स्तोतव्यः ॥ १ ॥

ताभ्यां विश्वस्य राजसि ये पवमान धामनी । प्रतीची सोम तस्थतुः ॥ २ ॥

---

१. °माणान्ना वि[२] अ[१]. २. नास्ति वि[१]. ३-३. नास्ति मूको.

ताभ्याम् । विश्वस्य । राजसि । ये इति । पवमान । धामनी इति । प्रतीची इति । सोम । तस्थतुः ॥

**वेङ्कट०** ताभ्याम् विश्वस्य राजसि ये पवमान! धामनी इति पूर्वपक्षापरपक्षाभिप्रायमित्याहुः[1]। त्वाम् अभिमुखे ते सोम! तस्थतुः ॥ २ ॥

**परि धामानि यानि ते त्वं सोमासि विश्वतः । पवमान ऋतुभिः कवे ॥ ३ ॥**

परि । धामानि । यानि । ते । त्वम् । सोम । असि । विश्वतः । पवमान । ऋतुऽभिः । कवे ॥

**वेङ्कट०** परि भवन्ति धामानि यानि त्वदीयानीत्यहोरात्राभिप्रायम्, तानि त्वम् सोम! भवसि सर्वतः पवमान! कालैः कवे! ॥ ३ ॥

**पवस्व जनयन्निषोऽभि विश्वानि वार्या । सखा सखिभ्य ऊतये ॥ ४ ॥**

पवस्व । जनयन् । इषः । अभि । विश्वानि । वार्या । सखा । सखिऽभ्यः । ऊतये ॥ ४ ॥

**वेङ्कट०** पवस्व जनयन् अन्नानि विश्वानि काम्यानि अभि सखा सखिभ्यः रक्षणाय ॥ ४ ॥

**तव शुक्रासो अर्चयो दिवस्पृष्ठे वि तन्वते । पवित्रं सोम धामभिः ॥ ५ ॥**

तव । शुक्रासः । अर्चयः । दिवः । पृष्ठे । वि । तन्वते । पवित्रम् । सोम । धामऽभिः ॥ ५ ॥

**वेङ्कट०** तव ज्वलन्तः रश्मयः आदित्यस्य पृष्ठे वि तन्वते उदकम् सोम! तेजोभिः ॥ ५ ॥

[2]इति सप्तमाष्टके द्वितीयाध्याये सप्तमो वर्गः[2] ॥

**तवेमे सप्त सिन्धवः प्रशिषं सोम सिस्रते । तुभ्यं धावन्ति धेनवः ॥ ६ ॥**

तव । इमे । सप्त । सिन्धवः । प्रऽशिषम् । सोम । सिस्रते । तुभ्यम् । धावन्ति । धेनवः ॥ ६ ॥

**वेङ्कट०** तव इमाः सप्त नद्यः प्रशासनम् सोम! अभिसरन्ति[3]। तुभ्यम् एव धावन्ति धेनवः च आशिरं प्रयच्छन्त्यः ॥ ६ ॥

**प्र सोम याहि धारया सुत इन्द्राय मत्सरः । दधानो अक्षिति श्रवः ॥ ७ ॥**

प्र । सोम । याहि । धारया । सुतः । इन्द्राय । मत्सरः । दधानः । अक्षिति । श्रवः ॥ ७ ॥

**वेङ्कट०** प्र याहि सोम! धारया अभिषुतः इन्द्राय मदकरः[4] [5]प्रयच्छन् अक्षीणम्[5] च अन्नम् ॥ ७ ॥

**समु त्वा धीभिरस्वरन् हिन्वतीः सप्त जामयः । विप्रमाजा विवस्वतः ॥ ८ ॥**

सम् । ऊँ इति । त्वा । धीभिः । अस्वरन् । हिन्वतीः । सप्त । जामयः । विप्रम् । आजा । विवस्वतः ॥८॥

---

१. °परपक्षमित्याहुः वि[2] अ[1]. २-२. नास्ति मूको. ३. °सरति वि[2] अ[1]; °भिरसति वि[1].
४. °करं वि[2] अ[1]. ५-५. प्रस्कन्नक्षीणं वि[2]; प्रसन्नं क्षीणं अ[1].

वेङ्कट० त्वाम्[1] अङ्गुलीभिः सम्प्रेरयन्ति प्रेरयन्त्यः[2] सप्त नद्यः मेधाविनम् आजौ सङ्ख्ये[3] यज्ञे यजमानस्य ॥ ८ ॥

मृजन्ति त्वा सम॒ग्रुवोऽव्ये॑ जी॒रावधि॒ ष्वणि॑ । रे॒भो यद॒ज्यसे॒ वने॑ ॥ ९ ॥

मृजन्ति॑ । त्वा॒ । सम् । अ॒ग्रुवः॑ । अव्ये॑ । जी॒रौ । अधि॑ । स्वनि॑ । रे॒भः । यत् । अ॒ज्यसे॑ । वने॑ ॥ ९ ॥

वेङ्कट० सम् मृजन्ति त्वाम् अङ्गुलयः अविमये क्षिप्रे शब्दायमाने पवित्रे, शब्दायमानः यदा त्वम् अज्यसे उदके ॥ ९ ॥

पव॑मानस्य ते कवे॒ वाजि॒न्त्सर्गा॑ असृक्षत । अर्व॑न्तो न श्र॑व॒स्यवः॑ ॥ १० ॥

पव॑मानस्य । ते॒ । क॒वे॒ । वाजि॑न् । सर्गाः॑ । अ॒सृ॒क्ष॒त॒ । अर्व॑न्तः । न । श्र॒व॒स्यवः॑ ॥ १० ॥

वेङ्कट० पवमानस्य ते कवे! बलवन्! धाराः सृज्यन्ते[4] अश्वाः इव अन्नमिच्छमानाः ॥ १० ॥

[5]इति सप्तमाष्टके द्वितीयाध्याये अष्टमो वर्गः[5] ॥

अच्छा॒ कोशं॑ मधु॒श्चुत॒मसृ॑ग्रं॒ वारे॑ अ॒व्यये॑ । अवा॑वशन्त धी॒तयः॑ ॥ ११ ॥

अच्छ॑ । कोश॑म् । म॒धु॒ऽश्चुत॑म् । असृ॑ग्रम् । वारे॑ । अ॒व्यये॑ । अवा॑वशन्त । धी॒तयः॑ ॥ ११ ॥

वेङ्कट० अभिसृज्यन्ते मधुच्युतम्[6] कोशम् कलशं प्रति सोमाः पवित्रे । कामयन्ते च तान् अङ्गुलयः ॥ ११ ॥

अच्छा॑ समु॒द्रमिन्द॒वोऽस्तं॒ गावो॒ न धे॒नवः॑ । अग्म॑न्नृ॒तस्य॒ योनि॒मा ॥ १२ ॥

अच्छ॑ । स॒मु॒द्रम् । इन्द॑वः । अस्त॑म् । गावः॑ । न । धे॒नवः॑ । अग्म॑न् । ऋ॒तस्य॑ । योनि॑म् । आ ॥ १२ ॥

वेङ्कट० अभिगच्छन्ति द्रोणकलशम् प्रति इन्दवः । गृहम् इव गावः धेनवः, यज्ञस्य स्थानम् आ गच्छन्तीति ॥ १२ ॥

प्र ण॑ इन्दो म॒हे रण॒ आपो॑ अर्षन्ति॒ सिन्ध॑वः । यद्गोभि॑र्वासयि॒ष्यसे॑ ॥ १३ ॥

प्र । नः॒ । इ॒न्दो॒ इति॑ । म॒हे । रणे॑ । आपः॑ । अ॒र्ष॒न्ति॒ । सिन्ध॑वः । यत् । गोभिः॑ । वा॒स॒यि॒ष्यसे॑ ॥ १३ ॥

वेङ्कट० प्र गच्छन्ति अस्माकम् इन्दो! महते रणाय स्यन्दमानाः आपः इति वसतीवर्यभिप्रायम् । यदा त्वं गोविकारैः वासयिष्यसे ॥ १३ ॥

अस्य॑ ते स॒ख्ये व॒यमिय॑क्षन्त॒स्त्वोत॑यः । इन्दो॑ सखि॒त्वमु॑श्मसि ॥ १४ ॥

---

१. त्वा वि[2] अ[1]. २. संप्रेरयन्तः अ[1]. ३. संखे वि[1]; संधे वि[2]; सन्धे अ[1]. ४. स्पृद्दयन्ते वि[2] अ[1]. ५-५. नास्ति मूको. ६. °धुश्च्युतं वि[1, 2].

अस्य । ते । सख्ये । वयम् । इयक्षन्तः । त्वाऽऊतयः । इन्दो इति । सखिऽत्वम् । उश्मसि ॥ १४ ॥

**वेङ्कट०** अस्य ते [1]सख्ये वयम्[1] यष्टुमिच्छन्तः त्वायत्तरक्षणाः[2] इन्दो! सखित्वम् एव कामयामहे ॥ १४ ॥

## आ पवस्व गविष्टये महे सोम नृचक्षसे । एन्द्रस्य जठरे विश ॥ १५ ॥

आ । पवस्व । गोऽइष्टये । महे । सोम । नृऽचक्षसे । आ । इन्द्रस्य । जठरे । विश ॥ १५ ॥

**वेङ्कट०** आ पवस्व गवाम् अन्वेष्ट्रे महते सोम! नृणां द्रष्ट्रे[3] इन्द्राय । अथ इन्द्रस्य जठरम् आ विश[4] ॥ १५ ॥

[5]इति सप्तमाष्टके द्वितीयाध्याये नवमो वर्गः[5] ॥

## महाँ असि सोम ज्येष्ठ उग्राणामिन्द ओजिष्ठः । युध्वा सञ्छश्वज्जिगेथ ॥१६॥

महान् । असि । सोम । ज्येष्ठः । उग्राणाम् । इन्दो इति । ओजिष्ठः । युध्वा । सन् । शश्वत् । जिगेथ ॥१६॥

**वेङ्कट०** महान् असि[6] सोम! प्रशस्यः उद्गूर्णानाम् इन्दो! त्वम् ओजिष्ठः[7] । स त्वम् युध्वा[8] सन्[9] सर्वदा जयसि ॥ १६ ॥

## य उग्रेभ्यश्चिदोजीयाञ्छूरेभ्यश्चिच्छूरतरः । भूरिदाभ्यश्चिन्मंहीयान् ॥ १७ ॥

यः । उग्रेभ्यः । चित् । ओजीयान् । शूरेभ्यः । चित् । शूरऽतरः । भूरिऽदाभ्यः । चित् । मंहीयान ॥

**वेङ्कट०** यः उग्रेभ्यः अपि उग्रतरः शूरेभ्यः च शूरतरः [10]बहुदातृभ्योऽपि दातृतमः[10] ॥ १७ ॥

## त्वं सोम सूर एषस्तोकस्य साता तनूनाम् । वृणीमहे सख्याय वृणीमहे युज्याय ।१८।

त्वम् । सोम । सूरः । आ । इषः । तोकस्य । साता । तनूनाम् । वृणीमहे । सख्याय । वृणीमहे । युज्याय ।१८।

**वेङ्कट०** त्वम् [11]सोम! सुवीर्यः[11] आ पवसे अन्नानि पुत्रस्य दाता पौत्राणाम् च । तं त्वाम्[12] वृणीमहे सख्याय साहाय्याय च ॥ १८ ॥

## अग्न आयूंषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १९ ॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् ॥

**वेङ्कट०** अग्ने! त्वम् आयूंषि पवस्व, आ सुव रसम् अन्नम् च नः, दूरे बाधस्व [13]दुच्छुनाम् । दुच्छुनेति[13] रक्षोनामेति ॥ १९ ॥

---

१-१. वयं सख्ये अ[1]. २. तदायत्त° वि[2] अ[1]. ३. द्रष्टुम् वि[2] अ[1]; द्रष्टा वि[1]. ४. विशत् वि[1] अ[1]. ५-५. नास्ति मूको. ६. भवसि वि[1]. ७. ओजिष्ठ वि[2] अ[1]. ८. युद्धा मूको. ९. सत वि[2] अ[1]. १०-१०. °दातृ ··· दातृतम वि[1] अ[1]; °भ्यो विदातृतम वि[1]. ११-११. सूर्यवीर्य वि[2] अ[1]. १२. त्वा वि[2] अ[1]. १३. इच्छ° मूको.

**अ॒ग्निरृषि॑ः पव॑मान॒ः पाञ्च॑जन्यः पु॒रोहि॑तः । तमी॑महे महाग॒यम् ॥ २० ॥**

अ॒ग्निः । ऋषि॑ः । पव॑मानः । पाञ्च॑ऽजन्यः । पु॒रःऽहि॑तः । तम् । ई॒म॒हे॒ । म॒हा॒ऽग॒यम् ॥ २० ॥

**वेङ्कट०** अग्निः द्रष्टा पवमानः पञ्चजनहितः[1] पुरोहितः । तम् त्वां[2] याचामहे महागृहम् ॥ २० ॥

[3]इति सप्तमाष्टके द्वितीयाध्याये दशमो वर्गः[3] ॥

**अग्ने॒ पव॑स्व॒ स्वपा॑ अ॒स्मे वर्चः॑ सु॒वीर्य॑म् । दध॑द्र॒यिं मयि॒ पोष॑म् ॥ २१ ॥**

अग्ने॑ । पव॑स्व । सु॒ऽअपाः॑ । अ॒स्मे इति॑ । वर्चः॑ । सु॒ऽवीर्य॑म् । दध॑त् । र॒यिम् । मयि॑ । पोष॑म् ॥ २१ ॥

**वेङ्कट०** अग्ने ! पवस्व शोभनकर्मा अस्माकम् वर्चः सुवीर्यम् स्थापयन् मयि[4] [5]धनम् पोषम्[5] । अग्निः[6] पवमानो यत् सोम[7] इति ॥ २१ ॥

**पव॑मानो॒ अति॒ स्रिधो॒ऽभ्य॑र्षति सुष्टु॒तिम् । सूरो॒ न वि॒श्वद॑र्शतः ॥ २२ ॥**

पव॑मानः । अति॑ । स्रिधः॑ । अ॒भि । अ॒र्ष॒ति॒ । सु॒ऽस्तु॒तिम् । सूरः॑ । न । वि॒श्वऽद॑र्शतः ॥ २२ ॥

**वेङ्कट०** पवमानः अति गच्छति शत्रून्, अभि गच्छति सुष्टुतिम्, सूर्यः इव विश्वस्य द्रष्टा ॥ २२ ॥

**स म॑र्मृजा॒न आ॒युभि॒ः प्रय॑स्वा॒न् प्रय॑से हि॒तः । इन्दु॒रत्यो॑ विचक्ष॒णः ॥ २३ ॥**

सः । म॒र्मृ॒जा॒नः । आ॒युऽभिः॑ । प्रय॑स्वान् । प्रय॑से । हि॒तः । इन्दुः॑ । अत्यः॑ । वि॒ऽच॒क्ष॒णः ॥ २३ ॥

**वेङ्कट०** [8]सः मर्मृज्यमानः[8] मनुष्यैः [9]अन्नवान् अन्नाय[9] हितः इन्दुः[10] सततं गन्ता[11] विद्रष्टा ॥ २३ ॥

**पव॑मान ऋ॒तं बृ॒हच्छु॒क्रं ज्योति॑रजीजनत् । कृ॒ष्णा तमां॑सि॒ जङ्घ॑नत् ॥ २४ ॥**

पव॑मानः । ऋ॒तम् । बृ॒हत् । शु॒क्रम् । ज्योतिः॑ । अ॒जी॒ज॒न॒त् । कृ॒ष्णा । तमां॑सि । जङ्घ॑नत् ॥ २४ ॥

**वेङ्कट०** पवमानः सत्यम्[12] महत् ज्वलत्[13] ज्योतिः अजीजनत् कृष्णानि[14] तमांसि विनाशयन्[15] ॥ २४ ॥

**पव॑मानस्य॒ जङ्घ्न॑तो॒ हरे॑श्च॒न्द्रा अ॑सृक्षत । जी॒रा अ॑जि॒रशो॑चिषः ॥ २५ ॥**

पव॑मानस्य । जङ्घ्न॑तः । हरेः॑ । च॒न्द्राः । अ॒सृ॒क्ष॒त॒ । जी॒राः । अ॒जि॒रऽशो॑चिषः ॥ २५ ॥

**वेङ्कट०** पवमानस्य तमांसि विनाशयतः हरितवर्णस्य ह्लादिका धाराः सृज्यन्ते क्षिप्राः गमनशीलतेजसः ॥ २५ ॥

[3]इति सप्तमाष्टके द्वितीयाध्याये एकादशो वर्गः[3] ॥

---

१. °हित मूको. २. तयो वि[1]. ३-३. नास्ति मूको. ४. मही वि[1] अ[1]. ५-५. धननपोषम् वि[1]. ६. अयं वि[2] अ[1]. ७. सोमम् अ[1]. ८-८. संमृज्य[7] वि[2] अ[1]. ९-९. अन्नपानान्नाय वि[2] अ[1]; अन्नपानन्नाय वि[1]. १०. इन्देन्दुः वि[2] अ[1]. ११. वा वि[2] अ[1]. १२. मह मूको. १३. नास्ति वि[1]. १४. कृष्टानि वि[2] अ[1]. १५. °यति अ[1].

पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः । हरिश्चन्द्रो मरुद्गणः ॥ २६ ॥

पवमानः । रथिऽतमः । शुभ्रेभिः । शुभ्रशःऽतमः । हरिऽचन्द्रः । मरुत्ऽगणः ॥ २६ ॥

**वेङ्कट०** पवमानः रथीतमः [1]शोभायुक्तेभ्योऽपि अत्यन्तं शोभावान् हरितदीप्तिः मरुतो यस्य गणः सहायभूतः[1] ॥ २६ ॥

पवमानो व्यश्नवद्रश्मिभिर्वाजसातमः । दधत् स्तोत्रे सुवीर्यम् ॥ २७ ॥

पवमानः । वि । अश्नवत् । रश्मिऽभिः । वाजऽसातमः । दधत् । स्तोत्रे । सुऽवीर्यम् ॥ २७ ॥

**वेङ्कट०** [2]पवमानः वि आप्नोति रश्मिभिः सह अत्यन्तमन्नस्य दाता प्रयच्छन्† स्तोत्रे सुवीर्यम्[2] ॥२७॥

प्र सुवान इन्दुरक्षाः पवित्रमत्यव्ययम् । पुनान इन्दुरिन्द्रमा ॥ २८ ॥

प्र । सुवानः । इन्दुः । अक्षारिति । पवित्रम् । अति । अव्ययम् । पुनानः । इन्दुः । इन्द्रम् । आ ॥२८॥

**वेङ्कट०** [3]सूयमानः इन्दुः प्र क्षरति† पवित्रम् अति अव्ययम्‡ । पुनानः इन्दुः इन्द्रम् आ विशति[3] ॥२८॥

एष सोमो अधि त्वचि गवां क्रीळत्यद्रिभिः । इन्द्रं मदाय जोहुवत् ॥ २९ ॥

एषः । सोमः । अधि । त्वचि । गवाम् । क्रीळति । अद्रिऽभिः । इन्द्रम् । मदाय । जोहुवत् ॥२९॥

**वेङ्कट०** एषः सोमः गवाम् त्वचि क्रीडति ग्रावभिः, इन्द्रम् मदार्थम् भृशमाह्वयन्[4] ॥ २९ ॥

यस्य ते द्युम्नवत् पयः पवमानाभृतं दिवः । तेन नो मृळ जीवसे ॥ ३० ॥

यस्य । ते । द्युम्नऽवत् । पयः । पवमान । आऽभृतम् । दिवः । तेन । नः । मृळ । जीवसे ३०॥

**वेङ्कट०** यस्य ते अन्नयुक्तम् पयः पवमान![5] [6]दिवः श्येनेनाऽऽहृतम्[6] तेन अस्मान् सुखय जीवनायेति ॥३०॥

[7]इति सप्तमाष्टके द्वितीयाध्याये द्वादशो वर्गः[7] ॥

[ ६७ ]

[7]१-३ भरद्वाजो बार्हस्पत्य ऋषिः, ४-६ कश्यपो मारीचः, ७-९ गोतमो राहूगणः, १०-१२ अत्रिर्भौमः, १३-१५ विश्वामित्रो गाथिनः, १६-१८ जमदग्निर्भार्गवः, १९-२१ वसिष्ठो मैत्रावरुणिः, २२-३२ पवित्र आङ्गिरसो वा वसिष्ठो वा उभौ वा । पवमानः सोमो देवता, १०-१२ पवमानः पूषा वा, २३ २७ पवमानोऽग्निः, २५ पवमानः सविता वा, २६ पवमानाग्निसवितारः, २७ विश्वे देवा वा, ३१-३२ पावमान्यध्येता । गायत्री छन्दः, १६-१८ नित्यद्विपदा गायत्री, ३० पुरउष्णिक्, २७,३१,३२, अनुष्टुप्[7] ।

त्वं सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे । पवस्व मंहयद्रयिः ॥ १ ॥

---

१-१. नास्ति वि[1]. २-२. नास्ति वि[1]. † °च्छत वि[2] अ[1]. ३-३. नास्ति वि[1]. † रक्षति वि[2] अ[1]. ‡ अयम् वि[2] अ[1]. ४. °यत् वि[2] अ[1]. ५. पवमानेन वि[2] अ[1]; पवमानः पवमानेन वि[1]. ६-६. दिवश्श्येनाहृ° वि[2]; दिवश्श्येनेनाहृ° वि[1]. ७-७. नास्ति मूको.

त्वम् । सोम । असि । धारयुः । मन्द्रः । ओजिष्ठः । अध्वरे । पवस्व । मंहयत्ऽरयिः ॥ १ ॥

**वेङ्कट०** भरद्वाजः[1] कश्यपो[2] गोतमः[3] अत्रिः विश्वामित्रो जमदग्निः वसिष्ठः इति क्रमेण तृचानामृषयः। शिष्टस्याङ्गिरसः पवित्रो नाम वसिष्ठो वा उभौ वेत्युक्तम्।

त्वम् सोम! असि धाराकामः[4] मन्द्रः[5] बलवत्तमः यज्ञे पवस्व प्रदीयमानधनः[6] ॥ १ ॥

त्वं सुतो नृमादनो दधन्वान् मत्सरिन्तमः । इन्द्राय सूरिरन्धसा ॥ २ ॥

त्वम् । सुतः । नृऽमादनः । दधन्वान् । मत्सरिन्ऽतमः । इन्द्राय । सूरिः । अन्धसा ॥ २ ॥

**वेङ्कट०** त्वम् सुतः नृमादनः धारयन् अत्यन्तं मदकरः इन्द्रस्य प्राज्ञः अन्नेन ॥ २ ॥

त्वं सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् । द्युमन्तं शुष्ममुत्तमम् ॥ ३ ॥

त्वम् । सुस्वानः । अद्रिऽभिः । अभि । अर्ष । कनिक्रदत् । द्युऽमन्तम् । शुष्मम् । उत्ऽतमम् ॥

**वेङ्कट०** त्वम् सूयमानः ग्रावभिः अभि अर्ष शब्दं कुर्वन् दीप्तिमद् बलम् उत्तमम् ॥ ३ ॥

इन्दुर्हिन्वानो अर्षति तिरो वाराण्यव्यया । हरिर्वाजमचिक्रदत् ॥ ४ ॥

इन्दुः । हिन्वानः । अर्षति । तिरः । वाराणि । अव्यया । हरिः । वाजम् । अचिक्रदत् ॥ ४ ॥

**वेङ्कट०** इन्दुः अभिषूयमाणः तिरः गच्छति [7]अवेः वालानि । सोऽयम् हरिः अन्नम् शब्दयति[7] ॥ ४ ॥

इन्दो व्यव्यमर्षसि वि श्रवांसि वि सौभगा । वि वाजान्त्सोम गोमतः ॥ ५ ॥

इन्दो इति । वि । अव्यम् । अर्षसि । वि । श्रवांसि । वि । सौभगा । वि । वाजान् । सोम । गोऽमतः ॥

**वेङ्कट०** [8]इन्दो! वि अर्षसि अविमयं पवित्रम्, †वि अर्षसि† अन्नानि§ च धनानि, तथा सोम! बलानि पशुमन्ति‡[8] ॥ ५ ॥

[9]इति सप्तमाष्टके द्वितीयाध्याये त्रयोदशो वर्गः[9] ॥

आ न इन्दो शतग्विनं रयिं गोमन्तमश्विनम् । भरा सोम सहस्रिणम् ॥ ६ ॥

आ । नः । इन्दो इति । शतऽग्विनम् । रयिम् । गोऽमन्तम् । अश्विनम् । भर । सोम । सहस्रिणम् ॥ ६ ॥

**वेङ्कट०** "आ हर अस्मभ्यम् इन्दो! बहुपशुम् रयिम् प्रशस्तपशुम् अश्वयुक्तम् सहस्रसङ्ख्यम्" ॥ ६ ॥

पवमानास इन्दवस्तिरः पवित्रमाशवः । इन्द्रं यामेभिराशत ॥ ७ ॥

---

१. भार° वि[1,2]. २. का° मूको. ३. गौ° मूको. ४. धार° वि[2] अ[1]. ५. मन्दो मूको. ६. °मानः वि[2]; °मानधन वि[2] अ[1]. ७-७. नास्ति वि[1]. ८-८. नास्ति वि[1]. †-† वर्षसि अ[1]. § °नीव मूको. ‡ °मति वि[1] अ[1]. ९-९ नास्ति मूको.

पवमानासः । इन्दवः । तिरः । पवित्रम् । आशवः । इन्द्रम् । यामेभिः । आशत ॥ ७ ॥

वेङ्कट० तिरः-कृत्य[1] पवित्रम् सरन्तः[2] इन्दवः शीघ्राः इन्द्रम् गमनैः व्याप्नुवन्ति ॥ ७ ॥

ककुहः सोम्यो रस इन्दुरिन्द्राय पूर्व्यः । आयुः पवत आयवे ॥ ८ ॥

ककुहः । सोम्यः । रसः । इन्दुः । इन्द्राय । पूर्व्यः । आयुः । पवते । आयवे ॥ ८ ॥

वेङ्कट० समुच्छ्रितः सोमभवः रसः । सोऽयम् इन्दुः इन्द्राय प्रत्नः गन्ता पवते गन्त्रे ॥ ८ ॥

हिन्वन्ति सूरमुस्रयः पवमानं मधुश्चुतम् । अभि गिरा समस्वरन् ॥ ९ ॥

हिन्वन्ति । सूरम् । उस्रयः । पवमानम् । मधुऽश्चुतम् । अभि । गिरा । सम् । अस्वरन् ॥९॥

वेङ्कट० प्रेरयन्ति सुवीर्यम् अङ्गुलयः पवमानम् मधुच्युतम् । तमेनम् अभि स्तुवन्ति स्तुत्या स्तोतारः ॥ ९ ॥

अविता नो अजाश्वः पूषा यामनियामनि । आ भक्षत् कन्यासु नः ॥ १० ॥

अविता । नः । अजऽअश्वः । पूषा । यामनिऽयामनि । आ । भक्षत् । कन्यासु । नः ॥ १० ॥

वेङ्कट० रक्षिता अस्माकं भवतु अजाश्वः पूषा सर्वस्मिन् गमने । प्रापयतु चास्मान् कन्यासु अभिमतासु सोम! त्वां पीत्वेति । यद्वा पौष्णस्तृचः ॥ १० ॥

[3]इति सप्तमाष्टके द्वितीयाध्याये चतुर्दशो वर्गः[3] ॥

अयं सोमः कपर्दिने घृतं न पवते मधु । आ भक्षत् कन्यासु नः ॥ ११ ॥

अयम् । सोमः । कपर्दिने । घृतम् । न । पवते । मधु । आ । भक्षत् । कन्यासु । नः ॥ ११ ॥

वेङ्कट० अयम् सोमः कल्याणकपर्दाय पूष्णे पवते घृतम् इव मादकम् ॥ ११ ॥

अयं त आघृणे सुतो घृतं न पवते शुचि । आ भक्षत् कन्यासु नः ॥ १२ ॥

अयम् । ते । आघृणे । सुतः । घृतम् । न । पवते । शुचि । आ । भक्षत् । कन्यासु । नः ॥१२॥

वेङ्कट० निगदसिद्धा ॥ १२ ॥

वाचो जन्तुः कवीनां पवस्व सोम धारया । देवेषु रत्नधा असि ॥ १३ ॥

वाचः । जन्तुः । कवीनाम् । पवस्व । सोम । धारया । देवेषु । रत्नऽधाः । असि ॥ १३ ॥

वेङ्कट० वाचः जनयिता कवीनाम् पवस्व सोम! धारया । देवेषु त्वं रत्नस्य दाता भवसि । १३ ॥

---

१. नास्ति वि[1]. २. रक्षत वि[1]. ३-३. नास्ति मूको.

आ कुलशेषु धावति श्येनो वर्म वि गाहते । अभि द्रोणा कनिक्रदत् ॥ १४ ॥

आ । कुलशेषु । धावति । श्येनः । वर्म । वि । गाहते । अभि । द्रोणा । कनिक्रदत् ॥ १४ ॥

**वेङ्कट०** आ धावति द्रोणकलशेषु कश्चित् । श्येनः कुलायम् प्रविशति । अभि गच्छति च द्रोणानि[1] शब्दं कुर्वन् ॥ १४ ॥

परि प्र सोम ते रसोऽसर्जि कुलशे सुतः । श्येनो न तक्तो अर्षति ॥ १५ ॥

परि । प्र । सोम । ते । रसः । असर्जि । कुलशे । सुतः । श्येनः । न । तक्तः । अर्षति ॥ १५॥

**वेङ्कट०** [2]परि प्र सृज्यते[2] कलशे सोम! तव सुतः रसः, श्येनः इव गमनशीलः गच्छति । तकतिः[3] गतिकर्मेति[4] (तु. निघ २,१४) ॥ १५ ॥

[5]इति सप्तमाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[5] ॥

पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १६ ॥

पवस्व । सोम । मन्दयन् । इन्द्राय । मधुमत्ऽतमः ॥ १६ ॥

**वेङ्कट०** पवस्व सोम! हर्षयन् इन्द्राय मधुमत्तमः । तिस्रो नित्यद्विपदाः ॥ १६ ॥

असृग्रन् देववीतये वाजयन्तो रथा इव ॥ १७ ॥

असृग्रन् । देवऽवीतये । वाजऽयन्तः । रथाःऽइव ॥ १७ ॥

**वेङ्कट०** सृज्यन्ते देवपानाय अन्नमिच्छमानाः इव रथाः ॥ १७ ॥

ते सुतासो मदिन्तमाः शुक्रा वायुमसृक्षत ॥ १८ ॥

ते । सुतासः । मदिन्ऽतमाः । शुक्राः । वायुम् । असृक्षत ॥ १८ ॥

**वेङ्कट०** ते[6] सुताः सोमाः मादयितारः ज्वलन्तः[7] शब्दं सृजन्ति, वायुम् एव वा ॥ १८ ॥

ग्राव्णा तुन्नो अभिष्टुतः पवित्रं सोम गच्छसि । दधत् स्तोत्रे सुवीर्यम् ॥ १९ ॥

ग्राव्णा । तुन्नः । अभिऽस्तुतः । पवित्रम् । सोम । गच्छसि । दधत् । स्तोत्रे । सुऽवीर्यम् ॥१९॥

**वेङ्कट०** ग्राव्णा[8] अभिपीडितः अभिष्टुतः[9] पवित्रम् सोम! गच्छसि प्रयच्छन्[10] स्तोत्रे सुवीर्यम् ॥ १९ ॥

एष तुन्नो अभिष्टुतः पवित्रमति गाहते । रक्षोहा वारमव्ययम् ॥ २० ॥

---

१. द्रोणकलशानि वि[1]. २. परिसृज्य° वि[1]; परिप्रसज्य° वि[2] अ[1]. ३. त्रुटितम् वि[2] अ[1]. ४. गतिकर्मणेति वि[1]. ५-५. नास्ति मूको. ६. सुते वि[2] अ[1]. ७. °लन्ति अ[1]. ८. नास्ति वि[2]. ९. °भिषुतः मूको. १०. °च्छत वि[2] अ[1].

एषः । तुन्नः । अभिऽस्तुतः । पवित्रम् । अति । गाहते । रक्षःऽहा । वारम् । अव्ययम् ॥ २० ॥

**वेङ्कट०** निगदसिद्धा ॥ २० ॥

[1]इति सप्तमाष्टके द्वितीयाध्याये षोडशो वर्गः[1] ॥

**यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वि तज्जहि ॥ २१ ॥**

यत् । अन्ति । यत् । च । दूरके । भयम् । विन्दति । माम् । इह । पवमान । वि । तत् । जहि ॥

**वेङ्कट०** [2]यत् अन्तिके[2] यत् च दूरे भयम् विन्दति माम् इह, पवमान! तद् वि जहि ॥ २१ ॥

**पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २२ ॥**

पवमानः । सः । अद्य । नः । पवित्रेण । विऽचर्षणिः । यः । पोता । सः । पुनातु । नः ॥२२॥

**वेङ्कट०** पवमानः सः अद्य अस्मान् पवित्रेण[3] तेजसा पुनातु विद्रष्टा । तदेवाह—यः पोता सः पुनातु नः इति ॥ २२ ॥

**यत् ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि नः ॥ २३ ॥**

यत् । ते । पवित्रम् । अर्चिषि । अग्ने । विऽततम् । अन्तः । आ । ब्रह्म । तेन । पुनीहि । नः ॥

**वेङ्कट०** पञ्च आग्नेय्यः[4] । यत् ते शोधकम् तेजसि अन्तः विततम् अग्ने!, तेन अस्मच्छरीरम् पुनीहि ॥२३॥

**यत् ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ २४ ॥**

यत् । ते । पवित्रम् । अर्चिऽवत् । अग्ने । तेन । पुनीहि । नः । ब्रह्मऽसवैः । पुनीहि । नः ॥ २४ ॥

**वेङ्कट०** [5]यत् ते[5] शोधकम् तेजस्वत् तेजः अग्ने![6] तेन पुनीहि अस्मान् ब्राह्मणानामभिषवैश्च ॥ २४ ॥

**उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ २५ ॥**

उभाभ्याम् । देव । सवितरिति । पवित्रेण । सवेन । च । माम् । पुनीहि । विश्वतः ॥ २५ ॥

**वेङ्कट०** उभाभ्याम् देव! सवितः! पवित्रेण आत्मीयेन तेजसा सोमस्य सवेन च माम् पुनीहि सर्वतः । २५ ॥

[1]इति सप्तमाष्टके द्वितीयाध्याये सप्तदशो वर्गः[1] ॥

**त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः । अग्ने दक्षैः पुनीहि नः ॥ २६ ॥**

त्रिऽभिः । त्वम् । देव । सवितः । वर्षिष्ठैः । सोम । धामऽभिः । अग्ने । दक्षैः । पुनीहि । नः ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[२] अ[१]. ३. °त्रे मूको. ४. °ग्नेयों वि[२] अ[१]; °ग्नेय्यः वि[१] ५-५. नास्ति वि[१]. ६. अस्मत् वि[२] अ[१].

**वेङ्कट०** त्रिभिः त्वम् देव! प्रेरक! अग्ने! वृद्धतमैः सोम! शरीरैः अग्निवायुसूर्यैः वृद्धैः अस्मान् पुनीहि ॥ २६ ॥

पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वे देवाः पुनीत मा जातवेदः पुनीहि मां ॥ २७ ॥

पुनन्तु । माम् । देवऽजनाः । पुनन्तु । वसवः । धिया ।
विश्वे । देवाः । पुनीत । मा । जातऽवेदः । पुनीहि । मा ॥ २७ ॥

**वेङ्कट०** देवजनाः यजमानाः[1] यद्वा देवविशः इति । अवशिष्टं स्पष्टम् ॥ २७ ॥

प्र प्यायस्व प्र स्यन्दस्व सोम विश्वेभिरंशुभिः । देवेभ्य उत्तमं हविः ॥ २८ ॥

प्र । प्यायस्व । प्र । स्यन्दस्व । सोम । विश्वेभिः । अंशुऽभिः । देवेभ्यः । उत्ऽतमम् । हविः ॥

**वेङ्कट०** प्र वर्धय प्र स्यन्दस्व च सोम! विश्वैः अंशुभिः देवेभ्यः उत्तमम् हविः ॥ २८ ॥

उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः ॥ २९ ॥

उप । प्रियम् । पनिप्नतम् । युवानम् । आहुतिऽवृधम् । अगन्म । बिभ्रतः । नमः ॥ २९ ॥

**वेङ्कट०** [2]उप गच्छेम प्रियम्[2] शब्दयन्तम्[3] युवानम् आहुत्या वृद्धम् धारयन्तः नमस्कारम् ॥ २९ ॥

अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम । आखुं चिदेव देव सोम ॥३०॥

अलाय्यस्य । परशुः । ननाश । तम् । आ । पवस्व । देव । सोम ।
आखुम् । चित् । एव । देव । सोम ॥ ३० ॥

**वेङ्कट०** अभिगच्छतः शत्रोः परशुः तम् एव नाशयतु, नास्मान् अपापान् । आ पवस्व देव! सोम! । आहन्तारमेव देव! सोम! बाधस्व, नास्मानिति ॥ ३० ॥

यः पावमानीरध्येत्यृषिभिः संभृतं रसम् ।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ ३१ ॥

यः । पावमानीः । अधिऽएति । ऋषिऽभिः । सम्ऽभृतम् । रसम् ।
सर्वम् । सः । पूतम् । अश्नाति । स्वदितम् । मातरिश्वना ॥ ३१ ॥

**वेङ्कट०** यः पावमानीः अध्येति, ऋषिभिः मधुच्छन्दःप्रभृतिभिः संभृतम् वेदरसम्[4] सर्वम् सः पूतम् एव[5] अश्नाति नामेध्यम् । स्वाशनात् प्रागेव मातरिश्वना पवित्रेण स्वदितम् ॥ ३१ ॥

---

१. नास्ति वि[2] अ[1]. २ २. गच्छेम वि[1]; प्रियम वि[2] अ[1]. ३. शब्दा° मूको. ४. स वेद° वि[1]. ५. नास्ति अ[1].

पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम् ।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ ३२ ॥

पावमानीः । यः । अधिऽएति । ऋषिऽभिः । सम्ऽभृतम् । रसम् ।
तस्मै । सरस्वती । दुहे । क्षीरम् । सर्पिः । मधु । उदकम् ॥ ३२ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३२ ॥

[1]इति सप्तमाष्टके द्वितीयाध्याये अष्टादशो वर्गः[1] ॥

## [ ६८ ]

[1]वत्सप्रिर्भालन्दन ऋषिः । पवमानः सोमो देवता । जगती छन्दः, दशमी त्रिष्टुप् ।

प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः ।
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥ १ ॥

प्र । देवम् । अच्छ । मधुऽमन्तः । इन्दवः । असिस्यदन्त । गावः । आ । न । धेनवः ।
बर्हिऽसदः । वचनाऽवन्तः । ऊधःऽभिः । परिऽस्रुतम् । उस्रियाः । निःऽनिजम् । धिरे ॥ १ ॥

**वेङ्कट०** वत्सप्रिः भालन्दनः । प्र स्यन्दन्ते[2] देवम् इन्द्रं प्रति मधुमन्तः सोमाः, गावः इव पयस्विन्यः, बर्हिषि सीदन्तः[3] शब्दवन्तः[4] । ऊधभिः परिस्रुतम् सोमरसं पयोभूतं शुद्धं गावो धारयन्तीति ॥ १ ॥

स रोरुवदभि पूर्वा अचिक्रददुपारुहः श्रथयन्त्स्वादते हरिः ।
तिरः पवित्रं परियन्नुरु ज्रयो नि शर्याणि दधते देव आ वरम् ॥ २ ॥

सः । रोरुवत् । अभि । पूर्वाः । अचिक्रदत् । उपऽआरुहः । श्रथयन् । स्वादते । हरिः ।
तिरः । पवित्रम् । परिऽयन् । उरु । ज्रयः । नि । शर्याणि । दधते । देवः । आ । वरम् ॥ २ ॥

**वेङ्कट०** सः शब्दं कुर्वन् अभि क्रन्दते मुख्याः स्तुतीः, किञ्च उपारोहणशीला[5] ओषधीः अग्रे श्लथयन् स्वादूकरोति फलिनीः कुर्वन् हरिः, तिरःकृत्य पवित्रम् परिगच्छन् महान्तं वेगं करोति, [6]नि करोति[6] शरेण हन्तव्यानि[7], यजमानानाम् आ प्रयच्छति धनम् देवः ॥ २ ॥

वि यो ममे यम्या संयती मदः साकंवृधा पयसा पिन्वदक्षिता ।
मही अपारे रजसी विवेविददभिव्रजन्नक्षितं पाज आ ददे ॥ ३ ॥

---

१-१. नास्ति मूको. २ °न्दते मूको. ३. °दन्त्यः वि[२] अ[१]. ४. सोममयं वि[२]. ५ अवारोह° अ[१]. ६-६. नास्ति वि[१]. ७. गन्त° वि[२] अ[१].

वि । यः । ममे । यम्यां । संयती इति सम्ऽयती । मदः । साकम्ऽवृधा । पयसा । पिन्वत् । अक्षिता ।
मही इति । अपारे इति । रजसी इति । विऽवेविदत् । अभिऽव्रजन् । अक्षितम् । पाजः । आ । ददे ॥

वेङ्कट० वि ममे यः रसो युगलभूते[1] परस्परं सङ्गच्छमाने द्यावापृथिव्यौ, साकं वृद्धे पयसा सिञ्चति अक्षीणे। महत्यौ अपर्यन्ते द्यावापृथिव्यौ विविच्य तेजसा ज्ञापयन् अभिगच्छन् अक्षीणं बलम् आ ददे ॥ ३ ॥

स मातरा विचरन् वाजयन्नपः प्र मेधिरः स्वधया पिन्वते पदम् ।
अंशुर्यवेन पिपिशे यतो नृभिः सं जामिभिर्नसते रक्षते शिरः ॥ ४ ॥

सः । मातरा । विऽचरन् । वाजयन् । अपः । प्र । मेधिरः । स्वधया । पिन्वते । पदम् ।
अंशुः । यवेन । पिपिशे । यतः । नृऽभिः । सम् । जामिऽभिः । नसते । रक्षते । शिरः ॥ ४ ॥

वेङ्कट० सः द्यावापृथिव्यावन्तरेण चरन् प्रेरयन् उदकानि, स्वधया प्र पिन्वते मेधिरः प्राज्ञः आप्याययति स्थानम्। सोमः यवेन आच्छाद्यते संयतः ऋत्विग्भिः। यवसक्तुभिः श्रीयत इति। सोऽयम् जामिभिः सङ्गच्छते अङ्गुलिभिः। शीर्णं[2] च भूतं रक्षति ॥ ४ ॥

सं दक्षेण मनसा जायते कविर्ऋतस्य गर्भो निहितो यमा परः ।
यूना ह सन्ता प्रथमं वि जज्ञतुर्गुहा हितं जनिम नेममुद्यतम् ॥ ५ ॥

सम् । दक्षेण । मनसा । जायते । कविः । ऋतस्य । गर्भः । निऽहितः । यमा । परः ।
यूना । ह । सन्ता । प्रथमम् । वि । जज्ञतुः । गुहा । हितम् । जनिम । नेमम् । उत्ऽयतम् ॥

वेङ्कट० प्रवृद्धेन मनसा सह सम् जायते कविः। सोमः उदकस्य गर्भः देवैर्यमनेन[3] परस्तात् अन्तरिक्षे निहितः। युवानावेव भवन्तौ जननकाले वि जायेते सोमः सूर्यश्च। तयोश्च जन्म गुहायां निहितं भवति। तयोः अर्धं च उद्यतम् भवति प्रकाशम्। अह्नि सूर्यः प्रादुर्भवति रात्रौ चन्द्रमा इति ॥ ५ ॥

[4]इति सप्तमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[4] ॥

मन्द्रस्य रूपं विविदुर्मनीषिणः श्येनो यदन्धो अभरत् परावतः ।
तं मर्जयन्त सुवृधं नदीष्वाँ उशन्तमंशुं परियन्तमृग्मियम् ॥ ६ ॥

मन्द्रस्य । रूपम् । विविदुः । मनीषिणः । श्येनः । यत् । अन्धः । अभरत् । पराऽवतः ।
तम् । मर्जयन्त । सुऽवृधम् । नदीषु । आ । उशन्तम् । अंशुम् । परिऽयन्तम् । ऋग्मियम् ॥ ६ ॥

---

१. युगभूते वि[1]. २ शीर्ण वि[2] अ[1]. ३. °र्यजमानेन वि[1]. ४-४. नास्ति मूको.

**वेङ्कट०** सोमस्य रूपम् जानन्ति मनीषिणः। श्येनः यत् अन्नम् आजहार दूरात्, तम् शोधयन्ति सुष्ठु वर्धयमानम् वसतीवरीषु कामयमानम् देवान् अंशुम् परितो गच्छन्तम् स्तुत्यम् ॥ ६ ॥

त्वां मृजन्ति दश योषणः सुतं सोम ऋषिभिर्मतिभिर्धीतिभिर्हितम् ।
अव्यो वारेभिरुत देवहूतिभिर्नृभिर्यतो वाजमा दर्षि सातये ॥ ७ ॥

त्वाम् । मृजन्ति । दश । योषणः । सुतम् । सोम । ऋषिऽभिः । मतिऽभिः । धीतिऽभिः । हितम् ।
अव्यः । वारेभिः । उत । देवहूतिऽभिः । नृऽभिः । यतः । वाजम् । आ । दर्षि । सातये ॥७॥

**वेङ्कट०** त्वाम् मृजन्ति दश अङ्गुलयः अभिषुतम् सोम! ऋषिभिः स्तुतिभिः कर्मभिश्च निहितम्। अवेर्वालैः अपि च स्तुतिभिः मनुष्यैः संयतः त्वम् अन्नम् विवृतं करोषि दानाय ॥ ७ ॥

परिप्रयन्तं वय्यं सुषंसदं सोमं मनीषा अभ्यनूषत स्तुभः ।
यो धारया मधुमाँ ऊर्मिणा दिव इयर्ति वाचं रयिषाळमर्त्यः ॥ ८ ॥

परिऽप्रयन्तम् । वय्यम् । सुऽसंसदम् । सोमम् । मनीषाः । अभि । अनूषत । स्तुभः ।
यः । धारया । मधुऽमान् । ऊर्मिणा । दिवः । इयर्ति । वाचम् । रयिषाट् । अमर्त्यः ॥ ८ ॥

**वेङ्कट०** परिगच्छन्तम् काम्यम् शोभनसंसदनम् सोमम् स्तुतयः अभि स्तुवन्ति मनस ईशित्र्यः। यः धारया मधुमान् दिवः पवते[1] उदकेन [2]सह, स[2] प्रेरयति वाचम् शत्रुधनानाम् अभिभविता अमर्त्यः ॥ ८ ॥

अयं दिव इयर्ति विश्वमा रजः सोमः पुनानः कलशेषु सीदति ।
अद्भिर्गोभिर्मृज्यते अद्रिभिः सुतः पुनान इन्दुर्वरिवो विदत् प्रियम् ॥ ९ ॥

अयम् । दिवः । इयर्ति । विश्वम् । आ । रजः । सोमः । पुनानः । कलशेषु । सीदति ।
अत्ऽभिः । गोभिः । मृज्यते । अद्रिऽभिः । सुतः । पुनानः । इन्दुः । वरिवः । विदत् । प्रियम् ॥

**वेङ्कट०** अयम्[3] दिवः[3] प्रेरयति विश्वम् उदकम्[4]। सोमः पूयमानः कलशेषु सीदति। सोऽयम् अद्भिः गोविकारैश्च[6] मृज्यते ग्रावभिः सुतः। स पूयमानः इन्दुः धनं प्रयच्छति प्रियम् ॥ ९ ॥

एवा नः सोम परिषिच्यमानो वयो दधच्चित्रतमं पवस्व ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् ॥ १० ॥

एव । नः । सोम । परिऽसिच्यमानः । वयः । दधत् । चित्रऽतमम् । पवस्व ।
अद्वेषे इति । द्यावापृथिवी इति । हुवेम । देवाः । धत्त । रयिम् । अस्मे इति । सुऽवीरम् ॥ १० ॥

---

१. पत वि[1]. २-२. सह वि[1]; सहसा अ[1]. ३. नास्ति वि[2] अ[1]. ४. नास्ति मूको. ५. तु. या ४,१९. ६. पशुभिश्च मूको.

वेङ्कट० एवम् नः सोम! परिषिच्यमानः अन्नम् प्रयच्छन् चित्रतमम् पवस्व। द्वेषरहिते द्यावापृथिव्यौ आह्वयामः। देवाः! च धत्त अस्मासु रयिम् सुवीर्यमिति ॥ १० ॥

[1]इति सप्तमाष्टके द्वितीयाध्याये विंशो वर्गः[1] ॥

[ ६९ ]

[1]हिरण्यस्तूप आङ्गिरस ऋषिः। पवमानः सोमो देवता। जगती छन्दः, नवमीदशम्यौ त्रिष्टुभौ[1]।

इषुर्न धन्वन् प्रति धीयते मतिर्वत्सो न मातुरुप सर्ज्यूधनि।
उरुधारेव दुहे अग्र आयत्यस्य व्रतेष्वपि सोम इष्यते ॥ १ ॥

इषुः। न। धन्वन्। प्रति। धीयते। मतिः। वत्सः। न। मातुः। उप। सर्जि। ऊधनि।
उरुधाराऽइव। दुहे। अग्रे। आऽयती। अस्य। व्रतेषु। अपि। सोमः। इष्यते ॥ १ ॥

वेङ्कट० हिरण्यस्तूपः। शरः इव धनुषि प्रति धीयते स्तुतिः इन्द्रे। वत्सः इव मातुः उप सृज्यते ऊधनि। सोऽयम् इन्द्रः कामान् दुग्धे, यथा बहुधारा[2] गौः [3]वत्सस्य अग्रे[3] गच्छन्ती पयो दुग्धे। किंच अस्य यज्ञेषु अयम् सोमः च प्रेर्यते ॥ १ ॥

उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि।
पवमानः संतनिः प्रघ्नतामिव मधुमान् द्रप्सः परि वारमर्षति ॥ २ ॥

उपो इति। मतिः। पृच्यते। सिच्यते। मधु। मन्द्रऽअजनी। चोदते। अन्तः। आसनि।
पवमानः। समऽतनिः। प्रघ्नताम्ऽइव। मधुऽमान्। द्रप्सः। परि। वारम्। अर्षति ॥ २ ॥

वेङ्कट० उप पृच्यते[4] स्तुतिः, सिच्यते[5] च सोमः, मदस्य प्रेरयित्री सोमधारा प्रेर्यते इन्द्रस्य आस्ये। पवमानः इषुः इव योधानाम्[6] मधुमान् द्रवणशीलः विसृज्य गच्छति पवित्रम् ॥ २ ॥

अव्ये वधूयुः पवते परि त्वचि श्रथ्नीते नप्तीरदितेर्ऋतं यते।
हरिरक्रान् यजतः संयतो मदो नृम्णा शिशानो महिषो न शोभते ॥ ३ ॥

अव्ये। वधूऽयुः। पवते। परि। त्वचि। श्रथ्नीते। नप्तीः। अदितेः। ऋतम्। यते।
हरिः। अक्रान्। यजतः। समऽयतः। मदः। नृम्णा। शिशानः। महिषः। न। शोभते ॥ ३ ॥

वेङ्कट० अवेः त्वचि सोमः परि पवते। श्रथयति[7] ओषधीर्भूमेर्जाता यजमानाय। सोमो ह्योषधी-

---

१-१. नास्ति मूको. २. निहितधारा वि[1]. ३-३. °त्साग्रे वि[1]. ४. वृच्यते मूको. ५. सृज्यते मूको. ६. योधनानां अ[1]. ७. श्नथ° मूको.

नामग्रे निषिञ्चति रेतः। हरिः क्रामति यष्टव्यः सङ्गृहीतः। सोमः बलानि तीक्ष्णीकुर्वन् महिषः इव शोभते ॥ ३ ॥

उक्षा मिमाति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ ४ ॥

उक्षा । मिमाति । प्रति । यन्ति । धेनवः । देवस्य । देवीः । उप । यन्ति । निःऽकृतम् ।
अति । अक्रमीत् । अर्जुनम् । वारम् । अव्ययम् । अत्कम् । न । निक्तम् । परि । सोमः । अव्यत ॥

वेङ्कट० वृषभः शब्दायते, तं च प्रति यन्ति धेनवः, देवस्य देव्यः उप गच्छन्ति निष्कृतम् स्थानमिति। सोमस्तुतीश्चाह — योऽयम् अति क्रामति श्वेतम् पवित्रम्। किंच अयं कवचम् इव उज्ज्वलम् श्रयणानि परि व्ययति[1] ॥ ४ ॥

अमृक्तेन रुशता वाससा हरिरमर्त्यो निर्णिजानः परि व्यत ।
दिवस्पृष्ठं बर्हणा निर्णिजे कृतोपस्तरणं चम्वोर्नभस्मयम् ॥ ५ ॥

अमृक्तेन । रुशता । वाससा । हरिः । अमर्त्यः । निःऽनिजानः । परि । व्यत ।
दिवः । पृष्ठम् । बर्हणा । निःऽनिजे । कृत । उपऽस्तरणम् । चम्वोः । नभस्मयम् ॥ ५ ॥[2]

वेङ्कट० अनिर्णिक्तेनापि[3] स्वतश्शुक्लेन वाससा केनचित् हरिः अमर्त्यः उदकेन शोध्यमानः आच्छादनं करोति '[4]शुक्रं पय आच्छादयति[4]'। सोऽयम् दिवः पृष्ठम् आदित्यं बर्हणया[5] निर्णेजनाय करोति। '[6]स हि[6] दीप्त्या सर्वं निर्णेनेक्ति[7]'। तदेवाह — उपस्तरणम् द्यावापृथिव्योः आदित्यमयम् करोतीति। तस्य तेजो[8] दिवं च पृथिवीं चोपस्तृणाति ॥ ५ ॥

[9]इति सप्तमाष्टके द्वितीयाध्याये एकविंशो वर्गः[9] ॥

सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुपः साकमीरते ।
तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥ ६ ॥

सूर्यस्यऽइव । रश्मयः । द्रवयित्नवः । मत्सरासः । प्रऽसुपः । साकम् । ईरते ।
तन्तुम् । ततम् । परि । सर्गासः । आशवः । न । इन्द्रात् । ऋते । पवते । धाम । किम् । चन ॥

वेङ्कट० सूर्यस्य इव रश्मयः द्रवणशीलाः मदकराः प्रस्वापकाः शत्रूणाम् अपि वा पातृणाम् साकम् गच्छन्ति। वस्त्रम् ततम् परि गच्छन्ति सृज्यमानाः सोमाः। सोऽयं सोमः इन्द्रात् ऋते न अन्यत् किञ्चिद्देवशरीरं लक्षीकृत्य पवते। 'अयाडग्नेः प्रिया धामानि' ( मा २१,४७ ) इति मन्त्रः ॥६॥

---

१ श्रयति अ[1]. २ तु. ऋ ९,७१,१; ८६,१४. ३. अतिक्तेन वि[2] अ[1]; अनिक्ति वि[1]. ४-४. नास्ति वि[1]. ५ तु वैप १,२२८२ m; बर्हणाय वि[1]. ६-६. सइ वि[2] अ[1]. ७. °नेत्ति मूको. ८. देवः वि[2] अ[1]. ९-९. नास्ति मूको.

सिन्धोरिव प्रवणे निम्न आशवो वृषच्युता मदासो गातुमाशत ।
शं नो निवेशे द्विपदे चतुष्पदेऽस्मे वाजाः सोम तिष्ठन्तु कृष्टयः ॥ ७ ॥

सिन्धोःऽइव । प्रवणे । निम्ने । आशवः । वृषऽच्युताः । मदासः । गातुम् । आशत ।
शम् । नः । निऽवेशे । द्विऽपदे । चतुःऽपदे । अस्मे इति । वाजाः । सोम । तिष्ठन्तु । कृष्टयः ॥

**वेङ्कट०** प्रगच्छति[1] उदकं यत्र तत् प्रवणम् । तस्मिन् सिन्धोः प्रवणे निम्ने इव [2]आशवः । आशवः[2] आपः । ऋत्विग्भिः सुताः[3] सोमाः गमनं प्राप्नुवन्ति । सुखम् अस्माकं निर्गमने द्विपदे चतुष्पदे च कुरु । अस्मासु अन्नानि तिष्ठन्तु सोम! मनुष्याश्च ॥ ७ ॥

आ नः पवस्व वसुमद्धिरण्यवदश्वावद्गोमद्यवमत् सुवीर्यम् ।
यूयं हि सोम पितरो मम स्थन दिवो मूर्धानः प्रस्थिता वयस्कृतः ॥ ८ ॥

आ । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । अश्वऽवत् । गोऽमत् । यवऽमत् । सुऽवीर्यम् ।
यूयम् । हि । सोम । पितरः । मम । स्थन । दिवः । मूर्धानः । प्रऽस्थिताः । वयःऽकृतः ॥ ८ ॥

**वेङ्कट०** आ पवस्व अस्मभ्यं वस्वादियुक्तं धनम् । यूयम् हि सोम! पितरः मम भवथ[4] । अङ्गिरसः पितरस्तेषामधिपः सोमः । दिवः उच्छ्रिताः सर्वदा प्रस्थिताः अन्नस्य कर्तारः ॥ ८ ॥

एते सोमाः पवमानास इन्द्रं रथा इव प्र ययुः सातिमच्छ ।
सुताः पवित्रमति यन्त्यव्यं हित्वी वव्रिं हरितो वृष्टिमच्छ ॥ ९ ॥

एते । सोमाः । पवमानासः । इन्द्रम् । रथाःऽइव । प्र । ययुः । सातिम् । अच्छ ।
सुताः । पवित्रम् । अति । यन्ति । अव्यम् । हित्वी । वव्रिम् । हरितः । वृष्टिम् । अच्छ ॥९॥

**वेङ्कट०** एते सोमाः पवमानाः इन्द्रम् रथाः इव प्र गच्छन्ति[5] युद्धं प्रति । सुताः पवित्रम् अति[6] गच्छन्ति [7]च अव्यम् । तेऽमी[7] हित्वा[8] जराम् अश्वाः गच्छन्ति वृष्टिम् गमयितुम् ॥ ९ ॥

इन्दविन्द्राय बृहते पवस्व सुमृळीको अनवद्यो रिशादाः ।
भरा चन्द्राणि गृणते वसूनि देवैर्द्यावापृथिवी प्रावतं नः ॥ १० ॥

इन्दो इति । इन्द्राय । बृहते । पवस्व । सुऽमृळीकः । अनवद्यः । रिशादाः ।
भर । चन्द्राणि । गृणते । वसूनि । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥ १० ॥

---

१ प्रयच्छन्ति मूको. २-२. आशा इव शाव वि[2] अ[1]; आशा इव आशवः वि[1]. ३. च्युताः वि[2] अ[1]. ४. प्वत वि[2] अ[1]. ५. यच्छन्ति वि[2] अ[1]. ६. अभि वि[2] अ[1]. ७-७. चाप्यर्थेमि वि[1]. ८. मित्वा वि[1].

वेङ्कट० 'इन्दो! इन्द्राय[1] महते[2] पवस्व सुखयिता अवद्यरहितः रिशतामसिता। देहि ह्लादकानि स्तुवते वसूनि। देवैः सह हे द्यावापृथिवी! युवां च प्र रक्षतम् अस्मानिति ॥ १० ॥

'इति सप्तमाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[1] ॥

[ ७० ]

'रेणुर्वैश्वामित्र ऋषिः। पवमानः सोमो देवता। जगती छन्दः, दशमी त्रिष्टुप्[1]।

त्रिरस्मै सप्त धेनवो दुदुह्रे सत्यामाशिरं पूर्व्ये व्योमनि।
चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १ ॥

त्रिः। अस्मै। सप्त। धेनवः। दुदुह्रे। सत्याम्। आऽशिरम्। पूर्व्ये। विऽओमनि।
चत्वारि। अन्या। भुवनानि। निःऽनिजे। चारूणि। चक्रे। यत्। ऋतैः। अवर्धत ॥ १ ॥

वेङ्कट० रेणुर्वैश्वामित्रः। एकविंशतिः धेनवः सोमाय दुहते सत्याम् आशिरम् प्रत्ने व्योमनि स्थिताः। यद्वा 'द्वादश मासाः पञ्चर्तवः त्रय इमे लोकाः असावादित्य एकविंशः' ( तै ५,४,१२,२ )। तैः सर्वैः सह गोषु पय उत्पाद्यते। चत्वारि च अन्यानि उदकानि वसतीवरीस्तिस्रश्चैकधनाः निर्णेजनाय कल्याणानि करोति, यदाऽयं यज्ञैः वर्धते ॥ १ ॥

स भिक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे।
तेजिष्ठा अपो मंहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥ २ ॥

सः। भिक्षमाणः। अमृतस्य। चारुणः। उभे इति। द्यावा। काव्येन। वि। शश्रथे।
तेजिष्ठाः। अपः। मंहना। परि। व्यत। यदि। देवस्य। श्रवसा। सदः। विदुः ॥ २ ॥

वेङ्कट० सः चारु उदकम् याच्यमानः उभे द्यावापृथिव्यौ कविकर्मणा[3] वि श्रथयति विवृते[4] करोति प्रत्नेनोदकेन यज्ञनिमित्तेन। दीप्ततमानि उदकानि वर्षणार्थं महत्त्वेन आच्छादयति। यदि देवस्य सोमस्य स्थानम् ऋत्विजो हविषा युक्ताः यागार्थं लभन्ते ॥ २ ॥

ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु।
येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ॥ ३ ॥

ते। अस्य। सन्तु। केतवः। अमृत्यवः। अदाभ्यासः। जनुषी इति। उभे इति। अनु।
येभिः। नृम्णा। च। देव्या। च। पुनते। आत्। इत्। राजानम्। मननाः। अगृभ्णत ॥३॥

१-१. नास्ति मूको. २. बृहते वि[1]. ३. कर्मणा वि[2] अ[1]. ४. विधृते मूको.

वेङ्कट० ते अस्य रश्मयः अमारकाः अहिंस्याः[1] स्थावरं जङ्गमं च लक्षीकृत्य सन्तु रक्षन्तु, यैः केतुभिरयं बलानि देवार्हाणि च अन्नानि प्रेरयति। अभिषवानन्तरमेव राजानम् स्तुतयः परिगृह्णन्ति ॥ ३ ॥

स मृज्यमानो दशभिः सुकर्मभिः प्र मध्यमासु मातृषु प्रमे सचा ।
व्रतानि पानो अमृतस्य चारुण उभे नृचक्षा अनु पश्यते विशौ ॥ ४ ॥

सः । मृज्यमानः । दशऽभिः । सुकर्मऽभिः । प्र । मध्यमासु । मातृषु । प्रऽमे । सचा ।
व्रतानि । पानः । अमृतस्य । चारुणः । उभे इति । नृऽचक्षाः । अनु । पश्यते । विशौ ॥ ४ ॥

वेङ्कट० सः मृज्यमानः अङ्गुलिभिः सुकर्मभिः प्र तिष्ठते मध्यमासु अन्तरिक्ष्यास्वप्सु लोकान् प्रमातुम् अपां सहायः। कर्माणि रक्षन् उदकस्य कल्याणस्य [2]वृष्ट्यर्थं कर्म रक्षतु†। उभे[2] [3]विशौ अनु पश्यति[3] मनुष्यान् देवांश्च अन्तरिक्षेण गच्छन् नृणां[4] द्रष्टा ॥ ४ ॥

स मर्मृजान इन्द्रियाय धायस ओभे अन्ता रोदसी हर्षते हितः ।
वृषा शुष्मेण बाधते वि दुर्मतीरादेदिशानः शर्यहेव शुरुधः ॥ ५ ॥

सः । मर्मृजानः । इन्द्रियाय । धायसे । आ । उभे इति । अन्तरिति । रोदसी इति । हर्षते । हितः ।
वृषा । शुष्मेण । बाधते । वि । दुःऽमतीः । आऽदेदिशानः । शर्यहाऽइव । शुरुधः ॥ ५ ॥

वेङ्कट० सः मृज्यमानः इन्द्रस्य इन्द्रियाय जगतो धारकाय द्यावापृथिव्योरुभयोः अन्तः हितः गच्छति। सोऽयम् वृषा बलेन वि बाधते दुर्मतीः आदेदिशानः आह्वयन् योद्धा इव प्रतिभटान्। शुचा परान् रुन्धन्ति ते दुर्मतयः ॥ ५ ॥

[5]इति सप्तमाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[5] ॥

स मातरा न ददृशान उस्रियो नानददेति मरुतामिव स्वनः ।
जानन्नृतं प्रथमं यत् स्वर्णरं प्रशस्तये कमवृणीत सुक्रतुः ॥ ६ ॥

सः । मातरा । न । ददृशानः । उस्रियः । नानदत् । एति । मरुताम्ऽइव । स्वनः ।
जानन् । ऋतम् । प्रथमम् । यत् । स्वःऽनरम् । प्रऽशस्तये । कम् । अवृणीत । सुऽक्रतुः ॥

वेङ्कट० सः मातरौ[6] पश्यन् इव वत्सः। उस्रेति गोनाम। शब्दं कुर्वन् एति मरुताम् इव च स्वनः द्यावापृथिव्योर्दर्शनेनायमेतीति। मातरा इति द्विवचनम्। जानन् उदकम् मुख्यम् यत् उदकं

---

१. अहिं वि[1]. २-२. नास्ति वि[1]. † रक्षन्तु वि[3] अ[1]. ३-३. विदवावनुप॰ वि[2]: विदवावनुपश्यति अ[1]; विशामनुप॰ वि[3]. ४. नृणां देवानां वि[3] अ[1]. ५-५. नास्ति मूको. ६. नास्ति वि[1].

सर्वमनुष्यम् भवति। सर्वे हि मनुष्या उदके सङ्गच्छन्ते। प्रशंसार्थम् [1]सः कम्[1] मनुष्वं वृणोते सुकर्मा ॥ ६ ॥

रुवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः।
आ योनिं सोमः सुकृतं नि षीदति गव्ययी त्वग्भवति निर्णिगव्ययी ॥ ७ ॥

रुवति। भीमः। वृषभः। तविष्यया। शृङ्गे इति। शिशानः। हरिणी इति। विऽचक्षणः।
आ। योनिम्। सोमः। सुऽकृतम्। नि। सीदति। गव्ययी। त्वक्। भवति। निःऽनिक्। अव्ययी ॥

**वेङ्कट०** शब्दायते भीमः वृषभः बलेच्छया शृङ्गे तीक्ष्णीकुर्वन् हरितवर्णे विद्रष्टा। योनिम् आ नि सीदति सोमः सुसंस्कृतम्। तस्य निर्णेक्त्री[2] गव्या त्वक् भवति। आनडुहे हि चर्मणि अभिषवः। एवम् अविमयी च। तद्धि पवित्रं[3] भवति[4] ॥ ७ ॥

शुचिः पुनानस्तन्वमरेपसमव्ये हरिर्न्यधाविष्ट सानवि।
जुष्टो मित्राय वरुणाय वायवे त्रिधातु मधु क्रियते सुकर्मभिः ॥ ८ ॥

शुचिः। पुनानः। तन्वम्। अरेपसम्। अव्ये। हरिः। नि। अधाविष्ट। सानवि।
जुष्टः। मित्राय। वरुणाय। वायवे। त्रिऽधातु। मधु। क्रियते। सुकर्मऽभिः ॥ ८ ॥

**वेङ्कट०** शुचिः शोधयन् आत्मीयं शरीरम् अरेपसम् हरितवर्णः सोमः अविमये समुच्छ्रिते पवित्रे [5]नि धीयते। पर्याप्तः[5] मित्रादिभ्यः त्रिसन्धानम् मधु क्रियते ऋत्विग्भिः। दध्ना पयसा संसृष्टः सोमः त्रिधातु मधु भवति ॥ ८ ॥

पवस्व सोम देववीतये वृषेन्द्रस्य हार्दि सोमधानमा विश।
पुरा नो बाधाद्दुरिताति पारय क्षेत्रविद्धि दिश आहा विपृच्छते ॥ ९ ॥

पवस्व। सोम। देवऽवीतये। वृषा। इन्द्रस्य। हार्दि। सोमऽधानम्। आ। विश।
पुरा। नः। बाधात्। दुःऽइता। अति। पारय। क्षेत्रऽवित्। हि। दिशः। आह। विऽपृच्छते ॥

**वेङ्कट०** पवस्व सोम! देवपानाय वृषा। अथ इन्द्रस्य प्रियम् सोमनिधानं पात्रम् आ विश। पुरा अस्मान्[6] बाधायाः दुरितानि अति पारय। मार्गज्ञो हि [7]मार्गान् ब्रूते[7] विपृच्छते। तथा त्वम् अस्मान् रक्षेति[8] ॥ ९ ॥

हितो न सप्तिरभि वाजमर्षेन्द्रस्येन्दो जठरमा पवस्व।
नावा न सिन्धुमति पर्षि विद्वाञ्छूरो न युध्यन्नव नो निदः स्पः ॥ १० ॥

---

१-१. स्वकं अ[1]; सकं वि[1,2]. २. निर्णेक्ती वि[2] अ[1]; निर्णेश्री वि[1]. ३. °वित्रं परिशुद्धम् अ[1]. ४. °वतीत्यर्थः अ[1]. ५-५. नास्ति वि[1]. ६. अस्मात् मूको. ७-७. °र्गाद्ब्रूतेपि वि[2] अ[1]; °र्गाद्ब्रूतेपि वृति वि[1]. ८. नास्ति वि[1].

हितः । न । सप्तिः । अभि । वाजम् । अर्ष । इन्द्रस्य । इन्दो इति । जठरम् । आ । पवस्व ।
नावा । न । सिन्धुम् । अति । पर्षि । विद्वान् । शूरः । न । युध्यन् । अव । नः । निदः । स्पः इति स्पः ॥

वेङ्कट० प्रहितः अश्वः इव सङ्ग्रामम् द्रोणकलशम् अभि अर्ष । इन्द्रस्य इन्दो! जठरम् प्रति आ पवस्व । इन्द्रस्य जठरो द्रोणकलशः । नावा इव सिन्धुम्[1] अस्मान् अतिपारय जानन्[2] । शूरः इव युध्यन् अस्मान् [3]अव पारय[3] शत्रोरिति ॥ १० ॥

[4]इति सप्तमाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[4] ॥

[ ७१ ]

[4]ऋषभो वैश्वामित्र ऋषिः । पवमानः सोमो देवता । जगती छन्दः, नवमी त्रिष्टुप्[4] ।

आ दक्षिणा सृज्यते शुष्म्या३सदं वेति द्रुहो रक्षसः पाति जागृविः ।
हरिरोपशं कृणुते नभस्पय उपस्तिरे चम्वो३र्ब्रह्म निर्णिजे ॥ १ ॥

आ । दक्षिणा । सृज्यते । शुष्मी । आऽसदम् । वेति । द्रुहः । रक्षसः । पाति । जागृविः ।
हरिः । ओपशम् । कृणुते । नभः । पयः । उपऽस्तिरे । चम्वोः । ब्रह्म । निःऽनिजे ॥ १ ॥

वेङ्कट० ऋषभो वैश्वामित्रः । ऋत्विग्भ्यः दक्षिणा वि-सृज्यते । सोमश्च बलवान् आस्थानम् प्रविशति गच्छति च । [5]द्रोग्धुः राक्षसात् च[5] रक्षति जागरणशीलः । हरितवर्णः धारकम्[6] करोति आदित्यस्य उदकम् । उपस्तरणाय द्यावापृथिव्योः आदित्यं[7] करोति निर्णेजनाय च । [8]आदित्यो हि द्यावापृथिव्यौ स्वतेजसोपस्तृणाति निर्णेनेक्ति च । अपि[8] [9]चान्तरिक्षमुदकाधारं करोति[9] । ब्रह्मेति च उदकनामेति[10] ॥ १ ॥

प्र कृष्टिहेव शूष एति रोरुवदसुर्यं१ वर्णं नि रिणीते अस्य तम् ।
जहाति वव्रिं पितुरेति निष्कृतमुपप्रुतं कृणुते निर्णिजं तना ॥ २ ॥

प्र । कृष्टिहाऽइव । शूषः । एति । रोरुवत् । असुर्यम् । वर्णम् । नि । रिणीते । अस्य । तम् ।
जहाति । वव्रिम् । पितुः । एति । निःऽकृतम् । उपऽप्रुतम् । कृणुते । निःऽनिजम् । तना ॥ २ ॥

वेङ्कट० प्र एति योद्धा इव मनुष्याणां हन्ता बलवान् शब्दं कुर्वन्, असुराणां बाधकम् वर्णम् च अस्य आत्मनः तम् निर्गमयति, जहाति जराम्, पितुः एति स्थानं दिवम्, उपगतम् च करोति आत्मीयं रूपम् पवित्रे ॥ २ ॥

अद्रिभिः सुतः पवते गभस्त्योर्वृषायते नभसा वेपते मती ।
स मोदते नसते साधते गिरा नेनिक्ते अप्सु यजते परीमणि ॥ ३ ॥

---

१. सिन्धुः वि[2] अ[1]. २. यजमानम् मूको. ३-३. अपवारय मूको. ४-४. नास्ति मूको. ५. °द्रोराक्षसाश्च वि[2] अ[1]; द्रोग्धृन् राक्षसांश्च वि[1]. ६. वारकं वि[2] अ[1]. ७. °दित्यः वि[2] अ[1]. ८-८. नास्ति अ[1]. ९-९. नास्ति वि[1]. १०. तु. निघ १,१२ (तु. यत्रत्यः मूको.).

अद्रि॑ऽभिः । सु॒तः । प॒व॒ते॒ । गभ॑स्त्योः । वृ॒ष॒ऽय॒ते॒ । नभ॑सा । वेप॑ते । म॒ती ।
सः । मो॒द॒ते॒ । नस॑ते । साध॑ते । गि॒रा । ने॒नि॒क्ते॒ । अ॒प्ऽसु । यज॑ते । परी॑मणि ॥ ३ ॥

**वेङ्कट०** बाहुभ्याम् ग्रावभिश्च अभिषुतः [1]पवते । वृषा इवाचरति[1] । गच्छति चान्तरिक्षेण । स्तुत्या सः मोदते । संश्लिष्टश्च भवति । साधयति च स्तुत्या अभिलषितम् । निर्णेनेक्ति चात्मानम् उदकेषु । पूजयति च देवान् उपद्रवाणाम् अतिवारणार्थम् इति ॥ ३ ॥

परि॑ द्यु॒क्षं सह॑सः पर्वता॒वृधं॒ मध्वः॑ सिञ्चन्ति ह॒र्म्यस्य॑ स॒क्षणि॑म् ।
आ यस्मि॒न् गावः॑ सुहु॒ताद॒ ऊध॑नि मू॒र्धञ्छ्री॒णन्त्य॑ग्रि॒यं वरी॑माभिः ॥ ४ ॥

परि॑ । द्यु॒क्षम् । सह॑सः । प॒र्व॒त॒ऽवृध॑म् । मध्वः॑ । सि॒ञ्च॒न्ति॒ । ह॒र्म्यस्य॑ । स॒क्षणि॑म् ।
आ । यस्मि॑न् । गावः॑ । सु॒हु॒त॒ऽअदः॑ । ऊध॑नि । मू॒र्धन् । श्री॒णन्ति॑ । अ॒ग्रि॒यम् । वरी॑मऽभिः ॥४॥

**वेङ्कट०** परि सिञ्चन्ति दीप्तम् बलार्थम् पर्वतेषु वृद्धम् उदकानि यज्ञगृहस्य सेचनशीलं सोमम् । आ श्रीणन्ति[2] यस्मिन् रसस्य धारके उच्छ्रिते पशवः सुहुतस्य हविषोऽत्तारः मुख्यं पयः उरुत्वैः ॥४॥

समी॒ रथं॒ न भु॒रिजो॑रहेषत॒ दश॒ स्वसा॑रो॒ अदि॑तेरु॒पस्थ॒ आ ।
जिगा॒दुप॑ ज्रयति॒ गोर॑पी॒च्यं॑ प॒दं यद॑स्य म॒तुथा॒ अजी॑जनन् ॥ ५ ॥

सम् । ई॒मिति॑ । रथ॑म् । न । भु॒रिजोः॑ । अ॒हे॒ष॒त॒ । दश॑ । स्वसा॑रः । अदि॑तेः । उ॒पऽस्थे॑ । आ ।
जिगा॑त् । उप॑ । ज्र॒य॒ति॒ । गोः । अ॒पी॒च्य॑म् । प॒दम् । यत् । अ॒स्य॒ । म॒तुथाः॑ । अजी॑जनन् ॥५॥

**वेङ्कट०** सम् प्रेरयन्ति एनम् रथम् इव बाह्वोः दश अङ्गुलयः अदितेः उपस्थे । सोऽयं गच्छति उप गच्छति च गोः अन्तर्हितम् पयः, यदा 'सोमस्य स्थानम् जनयन्ति' मतुथाः स्तोतारः ॥५॥

[3]इति सप्तमाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः[3] ॥

श्ये॒नो न योनिं॒ सद॑नं धि॒या कृ॒तं हि॑र॒ण्यय॑मा॒सदं॑ दे॒व एष॑ति ।
ए रि॑णन्ति ब॒र्हिषि॑ प्रि॒यं गि॒राश्वो॒ न दे॒वाँ अप्ये॑ति य॒ज्ञियः॑ ॥ ६ ॥

श्ये॒नः । न । योनि॑म् । सद॑नम् । धि॒या । कृ॒तम् । हि॒र॒ण्यय॑म् । आ॒ऽसद॑म् । दे॒वः । आ । ई॒ष॒ति॒ ।
आ । ई॒मिति॑ । रि॒ण॒न्ति॒ । ब॒र्हिषि॑ । प्रि॒यम् । गि॒रा । अश्वः॑ । न । दे॒वान् । अपि॑ । ए॒ति॒ । य॒ज्ञियः॑ ॥

**वेङ्कट०** श्येनः इव कुलायम् कर्मणा कृतम् सदनम् हिरण्मयम् आसत्तुम् देवः आ गच्छतीति । तमेनं प्रेरयन्ति बर्हिषि प्रियम् स्तुत्या । सोऽयम् अश्वः इव आशुः देवान् अपि एति यष्टव्यः ॥ ६ ॥

---

१-१. नास्ति वि[1]. २. श्रणन्ति वि[1]; श्रीणयन्ति वि[1] अ[1]. ३-३. नास्ति मूको.

परा व्यक्तो अरुषो दिवः कविर्वृषा त्रिपृष्ठो अनविष्ट गा अभि ।
सहस्रणीतिर्यतिः परायती रेभो न पूर्वीरुषसो वि राजति ॥ ७ ॥

परा । विऽअक्तः । अरुषः । दिवः । कविः । वृषा । त्रिऽपृष्ठः । अनविष्ट । गाः । अभि ।
सहस्रऽनीतिः । यतिः । पराऽयतिः । रेभः । न । पूर्वीः । उषसः । वि । राजति ॥ ७ ॥

**वेङ्कट०** परा गच्छति स्पष्टः आरोचमानः अन्तरिक्षात् कविः । पवित्रात् पवत इति कश्चन । [1]वृषभः त्रिपृष्ठः[1] [2]शब्दायते गाः[2] अभि । त्रीण्यस्य सवनानि पृष्ठानि । सहस्रनयनः आगन्ता परागन्ता यः[3], सोऽयं बह्वीः उषसः वि राजति शब्दायमानः स्तोता इति ॥ ७ ॥

त्वेषं रूपं कृणुते वर्णो अस्य स यत्राशयत् समृता सेधति स्रिधः ।
अप्सा याति स्वधया दैव्यं जनं सं सुष्टुती नसते सं गोअग्रया ॥ ८ ॥

त्वेषम् । रूपम् । कृणुते । वर्णः । अस्य । सः । यत्र । अशयत् । सम्ऽऋता । सेधति । स्रिधः ।
अप्साः । याति । स्वधया । दैव्यम् । जनम् । सम् । सुऽस्तुती । नसते । सम् । गोऽअग्रया ॥८॥

**वेङ्कट०** दीप्तम् रूपम् कृणुते वारकः[4] अस्य रश्मिः । सः यत्र शेते युद्धे तत्र नि-सेधति शत्रून् । उदकस्य [5]दाता अयम् अन्नेन गच्छति[5] [6]दैव्यम् जनम्[6] । सोऽयम्[7] सम् गच्छते सुष्टुत्या, सम् गच्छते च गोमुखया वाचा । यया वाचा पशून् याचते, तया सङ्गच्छत इति ॥ ८ ॥

उक्षेव यूथा परियन्नरावीदधि त्विषीरधित सूर्यस्य ।
दिव्यः सुपर्णोऽव चक्षत क्षां सोमः परि क्रतुना पश्यते जाः ॥ ९ ॥

उक्षाऽइव । यूथा । परिऽयन् । अरावीत् । अधि । त्विषीः । अधित । सूर्यस्य ।
दिव्यः । सुऽपर्णः । अव । चक्षत । क्षाम् । सोमः । परि । क्रतुना । पश्यते । जाः ॥ ९ ॥

**वेङ्कट०** ऋषभः इव गोयूथानि परिगच्छन् शब्दायते । अधि[8] दधाति च दीप्तीः सूर्यस्य । दिवि भवः सुपतनः अव पश्यति पृथिवीम् सोमः[9] परि पश्यति प्रज्ञानेन जाताः[10] प्रजाः ॥ ९ ॥

[11]इति सप्तमाष्टके द्वितीयाध्याये षड्विंशो वर्गः[11] ॥

## [ ७२ ]

[11]हरिमन्त आङ्गिरस ऋषिः । पवमानः सोमो देवता । जगती छन्दः[11] ।

हरिं मृजन्त्यरुषो न युज्यते सं धेनुभिः कलशे सोमो अज्यते ।
उद्वाचमीरयति हिन्वते मती पुरुष्टुतस्य कति चित् परिप्रियः ॥ १ ॥

---

१-१. वृषा वि[1]. २-२. नास्ति वि[1]. ३. व मूको. ४. पारकः मूको. ५-५. °ता यदन्ने नमिच्छति वि[2]; °ता यदेन्ने नेमिच्छन्ति अ[1]. ६-६. देव्य नं वि[2] अ[1]; दैव्य नं वि[1]. ७. नास्ति वि[1]. ८. नास्ति वि[2] अ[1]. ९. सोम वि[2] अ[1]; °माः वि[1]. १०. °ता वि[2] अ[1]; °तः वि[1]. ११-११. नास्ति मूको.

हरिम् । मृजन्ति । अरुषः । न । युज्यते । सम् । धेनुऽभिः । कलशे । सोमः । अज्यते ।
उत् । वाचम् । ईरयति । हिन्वते । मती । पुरुऽस्तुतस्य । कति । चित् । परिऽप्रियः ॥ १ ॥

वेङ्कट० हरिमन्तः आङ्गिरसः । हरिम् मृजन्ति । सोऽयं गमनशीलोऽश्वः[1] इव युज्यते । सम् अज्यते च गोविकारैः कलशे स्थितः सोमः, उद्-गमयति शब्दम्, प्रेर्यते च स्तुत्या । सोऽयं बहुस्तुतेः स्तोतुः कियन्ति धनानि प्रयच्छति परिप्रियः ॥ १ ॥

साकं वदन्ति बहवो मनीषिण इन्द्रस्य सोमं जठरे यदादुहुः ।
यदी मृजन्ति सुगभस्तयो नरः सनीळाभिर्दशभिः काम्यं मधु ॥ २ ॥

साकम् । वदन्ति । बहवः । मनीषिणः । इन्द्रस्य । सोमम् । जठरे । यत् । आऽदुहुः ।
यदि । मृजन्ति । सुऽगभस्तयः । नरः । सऽनीळाभिः । दशऽभिः । काम्यम् । मधु ॥ २ ॥

वेङ्कट० साकम् मन्त्रान् वदन्ति बहवः स्तोतारः, इन्द्रस्य[2] जठरे[3] द्रोणकलशे[3] यदा सोमम् दुहन्ति । यदि एतम् अभिषुण्वन्ति[4] शोभनबाहुकाः मनुष्याः अङ्गुलीभिः दशभिः काम्यम् मदकरम् इति ॥ २ ॥

अरममाणो अत्येति गा अभि सूर्यस्य प्रियं दुहितुस्तिरो रवम् ।
अन्वस्मै जोषमभरद्विनंगृसः सं द्वयीभिः स्वसृभिः क्षेति जामिभिः ॥ ३ ॥

अरममाणः । अति । एति । गाः । अभि । सूर्यस्य । प्रियम् । दुहितुः । तिरः । रवम् ।
अनु । अस्मै । जोषम् । अभरत् । विनमऽगृसः । सम । द्वयीभिः । स्वसृऽभिः[5] । क्षेति । जामिऽभिः ॥

वेङ्कट० अनुचरन् अति गच्छति अयणानि लक्षीकृत्य । सूर्यस्य दुहितुः उषसश्च प्रियम्[6] रवम् तिरः करोति । शब्दायन् अनु भरति च अस्मै पर्याप्तं स्तोत्रम् 'स्तोता । कान्तं स्तोत्रं गृणातीति[6] विनंगृसः स्तोतोक्त इत्याहुः । सोऽयम् सम् गच्छते द्वयीभिः अङ्गुलीभिः बन्धुभिः उभाभ्यां पाणिभ्याम् उत्पन्नाभिः ॥ ३ ॥

नृधूतो अद्रिषुतो बर्हिषि प्रियः पतिर्गवां प्रदिव इन्दुर्ऋत्वियः ।
पुरंधिवान् मनुषो यज्ञसाधनः शुचिर्धिया पवते सोम इन्द्र ते ॥ ४ ॥

नृऽधूतः । अद्रिऽसुतः । बर्हिषि । प्रियः । पतिः । गवाम् । प्रऽदिवः[7] । इन्दुः । ऋत्वियः ।
पुरन्धिऽवान् । मनुषः । यज्ञऽसाधनः । शुचिः । धिया । पवते । सोमः । इन्द्र । ते ॥ ४ ॥

वेङ्कट० मनुष्यैश्शोधितः ग्रावभिरभिषुतो[8] यज्ञे प्रियः पतिः गवाम् पुराणः सोमः ऋतौ जातः

---

१. नास्ति वि[1]. २. नास्ति मूको. ३. कलशे वि[1] ४ एनदभिषु° मूको ५. तु. निघ २,५. ६-६ स्तोता रान्तं स्तोतृगणा° वि[1] अ[1]; स्तोगणा° वि[1]. ७. तु. निघ ३,२७. ८. °ष्टुतः मूको.

प्रज्ञावान्[1] मनुष्यस्य[2] यज्ञसाधनः शुचिः धारया [3]पवते सोमः[3] इन्द्र! तुभ्यम् ॥ ४ ॥

नृबाहुभ्यां चोदितो धारया सुतोऽनुष्वधं पवते सोम इन्द्र ते ।
आप्राः क्रतून्त्समजैरध्वरे मतीर्वेर्न द्रुषच्चम्वो३रासदद्धरिः ॥ ५ ॥

नृबाहुऽभ्याम् । चोदितः । धारया । सुतः । अनुऽस्वधम् । पवते । सोमः । इन्द्र । ते ।
आ । अप्राः । क्रतून् । सम् । अजैः । अध्वरे । मतीः । वेः । न । द्रुऽसत् । चम्वोः । आ । असदत् । हरिः ॥

वेङ्कट० मनुष्यबाहुभ्याम् प्रेरितः धारया अभिषुतः तव बलार्थम् अन्नार्थं वा[4] पवते सोमः इन्द्र! तुभ्यम् । स त्वम् आ पूरयसि कर्माणि । सम् जयसि यज्ञे मतीः अभिमन्यमानान् शत्रून् । सोऽयं गन्ता पक्षी इव द्रुमे सीदन् अधिषवणफलकयोः आ सीदति हरितवर्णः[5] ॥ ५ ॥

[6]इति सप्तमाष्टके द्वितीयाध्याये सप्तविंशो वर्गः[6] ॥

अंशुं दुहन्ति स्तनयन्तमक्षितं कविं कवयोऽपसो मनीषिणः ।
समी गावो मतयो यन्ति संयत ऋतस्य योना सदने पुनर्भुवः ॥ ६ ॥

अंशुम् । दुहन्ति । स्तनयन्तम् । अक्षितम् । कविम् । कवयः । अपसः । मनीषिणः ।
सम् । ईमिति । गावः । मतयः । यन्ति । सम्ऽयतः । ऋतस्य । योना । सदने । पुनःऽभुवः ॥ ६ ॥

वेङ्कट० सोमम् दुहन्ति स्तनयन्तम् अक्षीणम् कविम् क्रान्ताः[7] कर्मवन्तः बुद्धिमन्तः । सम् यन्ति चैनं पशवः स्तुतयश्च सङ्गताः यज्ञस्योत्पत्तिभूते[8] स्थाने पुनःपुनर्भवन्त्यः ॥ ६ ॥

नाभा पृथिव्या धरुणो महो दिवो३ऽपामूर्मौ सिन्धुष्वन्तरुक्षितः ।
इन्द्रस्य वज्रो वृषभो विभूवसुः सोमो हृदे पवते चारु मत्सरः ॥ ७ ॥

नाभा । पृथिव्याः । धरुणः । महः । दिवः । अपाम् । ऊर्मौ । सिन्धुषु । अन्तः । उक्षितः ।
इन्द्रस्य । वज्रः । वृषभः । विभुऽवसुः । सोमः । हृदे । पवते । चारु । मत्सरः ॥ ७ ॥

वेङ्कट० उच्छ्रिते पृथिव्याः स्थाने महत्याः दिवः धर्ता नदीषु अपाम् सङ्घे निहितः अन्तरिक्षस्थानामपां मध्ये[9] वर्तमानः, इन्द्रस्य बलकरः वर्षिता व्याप्तधनः सोमः[10] सुखाय पवते कल्याणम् मदकरः[11] ॥ ७ ॥

स तू पवस्व परि पार्थिवं रजः स्तोत्रे शिक्षन्नाधून्वते च सुक्रतो ।
मा नो निर्भाग्वसुनः सादनस्पृशो रयिं पिशङ्गं बहुलं वसीमहि ॥ ८ ॥

---

१. तु. या ६,१३. २. मनुषो वि[1]. ३-३. नास्ति वि[1]. ४. नास्ति वि[2] अ[1]. ५. हरि वि[1]; °र्णे वि[2] अ[1]. ६-६. नास्ति मूको. ७. कान्ताः वि[1] अ[1]. ८. °भूत वि[1]. ९. नास्ति वि[1]. १०. सोम मूको. ११. °कर वि[2] अ[1].

मः । तु । पवस्व । परि । पार्थिवम् । रजः । स्तोत्रे । शिक्षन् । आऽधून्वते । च । सुक्रतो इति सुऽक्रतो ।
मा । नः । निः । भाक् । वसुनः । सदनऽस्पृशः । रयिम् । पिशङ्गम् । बहुलम् । वसीमहि ॥८॥

**वेङ्कट०** मः क्षिप्रम् पवस्व पार्थिवम् लोकं लक्षीकृत्य स्तोत्रे प्रयच्छन् अंशुभिः त्वाम् आ धून्वते च। 'तैरेनं चतुराधुनोति'[1] (आपश्रौ १२,८,२) इति सूत्रम्। [2]सुप्रज्ञ! मा अस्मान् निः भाङ्क्षीः[2] धनात्, येन वसुना गृहान् पुत्रादीन् स्पृशन्ति तस्मात्। रयिम् नानारूपम् महान्तम् आच्छादयेम ॥ ८ ॥

आ तू न इन्दो शतदात्वश्व्यं सहस्रदातु पशुमद्धिरण्यवत् ।
उप मास्व बृहती रेवतीरिषोऽधि स्तोत्रस्य पवमान नो गहि ॥ ९ ॥

आ । तु । नः । इन्दो इति । शतऽदातु । अश्व्यम् । सहस्रऽदातु । पशुऽमत् । हिरण्यऽवत् ।
उप । मास्व । बृहतीः । रेवतीः । इषः । अधि । स्तोत्रस्य । पवमान । नः । गहि ॥ ९ ॥

**वेङ्कट०** आ प्रयच्छ क्षिप्रम् अस्मभ्यम् इन्दो! बहुदानम् अश्वहितं धनम् सहस्रदानम् पशुहिरण्ययुक्तम् च। उप कुरु बृंहितानि पशुमन्ति अन्नानि। अभिगच्छ पवमान! अस्माकं स्तोत्रं श्रोतुमिति ॥९॥

[3]इति सप्तमाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः[3] ॥

## [ ७३ ]

[1]पवित्र आङ्गिरस ऋषिः। पवमानः सोमो देवता। जगती छन्दः[1]।

स्रक्के द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरन्त नाभयः ।
त्रीन्त्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरन् ॥ १ ॥

स्रक्के । द्रप्सस्य । धमतः । सम् । अस्वरन् । ऋतस्य । योना । सम् । अरन्त । नाभयः ।
त्रीन् । सः । मूर्ध्नः । असुरः । चक्रे । आऽरभे । सत्यस्य । नावः । सुऽकृतम् । अपीपरन् ॥ १ ॥

**वेङ्कट०** पवित्र आङ्गिरसः। यज्ञस्य सृक्कस्थानीये[4] अभिषूयमाणस्य अंशवः सम् गच्छन्ते। तदेवाह — यज्ञस्य स्थाने सम् गच्छन्ते नद्धारः सोमरसा इति। सः बलवान् सोमः त्रीन् समुच्छ्रितान्[5] लोकान् मनुष्यादीनाम् आरम्भणाय करोति। सत्यभूतस्य तस्य[5] सोमस्य चतस्रः नावः सन्ति, ताः पारयन्ति[6] यजमानमिति ॥ १ ॥

सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन् ।
मधोर्धाराभिर्जनयन्तो अर्कमित् प्रियामिन्द्रस्य तन्वमवीवृधन् ॥ २ ॥

---

१. °राधुनो° वि[2] अ[1]. २-२. °ज्ञमस्मान्निभाक्षी वि[2] अ[1]; °ज्ञमस्मानिभांक्षी वि[1]. ३-३. नास्ति मूको. ४. सक्कास्थानि यज्ञे वि[2] अ[1]. ५. नास्ति वि[1]. ६. परय° वि[1].

सम्यक् । सम्यञ्चः । महिषाः । अहेषत । सिन्धोः । ऊर्मौ । अधि । वेनाः । अवीविपन् ।
मधोः । धाराभिः । जनयन्तः । अर्कम् । इत् । प्रियाम् । इन्द्रस्य । तन्वम् । अवीवृधन् ॥ २ ॥

वेङ्कट० सम्यक् सम्यञ्चः महान्तः ऋत्विजः सोमं प्रेरयन्ति । सिन्धोः ऊर्मौ वसतीवरीषु कान्ताः[1] ऋत्विजः सोमं वेपयन्ति । सोमस्य धाराभिः[2] जनयन्तः[3] मन्त्रम्[4] प्रियाम्[5] इन्द्रस्य तनुम्[6] वर्धयन्ति ॥ २ ॥

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥ ३ ॥

पवित्रऽवन्तः । परि । वाचम् । आसते । पिता । एषाम् । प्रत्नः । अभि । रक्षति । व्रतम् ।
महः । समुद्रम् । वरुणः । तिरः । दधे । धीराः । इत् । शेकुः । धरुणेषु । आऽरभम् ॥ ३ ॥

वेङ्कट० शोधकेन रश्मिना युक्ताः सोमस्य रश्मयः माध्यमिकाम् वाचम् सोमे स्थिताः परि उपविशन्ति । पिता च एषाम् सोमः पुराणः अभि रक्षति कर्म प्रकाशनात्मकम् । सोऽयं सोमः आच्छादकः तैः महद् अन्तरिक्षम् [7]तिरः दधे अन्तर्दधाति[7] । तमिमं सोमं प्राज्ञाः एव शक्नुवन्ति उदकेषु वसतीवरीषु आरब्धुम् ॥ ३ ॥

सहस्रधारेऽव ते समस्वरन् दिवो नाके मधुजिह्वा असश्चतः ।
अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः ॥ ४ ॥

सहस्रऽधारे । अव । ते । सम् । अस्वरन् । दिवः । नाके । मधुऽजिह्वाः । असश्चतः ।
अस्य । स्पशः । न । नि । मिषन्ति । भूर्णयः । पदेऽपदे । पाशिनः । सन्ति । सेतवः ॥ ४ ॥

वेङ्कट० बहूदकधारेऽन्तरिक्षे वर्तमानाः ते रश्मयः पृथिवीं [8]प्रति सम् गच्छन्ते[8] । दिवः उच्छ्रिते देशे वर्तमानाः मधवग्राः । सोमतेजसामग्रेभ्यो हि मधूत्पन्नं भवति । सङ्गवर्जिताः । सोमस्य चारभूता [9]रश्मयः न[9] नि मिषन्ति । क्षिप्राः [10]स्थानेस्थाने पाशयुक्ताः[10] भवन्ति बन्धकाः पापकृतामिति ॥ ४ ॥

पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः संदहन्तो अव्रतान् ।
इन्द्रद्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परि ॥ ५ ॥

पितुः । मातुः । अधि । आ । ये । सम्ऽअस्वरन् । ऋचा । शोचन्तः । सम्ऽदहन्तः । अव्रतान् ।
इन्द्रऽद्विष्टाम् । अप । धमन्ति । मायया । त्वचम् । असिक्नीम् । भूमनः । दिवः । परि ॥ ५ ॥

---

१. क्रान्ताः मूको. २. धारभिः वि[1]. ३. जयन्तः वि[1]. ४. मन्त्र वि[1]. ५. विधाम् वि[1]. ६. तस्वं वि[1] अ[1]. ७-७. °धे न्तस्तद्दधा° वि[1] अ[1]. ८-८. प्रतिगच्छन्ते वि[1] अ[1]. ९-९. 'योनै वि[1]. १०-१०. °स्थनेयुक्ते वि[1].

**वेङ्कट०** द्यावापृथिवीभ्याम् ये प्रादुर्भूताः स्तुत्या ज्वलन्तः संदहन्तः [1]अयजमानान्, ते[1] इन्द्रद्विष्टाम् अवघ्नन्ति प्रज्ञया कृष्णाम् त्वचम् रक्षः, दिवः च पृथिव्याश्च ॥ ५ ॥

[2]इति सप्तमाष्टके द्वितीयाध्याये एकोनत्रिंशो वर्गः[2] ॥

प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥ ६ ॥

प्रत्नात् । मानात् । अधि । आ । ये । सम्ऽअस्वरन् । श्लोकऽयन्त्रासः । रभसस्य । मन्तवः ।
अप । अनक्षासः । बधिराः । अहासत । ऋतस्य । पन्थाम् । न । तरन्ति । दुःऽकृतः ॥ ६ ॥

**वेङ्कट०** प्रत्नात् अन्तरिक्षात् ये सह गच्छन्ति स्तुतिनियमनाः वेगम् अभिमन्यमानाः, तान् अनक्षाः[3] बधिराः च परित्यजन्ति, न तु प्राज्ञाः । तदेवाह—सत्यस्य मार्गभूतम् एषां गणम् न तरन्ति दुष्कृतः इति ॥ ६ ॥

सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।
रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः ॥ ७ ॥

सहस्रऽधारे । विऽतते । पवित्रे । आ । वाचम् । पुनन्ति । कवयः । मनीषिणः ।
रुद्रासः । एषाम् । इषिरासः । अद्रुहः । स्पशः । सुऽअञ्चः । सुऽदृशः । नृऽचक्षसः ॥ ७ ॥

**वेङ्कट०** बहुधारे[4] विस्तृते सोमे वर्तमानां[5] माध्यमिकाम् वाचम्[6] शोधयन्ति[7] क्रान्तकर्माण.[8] प्राज्ञाः । तेषाम् च एषाम् मरुतः गमनशीलाः द्रोहवर्जिताः चारा भवन्ति स्वञ्चनाः सुदर्शनाः नृणां द्रष्टारः ॥ ७ ॥

ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्यन्तरा दधे ।
विद्वान्त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतान् ॥ ८ ॥

ऋतस्य । गोपाः । न । दभाय । सुऽक्रतुः । त्री । सः । पवित्रा । हृदि । अन्तः । आ । दधे ।
विद्वान् । सः । विश्वा । भुवना । अभि । पश्यति । अव । अजुष्टान् । विध्यति । कर्ते । अव्रतान् ॥ ८ ॥

**वेङ्कट०** यज्ञस्य गोपयिता न दम्भितुं शक्यते रक्षोभिः सुकर्मा । [9]किं च[9] सः त्रीणि पवित्राणि[10] हृदयस्य अन्तः निधत्ते । स्वस्मिन् सङ्गमयति । अग्निः वायुः सूर्य इति तानि पवित्राणि । विद्वान् सः विश्वानि[11] भुवनानि अभि पश्यति । अप विध्यति च अप्रियान् अयजमानान् कर्ते[11] इति ॥ ८ ॥

---

१-१. °जमानान्त वि[1]; °जमनानान्त वि[2] अ[1]. २-२. नास्ति मूको. ३. अनाक्षा वि[2] अ[1]; अनक्ष वि[1]. ४. नास्ति वि[2] अ[1]; बहुधारं वि[1]. ५. °मानानां मूको. ६ नास्ति वि[1]. ७. प्रेरयन्ति वि[2] अ[1]. ८. °कर्मणा वि[2] अ[1]; कर्मणः वि[1]. ९-९. किञ्चित् वि[2] अ[1]. १०. नास्ति वि[1]. ११. तु. ऋ १, १२१, १३; २, २९, ६.

ऋतस्य तन्तुर्विततः पवित्र आ जिह्वाया अग्रे वरुणस्य मायया ।
धीराश्चित् तत् समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभुः ॥ ९ ॥

ऋतस्य । तन्तुः । विऽततः । पवित्रे । आ । जिह्वायाः । अग्रे । वरुणस्य । मायया ।
धीराः । चित् । तत् । समऽइनक्षन्तः । आशत । अत्र । कर्तम् । अव । पदाति । अप्रऽभुः ॥

वेङ्कट० यज्ञस्य तनिता विस्तृतः अन्तरिक्षे वरुणस्य जिह्वायाः[1] अग्रे कर्मणा। वरुणस्य जिह्वाग्रे[2] तद्यदापो[3] नाम यासु सोमो वसतीति[4] । धीराः एव तत् पदं समाप्नुवन्तो गच्छन्ति। नक्षतिर्गतिकर्मा ( तु. निघ २,१४ ) । यः पुनः कर्मणि अप्रभुः[5] भवति सोऽयम् अस्मिन्नेव लोके नरके पतति, नोपरि गच्छति ॥ ९ ॥

[6]इति सप्तमाष्टके द्वितीयाध्याये त्रिंशो वर्गः[6] ॥

[ ७४ ]

[1]कक्षीवान् दैर्घतमस ऋषिः । पवमानः सोमो देवता । जगती छन्दः, अष्टमी त्रिष्टुप्[1] ।

शिशुर्न जातोऽव चक्रदद्वने स्वर्यद्वाज्यरुषः सिषासति ।
दिवो रेतसा सचते पयोवृधा तमीमहे सुमती शर्म सप्रथः ॥ १ ॥

शिशुः । न । जातः । अव । चक्रदत् । वने । स्वः । यत् । वाजी । अरुषः । सिसासति ।
दिवः । रेतसा । सचते । पयःऽवृधा । तम् । ईमहे । सुऽमती । शर्म । सऽप्रथः ॥ १ ॥

वेङ्कट० कक्षीवान्। शिशुः इव जातः अव क्रन्दति उदके, स्वर्गं लोकम् यदा अयम् अश्वः गमनशीलः सम्भक्तुमिच्छति । सोऽयं द्युलोकाद् उदकेन सह आगच्छति गवामोषधीनां च क्षीरस्य वर्धकेन । तम् याचामहे शोभनया स्तुत्या गृहम् सर्वतः पृथुतमम् ॥ १ ॥

दिवो यः स्कम्भो धरुणः स्वातत आपूर्णो अंशुः पर्येति विश्वतः ।
सेमे मही रोदसी यक्षदावृता समीचीने दाधार समिषः कविः ॥ २ ॥

दिवः । यः । स्कम्भः । धरुणः । सुऽआततः । आऽपूर्णः । अंशुः । परिऽएति । विश्वतः ।
सः । इमे इति । मही इति । रोदसी इति । यक्षत् । आऽवृता । समीचीने इति सम्ऽईचीने ।
दाधार । सम् । इषः । कविः ॥ २ ॥

वेङ्कट० दिवः विष्टम्भः यः धारकः सुष्ठु विततः सम्पूर्णः अंशुः परिगच्छति सर्वतः, सः इमे महत्यौ द्यावापृथिव्यौ कर्मणा यजति । स सङ्गते धारयति । सोऽयम् सम् प्रयच्छतु अन्नानि कविः ॥ २ ॥

---

१. हिज्वाला वि[2] अ[1]. २. [०]ह्वामग्रे मूको. ३. [०]दावो मूको. ४. [०]सती वि[1,2]; सतीवरीः अ[1], ५. [०]प्रभु मूको. ६-६. नास्ति मूको.

महि प्सरः सुकृतं सोम्यं मधूर्वी गव्यूतिरदितेर्ऋतं यते ।
ईशे यो वृष्टेरित उस्रियो वृषापां नेता य इतऊतिर्ऋग्मियः ॥ ३ ॥

महि । प्सरः । सुऽकृतम् । सोम्यम् । मधु । उर्वी । गव्यूतिः । अदितेः । ऋतम् । यते ।
ईशे । यः । वृष्टेः । इतः । उस्रियः । वृषा । अपाम् । नेता । यः । इतःऽऊतिः । ऋग्मियः ॥३॥

वेङ्कट० महत् पानीयम् सुकृतम् सोममयम् मधु [1]विस्तीर्णश्च मार्गः[1] पृथिव्याः भवति यज्ञम् सङ्गच्छते । ईश्वरो भवति यः वृष्टेः इमं लोकं प्रत्यापतन्त्याः, गोहितः वृषा अपाम् नेता यः इतः गच्छन् स्तोतव्यः, तस्य पानीयम् इति ॥ ३ ॥

आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं वि जायते ।
समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवः ॥ ४ ॥

आत्मन्ऽवत् । नभः । दुह्यते । घृतम् । पयः । ऋतस्य । नाभिः । अमृतम् । वि । जायते ।
सम्ऽईचीनाः । सुऽदानवः । प्रीणन्ति । तम् । नरः । हितम् । अव । मेहन्ति । पेरवः ॥ ४ ॥

वेङ्कट० सारवत् घृतम् पयः च नभसः दुह्यते । यज्ञस्य बन्धकम् उदकम् च प्रादुर्भवति । तम् इमं सोमं सङ्गताः यजमानाः तर्पयन्ति । नेतारः रक्षकाः पार्थिवमुदकम् रश्मयः अव वर्षन्ति इति ॥ ४ ॥

अरावीदंशुः सचमान ऊर्मिणा देवाव्यं मनुषे पिन्वति त्वचम् ।
दधाति गर्भमदितेरुपस्थ आ येन तोकं च तनयं च धामहे ॥ ५ ॥

अरावीत् । अंशुः । सचमानः । ऊर्मिणा । देवऽअव्यम् । मनुषे । पिन्वति । त्वचम् ।
दधाति । गर्भम् । अदितेः । उपऽस्थे । आ । येन । तोकम् । च । तनयम् । च । धामहे ॥५॥

वेङ्कट० रौति सोमः सङ्गच्छमानः उदकेन, देवानां रक्षिकाम् आत्मनः त्वचम् मनुष्याय क्षरति । दधाति गर्भम् अदितेः उपस्थे ओषधीषु, येन गर्भेण वयं पुत्रम् पौत्रम् च धारयामः ॥ ५ ॥

[2]इति सप्तमाष्टके द्वितीयाध्याये एकत्रिंशो वर्गः[2] ॥

सहस्रधारेऽव ता असश्चतस्तृतीये सन्तु रजसि प्रजावतीः ।
चतस्रो नाभो निहिता अवो दिवो हविर्भरन्त्यमृतं घृतश्चुतः ॥ ६ ॥

सहस्रऽधारे । अव । ताः । असश्चतः । तृतीये । सन्तु । रजसि । प्रजाऽवतीः ।
चतस्रः । नाभः । निऽहिताः । अवः । दिवः । हविः । भरन्ति । अमृतम् । घृतऽश्चुतः ॥ ६ ॥

---

1-1. °स्तीर्णं च मार्गं वि[2] अ[1]. 2-2. नास्ति मूको.

**वेङ्कट०** बहूदकधारे[1] तृतीये लोके वर्तमानाः असक्ताः अव सन्तु पृथिव्याम् पतन्तु उत्पादितप्रजाः[2]। कास्ता[3] इत्याह — चतस्रः दीप्तयः दिवः अधस्तात् निहिताः [4]हविः भरन्ति[4] देवानाम्, ओषधीषु च अमृतम् उदकस्य च्यावयित्र्यः ॥ ६ ॥

श्वेतं रूपं कृणुते यत् सिषासति सोमो मीढ्वाँ असुरो वेद भूमनः ।
धिया शमी सचते सेमभि प्रवद् दिवस्कवन्धमव दर्षदुद्रिणम् ॥ ७ ॥

श्वेतम् । रूपम् । कृणुते । यत् । सिसासति । सोमः । मीढ्वान् । असुरः । वेद । भूमनः ।
धिया । शमी । सचते । सः । ईम् । अभि । प्रऽवत् । दिवः । कवन्धम् । अव । दर्षत् । उद्रिणम् ॥

**वेङ्कट०** [5]श्वेतम् रूपम्[5] करोति, यदा सम्भक्तुमिच्छति । आगते हि[6] श्वेतवर्णे सोमे समीपस्थानां श्वेतं रूपं भवति तत्तेजसानुरञ्जितानाम्[7] । सोमः सेक्ता प्राज्ञः प्रयच्छति बहुधनम् । सोऽयं प्रज्ञानेन कर्माणि अभि सेवते उत्कृष्टानि । अन्तरिक्षाच्च मेघम् अव दारयति विवृतद्वारं करोति उदकवन्तम् इति ॥ ७ ॥

अध श्वेतं कलशं गोभिरक्तं कार्ष्मन्ना वाज्यक्रमीत् ससवान् ।
आ हिन्विरे मनसा देवयन्तः कक्षीवते शतहिमाय गोनाम् ॥ ८ ॥

अध । श्वेतम् । कलशम् । गोभिः । अक्तम् । कार्ष्मन् । आ । वाजी । अक्रमीत् । ससऽवान् ।
आ । हिन्विरे । मनसा । देवऽयन्तः । कक्षीवते । शतऽहिमाय । गोनाम् ॥ ८ ॥

**वेङ्कट०** सम्प्रति सोमसंसर्गात् श्वेतम् द्रोणकलशम् उदकैः सम्पृक्तम् । कार्ष्मशब्दः[8] काष्ठावचनः, यां योद्धारः[9] आजिं धावन्तो गन्तुमिच्छन्ति । काष्ठायाम् आ क्रमते[10] कश्चिद् अश्वः युद्धं भजन्निति । द्रोणकलशे पततीत्यर्थः । आभिमुख्येन प्रेरयन्ति मनसा देवयन्तः ऋत्विजः, कक्षीवते बहुगमनाय सोमश्च पशूनिति ॥ ८ ॥

अद्भिः सोम पपृचानस्य ते रसोऽव्यो वारं वि पवमान धावति ।
स मृज्यमानः कविभिर्मदिन्तम स्वदस्वेन्द्राय पवमान पीतये ॥ ९ ॥

अत्ऽभिः । सोम । पपृचानस्य । ते । रसः । अव्यः । वारम् । वि । पवमान । धावति ।
सः । मृज्यमानः । कविऽभिः । मदिन्ऽतम । स्वदस्व । इन्द्राय । पवमान । पीतये ॥ ९ ॥

---

१. पाठः पुनरुक्तः वि[२] अ[१]. २. °प्रजा वि[२] अ[१]; °तप्रज्ञाः वि[१]. ३. कान्त्या वि[२] अ[१]; कस्ता वि[१]. ४. °भंर वि[१]; °भरणं अ[१]; °मंवन्ति वि[१]. ५-५. श्वेतरूपं मूको. ६. नास्ति वि[१]. ७. °नुरहिता° वि[२] अ[१]; °नु रञ्जिता° वि[१]. ८. कार्षं शब्द वि[२] अ[१]; काष्मशब्द वि[१]. ९. धारन्तो वि[२] धारयन्तो अ[१]. १०. क्रमेत वि[२] अ[१].

**वेङ्कट०** [1]अद्भिः सोम![1] सम्पृच्यमानस्य[2] तव रसः पवमान! अवेः वालम् वि धावति। सः त्वम् मृज्यमानः कविभिः हे मादयितृतम! प्रियरसो भव इन्द्रस्य पवमान! पानार्थम् ॥ ९ ॥

[3]इति सप्तमाष्टके द्वितीयाध्याये द्वात्रिंशो वर्गः[3] ॥

[ ७५ ]

[1]कविर्भार्गव ऋषिः। पवमानः सोमो देवता। जगती छन्दः[1]।

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ १ ॥

अभि। प्रियाणि। पवते। चनःऽहितः। नामानि। यह्वः। अधि। येषु। वर्धते।
आ। सूर्यस्य। बृहतः। बृहन्। अधि। रथम्। विष्वञ्चम्। अरुहत्। विऽचक्षणः ॥ १ ॥

**वेङ्कट०** कविर्भार्गवः। अभि पवते प्रियाणि उदकानि चनसे हितः, महान् येषु अन्तरिक्षेषु अयम् अधि वर्धते[4]। अपां[2] मध्ये सोमो वसति। आ रोहति सूर्यस्य महतः महान् उपरि रथम् विष्वग्गमनं[6] विद्रष्टा [7]सोम इति[7] ॥ १ ॥

ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः।
दधाति पुत्रः पित्रोरपीच्यं१ नाम तृतीयमधि रोचने दिवः ॥ २ ॥

ऋतस्य। जिह्वा। पवते। मधु। प्रियम्। वक्ता। पतिः। धियः। अस्याः। अदाभ्यः।
दधाति। पुत्रः। पित्रोः। अपीच्यम्। नाम। तृतीयम्। अधि। रोचने। दिवः ॥ २ ॥

**वेङ्कट०** यज्ञस्य जिह्वास्थानीयः प्रियम् मधु क्षरति शब्दकृत् अस्य कर्मणः पालयिता [8]रक्षोभिर्हिंसितुमशक्यः। तत्र[8] धारयति पुत्रः यजमानः मातापित्रोः अन्तर्हितम् यत् नाम। तौ न जानीतो नामकरणवेलायाम्। तत् तृतीयम् नाम दिवः रोचने सोमे अधि धारयतीति[9]। 'सोमयाजीति तृतीयमस्य नाम' इति बौधायनः ( तु. बौधायनीय-गृह्यशेषसूत्रम् १,११,४-७ ) ॥ २ ॥

अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमानः कोश आ हिरण्यये।
अभीमृतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजति ॥ ३ ॥

अव। द्युतानः। कलशान्। अचिक्रदत्। नृऽभिः। येमानः। कोशे। आ। हिरण्यये।
अभि। ईम्। ऋतस्य। दोहनाः। अनूषत। अधि। त्रिऽपृष्ठः। उषसः। वि। राजति ॥ ३ ॥

---

१-१. नास्ति वि[2] अ[1].　२. पृच्यमा° वि[1].　३-३. नास्ति मूको.　४. वर्तते वि[1].
५. वा मूको.　६. विश्वगाम वि[2]; विश्वगागमनं अ[1].　७-७. भवति वि[1].　८-८. °शक्यसूत्रं वि[2] अ[1].
९. °रमेती° मूको.

वेङ्कट० अव क्रन्दति दीप्यमानः द्रोणकलशान्[1] प्रति। ऋत्विग्भिः नियम्यमानः हिरण्मये कोशे अधिषवणचर्मणि आ पवते। तस्य हिरण्मयत्वम् 'हिरण्यपाणिरभिषुणोति' इति हिरण्यसम्बन्धात्। तम् अभि स्तुवन्ति सत्यभूतस्य अस्य दोग्धार ऋत्विजः। 'ग्रावाणो वत्सा ऋत्विजो दुहन्ति' (तै ६,२,११,४) इति ब्राह्मणम्। सोऽयम् त्रिपृष्ठः त्रिषवणपृष्ठः अहानि प्रकाशयति ॥ ३ ॥

अद्रिभिः सुतो मतिभिश्चनोहितः प्ररोचयन् रोदसी मातरा शुचिः।
रोमाण्यव्या समया वि धावति मधोर्धारा पिन्वमाना दिवेदिवे ॥ ४ ॥

अद्रिऽभिः। सुतः। मतिऽभिः। चनःऽहितः। प्रऽरोचयन्। रोदसी इति। मातरा। शुचिः।
रोमाणि। अव्या। समया। वि। धावति। मधोः। धारा। पिन्वमाना। दिवेऽदिवे ॥ ४ ॥

वेङ्कट० ग्रावभिः सुतः स्तोतृभिः चनसे हितः प्ररोचयन् द्यावापृथिव्यौ निर्मात्र्यौ शुचिः रोमाणि अविमयानि[2] समया वि धावति। सोमस्य धारा तेषु पवते पवमानान्वहं[3] दीर्घसत्रेष्विति ॥ ४ ॥

परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम्।
ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ॥ ५ ॥

परि। सोम। प्र। धन्व। स्वस्तये। नृऽभिः। पुनानः। अभि। वासय। आऽशिरम्।
ये। ते। मदाः। आहनसः। विऽहायसः। तेभिः। इन्द्रम्। चोदय। दातवे। मघम् ॥ ५ ॥

वेङ्कट० [4]परि प्र गच्छ[4] सोम! अविनाशाय। नृभिः पूयमानः आच्छादय च आशिरम्। ये ते मदाः शत्रूणामाभिमुख्येन हन्तारः। 'वञ्चनवन्तः'[5] इति यास्कः (४,१५)। महान्तः तैः इन्द्रम् प्रेरय दातुम् धनम् इति ॥ ५ ॥

[6]इति सप्तमाष्टके द्वितीयाध्याये त्रयस्त्रिंशो वर्गः[6] ॥

व्याख्यद् द्वितीयमध्यायं सप्तमस्याष्टकस्य सः।
मित्रावरुणयोर्वंशे मातुर्यस्य समुद्भवः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके द्वितीयोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके द्वितीयोऽध्यायः ॥



---

१. द्रोणानि वि[२] अ[१]; द्रोणकलशानि वि[३]. २. अपिमयानि मूको. ३. °वमानान्वह वि[२] अ[१]; °मानावाहान् वि[३]. ४-४. परिप्रच्छ वि[२] अ[१]. ५. वचनेवन्तः वि[२] अ[१]; वाचनवन्तः वि[३]. ६-६. नास्ति मूको.

[1]अथ तृतीयोऽध्यायः[1] ।

वेङ्क०

'धर्ता दिवः [2]पवते'ऽथ[2] व्याचिख्यासति माधवः ।
अश्रूयमाणदेवेषु वाच्यं मन्त्रेषु दर्शयन् ॥ १ ॥

ऋषिर्यस्य गुणान् ब्रूते यस्माच्चार्थमभीप्सति[3] ।
निवेशयति यन्नाम[4] तामाहुस्तस्य देवताम् ॥ २ ॥

'अग्निमीळे पुरोहितम्'[5], 'वायवा याहि दर्शत'[6] ।
'इन्द्रमिद् गाथिनो[7] बृहत्'[8] 'सूर्य आत्मे(त्मा'[9] इ)ति ता ऋचः ॥३॥

[10]श्रुतेऽपि नाम्न्यतात्पर्ये[10] न[11] सा भवति देवता ।
दानस्तुतिषु दृष्टानि नामान्यत्र निदर्शनम् ॥ ४ ॥

'अर्हन्नग्ने पैजवनस्य दानम्'[12], 'भद्रमिदं रुशमा अग्ने अक्रन्'[13] ।
'आसङ्गो अग्ने दशभिः सहस्रैः'[14], 'बृहदस्मै वय इन्द्रो दधाति'[15] ॥५॥

'आ पुत्रा अग्ने'[16] इत्यत्र तथाग्निः सम्प्रकीर्तितः ।
मण्डले [17]पावमाने तु[17] बहवः कीर्तितास्तथा[18] ॥ ६ ॥

अदृष्टे नाम्नि सूक्तेन देवताया विनिश्चयः ।
[19]'सुरूपकृत्नुम्'† इत्याद्या[19] ऋचस्तत्र निदर्शनम् ॥ ७ ॥

यद्यन्यदेवते[20] सूक्ते देवतानाम पश्यति ।
निर्ब्रूयात् प्रकृतायां तत् 'तावश्विना भद्रहस्ता'[21] ॥ ८ ॥

वैश्वदेवेषु सूक्तेषु देवतां देवतागुणैः ।
प्रातिस्विकेषु सूक्तेषु दृष्टैर्जानन्ति पण्डिताः ॥ ९ ॥

'बभ्रुरेको'[22] वदत्याद्या सौम्याग्नेयी तदुत्तरा ।
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ॥ १० ॥

---

१-१. श्रीरस्तु ऋग्भाष्ये सप्तमाष्टके तृतीयोध्यायः प्रारभ्यते अ[1]. २-२. पवते वि[2] अ[1] वेंऋअ. ३. °मभीप्सते वेंऋअ; °मपीप्सति वि[1]. ४. तन्नाम वि[2] अ[1]. ५. ऋ १, १, १. ६. ऋ १,२,१. ७. °द्गाथिन वि[2]; °द्गाथिनो अ[1]. ८. ऋ १,७,१. ९. ऋ १,११५,१. १०-१० श्रवे विनाप्यतात्पर्ये वि[2]; श्रवे विनाम्यतात्पर्ये अ[1]. ११. नास्ति वि[2]. १२. ऋ ७,१८,२२. १३. ऋ ५,३०,१२. १४. ऋ ८,१,३३ १५. ऋ १,१२५,२. १६. ऋ १,१६४,११. १७-१७. °नेन्ये वि[1] अ[1]; °नेन्य वि[2]. १८. संप्रकीर्तिताः वि[2]. १९-१९. नास्ति वि[2] अ[1]. † ऋ १,४,१. २०. °यदैव° वेंऋअ. २१. ऋ १,१०९,४. २२. ऋ ८,२९,१.

नवमी मैत्रावरुण्यृक् दशमी चातिसंस्तवः ।
सर्वासु देवतानाम द्विपदासु न दृश्यते ॥ ११ ॥

यथा ब्राह्मणवाक्यानां नास्ति काचन देवता ।
तथैव नास्ति केषांचित् 'चतुरश्चिद् ददमानात्'[१] ॥ १२ ॥

'अध स्वप्नस्य निर्विदे'[२] 'कृषन्नित् फाल आशितम्'[३] ।
दुरुक्तनिन्दा क्रियते चतुरश्चित्प्रसङ्गतः ॥ १३ ॥

'अध स्वप्नस्य निर्विदे'[२] कदर्यो निन्द्यतेऽनया ।
'कृषन्नित् फाल आशितम्'[३] दानमेषा प्रशंसति ॥ १४ ॥[४]

'अन्यवस्थाः प्र जायन्ते'[५] सूक्तमाग्नेयमुच्यते ।
तत्राद्याभिश्चतसृभिर्[६] जरात्मीया प्रदर्शिता ॥ १५ ॥

अन्त्ययाऽग्निः श्मशानस्थः 'कीळन्नो रश्म आ भुवः'[७] ।
आग्नेयत्वन्तु सूक्तस्य मनस्यग्नेः समागमात् ॥ १६ ॥

जीर्णो वध्रिः श्मशानेऽग्निर्धक्ष्यतीति भयान्वितः ।
प्रदर्शयत्यवस्थां[८] तां 'तुष्टावाग्निं तथाऽन्त्यया[९] ॥ १७ ॥

'शासद्वह्निर्'[१०] इदं सूक्तम् ऐन्द्रं तत्र प्रसङ्गतः ।
स्मार्तोऽर्थः कथ्यते कश्चिद् ऋग्भ्यां द्वाभ्यां महर्षिणा[११] ॥ १८ ॥

करोति पुत्रिकां नारीं यथा दुहितरं तथा ।
तस्यां सिञ्चति रेतश्च तच्छासदिति कीर्तितम् ॥ १९ ॥

रिक्थस्य[१२] दुहितुर्दानं नेत्यृचि प्रतिषिध्यते ।
तस्यां चैव यवीयांसं भ्रातरं ज्येष्ठवत् सुतम् ॥ २० ॥

'इन्द्रापर्वता बृहता'[१३] सूक्तमैन्द्रमिदं विदुः ।
तत्रानुशास्ति कुशिकान् 'उप प्रेत( तं[१४] इ)ति कौशिकः ॥ २१ ॥

विश्वामित्रो ददर्शास्मिन् सूक्ते नानाविधा ऋचः ।
नानाविधैरभिप्रायैः सन्ति[१५] यासु न[१६] देवताः ॥ २२ ॥

---

१. ऋ १,४१,९. २. ऋ १,१२०,१२. ३. ऋ १०,११७,७. ४. नास्ति मूको. ५. ऋ ५,१९,१. ६. …तसृभि° वि[१] अ[१]. ७. ऋ ५,१९.५. ८. °र्शयन्त्र° वि[१]. ९-९. °ग्निमथा° वि[२]; °ग्निर्यथा° अ[१]; 'न्गिमथा° वि[१]. १०. ऋ ३,३१,१. ११. नास्ति अ[१]; शासदिति वि[११]. १२. रिक्त-स्य वि[२] अ[१]; वेंऋअ. १३. ऋ ३,५३,१. १४. ऋ ३,५३,११. १५. सन्तु वि[१]. १६. नास्ति वि[१].

वदन्ति आत्मकर्माणि 'प्राता रत्नं प्रातरित्वा'[१]।
'नाहमतो निरये(या)'[२] इ)ति तादृशाः[३] सन्ति चापराः ॥ २३ ॥
शौनकस्तत्र वदति सूक्ते यस्मिन्नृचः स्थिताः।
देवतामाश्रयन्ते ताः स्तुतां सूक्तेन तामिति ॥ २४ ॥

[ ७६ ]

[४]कविर्भार्गव ऋषिः । पवमानः सोमो देवता । जगती छन्दः[४] ।

धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुते नदीष्वा ॥ १ ॥

धर्ता । दिवः । पवते । कृत्व्यः । रसः । दक्षः । देवानाम् । अनुऽमाद्यः । नृऽभिः ।
हरिः । सृजानः । अत्यः । न । सत्वऽभिः । वृथा । पाजांसि । कृणुते । नदीषु । आ ॥ १ ॥

वेङ्कट० कविः । धर्ता[५] अन्तरिक्षात् पवते यजमानैः कर्तव्यः रसः सोमो[६] वर्धनीयः देवार्थं स्तोतव्यः मनुष्यैः । हरितवर्णः सृज्यमानः अश्वः इव सादिभिः[७] अनायासेन वेगान् आत्मीयान् कुरुते वसतीवरीषु निर्गच्छतीति ॥ १ ॥

शूरो न धत्त आयुधा गभस्त्योः स्वः सिषासन् रथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥

शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्वरिति स्वः । सिसासन् । रथिरः । गोऽइष्टिषु ।
इन्द्रस्य । शुष्मम् । ईरयन् । अपस्युऽभिः । इन्दुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥ २ ॥

वेङ्कट० [८]युद्धं प्रविशन् शूरः इव आयुधानि[८] धारयति बाह्वोः स्वर्गम्[९] सम्भक्तुमिच्छन् रथवान् दिवसागमनेषु[१०]। इन्द्रस्य बलम् प्रेरयन् कर्मेच्छुभिः इन्दुः प्रेर्यमाणो गोभिः अज्यते प्राज्ञैः ॥ २ ॥

इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
प्र णः पिन्व विद्युदभ्रेव रोदसी धिया न वाजाँ उप मासि शश्वतः ॥ ३ ॥

इन्द्रस्य । सोम । पवमानः । ऊर्मिणा । तविष्यमाणः । जठरेषु । आ । विश ।
प्र । नः । पिन्व । विऽद्युत् । अभ्राऽइव । रोदसी इति । धिया । न । वाजान् । उप । मासि । शश्वतः ॥ ३ ॥

---

१. ऋ १,१२५,१. २. ऋ ४,१८,२. ३. °शाः मूको. ४-४. नास्ति मूको. ५. धत्ता मूको. ६. नास्ति वि[१]. ७. साधिभिः वि[१]. ८-८. प्रविश···युधा° वि[१] अ[१]. ९. सर्ग मूको. १०. तु. वें ऋ ५, १३,५; नास्ति वि[१].

वेङ्कट० इन्द्रस्य सोम! पवमानः धारया वर्धिष्यमाणः जठरेषु आ विश। [1]प्र धुक्ष्व अस्माकं[1] द्यावापृथिव्यौ, यथा विद्युत् अभ्राणि दोग्धि। कर्मणा इदानीम् अस्माकम् उप[2] कुरु बहूनि अन्नानि ॥ ३ ॥

विश्वस्य राजा पवते स्वर्दृश ऋतस्य धीतिमृषिषाळवीवशत्।
यः सूर्यस्यासिरेण मृज्यते पिता मतीनामसमष्टकाव्यः ॥ ४ ॥

विश्वस्य। राजा। पवते। स्वःऽदृशः। ऋतस्य। धीतिम्। ऋषिषाट्। अवीवशत्।
यः। सूर्यस्य। असिरेण। मृज्यते। पिता। मतीनाम्। असमष्टऽकाव्यः ॥ ४ ॥

वेङ्कट० सर्वस्य राजा पवते स्वर्दृशः इन्द्रस्य [3]पानाय। इन्द्रस्य[3] कर्म यज्ञम् ऋषिषाट्[4] कामयते, य ऋषीनभिभवति। 'ब्रह्मा देवानां पदवीः कवीनाम्' (ऋ ९,९६,६) इति मन्त्रः। यः सूर्यस्य उत्क्षेपकेण तेजसा शोध्यते पालयिता स्तोतॄणाम् अन्यैः कविभिः अव्याप्तकर्मा ॥ ४ ॥

वृषेव यूथा परि कोशमर्षस्यपामुपस्थे वृषभः कनिक्रदत्।
स इन्द्राय पवसे मत्सरिन्तमो यथा जेषाम समिथे त्वोतयः ॥ ५ ॥

वृषाऽइव। यूथा। परि। कोशम्। अर्षसि। अपाम्। उपऽस्थे। वृषभः। कनिक्रदत्।
सः। इन्द्राय। पवसे। मत्सरिन्ऽतमः। यथा। जेषाम। समऽइथे। त्वाऽऊतयः ॥ ५ ॥

वेङ्कट० वृषभः इव यूथानि परि गच्छति कलशम् अपाम् उपस्थे अन्तरिक्षे वर्षिता शब्दं कुर्वन्। सः त्वम् इन्द्राय पवसे[5] अत्यन्तं मदयिता। यथा जयेम सङ्ग्रामे शत्रुं त्वया रक्षिताः, तथा पवसे इति ॥ ५ ॥

[6]इति सप्तमाष्टके तृतीयाध्याये प्रथमो वर्गः[6] ॥

[ ७७ ]

[1]कविर्भार्गव ऋषिः। पवमानः सोमो देवता। जगती छन्दः[1]।

एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टरः।
अभीमृतस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसेव धेनवः ॥ १ ॥

एषः। प्र। कोशे। मधुऽमान्। अचिक्रदत्। इन्द्रस्य। वज्रः। वपुषः। वपुःऽतरः।
अभि। ईम्। ऋतस्य। सुऽदुघाः। घृतऽश्चुतः। वाश्राः। अर्षन्ति। पयसाऽइव। धेनवः ॥ १ ॥

---

१-१. पृथुक्षास्माकं वि[२] अ[१]; प्रयुक्षास्माकं वि[१]. २. उपा वि[२]. ३-३. पानस्यं वि[१]. ४. ऋषीणां वि[१]. ५. प्रवते मूको. ६-६. नास्ति मूको.

**वेङ्कट०** अयं प्रकर्षेण शब्दायते कलशे मधुरसः स्यन्दमानः इन्द्रस्य बलकरः बीजानां वप्तुः अन्यस्माद् अत्यन्तं वप्ता। सोमो ह्योषधीषु गर्भम् आवपति। तस्यास्य सत्यस्य[1] अभि गच्छन्ति धाराः सुदोहा[2] उदकस्य निर्गमयित्र्यः शब्दायमानाः, यथा पयसा युक्ताः धेनवः आगच्छन्ति ॥ १॥

स पूर्व्यः पवते यं दिवस्परि श्येनो मथायदिषितस्तिरो रजः ।
स मध्व आ युवते वेविजान इत् कृशानोरस्तुर्मनसाह बिभ्युषा ॥ २ ॥

सः । पूर्व्यः । पवते । यम् । दिवः । परि । श्येनः । मथायत् । इषितः । तिरः । रजः ।
सः । मध्वः । आ । युवते । वेविजानः । इत् । कृशानोः । अस्तुः । मनसा । अह । बिभ्युषा ॥ २ ॥

**वेङ्कट०** सः प्रत्नः क्षरति, यम् सोमं द्युलोकात् श्येनः [3]परि अमथ्नात् मात्रा[3] प्रेषितः। तिरःकुर्वन् तृतीयं लोकं श्येनः मधूनि आ युवते पृथक्करोति दिवः चलन् कृशानोः सोमपालात् शराणां क्षेप्तुः भीतेन एव मनसा सहेति ॥ २ ॥

ते नः पूर्वास उपरास इन्दवो महे वाजाय धन्वन्तु गोमते ।
ईक्षेण्यासो अह्यो न चारवो ब्रह्मब्रह्म ये जुजुषुर्हविर्हविः ॥ ३ ॥

ते । नः । पूर्वासः । उपरासः । इन्दवः । महे । वाजाय । धन्वन्तु । गोऽमते ।
ईक्षेण्यासः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ॥ ३ ॥

**वेङ्कट०** ते नः प्रत्नाः ग्रावभिः सूयमानाः इन्दवः महते पशुमते अन्नाय निर्गच्छन्तु दर्शनीयाः स्त्रियः इव चारवः। [4]अहिः आहननाद् (तु. या २,१७) इत्युक्तम्[4]। आहन्ति[5] हि स्त्री पुमांसमिति। ये सर्वं स्तोत्रं सर्वं च हविः सेवन्ते ॥ ३ ॥

अयं नो विद्वान् वनवद्वनुष्यत इन्दुः सत्राचा मनसा पुरुष्टुतः ।
इनस्य यः सदने गर्भमादधे गवामुरुब्जमभ्यर्षति व्रजम् ॥ ४ ॥

अयम् । नः । विद्वान् । वनवत् । वनुष्यतः । इन्दुः । सत्राचा । मनसा । पुरुऽस्तुतः ।
इनस्य । यः । सदने । गर्भम् । आऽदधे । गवाम् । उरुब्जम् । अभि । अर्षति । व्रजम् ॥ ४ ॥

**वेङ्कट०** अयम् अस्माकं हन्तु विद्वान् हन्तुमिच्छतः शत्रून् इन्दुः बह्वञ्चता मनसा बहुभिः स्तुतः, यः अयम् ईश्वरस्याग्नेः सदने आवासस्थाने ओषधीषु गर्भम् आधत्ते पृथिव्यां वा। सोऽयं शत्रुभिरपहृतानां गवाम् उरुणः[6] पयसो जनकम् व्रजम् अभि गच्छति आजिहीर्षुः ॥ ४ ॥

---

१. तस्य वि[1]. २. सन्दोहा अ[1]. ३-३. पर्यबध्नान्मात्रा वि[2]; पर्यवध्नात्मात्रा अ[1]. ४-४. भिहि राहनादित्युक्तं वि[2]; हि राहननादित्युक्तं वि[1]; नास्ति अ[1]. ५ नास्ति वि[2] अ[1]. ६. अरूणः अ[1]; उरूणः वि[1].

च॒क्रिर्दि॒वः प॑वते॒ कृत्व्यो॒ रसो॑ म॒हाँ अद॑ब्धो॒ वरु॑णो हु॒रुग्य॒ते ।
असा॑वि मि॒त्रो वृ॒जने॑षु य॒ज्ञियोऽत्यो॒ न यू॒थे वृ॑ष॒युः कनि॑क्रदत् ॥ ५ ॥

च॒क्रिः । दि॒वः । प॒व॒ते॒ । कृ॒त्व्यः॑ । रसः॑ । म॒हान् । अद॑ब्धः । वरु॑णः । हु॒रुक् । य॒ते ।
असा॑वि । मि॒त्रः । वृ॒जने॑षु । य॒ज्ञियः॑ । अत्यः॑ । न । यू॒थे । वृ॒ष॒ऽयुः । कनि॑क्रदत् ॥ ५ ॥

**वेङ्कट०** कर्ता कामान् दिवः पवते कर्मण्यः रसः महान् अहिंसितः वारकः[1] कुटिलम् गच्छते जनाय अभिषुतः मित्रभूतः उपद्रवेषु यष्टव्यः अश्वः इव बडबायूथे[2] वृषभः शब्दं कुर्वन्निति ॥ ५ ॥

[3]इति सप्तमाष्टके तृतीयाध्याये द्वितीयो वर्गः[3] ॥

[ ७८ ]

[3]कविर्भार्गव ऋषिः । पवमानः सोमो देवता । जगती छन्दः[3] ।

प्र राजा॒ वाचं॑ ज॒नय॒न्नसि॑ष्यदद॒पो वसा॑नो अ॒भि गा इ॑यक्षति ।
गृ॒भ्णाति॑ रि॒प्रमवि॑रस्य॒ तान्वा॑ शु॒द्धो दे॒वाना॒मुप॑ याति निष्कृ॒तम् ॥ १ ॥

प्र । राजा॑ । वाच॑म् । ज॒नय॑न् । असि॒स्य॒द॒त् । अ॒पः । वसा॑नः । अ॒भि । गाः । इ॒य॒क्ष॒ति॒ ।
गृ॒भ्णाति॑ । रि॒प्रम् । अविः॑ । अ॒स्य॒ । तान्वा॑ । शु॒द्धः । दे॒वाना॑म् । उप॑ । या॒ति॒ । निः॒ऽकृ॒तम् ॥

**वेङ्कट०** प्र स्यन्दते राजा वाचम् जनयन् । वसतीवरीः आच्छादयन् अभि गच्छति स्तुतीः[4] । तस्यास्य अविमयेन वस्त्रेण रिप्रम् गृह्णाति पूयमानस्य तृणादिकं निरुणद्धि । अथ सः शुद्धः देवानाम् उपगच्छति स्थानम् ॥ १ ॥

इन्द्रा॑य सोम॒ परि॑ षिच्यसे॒ नृभि॑र्नृ॒चक्षा॑ ऊ॒र्मिः क॒विर॑ज्यसे॒ वने॑ ।
पू॒र्वीर्हि ते॑ स्रु॒तयः॒ सन्ति॒ यात॑वे स॒हस्र॒मश्वा॒ हर॑यश्चमू॒षदः॑ ॥ २ ॥

इन्द्रा॑य । सो॒म॒ । परि॑ । सि॒च्य॒से॒ । नृऽभिः॑ । नृ॒ऽचक्षाः॑ । ऊ॒र्मिः । क॒विः । अ॒ज्य॒से॒ । वने॑ ।
पू॒र्वीः । हि । ते॒ । स्रु॒तयः॑ । सन्ति॑ । यात॑वे । स॒हस्र॑म् । अश्वाः॑ । हर॑यः । च॒मू॒ऽसदः॑ ॥ २ ॥

**वेङ्कट०** इन्द्राय सोम! परि सिच्यसे ऋत्विग्भिः नृणां द्रष्टा । प्रेर्यमाणः कविः प्रेर्यसे उदके । बह्व्यः हि ते स्रुतयः सन्ति यातुम् । सहस्रम् च अश्वाः[5] हरणकुशलाः चमसेषु सीदतस्तव सन्तीति ॥ २ ॥

स॒मु॒द्रिया॑ अ॒प्सर॑सो मनी॒षिण॒मासी॑ना अ॒न्तर॒भि सोम॑मक्षरन् ।
ता ईं॑ हिन्वन्ति ह॒र्म्यस्य॑ स॒क्षणिं॒ याच॑न्ते सु॒म्नं पव॑मान॒मक्षि॑तम् ॥ ३ ॥

---

१. वारक मूको. २. बडबायूथे अ[1]; वडवायूथे वि[2]. ३-३. नास्ति मूको. ४. स्तुतिः मूको. ५. नास्ति वि[2] अ[1].

समुद्रियाः । अप्सरसः । मनीषिणम् । आसीनाः । अन्तः । अभि । सोमम् । अक्षरन् ।
ताः । ईम् । हिन्वन्ति । हर्म्यस्य । सक्षणिम् । याचन्ते । सुम्नम् । पवमानम् । अक्षितम् ॥ ३ ॥

वेङ्कट० अन्तरिक्ष्याः काश्चित् अप्सरसः मनीषिणम् यज्ञस्य अन्तः आसीनाः अभि क्षरन्ति अभिषूयमाणम् सोमम् । वसतीवर्यः ताः एनं प्रेरयन्ति यज्ञगृहस्य सेचनशीलम् । अथ ऋत्विजः तं सुखम् याचन्ते पवमानम् अक्षीणम् ॥ ३ ॥

गोजिन्नः सोमो रथजिद्धिरण्यजित् स्वर्जिदब्जित् पवते सहस्रजित् ।
यं देवासश्चक्रिरे पीतये मदं स्वादिष्ठं द्रप्समरुणं मयोभुवम् ॥ ४ ॥

गोऽजित् । नः । सोमः । रथऽजित् । हिरण्यऽजित् । स्वःऽजित् । अप्ऽजित् । पवते । सहस्रऽजित् ।
यम् । देवासः । चक्रिरे । पीतये । मदम् । स्वादिष्ठम् । द्रप्सम् । अरुणम् । मयःऽभुवम् ॥ ४ ॥

वेङ्कट० स्वरिति सुखमुच्यते, स्वर्गो वा । अस्माकं गवादीनां जेता सोमः पवते, यम् देवाः अकुर्वन् पानाय मदकरम् स्वादुतमम् द्रवणशीलम् अरुणवर्णम् सुखस्य भावयितारम् ॥ ४ ॥

एतानि सोम पवमानो अस्मयुः सत्यानि कृण्वन् द्रविणान्यर्षसि ।
जहि शत्रुमन्तिके दूरके च य उर्वीं गव्यूतिमभयं च नस्कृधि ॥ ५ ॥

एतानि । सोम । पवमानः । अस्मऽयुः । सत्यानि । कृण्वन् । द्रविणानि । अर्षसि ।
जहि । शत्रुम् । अन्तिके । दूरके । च । यः । उर्वीम् । गव्यूतिम् । अभयम् । च । नः । कृधि ॥

वेङ्कट० एतानि सोम! पवमानः अस्मत्कामः सत्यानि कुर्वन् धनानि पवसे । स त्वम् अन्तिके[1] [2]दूरके च यः शत्रुः[2], तं जहि । विस्तीर्णम् मार्गम् अभयम् च अस्माकं कुर्विति ॥ ५ ॥

[3]इति सप्तमाष्टके तृतीयाध्याये तृतीयो वर्गः[3] ॥

[ ७९ ]

[1]कविर्भार्गव ऋषिः । पवमानः सोमो देवता । जगती छन्दः[1] ।

अचोदसो नो धन्वन्त्विन्दवः प्र सुवानासो बृहद्दिवेषु हरयः ।
वि च नशन् न इषो अरातयोऽर्यो नशन्त सनिषन्त नो धियः ॥ १ ॥

अचोदसः । नः । धन्वन्तु । इन्दवः । प्र । सुवानासः । बृहत्ऽदिवेषु । हरयः ।
वि । च । नशन् । नः । इषः । अरातयः । अर्यः । नशन्त । सनिषन्त । नः । धियः ॥ १ ॥

---

१. °के च वि°[2]. २-२. दूरे च श° वि° अ°. ३-३. नास्ति मूको.

वेङ्कट० चोदनारहिता अप्रेरिताः अस्माकम् प्र यच्छन्तु इन्दवः सूयमानाः बृहद्दिवकुलजेषु हरितवर्णाः । वि नश्यन्तु च अस्माकम् अन्नस्य अदातारः[1] । अपि च ते अरयः नश्यन्तु, भजन्तां च अस्मदीयानि कर्माणीति ॥ १ ॥

प्र णो धन्वन्त्विन्दवो मदच्युतो धना वा येभिरर्वतो जुनीमसि ।
तिरो मर्तस्य कस्य चित् परिह्वृतिं वयं धनानि विश्वधा भरेमहि ॥ २ ॥

प्र । नः । धन्वन्तु । इन्दवः । मदऽच्युतः । धना । वा । येभिः । अर्वतः । जुनीमसि ।
तिरः । मर्तस्य । कस्य । चित् । परिऽह्वृतिम् । वयम् । धनानि । विश्वधा । भरेमहि ॥ २ ॥

वेङ्कट० प्र अर्षन्तु अस्माकम् इन्दवः मदस्य प्रेरकाः । अथ[2] धनानि वा वयं यैरिन्दुभिः शत्रोः [3]प्राप्नुमः । तिरः-कुर्वन्तः[3] मर्त्यस्य कस्य चित् अपि परिबाधाम् वयम् धनानि सर्वदा बिभृयाम ॥ २ ॥

उत स्वस्या अरात्या अरिर्हि ष उतान्यस्या अरात्या वृको हि षः ।
धन्वन् न तृष्णा समरीत ताँ अभि सोम जहि पवमान दुराध्यः ॥ ३ ॥

उत । स्वस्याः । अरात्याः । अरिः । हि । सः । उत । अन्यस्याः । अरात्याः । वृकः । हि । सः ।
धन्वन् । न । तृष्णा । सम् । अरीत । तान् । अभि । सोम । जहि । पवमान । दुःऽआध्यः ॥ ३ ॥

वेङ्कट० अपि च सः[4] सोमः स्वारातिं शत्रुम् अभिगच्छति । तथान्यमपि यजमानस्य शत्रुं बाधितेति[5] । अरातिशब्दः स्त्रीलिङ्गोपि दृष्टः । स्वरस्त्वन्यत्राप्यकारे दृश्यते—'नारातयस्तमिदं स्वस्ति' (ऋ २,३८,९) इति । प्रत्यक्षः 'उत्तरोऽर्धः' । तान्[6] निरुदक इव देशे गच्छतः तृष्णा सम् अभि प्राप्नोतु । सोम! जहि पवमान! दुर्बुद्धीनिति ॥ ३ ॥

दिवि ते नाभा परमो य आददे पृथिव्यास्ते रुरुहुः सानवि क्षिपः ।
अद्रयस्त्वा बप्सति गोरधि त्वच्य१प्सु त्वा हस्तैर्दुदुहुर्मनीषिणः ॥ ४ ॥

दिवि । ते । नाभा । परमः । यः । आऽददे । पृथिव्याः । ते । रुरुहुः । सानवि । क्षिपः ।
अद्रयः । त्वा । बप्सति । गोः । अधि । त्वचि । अप्ऽसु । त्वा । हस्तैः । दुदुहुः । मनीषिणः ॥

वेङ्कट० दिवि तव[7] समुच्छ्रिते देशे स वर्तते अंश उत्तमः, यः हविरादत्ते पृथिव्याः । ते रोहन्ति समुच्छ्रिते देशे क्षिप्ताः अंशवः । त्वाम् अभिषवणचर्मणि ग्रावाणो भक्षयन्ति । अप्सु त्वाम् हस्तैः दुहन्ति ऋत्विजः ॥ ४ ॥

एवा त इन्दो सुभ्वं सुपेशसं रसं तुञ्जन्ति प्रथमा अभिश्रियः ।
निदंनिदं पवमान नि तारिष आविस्ते शुष्मो भवतु प्रियो मदः ॥ ५ ॥

---

१. दातारः मूको. २. नास्ति वि[1]. ३-३. °प्नुवन्तिरस्कुर्वतो वि[1]. ४. नास्ति वि[2] अ[1]. ५. बाधते वि[2]. ६. उत्तरोऽधस्तात वि[2] अ[1]. ७. ते अ[1].

एव । ते । इन्दो इति । सुऽभ्वम् । सुऽपेशसम् । रसम् । तुञ्जन्ति । प्रथमाः । अभिऽश्रियः ।
निदम्ऽनिदम् । पवमान । नि । तारिषः । आविः । ते । शुष्मः । भवतु । प्रियः । मदः ॥ ५ ॥

**वेङ्कट०** एवं तव इन्दो! शोभनभवनम् सुरूपम् रसम्[1] प्रेरयन्ति प्रथममेव त्वाम् अभिश्रयन्तो ग्रावाणः । स त्वम् पवमान! सर्वं शत्रुं विनाशय । आविः भवतु तव शत्रूणां शोषकः प्रियः रसः ॥५॥

[2]इति सप्तमाष्टके तृतीयाध्याये चतुर्थो वर्गः[2] ॥

## [ ८० ]

[2]वसुर्भारद्वाज ऋषिः । पवमानः सोमो देवता । जगती छन्दः[2] ।

सोमस्य धारा पवते नृचक्षस ऋतेन देवान् हवते दिवस्परि ।
बृहस्पते रवथेना वि दिद्युते समुद्रासो न सवनानि विव्यचुः ॥ १ ॥

सोमस्य । धारा । पवते । नृऽचक्षसः । ऋतेन । देवान् । हवते । दिवः । परि ।
बृहस्पतेः । रवथेन । वि । दिद्युते । समुद्रासः । न । सवनानि । विव्यचुः ॥ १ ॥

**वेङ्कट०** वसुर्भारद्वाजः[3] । सोमस्य धारा पवते नृणां द्रष्टुः । सोऽयं यज्ञेन देवान् हवते द्युलोकात् । सोऽयम् बृहस्पतेः शब्देन सह वि द्योतते । [4]यदा वषट् बृहस्पतिः शब्दं[4] करोति । [5]तेन.मेन सोमेन[5] व्याप्तानि सवनानि यज्ञं व्याप्नुवन्ति, उदधयः इव पृथिवीमिति ॥ १ ॥

यं त्वा वाजिन्नघ्न्या अभ्यनूषताऽयोहतं योनिमा रोहसि द्युमान् ।
मघोनामायुः प्रतिरन् महि श्रव इन्द्राय सोम पवसे वृषा मदः ॥ २ ॥

यम् । त्वा । वाजिन् । अघ्न्याः । अभि । अनूषत । अयःऽहतम् । योनिम् । आ । रोहसि । द्युऽमान् ।
मघोनाम् । आयुः । प्रऽतिरन् । महि । श्रवः । इन्द्राय । सोम । पवसे । वृषा । मदः ॥ २ ॥

**वेङ्कट०** यम् त्वां बलवन्![6] गावः अभि स्तुवन्ति । त्वय्यागते यज्ञे आशिरार्थं स्थिताइशब्दायन्ते । स त्वं हिरण्मयेन पाणिना हतम् स्थानम् आ रोहसि दीप्तिमान् । स त्वं हविष्मताम् आयुः वर्धयन् महत् च अन्नम् इन्द्राय सोम! पवसे वर्षिता मदकरः । यद्वा अहन्तव्याः ब्राह्मणाः अघ्न्याः इति ॥ २ ॥

एन्द्रस्य कुक्षा पवते मदिन्तम ऊर्जं वसानः श्रवसे सुमङ्गलः ।
प्रत्यङ् स विश्वा भुवनाभि पप्रथे क्रीळन् हरिरत्यः स्यन्दते वृषा ॥ ३ ॥

आ । इन्द्रस्य । कुक्षा । पवते । मदिन्ऽतमः । ऊर्जम् । वसानः । श्रवसे । सुऽमङ्गलः ।
प्रत्यङ् । सः । विश्वा । भुवना । अभि । पप्रथे । क्रीळन् । हरिः । अत्यः । स्यन्दते । वृषा ॥३॥

---

१. रथं वि[1]. २-२. नास्ति मूको. ३. वसुभा° वि[1]. ४-४. यथा च षट्व्° वि[2] अ[1]; यथावष्मान् बृ° वि[1]. ५-५. त्रुटितम् वि[2] अ[1]. ६. °वन् मूको.

वेङ्कट० आ पवते इन्द्रस्य उदरे मदिन्तमः[1] रसम् आच्छादयन् अन्नार्थम् सुमङ्गलः। सः अयं दिव्युदितः[2] सर्वाणि भुवनानि प्रत्यागच्छन्[3] अभि प्रथते। क्रीडन् हरिः अतनशीलः स्यन्दते वर्षिता॥ ३॥

तं त्वा देवेभ्यो मधुमत्तमं नरः सहस्रधारं दुहते दश क्षिपः।
नृभिः सोम प्रच्युतो ग्रावभिः सुतो विश्वान् देवाँ आ पवस्वा सहस्रजित्॥ ४॥

तम्। त्वा। देवेभ्यः। मधुमत्ऽतमम्। नरः। सहस्रऽधारम्। दुहते। दश। क्षिपः।
नृऽभिः। सोम। प्रऽच्युतः। ग्रावऽभिः। सुतः। विश्वान्। देवान्। आ। पवस्व। सहस्रऽजित्॥

वेङ्कट० [4]तम् त्वा[4] देवेभ्यः मधुमत्तमम्[5] मनुष्याः सहस्रधारम् दुहते, दश च अङ्गुलयः। नृभिः सोम! प्रेरितः ग्रावभिः अभिषुतः [6]विश्वान् देवान् आ पवस्व[6] हे सहस्रस्य जेतः!॥ ४॥

तं त्वा हस्तिनो मधुमन्तमद्रिभिर्दुहन्त्यप्सु वृषभं दश क्षिपः।
इन्द्रं सोम मादयन् दैव्यं जनं सिन्धोरिवोर्मिः पवमानो अर्षसि॥ ५॥

तम्। त्वा। हस्तिनः। मधुऽमन्तम्। अद्रिऽभिः। दुहन्ति। अप्ऽसु। वृषभम्। दश। क्षिपः।
इन्द्रम्। सोम। मादयन्। दैव्यम्। जनम्। सिन्धोःऽइव। ऊर्मिः। पवमानः। अर्षसि॥ ५॥

वेङ्कट० तम् त्वा[7] सुहस्तस्य मधुमन्तम् ग्रावभिः दुहन्ति उदकेषु[8] वृषभम् दश अङ्गुलयः। शिष्टं स्पष्टम्॥ ५॥

[9]इति सप्तमाष्टके तृतीयाऽध्याये पञ्चमो वर्गः[9]॥

## [ ८१ ]

[9]वसुर्भारद्वाज ऋषिः। पवमानः सोमो देवता। जगती छन्दः, पञ्चमी त्रिष्टुप्[9]।

प्र सोमस्य पवमानस्योर्मय इन्द्रस्य यन्ति जठरं सुपेशसः।
दध्ना यदीमुन्नीता यशसा गवां दानाय शूरमुदमन्दिषुः सुताः॥ १॥

प्र। सोमस्य। पवमानस्य। ऊर्मयः। इन्द्रस्य। यन्ति। जठरम्। सुऽपेशसः।
दध्ना। यत्। ईम्। उत्ऽनीताः। यशसा। गवाम्। दानाय। शूरम्। उत्ऽअमन्दिषुः। सुताः॥

वेङ्कट० प्र यन्ति सोमस्य पवमानस्य ऊर्मयः इन्द्रस्य जठरम् सुरूपाः। यदाऽमी गवाम् यशसा[10] दध्ना सह उन्नीताः यजमानानां धनप्रदानाय[11] शूरम् इन्द्रम् उन्मादयन्ति[12] सुताः॥ १॥

---

१. मदिन्तरो वि[2] अ[1]. २ दिव्युदय वि[1]. ३. प्रत्यगच्छ° वि[1]. ४-४. त्वां तं अ[1]. ५. मधुमन्तं अ[1]. ६-६. देवानभिपवस्व वि[1]. ७. त्वां वि[2] अ[1]. ८. उदके वि[1]. ९-९. नास्ति मूको. १०. पयसा वि[2] अ[1]. ११. धनप्रदाना वि[1]; °प्रदातेन वि[2] अ[1]. १२. उन्मन्दन्ति वि[1].

अच्छा हि सोमः कलशाँ असिष्यददत्यो न वोळ्हा रघुवर्तनिर्वृषा ।
अथा देवानामुभयस्य जन्मनो विद्वाँ अश्नोत्यमुत इतश्च यत् ॥ २ ॥

अच्छ । हि । सोमः । कलशान् । असिस्यदत् । अत्यः । न । वोळ्हा । रघुऽवर्तनिः । वृषा ।
अथ । देवानाम् । उभयस्य । जन्मनः । विद्वान् । अश्नोति । अमुतः । इतः । च । यत् ॥२॥

**वेङ्कट०** कलशान् अभि[1] हि स्यन्दते सोमः अत्यः इव वोळ्हा लघुगमनः वृषा । अथ[2] देवानाम् उभयविधम् जातम् जानन् व्याप्नोति, यदिव आगच्छति यत् च पृथिव्या देवजातम् इति ॥ २ ॥

आ नः सोम पवमानः किरा वस्विन्दो भव मघवा राधसो महः ।
शिक्षा वयोधो वसवे सु चेतुना मा नो गयमारे अस्मत् परा सिचः ॥ ३ ॥

आ । नः । सोम । पवमानः । किर । वसु । इन्दो इति । भव । मघऽवा । राधसः । महः ।
शिक्ष । वयःऽधः । वसवे । सु । चेतुना । मा । नः । गयम् । आरे । अस्मत् । परा । सिचः ॥

**वेङ्कट०** आ विक्षिप अस्माकम् सोम! पवमानः [3]धनम् इन्दो![3] भव धनवान् महतो धनस्य दाता[4] । प्रयच्छ अन्नस्य धातः! परिचरते [5]कल्याणं प्रज्ञानेन[5] । मा परा सिचः धनम् अस्मत्तः दूरे इति ॥३॥

आ नः पूषा पवमानः सुरातयो मित्रो गच्छन्तु वरुणः सजोषसः ।
बृहस्पतिर्मरुतो वायुरश्विना त्वष्टा सविता सुयमा सरस्वती ॥ ४ ॥

आ । नः । पूषा । पवमानः । सुऽरातयः । मित्रः । गच्छन्तु । वरुणः । सऽजोषसः ।
बृहस्पतिः । मरुतः । वायुः । अश्विना । त्वष्टा । सविता । सुऽयमा । सरस्वती ॥ ४ ॥

**वेङ्कट०** आ गच्छन्तु अस्माकम् एते सुदानाः सङ्गताः, सरस्वती च[6] या शोभननिग्रहेति ॥ ४ ॥

उभे द्यावापृथिवी विश्वमिन्वे अर्यमा देवो अदितिर्विधाता ।
भगो नृशंस उर्व१न्तरिक्षं विश्वे देवाः पवमानं जुषन्त ॥ ५ ॥

उभे इति । द्यावापृथिवी इति । विश्वमिन्वे इति विश्वम्ऽइन्वे । अर्यमा । देवः । अदितिः । विऽधाता ।
भगः । नृऽशंसः । उरु । अन्तरिक्षम् । विश्वे । देवाः । पवमानम् । जुषन्त ॥ ५ ॥

**वेङ्कट०** उभे द्यावापृथिव्यौ सर्वव्यापिन्यौ, अर्यमप्रभृतयः, भगः च नृभिः शंसनीयः, विस्तीर्णम् अन्तरिक्षम्, सर्वे च देवाः पवमानम् सेवन्ते ॥ ५ ॥

[7]इति सप्तमाष्टके तृतीयाध्याये षष्ठो वर्गः[7] ॥

---

१. अही वि[2] अ[1]. २. अथा वि[1,2]. ३-३. नास्ति वि[1]. ४. दातः वि[2]. ५-५. °जेन प्रज्ञानं अ[1]. ६. नास्ति वि[2] अ[1]. ७-७. नास्ति मूको.

[ ८२ ]

¹वसुर्भारद्वाज ऋषिः । पवमानः सोमो देवता । जगती छन्दः, पञ्चमी त्रिष्टुप्¹ ।

असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारं पर्येत्यव्ययं श्येनो न योनिं घृतवन्तमासदम् ॥ १ ॥

असावि । सोमः । अरुषः । वृषा । हरिः । राजाऽइव । दस्मः । अभि । गाः । अचिक्रदत् ।
पुनानः । वारम् । परि । एति । अव्ययम् । श्येनः । न । योनिम् । घृतऽवन्तम् । आऽसदम् ॥१॥

वेङ्कट० अभिषुतः सोमः आरोचमानः² वृषा हरितवर्णः राजेव दर्शनीयः । सोऽयम् उदकानि अभि शब्दं करोति । पूयमानश्च वालम् परि गच्छति अविमयम् । श्येनः इव स्थानम् उदकवन्तम् आसत्तुं पवते ॥ १ ॥

कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
अपसेधन् दुरिता सोम मृळय घृतं वसानः परि यासि निर्णिजम् ॥ २ ॥

कविः । वेधस्या । परि । एषि । माहिनम् । अत्यः । न । मृष्टः । अभि । वाजम् । अर्षसि ।
अपऽसेधन् । दुःऽइता । सोम । मृळय । घृतम् । वसानः । परि । यासि । निःऽनिजम् ॥ २ ॥

वेङ्कट० कविः त्वं विधानकामनया परि गच्छसि मंहनीयं पवित्रम् । अत्यः इव परिमृष्टः अभि गच्छसि सङ्ग्रामम् । स त्वम् अपसेधन् दुरितानि सोम! सुखय । उदकम् वसानः परि गच्छसि निर्णेजनं पवित्रम् ॥ २ ॥

पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
स्वसार आपो अभि गा उतासरन्त्सं ग्रावभिर्नसते वीते अध्वरे ॥ ३ ॥

पर्जन्यः । पिता । महिषस्य । पर्णिनः । नाभा । पृथिव्याः । गिरिषु । क्षयम् । दधे ।
स्वसारः । आपः । अभि । गाः । उत । असरन् । सम् । ग्रावऽभिः । नसते । वीते । अध्वरे ॥३॥

वेङ्कट० पर्जन्यः जनकः महतो लतावतः सोमस्य । सोऽयम् पृथिव्याः नाभौ हविर्धाने वा³ ग्रावसु निवासं करोति । तमिमम्⁴ अङ्गुलयः आपः पशवः च अभि सरन्ति⁵ । सोऽयं सङ्गच्छते ग्रावभिः कान्ते⁶ यज्ञे ॥ ३ ॥

जायेव पत्यावधि शेव मंहसे पज्राया गर्भ शृणुहि ब्रवीमि ते ।
अन्तर्वाणीषु प्र चरा सु जीवसेऽनिन्द्यो वृजने सोम जागृहि ॥ ४ ॥

---

१-१. नास्ति मूको. २. °माना मूको. ३. नास्ति वि¹. ४. न इमम् वि³. ५. चरन्ति अ¹. ६. क्रान्ते वि³ अ¹.

जायाऽईव । पत्यौ । अधि । शेवं । मंहसे । पज्रायाः । गर्भ । शृणुहि । ब्रवीमि । ते ।
अन्तः । वाणीषु । प्र । चर । सु । जीवसे । अनिन्द्यः । वृजने । सोम । जागृहि ॥ ४ ॥

**वेङ्कट०** यथा जाया पत्यौ सुखं प्रयच्छति, एवं प्रयच्छसि सुखं यजमाने। हे पज्रायाः गर्भ! शृणुहि[1] स्तुतीर्याः तुभ्यम् अहम् ब्रवीमि । पजिर्गतिकर्मा । पज्रा पृथिवीत्याहुः । अपि वा माध्यमिका वाक् पज्रा । स त्वं स्तुतीनां मध्ये सुष्ठु प्र चर जीवनाय । प्रशस्यः त्वं शत्रुबले सोम! जागृहि ॥ ४ ॥

यथा पूर्वेभ्यः शतसा अमृध्रः सहस्रसाः पर्यया वाजमिन्दो ।
एवा पवस्व सुविताय नव्यसे तव व्रतमन्वापः सचन्ते ॥ ५ ॥

यथा । पूर्वेभ्यः । शतऽसाः । अमृध्रः । सहस्रऽसाः । परिऽअयाः । वाजम् । इन्दो इति ।
एव । पवस्व । सुविताय । नव्यसे । तव । व्रतम् । अनु । आपः । सचन्ते ॥ ५ ॥

**वेङ्कट०** यथा पूर्वेभ्यः ऋषिभ्यः शतसहस्रयोर्दाता आहिंस्यः पर्यगच्छः सङ्ग्रामं प्रति इन्दो!, तथा सम्प्रति च पवस्व नवतराय अभ्युदयाय । तव कर्म उदकानि अनु सेवन्ते इति ॥ ५ ॥

[2]इति सप्तमाष्टके तृतीयाध्याये सप्तमो वर्गः[2] ॥

## [ ८३ ]

[3]पवित्र आङ्गिरस ऋषिः । पवमानः सोमो देवता । जगती छन्दः[3] ।

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥ १ ॥

पवित्रम् । ते । विऽततम् । ब्रह्मणः । पते । प्रऽभुः । गात्राणि । परि । एषि । विश्वतः ।
अतप्तऽतनूः । न । तत् । आमः । अश्नुते । शृतासः । इत् । वहन्तः । तत् । सम् । आशत ॥

**वेङ्कट०** पवित्रः । [4]पवित्रम् ते[4] विस्तृतं तेजो हे ब्राह्मणानां स्वामिन्! । प्रभुः त्वं पातॄणाम् अङ्गानि पीयमानः सर्वतो व्याप्नोषि । विविधैस्तपोविशेषैः [5]अतप्ततनूः, अत[5] एव आमः अपक्वः, न तत् अश्नुते । पवित्रं तपसा श्रृताः एव यज्ञम् वहन्तः तत् प्राप्नुवन्ति ॥ १ ॥

तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥ २ ॥

---

१. श्रृणु वि[2] अ[1]. २-२. नास्ति मूको. ३-३. पवित्रवत्ते वि[1]; पवित्रं वि[2]. ४-४. [°]तनूरेत वि[1] अ[1].

तपोः । पवित्रम् । विऽततम् । दिवः । पदे । शोचन्तः । अस्य । तन्तवः । वि । अस्थिरन् ।
अवन्ति । अस्य । पवितारम् । आशवः । दिवः । पृष्ठम् । अधि । तिष्ठन्ति । चेतसा ॥ २ ॥

वेङ्कट० शत्रूणां तापयितुः सोमस्य पवित्रम् तेजः अन्तरिक्षस्य उच्छ्रिते स्थाने विततम्[1] । ज्वलन्तः अस्य पवित्रस्य तन्तवः विविधं गच्छन्ति । रक्षन्ति अस्य पवित्रस्य सम्बन्धिनो व्याप्ताः[2] रश्मयो यज्ञे यः सोमं पुनाति तम् । दिवः च पृष्ठम् अधि तिष्ठन्ति मनुष्यान् प्रज्ञापयन्तः ॥ २ ॥

अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ३ ॥

अरूरुचत् । उषसः । पृश्निः । अग्रियः । उक्षा । बिभर्ति । भुवनानि । वाजऽयुः ।
मायाऽविनः । ममिरे । अस्य । मायया । नृऽचक्षसः । पितरः । गर्भम् । आ । दधुः ॥ ३ ॥

वेङ्कट० किं च अयमादित्यरूपो रोचयति उषसः पृश्निवर्णः मुख्यः सेक्ता । बिभर्ति च भुवनानि उदकेन वृष्टेन प्रजानाम् अन्नमिच्छन् । प्रज्ञावन्तः निर्मितवन्तः अस्य प्रज्ञानेन । नृणां द्रष्टारः पातारो देवाः गर्भम् आहितवन्तः ओषधीष्विति । यद्वा अङ्गिरसः पितरः तेन प्रणीताः जगद् उत्पादितवन्त इति ॥ ३ ॥

गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः ।
गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत ॥ ४ ॥

गन्धर्वः । इत्था । पदम् । अस्य । रक्षति । पाति । देवानाम् । जनिमानि । अद्भुतः ।
गृभ्णाति । रिपुम् । निऽधया । निधाऽपतिः । सुकृत्ऽतमाः । मधुनः । भक्षम् । आशत ॥ ४ ॥

वेङ्कट० उदकानां स्तुतीनां वा धारक आदित्यः अस्य सोमस्य स्थानम् अमुत्र रक्षति । सोऽयं सोमो रक्षति देवजातानि । देवानित्यर्थः । महान् । किंच अयं पाशेन रिपुम् गृह्णाति पाशपतिः । तस्यास्य मधुनः भक्षम् पुण्यकृतः प्राप्नुवन्ति[3] ॥ ४ ॥

हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरम् ।
राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥ ५ ॥

हविः । हविष्मः । महि । सद्म । दैव्यम् । नभः । वसानः । परि । यासि । अध्वरम् ।
राजा । पवित्रऽरथः । वाजम् । आ । अरुहः । सहस्रऽभृष्टिः । जयसि । श्रवः । बृहत् ॥ ५ ॥

वेङ्कट० हविः सद्म इत्युदकनामनी (तु. निघ १,१२) [4]भवतः । उदकम् हे उदकवन्! महत्[4] सदनम्

---

१. विततो वि[1] अ[1]; वितत वि[2]. २. प्राप्ता वि[1]. ३. °वन्तीत्यर्थः मूको. ४-४. °वतः उदकमुद° वि[1] अ[1].

देवानाम्। नभतिर्व्याप्तिकर्मा[1]। व्याप्तम् वसानः परि गच्छसि यज्ञम्। राजा पवित्ररथः सङ्ग्रामम् आ रोहसि बहुभ्रंशनः, जयसि च महद् अन्नम् ॥ ५ ॥

[2]इति सप्तमाष्टके तृतीयाध्याये अष्टमो वर्गः[2] ॥

[ ८४ ]

[2]वाच्यः प्रजापतिर्ऋषिः। पवमानः सोमो देवता। जगती छन्दः[2]।

पव॑स्व देव॒माद॑नो॒ विच॑र्षणिर॒प्सा इन्द्रा॑य॒ वरु॑णाय वा॒यवे॑ ।
कृ॒धी नो॑ अ॒द्य वरि॑वः स्वस्ति॒मदु॑रुक्षि॒तौ गृ॑णीहि॒ दैव्यं॒ जन॑म् ॥ १ ॥

पव॑स्व । दे॒व॒ऽमाद॑नः । विऽच॑र्षणिः । अ॒प्साः । इन्द्रा॑य । वरु॑णाय । वा॒यवे॑ ।
कृ॒धि । नः॒ । अ॒द्य । वरि॑वः । स्व॒स्ति॒ऽमत् । उ॒रु॒ऽक्षि॒तौ । गृ॒णी॒हि॒ । दैव्य॑म् । जन॑म् ॥ १ ॥

वेङ्कट० प्रजापतिर्वाच्यः। पवस्व देवानां मदयिता[3] विद्रष्टा उदकस्य दाता कर्मणो वा सम्भक्ता इन्द्रादिभ्यः। कुरु च अस्माकम् अद्य धनम् अविनाशम्। विस्तीर्णायां यज्ञभूमौ दैव्यम् जनम् अभि-गृणीहि। गृणातिः[4] शब्दकर्मा। यथाभिषवशब्दं श्रुत्वा देवा आगच्छन्ति तथा गृणीहीति ॥ १ ॥

आ यस्त॒स्थौ भुव॑ना॒न्यम॑र्त्यो॒ विश्वा॑नि॒ सोम॒ः परि॒ तान्य॑र्षति ।
कृ॒ण्वन्त्सं॒चृतं॑ वि॒चृत॑म॒भिष्ट॑य॒ इन्दु॑ः सिषक्त्यु॒षसं॒ न सूर्य॑ः ॥ २ ॥

आ । यः । त॒स्थौ । भुव॑नानि । अम॑र्त्यः । विश्वा॑नि । सोम॑ः । परि॑ । तानि॑ । अ॒र्ष॒ति॒ ।
कृ॒ण्वन् । स॒म्ऽचृत॑म् । वि॒ऽचृत॑म् । अ॒भिष्ट॑ये । इन्दु॑ः । सि॒स॒क्ति॒ । उ॒षस॑म् । न । सूर्य॑ः ॥ २ ॥

वेङ्कट० आ तिष्ठति यः सोमो लोकान् अमर्त्यः, सः तानि विश्वानि सोमः[5] परि गच्छति। सोऽयं कुर्वन् सम्बद्धम्[6] शत्रुभिर्विमुक्तम् अभियागाय इन्दुः सेवते[7] [8]उषसम् इव सूर्यः[8] ॥ २ ॥

आ यो गोभि॑ः सृ॒ज्यत॒ ओष॑धी॒ष्वा दे॒वानां॑ सु॒म्न इ॒षय॒न्नुपा॑वसुः ।
आ वि॒द्युता॑ पवते॒ धार॑या सु॒त इन्द्रं॒ सोमो॑ मा॒दय॒न्दैव्यं॒ जन॑म् ॥ ३ ॥

आ । यः । गोभि॑ः । सृ॒ज्यते॑ । ओष॑धीषु । आ । दे॒वाना॑म् । सु॒म्ने । इ॒षय॑न् । उप॑ऽवसुः ।
आ । वि॒ऽद्युता॑ । प॒व॒ते॒ । धार॑या । सु॒तः । इन्द्र॑म् । सोम॑ः । मा॒दय॑न् । दैव्य॑म् । जन॑म् ॥ ३ ॥

---

१. नभवति[c] मूको. २-२. नास्ति मूको. ३. माद[°] अ[1]. ४. [°]णाति मूको. ५. [°]हीरयथः अ[1]. ६. सोम वि[2] अ[1]. ७. सबन्धं वि[1]. ८. सोमवत वि[2] अ[1]. ९-९. उषसः सूर्यमिव वि[2] अ[1].

वेङ्कट० आ सृज्यते रश्मिभिः यः[1] ओषधीषु देवानाम् सुखार्थं देवलोकं प्रति गच्छन् उपगतधनः[2] शत्रुभ्यः। सोऽयम् आ पवते अभिषुतो विद्योतमानया धारया [3]सोमः इन्द्रम् दैव्यम् जनम्[3] मादयन् इति ॥ ३ ॥

एष स्य सोमः पवते सहस्रजिद्धिन्वानो वाचमिषिरामुषर्बुधम् ।
इन्दुः समुद्रमुदियर्ति वायुभिरेन्द्रस्य हार्दि कलशेषु सीदति ॥ ४ ॥

एषः । स्यः । सोमः । पवते । सहस्रऽजित् । हिन्वानः । वाचम् । इषिराम् । उषःऽबुधम् ।
इन्दुः । समुद्रम् । उत् । इयर्ति । वायुऽभिः । आ । इन्द्रस्य । हार्दि । कलशेषु । सीदति ॥४॥

वेङ्कट० सः[4] एषः सोमः पवते सहस्रस्य जेता प्रेरयन्[5] वाचम् ऋत्विजां गमनशीलाम् उषसि प्रबुद्धाम्। सोऽयम्[6] इन्दुः उद्यन् समुद्रम् उत् गमयति मारुतैः। आ सीदति इन्द्रस्य प्रियकरम् अन्धः[7] कलशेषु[8] ॥ ४ ॥

अभि त्यं गावः पयसा पयोवृधं सोमं श्रीणन्ति मतिभिः स्वर्विदम् ।
धनंजयः पवते कृत्व्यो रसो विप्रः कविः काव्येना स्वर्चनाः ॥ ५ ॥

अभि । त्यम् । गावः । पयसा । पयःऽवृधम् । सोमम् । श्रीणन्ति । मतिऽभिः । स्वःऽविदम् ।
धनम्ऽजयः । पवते । कृत्व्यः । रसः । विप्रः । कविः । काव्येन । स्वःऽचनाः ॥ ५ ॥

वेङ्कट० अभि श्रीणन्ति तम् गावः आत्मीयेन पयसा पयसो वर्धकम् सोमम्, स्तुतिभिः यः सर्वं प्रयच्छति। स्तुतः सोमः[9] धनानां जेता पवते कर्मण्यः रसः मेधावी कविः कर्मणा सर्वाग्नः ॥ ५ ॥

[10]इति सप्तमाष्टके तृतीयाध्याये नवमो वर्गः[10] ॥

[ ८५ ]

[10]वेनो भार्गव ऋषिः। पवमानः सोमो देवता। जगती छन्दः, एकादशीद्वादश्यौ त्रिष्टुभौ[10]।

इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥ १ ॥

इन्द्राय । सोम । सुऽसुतः । परि । स्रव । अप । अमीवा । भवतु । रक्षसा । सह ।
मा । ते । रसस्य । मत्सत । द्वयाविनः । द्रविणस्वन्तः । इह । सन्तु । इन्दवः ॥ १ ॥

---

१. नास्ति वि[1]. २. °गतः वि[2] अ[1]. ३-३. इन्द्र सोमव्यञ्जनं वि[1]. ४. नास्ति वि[1]. ५. प्रेरयत् मूको. ६. योयं वि[1]. ७. अन्धं वि[2] अ[1]. ८. °षु इति अ[1]. ९. सोमं मूको. १०-१०. नास्ति मूको.

वेङ्कट० वेनो भार्गवः। इन्द्राय सोम![1] सुषुतः परि स्रव। [2]अप भवतु अमीवा[2] रोगः रक्षसा सह। मा तव रसं पीत्वा माद्यन्तु सत्येनानृतेन च युक्ताः। धनवन्तः अस्मिन्यज्ञे भवन्तु इन्दवः ॥ १ ॥

अस्मान्त्समर्ये पवमान चोदय दक्षो देवानामसि हि प्रियो मदः ।
जहि शत्रूँरभ्या भन्दनायतः पिबेन्द्र सोममव नो मृधो जहि ॥ २ ॥

अस्मान् । सऽमर्ये । पवमान । चोदय । दक्षः । देवानाम् । असि । हि । प्रियः । मदः ।
जहि । शत्रून् । अभि । आ । भन्दनाऽयतः । पिब । इन्द्र । सोमम् । अव । नः । मृधः । जहि ॥

वेङ्कट० अस्मान्[3] सङ्ग्रामे पवमान![3] चोदय। समर्थः हि देवानाम् भवसि त्वम् प्रियः मदः। हे इन्द्र! त्वम् शत्रून् जहि। अभि आ गच्छ च स्तुतीरिच्छतः[4]। पिब इन्द्र! सोमम्। अव जहि अस्माकम्[6] मृधः इति ॥ २ ॥

अदब्ध इन्दो पवसे मदिन्तम आत्मेन्द्रस्य भवसि धासिरुत्तमः ।
अभि स्वरन्ति बहवो मनीषिणो राजानमस्य भुवनस्य निंसते ॥ ३ ॥

अदब्धः । इन्दो इति । पवसे । मदिन्ऽतमः । आत्मा । इन्द्रस्य । भवसि । धासिः । उत्ऽतमः ।
अभि । स्वरन्ति । बहवः । मनीषिणः । राजानम् । अस्य । भुवनस्य । निंसते ॥ ३ ॥

वेङ्कट० अहिंसितः इन्दो! पवसे मादयितृतमः। आत्मा च भवसि इन्द्रस्य अन्नम् [7]उत्तमम्। तं[7] त्वाम् अभि स्तुवन्ति सोमम् बहवः स्तोतारः अस्य भुवनस्य राजानम्, गच्छन्ति[8] चेति ॥ ३ ॥

सहस्रणीथः शतधारो अद्भुत इन्द्रायेन्दुः पवते काम्यं मधु ।
जयन् क्षेत्रमभ्यर्षा जयन्नप उरुं नो गातुं कृणु सोम मीढ्वः ॥ ४ ॥

सहस्रऽनीथः । शतऽधारः । अद्भुतः । इन्द्राय । इन्दुः । पवते । काम्यम् । मधु ।
जयन् । क्षेत्रम् । अभि । अर्ष । जयन् । अपः । उरुम् । नः । गातुम् । कृणु । सोम । मीढ्वः ॥

वेङ्कट० बहुनयनः बहुधारः महान् इन्द्राय इन्दुः पवते कमनीयम् मधु। जयन् क्षेत्रम् अभि गच्छ। जयन् उदकानि विस्तीर्णम् अस्माकं मार्गम् कुरु सोम! सेक्तः![9] ॥ ४ ॥

कनिक्रदत् कलशे गोभिरज्यसे व्य१व्ययं समया वारमर्षसि ।
मर्मृज्यमानो अत्यो न सानसिरिन्द्रस्य सोम जठरे समक्षरः ॥ ५ ॥

---

१. सोमः वि[२] अ[२]. २-२. त्रुटितम् वि[२] अ[२]. ३. अस्मात् मूको. ४. °माने वि[२] अ[२]. ५. स्तुतिमिरिच्छत वि[२]; स्तुतिरिच्छत अ[२]. ६. अस्माक मूको. ७-७. उत्तमन्तं वि[२]; उत्तमन्त वि[१], उत्तमन्तं अ[१]. ८. सगच्छन्ति वि[१]. ९. सेक्त वि[२] अ[२]; सक्तः वि[१].

कनिक्रदत् । कलशे । गोभिः । अज्यसे । वि । अव्ययम् । समया । वारम् । अर्षसि ।
मर्मृज्यमानः । अत्यः । न । सानसिः । इन्द्रस्य । सोम । जठरे । सम् । अक्षरः ॥ ५ ॥

वेङ्कट० शब्दं कुर्वन् कलशे[1] स्थितः [2]गोभिः अज्यसे[2] । वि गच्छसि च अवेर्वालम् समया समीपे । पाणिना सम्मृज्यमानः[3] अश्व इव सम्भजनशीलः इन्द्रस्य सोम! जठरे सम् क्षरसि[4] ॥ ५ ॥

स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ॥ ६ ॥

स्वादुः । पवस्व । दिव्याय । जन्मने । स्वादुः । इन्द्राय । सुहवीतुऽनाम्ने ।
स्वादुः । मित्राय । वरुणाय । वायवे । बृहस्पतये । मधुऽमान् । अदाभ्यः ॥ ६ ॥

वेङ्कट० स्वादुः [5]दिवि जाताय[5] देवगणाय पवस्व[6], स्वादुः इन्द्राय च स्वाह्वाननामधेयाय, स्वादुः मित्रादिभ्यश्च मधुरसः अहिंस्यः ॥ ६ ॥

[7]इति सप्तमाष्टके तृतीयाध्याये दशमो वर्गः[7] ॥

अत्यं मृजन्ति कलशे दश क्षिपः प्र विप्राणां मतयो वाच ईरते ।
पवमाना अभ्यर्षन्ति सुष्टुतिमेन्द्रं विशन्ति मदिरास इन्दवः ॥ ७ ॥

अत्यम् । मृजन्ति । कलशे । दश । क्षिपः । प्र । विप्राणाम् । मतयः । वाचः । ईरते ।
पवमानाः । अभि । अर्षन्ति । सुऽस्तुतिम् । आ । इन्द्रम् । विशन्ति । मदिरासः । इन्दवः ॥ ७ ॥

वेङ्कट० अश्वम् एनम् मृजन्ति कलशे वर्तमानम् दश अङ्गुलयः । प्र ईरयन्ति विप्राणाम्[8] मध्ये [9]स्तोतारः स्तुतीः[9] । [10]पवमानाः अभि गच्छन्ति[10] सुष्टुतिम्[11] । आ विशन्ति च इन्द्रम् मदकराः सोमाः ॥ ७ ॥

पवमानो अभ्यर्षा सुवीर्यमुर्वीं गव्यूतिं महि शर्म सप्रथः ।
माकिर्नो अस्य परिषूतिरीशतेन्दो जयेम त्वया धनंधनम् ॥ ८ ॥

पवमानः । अभि । अर्ष । सुऽवीर्यम् । उर्वीम् । गव्यूतिम् । महि । शर्म । सऽप्रथः ।
माकिः । नः । अस्य । परिऽसूतिः । ईशत । इन्दो इति । जयेम । त्वया । धनम्ऽधनम् ॥ ८ ॥

---

१. कलशेषु वि[२] अ[१]. २-२. भिरज्यसे वि[१]; गोभिरज्यते वि[२] अ[१]. ३. मर्मृज्य° वि[१]. ४. °सीति अ[१]. ५-५. दिविजाय वि[१]. ६. नास्ति वि[१] अ[१]. ७-७. नास्ति मूको. ८. मिमाणां वि[१] अ[१]. ९-९. स्तोतस्तुतीः वि[१]; स्तोतारस्तुती वि[२] अ[१]. १०-१०. मानोभिगच्छति अ[१]. ११. सुष्टुतीम् वि[२] अ[१]; ष्टुद्रुम् वि[१].

वेङ्कट० [1]पवमानः त्वम् अभि गमय सुवीर्यम् विस्तीर्णम् गोमार्गम् महच्च गृहम्[1] † सर्वतः पृथुतमम्। मा कश्चिद् अस्माकम् अस्य कर्मणः परिप्रेरको हिंसाया ईश्वरो भवतु। इन्दो! जयेम त्वया सर्वं धनम्[1] ॥ ८ ॥

अधि द्यामस्थाद् वृषभो विचक्षणोऽरूरुचद् वि दिवो रोचना कविः।
राजा पवित्रमत्येति रोरुवद् दिवः पीयूषं दुहते नृचक्षसः ॥ ९ ॥

अधि। द्याम्। अस्थात्। वृषभः। विऽचक्षणः। अरूरुचत्। वि। दिवः। रोचना। कविः।
राजा। पवित्रम्। अति। एति। रोरुवत्। दिवः। पीयूषम्। दुहते। नृऽचक्षसः ॥ ९ ॥

वेङ्कट० अधि तिष्ठति द्याम् वृषभः विद्रष्टा। वि रोचयति च दिवः नक्षत्रादीनि कविः। राजा पवित्रम् च अति गच्छति शब्दायमानः। दिवः सारं रसम् दुहते नृणां द्रष्टारः सोमाः ॥ ९ ॥

दिवो नाके मधुजिह्वा असश्चतो वेना दुहन्त्युक्षणं गिरिष्ठाम्।
अप्सु द्रप्सं वावृधानं समुद्र आ सिन्धोरूर्मा मधुमन्तं पवित्र आ ॥ १० ॥

दिवः। नाके। मधुऽजिह्वाः। असश्चतः। वेनाः। दुहन्ति। उक्षणम्। गिरिऽस्थाम्।
अप्ऽसु। द्रप्सम्। ववृधानम्। समुद्रे। आ। सिन्धोः। ऊर्मा। मधुऽमन्तम्। पवित्रे। आ ॥

वेङ्कट० दिवः उच्छ्रिते देशे वर्तमानम् मधुरवाचोऽमी[2] वेननामधेया[3] ऋषयः असंसक्ताः शीघ्रमभिषुण्वन्तः सेक्तारम् पर्वते स्थितम् दुहन्तु। अप्सु उदकेषु द्रप्सम् वर्धमानम्[4] आ दुहन्ति द्रोणकलशे। सिन्धोः उदकस्य ऊर्मौ मधुमन्तम् सोमम् [5]पवित्रे आ सिञ्चतीति[5] ॥ १० ॥

नाके सुपर्णमुपपप्तिवांसं गिरो वेनानामकृपन्त पूर्वीः।
शिशुं रिहन्ति मतयः पनिप्नतं हिरण्ययं शकुनं क्षामणि स्थाम् ॥ ११ ॥

नाके। सुऽपर्णम्। उपपप्तिऽवांसम्। गिरः। वेनानाम्। अकृपन्त। पूर्वीः।
शिशुम्। रिहन्ति। मतयः। पनिप्नतम्। हिरण्ययम्। शकुनम्। क्षामणि। स्थाम् ॥ ११ ॥

वेङ्कट० दिवि सुपतनम् उपपतन्तम्[6] गिरः वेनानाम् अस्माकम् अभिष्टुवन्ति बह्वयः। शिशुम् लिहन्ति स्तुतयः शब्दायन्तम् हिरण्मयम् पक्षिणम् पृथिव्याम् स्थितम् ॥ ११ ॥

ऊर्ध्वो गन्धर्वो अधि नाके अस्थाद् विश्वा रूपा प्रतिचक्षाणो अस्य।
भानुः शुक्रेण शोचिषा व्यद्यौत् प्रारूरुचद्रोदसी मातरा शुचिः ॥ १२ ॥

---

१-१. नास्ति अ[१]. † नास्ति वि[१]. २. मधुरा° वि[१]. ३. वेबनामधेया वि[१]; वेवमानामधेया अ[१]; वेननामधेय वि[१]. ४. वर्त्तमानम् वि[१]. ५-५. पवित्रमासिञ्च° वि[१] अ[१]. ६. पत° वि[१].

ऊर्ध्वः । गन्धर्वः । अधि । नाके । अस्थात् । विश्वा । रूपा । प्रतिऽचक्षाणः । अस्य ।
भानुः । शुक्रेण । शोचिषा । वि । अद्यौत् । प्र । अरूरुचत् । रोदसी इति । मातरा । शुचिः ॥

वेङ्कट० ऊर्ध्वः रश्मीनां धारयिता आदित्ये (तु. या २,१४) अधि तिष्ठति । विश्वानि[1] रूपाणि प्रतिपश्यन् अस्य गन्धर्वस्य भानुः[2] ज्वलता तेजसा वि द्योतते । प्र रोचयति[3] द्यावापृथिव्यौ निर्मात्र्यौ शुचिः । भानुः सोमः[4] ॥ १२ ॥

[5]इति सप्तमाष्टके तृतीयाध्याये एकादशो वर्गः[5] ॥

## [ ८६ ]

[5]दशानाम् अकृष्टा माषा ऋषयः, एकादश्यादिविंशयन्तानां सिकता निवावरी, एकविंश्यादित्रिंश्यन्तानां पृश्नयोऽजाः, एकत्रिंश्यादिचत्वारिंश्यन्तानाम् अकृष्टमाषादयस्त्रयः, एकचत्वारिंश्यादिपञ्चचत्वारिंश्यन्तानां भौमोऽत्रिः, अन्त्यानां तिसृणां गृत्समदः शौनकः । पवमानः सोमो देवता । जगती छन्दः[5] ।

प्र त॑ आ॒शवः॑ पवमान धी॒जवो॒ मदा॑ अर्षन्ति रघु॒जा इ॑व॒ त्मना॑ ।
दि॒व्याः सु॑प॒र्णा मधु॑मन्त॒ इन्द॑वो म॒दिन्त॑मासः॒ परि॒ कोश॑मासते ॥ १ ॥

प्र । ते॒ । आ॒शवः॑ । प॒व॒मा॒न॒ । धी॒ऽजवः॑ । मदाः॑ । अर्ष॑न्ति । र॒घु॒जाःऽइ॑व । त्मना॑ ।
दि॒व्याः । सु॒ऽप॒र्णाः । मधु॑ऽमन्तः । इन्द॑वः । म॒दिन्ऽत॑मासः । परि॑ । कोश॑म् । आ॒स॒ते॒ ॥ १ ॥

वेङ्कट० अत्र कात्यायनः—" 'प्र ते'ऽष्टाचत्वारिंशदृषिगणा दशर्चा अकृष्टा माषाः प्रथमे, सिकता निवावरी द्वितीये, पृश्नयोऽजास्तृतीये, त्रयश्चतुर्थे, अत्रिः पञ्चान्त्या गृत्समदः" (ऋअ २,९,८६) इति ।

प्र गच्छन्ति[6] तव व्याप्ताः पवमान! मनसा तुल्यवेगा मदाः लघुजाः इव आत्मनैव । लघोरश्वाज्जाता युवानोऽश्वा[7] लघुजाः । दिव्याः सुपतनाः मधुमन्तः इन्दवः मादयितृतमाः परि उपविशन्ति कलशम् इति ॥ १

प्र ते॒ मदा॑सो मदि॒रास॑ आ॒शवोऽसृ॑क्षत॒ रथ्या॑सो॒ यथा॒ पृथ॑क् ।
धे॒नुर्न व॒त्सं पय॑सा॒भि व॒ज्रिण॒मिन्द्र॒मिन्द॑वो॒ मधु॑मन्त ऊ॒र्मय॑ः ॥ २ ॥

प्र । ते॒ । मदा॑सः । म॒दि॒रासः॑ । आ॒शवः॑ । असृ॑क्षत । रथ्या॑सः । यथा॑ । पृथ॑क् ।
धे॒नुः । न । व॒त्सम् । पय॑सा । अ॒भि । व॒ज्रिण॑म् । इन्द्र॑म् । इन्द॑वः । मधु॑ऽमन्तः । ऊ॒र्मयः॑ ॥ २ ॥

वेङ्कट० प्र सृज्यन्ते तव मदाः मदकराः व्याप्ताः अश्वाः इव पृथक् । धेनुः इव वत्सम् पयसा अभि गच्छन्ति वज्रिणम् इन्द्रम् इन्दवः मधुमन्तः ऊर्मयः सोमाः ॥ २ ॥

---

१. विश्वा मूको. २. भानु मूको. ३. °चयदिति वि[1]. ४. नास्ति अ[1]; सोम वि[1]; सोमो बृहस्पतिः वि[2]. ५-५. नास्ति मूको. ६. यन्ति वि[2] अ[1]. ७. युवानो वि[2] अ[1].

अत्यो न हियानो अभि वाजमर्ष स्वर्वित् कोशं दिवो अद्रिमातरम् ।
वृषा पवित्रे अधि सानो अव्यये सोमः पुनान इन्द्रियाय धायसे ॥ ३ ॥

अत्यः । न । हियानः । अभि । वाजम् । अर्ष । स्वःऽवित् । कोशम् । दिवः । अद्रिऽमातरम् ।
वृषा । पवित्रे । अधि । सानौ । अव्यये । सोमः । पुनानः । इन्द्रियाय । धायसे ॥ ३ ॥

**वेङ्कट०** अश्वः इव प्रेर्यमाणः अभि गच्छ युद्धम् सर्ववित् कलशम् च द्युलोकाद् मेघमातरम् । शिष्टं स्पष्टमिति ॥ ३ ॥

प्र त आश्विनीः पवमान धीजुवो दिव्या असृग्रन् पयसा धरीमणि ।
प्रान्तऋषयः स्थाविरीरसृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः ॥ ४ ॥

प्र । ते । आश्विनीः । पवमान । धीऽजुवः । दिव्याः । असृग्रन् । पयसा । धरीमणि ।
प्र । अन्तः । ऋषयः । स्थाविरीः । असृक्षत । ये । त्वा । मृजन्ति । ऋषिऽसान । वेधसः ॥ ४ ॥

**वेङ्कट०** प्र सृज्यन्ते तव पवमान! व्याप्ताः वेगवत्यो धाराः दिवः पवन्त्यः पयसा युक्ताः धारके द्रोणकलशे । ये त्वाम् ऋषयः मृजन्ति सोम! ऋषिभिः[2] सम्भक्त! विधातारः, ते स्थाविरीः[3] धाराः प्र सृजन्ति । स्थविष्ठाः स्थाविर्यः[4] इति ॥ ४ ॥

विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोस्ते सतः परि यन्ति केतवः ।
व्यानशिः पवसे सोम धर्मभिः पतिर्विश्वस्य भुवनस्य राजसि ॥ ५ ॥

विश्वा । धामानि । विश्वऽचक्षः । ऋभ्वसः । प्रऽभोः । ते । सतः । परि । यन्ति । केतवः ।
विऽआनशिः । पवसे । सोम । धर्मऽभिः । पतिः । विश्वस्य । भुवनस्य । राजसि ॥ ५ ॥

**वेङ्कट०** विश्वानि देवशरीराणि हे विश्वस्य द्रष्टः![5] महान्तः प्रभोः तव सतः परि गच्छन्ति रश्मयः । व्यापनशीलः त्वम् पवसे धाराभिः पतिः इति स्पष्टम् ॥ ५ ॥

[6]इति सप्तमाष्टके तृतीयाध्याये द्वादशो वर्गः[6] ॥

उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः ।
यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योना कलशेषु सीदति ॥ ६ ॥

उभयतः । पवमानस्य । रश्मयः । ध्रुवस्य । सतः । परि । यन्ति । केतवः ।
यदि । पवित्रे । अधि । मृज्यते । हरिः । सत्ता । नि । योना । कलशेषु । सीदति ॥ ६ ॥

---

१. नास्ति वि[1]. २. ऋषयः वि[1]. ३. स्थाविरि वि[2] अ[1]; स्थाविरी वि[3]. ४. स्थापिर्ये वि[2] अ[1]; स्थापिर्यं वि[2] अ[2]; स्थावीर्यं वि[1]. ५. द्रष्टा वि[2]; द्रष्टारो अ[1]; द्रष्ट वि[3]. ६-६. नास्ति मूको.

वेङ्कट० उभयतः इतश्चामुतश्च पवमानस्य रश्मयः निश्चलस्य सतः परि गच्छन्ति प्रज्ञापकाः। यदि अयम् पवित्रे मृज्यते हरितवर्णः। सोऽयं सदनशीलः नि सीदति स्थाने कलशेषु ॥ ६ ॥

यज्ञस्य॑ के॒तुः प॑वते स्व॒ध्व॒रः सोमो॑ दे॒वाना॒मुप॑ याति नि॒ष्कृ॒तम् ।
स॒हस्र॑धारः॒ परि॒ कोश॑मर्षति॒ वृषा॑ प॒वित्र॒मत्ये॑ति॒ रोरु॑वत् ॥ ७ ॥

य॒ज्ञस्य॑ । के॒तुः । प॒वते॒ । सु॒ऽअ॒ध्व॒रः । सोम॑ः । दे॒वाना॑म् । उप॑ । या॒ति॒ । निः॒ऽकृ॒तम् ।
स॒हस्र॑ऽधारः । परि॑ । कोश॑म् । अ॒र्ष॒ति॒ । वृषा॑ । प॒वित्र॑म् । अति॑ । ए॒ति॒ । रोरु॑वत् ॥ ७ ॥

वेङ्कट० यज्ञस्य केतुभूतः पवते सुयज्ञः सोमः देवानाम् उप[1] गच्छति स्थानम्। सहस्रधारः परि गच्छति कोशम् प्रति। वृषा पवित्रम् अति[2] गच्छति शब्दं कुर्वन् ॥ ७ ॥

राजा॑ समु॒द्रं न॒द्यो॒३॒॑ वि गा॑हते॒ऽपामू॒र्मिं स॑चते॒ सिन्धु॑षु श्रि॒तः ।
अध्य॑स्थात् सानु॒ पव॑मानो अ॒व्ययं॒ नाभा॑ पृथि॒व्या ध॒रुणो॑ म॒हो दि॒वः ॥ ८ ॥

राजा॑ । स॒मु॒द्रम् । न॒द्यः॑ । वि । गा॒ह॒ते॒ । अ॒पाम् । ऊ॒र्मिम् । स॒च॒ते॒ । सिन्धु॑षु । श्रि॒तः ।
अधि॑ । अ॒स्था॒त् । सानु॑ । पव॑मानः । अ॒व्यय॑म् । नाभा॑ । पृ॒थि॒व्याः । ध॒रुणः॑ । म॒हः । दि॒वः ॥

वेङ्कट० राजा अन्तरिक्षम् उदकानि च वि गाहते। अपाम् ऊर्मिम् सेवते सिन्धुषु निषण्णः। सोऽयम् अधि तिष्ठति अविमयम् समुच्छ्रितं पवित्रम् पृथिव्याः नाभौ धर्ता महत्याः दिवः ॥८॥

दि॒वो न सानु॑ स्त॒नय॑न्नचिक्रद॒द् द्यौश्च॒ यस्य॑ पृथि॒वी च॒ धर्म॑भिः ।
इन्द्र॑स्य स॒ख्यं प॑वते वि॒वेवि॑द॒त् सोम॑ः पुना॒नः क॒लशे॑षु सीदति ॥ ९ ॥

दि॒वः । न । सानु॑ । स्त॒नय॑न् । अ॒चि॒क्र॒द॒त् । द्यौः । च॒ । यस्य॑ । पृ॒थि॒वी । च॒ । धर्म॑ऽभिः ।
इन्द्र॑स्य । स॒ख्यम् । प॒वते॒ । वि॒ऽवेवि॑दत् । सोम॑ः । पु॒ना॒नः । क॒लशे॑षु । सी॒द॒ति॒ ॥ ९ ॥

वेङ्कट० दिवः इव समुच्छ्रितं स्थानं मेघाधिष्ठितम्[3] स्तनितं शब्दं कुर्वन् क्रन्दति। द्यावापृथिव्यौ यस्य धर्मभिः धार्येते। सः इन्द्रस्य सख्यम् विशेषेण विन्दन् पवते। सोमः पूयमानः कलशेषु सीदति ॥ ९ ॥

ज्योति॑र्य॒ज्ञस्य॑ पवते॒ मधु॑ प्रि॒यं पि॒ता दे॒वानां॑ जनि॒ता वि॒भूव॑सुः ।
दधा॑ति॒ रत्नं॑ स्व॒धयो॑रपी॒च्यं॑ म॒दिन्त॑मो मत्स॒र इ॑न्द्रि॒यो रसः॑ ॥ १० ॥

ज्योतिः॑ । य॒ज्ञस्य॑ । प॒वते॒ । मधु॑ । प्रि॒यम् । पि॒ता । दे॒वाना॑म् । ज॒नि॒ता । वि॒भुऽव॑सुः ।
दधा॑ति । रत्न॑म् । स्व॒धयोः॑ । अ॒पी॒च्य॑म् । म॒दिन्ऽत॑मः । म॒त्स॒रः । इ॒न्द्रि॒यः । रसः॑ ॥ १० ॥

---

१. तद् वि[२] अ[१]. २. अधि वि[२] अ[१]. ३. 'धाधितिष्ठि' मूको.

वेङ्कट० द्योतमानम् यज्ञसम्बन्धि प्रियम् मधु पवते[1] पालयिता देवानाम् जनयिता प्रभूतधनः । दधाति रत्नम्[2] द्यावापृथिव्योः अन्तर्हितम् मदिन्तमः सोमः इन्द्रजुष्टः रसः ॥ १० ॥

[3]इति सप्तमाष्टके तृतीयाध्याये त्रयोदशो वर्गः[3] ॥

अभिक्रन्दन् कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ ११ ॥

अभिऽक्रन्दन् । कलशम् । वाजी । अर्षति । पतिः । दिवः । शतऽधारः । विऽचक्षणः ।
हरिः । मित्रस्य । सदनेषु । सीदति । मर्मृजानः । अविऽभिः । सिन्धुऽभिः । वृषा ॥ ११ ॥

वेङ्कट० अभिक्रन्दन् कलशम् वाजी गच्छति पतिः द्युलोकस्य शतधारः विद्रष्टा । हरिः यजमानस्य सदनेषु सीदति शोध्यमानः पवित्रैः उदकैः च वृषा ॥ ११ ॥

अग्रे सिन्धूनां पवमानो अर्षत्यग्रे वाचो अग्रियो गोषु गच्छति ।
अग्रे वाजस्य भजते महाधनं स्वायुधः सोतृभिः पूयते वृषा ॥ १२ ॥

अग्रे । सिन्धूनाम् । पवमानः । अर्षति । अग्रे । वाचः । अग्रियः । गोषु । गच्छति ।
अग्रे । वाजस्य । भजते । महाऽधनम् । सुऽआयुधः । सोतृऽभिः । पूयते । वृषा ॥ १२ ॥

वेङ्कट० स्यन्दमानानामुदकानाम् अग्रे पवमानः[4] गच्छति, अग्रे माध्यमिकायाः वाचः, अग्रे च रश्मिषु गच्छति, अग्रे बलस्य भजते युद्धम् । स्वायुधः सोऽयं यज्ञेऽभिषोतृभिः[5] पूयते वृषा ॥ १२ ॥

अयं मतवाञ्छकुनो यथा हितोऽव्ये ससार पवमान ऊर्मिणा ।
तव क्रत्वा रोदसी अन्तरा कवे शुचिर्धिया पवते सोम इन्द्र ते ॥ १३ ॥

अयम् । मतऽवान् । शकुनः । यथा । हितः । अव्ये । ससार । पवमानः । ऊर्मिणा ।
तव । क्रत्वा । रोदसी इति । अन्तरा । कवे । शुचिः । धिया । पवते । सोमः । इन्द्र । ते ॥ १३ ॥

वेङ्कट० अयम् स्तुतिमान्, यथा शकुनः, प्रेर्यमाणः पवित्रे सरति धारया । तव कर्मणा इन्द्र! द्यावापृथिव्योः मध्ये कवे! सोमः पवते । शुचिः धारकेण पवते सोमः इन्द्र! तुभ्यमेवेति ॥ १३ ॥

द्रापिं वसानो यजतो दिविस्पृशमन्तरिक्षप्रा भुवनेष्वर्पितः ।
स्वर्जज्ञानो नभसाभ्यक्रमीत् प्रत्नमस्य पितरमा विवासति ॥ १४ ॥

---

१. पिबत वि[2] अ[1]. २. तत्र वि[2] अ[1].; रत्न अ[1]. ३-३. नास्ति मूको. ४. नास्ति वि[1] अ[1]. ५. यज्ञेभिषोतृभिः वि[1]; यज्ञेभिः स्तोतृभिः वि[2] अ[1].

द्रापिम् । वसा॑नः । य॒ज॒तः । दि॒वि॒ऽस्पृश॑म् । अ॒न्त॒रि॒क्ष॒ऽप्राः । भुव॑नेषु । अर्पि॑तः ।
स्वः॑ । ज॒ज्ञा॒नः । नभ॑सा । अ॒भि । अ॒क्र॒मी॒त् । प्र॒त्नम् । अ॒स्य॒ । पि॒तर॑म् । आ । वि॒वा॒स॒ति ॥१४॥

**वेङ्कट०** कवचम् आच्छादयन् तेजसा दिवः स्प्रष्टारम्[1] यष्टव्यः अन्तरिक्षस्य पूरयिता उदकेषु अर्पितः उदकम् जनयन् नभसा अभि[2] क्रामति। प्रत्नम् च अस्य उदकस्य पितरम् इन्द्रम् परिचरति हविर्भूतः[3] ॥ १४ ॥

सो अ॑स्य वि॒शे महि॒ शर्म॑ यच्छति॒ यो अ॑स्य॒ धाम॑ प्र॒थ॒मं व्या॑न॒शे ।
प॒दं यद॑स्य प॒र॒मे व्यो॑म॒न्यतो॒ विश्वा॑ अ॒भि सं याति॒ संय॑तः ॥ १५ ॥

सः । अ॒स्य॒ । वि॒शे । महि॑ । शर्म॑ । य॒च्छ॒ति॒ । यः । अ॒स्य॒ । धाम॑ । प्र॒थ॒मम् । वि॒ऽआ॒न॒शे ।
प॒दम् । यत् । अ॒स्य॒ । प॒र॒मे । वि॒ऽओ॒म॒नि । अतः॑ । विश्वाः॑ । अ॒भि । सम् । या॒ति॒ । सम्ऽय॑तः ॥

**वेङ्कट०** [4]सः सोमः अस्य इन्द्रस्य[4] निवेशार्थं[5] महत् सुखम् प्रयच्छति, यः[6] अस्य धाम प्रथमम् व्याप्नोति। पदम् यत् अस्य सोमस्य परमे व्योम्नि, ततः स्थानात् सोऽयं सर्वान् सङ्ग्रामान् अभि सम् गच्छति ॥ १५ ॥

[7]इति सप्तमाष्टके तृतीयाध्याये चतुर्दशो वर्गः[7] ॥

प्रो अ॑यासी॒दिन्दु॒रिन्द्र॑स्य निष्कृ॒तं सखा॒ सख्यु॒र्न प्र मि॑नाति सं॒गिर॑म् ।
मर्य॑इव युव॒तिभिः॒ सम॑र्षति॒ सोमः॑ क॒लशे॑ श॒तया॑म्ना प॒था ॥ १६ ॥

प्रो इति॑ । अ॒या॒सी॒त् । इन्दुः॑ । इन्द्र॑स्य । निः॒ऽकृ॒तम् । सखा॑ । सख्युः॑ । न । प्र । मि॒ना॒ति॒ । स॒म्ऽगिर॑म् ।
मर्यः॑ऽइव । यु॒व॒तिऽभिः॑ । सम् । अ॒र्ष॒ति॒ । सोमः॑ । क॒लशे॑ । श॒तऽया॑म्ना । प॒था ॥ १६ ॥

**वेङ्कट०** प्र गच्छति[8] इन्दुः इन्द्रस्य स्थानम्। सखा सख्युः इन्द्रस्य न प्र हिनस्ति सङ्गिरम् [9]उदरम्। मर्यः[9] इव युवतिभिः सम् गच्छते सोमः[10] कलशे शतयानेन[11] मार्गेण पवमानेन[12] उदकैरिति ॥ १६ ॥

प्र वो॒ धियो॑ मन्द्र॒युवो॑ विप॒न्युवः॑ पन॒स्युवः॑ सं॒वस॑नेष्वक्रमुः ।
सोमं॑ मनी॒षा अ॒भ्य॑नूषत स्तु॒भो॒ऽभि धे॒नवः॒ पय॑सेमशिश्रयुः ॥ १७

प्र । वः॒ । धियः॑ । म॒न्द्र॒ऽयुवः॑ । वि॒प॒न्युवः॑ । प॒न॒स्युवः॑ । स॒म्ऽवस॑नेषु । अ॒क्र॒मुः॒ ।
सोम॑म् । म॒नी॒षाः । अ॒भि । अ॒नू॒ष॒त॒ । स्तु॒भः॑ । अ॒भि । धे॒नवः॑ । पय॑सा । ई॒म् । अ॒शि॒श्र॒युः॒ ॥१७॥

---

१. स्पृष्टारं मूको. २. हि वि[1]. ३. °भूतं वि[1] अ[1]. ४-४. सोमस्य ससोमस्येन्द्रस्य वि[1] अ[1]; सोमस्य सोमस्येन्द्रस्य वि[1]. ५. त्रुटितम् वि[1] अ[1]. ६. नास्ति वि[2] अ[1]. ७-७. नास्ति मूको. ८. यच्छति वि[2] अ[1]; प्रयच्छन्ति वि[1]. ९-९. उदमर्य्य वि[1]; उदरमय्य वि[2] अ[1]. १०. सोम वि[1] अ[1]; सोमं वि[1]. ११. शताने वि[2] अ[1]. १२. पवमान वि[2] अ[1].

वेङ्कट० सह प्र क्रमन्ते युष्माकं ध्यातारः[1] मदकरं[2] शब्दं कामयमानाः स्तोतारः[3] स्तुतिं कामयमानाः यज्ञगृहेषु। सोमम् मनस ईश्वराः अभि-स्तुवन्ति स्तोतारः। तमिमं सोमम् धेनवः च पयसा अभि श्रीणन्ति ॥ १७ ॥

आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमानो अस्रिधम्।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत् सुवीर्यम् ॥ १८ ॥

आ। नः। सोम। सम्ऽयतम्। पिप्युषीम्। इषम्। इन्दो इति। पवस्व। पवमानः। अस्रिधम्।
या। नः। दोहते। त्रिः। अहन्। असश्चुषी। क्षुऽमत्। वाजऽवत्। मधुऽमत्। सुऽवीर्यम् ॥ १८ ॥

वेङ्कट० आ पवस्व अस्माकं सङ्गृहीतम् वृद्धम् अन्नम् इन्दो! पवमानः त्वम् अक्षीणम्। या अस्माकं क्षरति अह्नः [4]त्रिषु सवनेषु अप्रतिबन्धा[4] शब्दबलयुक्तम् मधुयुक्तम् च सुवीर्यम्,[5] ताम् इषमिति ॥ १८ ॥

वृषा मतीनां पवते विचक्षणः सोमो अह्नः प्रतरीतोषसो दिवः।
क्राणा सिन्धूनां कलशाँ अवीवशदिन्द्रस्य हार्द्याविशन् मनीषिभिः ॥ १९ ॥

वृषा। मतीनाम्। पवते। विऽचक्षणः। सोमः। अह्नः। प्रऽतरीता। उषसः। दिवः।
क्राणा। सिन्धूनाम्। कलशान्। अवीवशत्। इन्द्रस्य। हार्दि। आऽविशन्। मनीषिऽभिः ॥ १९ ॥

वेङ्कट० वर्षिता स्तोतृणाम्[6] पवते विद्रष्टा सोमः अह्नः उषसः दिवः च प्रवर्द्धयिता। कर्ता उदकानाम् कलशान् कामयते इन्द्रस्य हृदयम् आविशन् धाराभिः ॥ १९ ॥

मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशाँ अचिक्रदत्।
त्रितस्य नाम जनयन् मधु क्षरदिन्द्रस्य वायोः सख्याय कर्तवे ॥ २० ॥

मनीषिऽभिः। पवते। पूर्व्यः। कविः। नृऽभिः। यतः। परि। कोशान्। अचिक्रदत्।
त्रितस्य। नाम। जनयन्। मधु। क्षरत्। इन्द्रस्य। वायोः। सख्याय। कर्तवे ॥ २० ॥

वेङ्कट० धाराभिः पवते प्रत्नः कविः। नृभिः परिगृहीतः कोशान् लक्षीकृत्य क्रन्दति। सोऽयं त्रिस्थानस्येन्द्रस्य उदकम्[6] जनयन् मधु क्षरति। [7]त्रितो वा[7] यजमानः। इन्द्रस्य वायोः च[8] सख्यम् कर्तुम् ॥ २० ॥

[9]इति सप्तमाष्टके तृतीयाध्याये पञ्चदशो वर्गः[9] ॥

१. अध्यातारो वि[1]. २. मधुकरं वि[1] अ[1]. ३. तु. निघ ३,१५. ४-४. त्रिस्संवनेषः प्रतिबन्धा वि[1]; त्रिसवनेष्वप्रतिबद्धा वि[3]; त्रिसवनेष्वप्रतिबद्धा अ[1]. ५. प्रेरैता वि[3]; प्रेरयिता अ[1]. ६. तु. निघ १,१२. ७-७. पातितो मूको. ८. नास्ति वि[1]. ९-९. नास्ति मूको.

अयं पुनान उषसो वि रोचयदयं सिन्धुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुहान आशिरं सोमो हृदे पवते चारु मत्सरः ॥ २१ ॥

अयम् । पुनानः । उषसः । वि । रोचयत् । अयम् । सिन्धुऽभ्यः । अभवत् । ऊँ इति । लोकऽकृत् ।
अयम् । त्रिः । सप्त । दुदुहानः । आऽशिरम् । सोमः । हृदे । पवते । चारु । मत्सरः ॥ २१ ॥

वेङ्कट० अयम् पवमानः उषसः वि रोचयति । अयम् सिन्धुभ्यः जायते लोकस्य कर्ता । अयम् त्रिः[1] सप्त एकविंशतिं गाः आशिरम् दुदुहानः ऋत्विङ्मुखेन सोमः हृदयस्य मदकरः कल्याणम् पवते ॥ २१ ॥

पवस्व सोम दिव्येषु धामसु सृजान इन्दो कलशे पवित्र आ ।
सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि ॥ २२ ॥

पवस्व । सोम । दिव्येषु । धामऽसु । सृजानः । इन्दो इति । कलशे । पवित्रे । आ ।
सीदन् । इन्द्रस्य । जठरे । कनिक्रदत् । नृऽभिः । यतः । सूर्यम् । आ । अरोहयः । दिवि ॥ २२ ॥

वेङ्कट० पवस्व सोम ! दिव्येषु स्थानेषु[2] सृज्यमानः, इन्दो ! कलशे पवित्रे च सीदन् इन्द्रस्य जठरे शब्दं कुर्वन् ऋत्विग्भिः यतः सूर्यम् आ अरोहयः दिवि इति ॥ २२ ॥

अद्रिभिः सुतः पवसे पवित्र आँ इन्दविन्द्रस्य जठरेष्वाविशन् ।
त्वं नृचक्षा अभवो विचक्षण सोम गोत्रमङ्गिरोभ्योऽवृणोरप ॥ २३ ॥

अद्रिऽभिः । सुतः । पवसे । पवित्रे । आ । इन्दो इति । इन्द्रस्य । जठरेषु । आऽविशन् ।
त्वम् । नृऽचक्षाः । अभवः । विऽचक्षण । सोम । गोत्रम् । अङ्गिरःऽभ्यः । अवृणोः । अप ॥ २३ ॥

वेङ्कट० ग्रावभिः सुतः पवसे[3] पवित्रे इन्दो ! इन्द्रस्य जठरेषु आविशन् । त्वम् नृणां द्रष्टा अभवः विद्रष्टः ! सोम ! मेघम् अङ्गिरसामर्थाय "अप अवृणोः"[4] ॥ २३ ॥

त्वां सोम पवमानं स्वाध्योऽनु विप्रासो अमदन्नवस्यवः ।
त्वां सुपर्ण आभरद् दिवस्परीन्दो विश्वाभिर्मतिभिः परिष्कृतम् ॥ २४ ॥

त्वाम् । सोम । पवमानम् । सुऽआध्यः । अनु । विप्रासः । अमदन् । अवस्यवः ।
त्वाम् । सुऽपर्णः । आ । अभरत् । दिवः । परि । इन्दो इति । विश्वाभिः । मतिऽभिः । परिऽकृतम् ॥ २४ ॥

---

१. नास्ति भ१. २ नास्ति वि१. ३. पवते मूको. ४-४. अवावृणो वि१ अ१; अवावृणोः वि१.

वेङ्कट० त्वाम् सोम ! पवमानम् सुकर्माणः अभि स्तुवन्ति मेधाविनः रक्षणकामाः । त्वाम् श्येनः आहृतवान् द्युलोकाद्[1] इन्दो ! विश्वाभिः स्तुतिभिः अलङ्कृतम् ॥ २४ ॥

अव्ये॑ पुना॒नं परि॒ वार॑ ऊ॒र्मिणा॒ हरिं॑ नवन्ते अ॒भि स॒प्त धे॒नवः॑ ।
अ॒पामु॒पस्थे॒ अध्या॒यवः॑ क॒विमृ॒तस्य॒ योना॑ महि॒षा अ॑हेषत ॥ २५ ॥

अव्ये॑ । पु॒ना॒नम् । परि॑ । वारे॑ । ऊ॒र्मिणा॑ । हरि॑म् । न॒व॒न्ते॒ । अ॒भि । स॒प्त । धे॒नवः॑ ।
अ॒पाम् । उ॒पऽस्थे॑ । अधि॑ । आ॒यवः॑ । क॒विम् । ऋ॒तस्य॑ । योना॑ । म॒हि॒षाः । अ॒हे॒ष॒त ॥ २५ ॥

वेङ्कट० अवेर्वाले धारया परितः पवमानम् हरितवर्णम्[2] अभि गच्छन्ति सप्त नद्यः । अन्तरिक्षे मनुष्याः कविम् उदके महान्तः प्रेरयन्ति ॥ २५ ॥

[3]इति सप्तमाष्टके तृतीयाध्याये षोडशो वर्गः[3] ॥

इन्दुः॑ पुना॒नो अति॑ गाहते॒ मृधो॒ विश्वा॑नि कृ॒ण्वन्त्सु॒पथा॑नि॒ यज्य॑वे ।
गाः कृ॑ण्वा॒नो नि॒र्णिजं॑ हर्य॒तः क॒विरत्यो॒ न क्रीळ॒न् परि॒ वार॑मर्षति ॥ २६ ॥

इन्दुः॑ । पु॒ना॒नः । अति॑ । गा॒ह॒ते॒ । मृधः॑ । विश्वा॑नि । कृ॒ण्वन् । सु॒ऽप॒था॑नि । यज्य॑वे ।
गाः । कृ॒ण्वा॒नः । निः॒ऽनिज॑म् । ह॒र्य॒तः । क॒विः । अत्यः॑ । न । क्रीळ॑न् । परि॑ । वार॑म् । अ॒र्ष॒ति॒ ॥

वेङ्कट० इन्दुः पूयमानः अति गाहते शत्रून् विश्वानि स्थानानि कृण्वन् सुमार्गाणि यजमानाय । पशून् कृण्वानः आत्मनो रूपम् कान्तः[4] कविः अत्यः इव क्रीळन् परि गच्छति पवित्रम् ॥ २६ ॥

अ॒स॒श्चतः॑ श॒तधा॑रा अ॒भि॒श्रियो॒ हरिं॑ नवन्तेऽव॒ ता उ॑द॒न्युवः॑ ।
क्षिपो॑ मृजन्ति॒ परि॒ गोभि॒रावृ॑तं तृ॒तीये॑ पृ॒ष्ठे अधि॑ रोच॒ने दि॒वः ॥ २७ ॥

अ॒स॒श्चतः॑ । श॒तऽधा॑राः । अ॒भि॒ऽश्रियः॑ । हरि॑म् । न॒व॒न्ते॒ । अव॑ । ताः । उ॒द॒न्युवः॑ ।
क्षिपः॑ । मृ॒ज॒न्ति॒ । परि॑ । गोभिः॑ । आऽवृ॑तम् । तृ॒तीये॑ । पृ॒ष्ठे । अधि॑ । रो॒च॒ने । दि॒वः ॥ २७ ॥

वेङ्कट० [5]असङ्गताः ताः[5] बहुधाराः सूर्यस्य दीप्तयः अभितः सोमं श्रयन्त्यो[6] हरितवर्णम् अव सङ्गच्छन्ति[7] उदककामाः । अङ्गुलयः परि मृजन्ति सोमं गोविकारैः आवृतम् तृतीये स्थाने[8] अधि[9] वर्तमानम्, यत् स्थानम् आदित्यो रोचयति ॥ २७ ॥

---

१. द्युलोकम् वि[1]. २. हरिवर्णं मूको. ३-३. नास्ति मूको. ४. रान्तः वि[2] अ[1]. ५-५. असम्प्रस्त्व वि[2]; असंग्रस्ता अ[1]. ६. श्रयन्तो वि[1]. ७. °च्छत वि[1] अ[1]; °च्छन्त वि[1]. ८. नास्ति वि[1]. ९. नास्ति वि[2] अ[1].

तवे॒माः प्र॒जा दि॒व्यस्य॒ रेत॑स॒स्त्वं विश्व॑स्य॒ भुव॑नस्य राजसि ।
अथे॒दं विश्वं॑ पवमान ते॒ वशे॒ त्वमि॑न्दो प्रथ॒मो धा॑म॒धा अ॑सि ॥ २८ ॥

तव॑ । इ॒माः । प्र॒ऽजाः । दि॒व्यस्य॑ । रेत॑सः । त्वम् । विश्व॑स्य । भुव॑नस्य । रा॒ज॒सि ।
अथ॑ । इ॒दम् । विश्व॑म् । प॒व॒मा॒न॒ । ते॒ । वशे॑ । त्वम् । इन्दो॒ इति॑ । प्र॒थ॒मः । धा॒म॒ऽधाः । अ॒सि॒ ॥

वेङ्कट० तव इमाः प्रजाः दिवि भवस्य रेतसः सकाशाज्जाताः। त्वम् सर्वस्य भुवनस्य राजसि। अथ इदम् सर्वम् पवमान! तव वशे भवति। त्वम् इन्दो! प्रथमः तेजसो धर्ता भवसि ॥२८॥

त्वं स॑मु॒द्रो अ॑सि विश्व॒वित् क॑वे॒ तवे॒माः पञ्च॑ प्र॒दिशो॒ विध॑र्मणि ।
त्वं द्यां च॑ पृथि॒वीं चाति॑ जभ्रिषे॒ तव॒ ज्योतीं॑षि पवमा॒न सूर्यः॑ ॥ २९ ॥

त्वम् । स॒मु॒द्रः । अ॒सि॒ । वि॒श्व॒ऽवित् । क॒वे॒ । तव॑ । इ॒माः । पञ्च॑ । प्र॒ऽदिशः॑ । विऽध॑र्मणि ।
त्वम् । द्याम् । च॒ । पृ॒थि॒वीम् । च॒ । अति॑ । ज॒भ्रि॒षे॒ । तव॑ । ज्योतीं॑षि । प॒व॒मा॒न॒ । सूर्यः॑ ॥२९॥

वेङ्कट० यस्मात् समुद्द्रवन्ति आपः सः (तु. या २,१०) त्वम् असि सर्वज्ञः कवे!। तव इमाः पञ्च प्रकृष्टा दिशः विधारणे तिष्ठन्ति। त्वम् द्यावापृथिव्यौ अत्यन्तम् च बिभर्षि। तव ज्योतींषि पवमान! सूर्यः[1] आप्याययति[2] ॥ २९ ॥

त्वं प॒वित्रे॒ रज॑सो॒ विध॑र्मणि दे॒वेभ्यः॑ सोम पवमान पूयसे ।
त्वामु॒शिजः॑ प्रथ॒मा अ॑गृभ्णत॒ तुभ्ये॒मा विश्वा॒ भुव॑नानि येमिरे ॥ ३० ॥

त्वम् । प॒वित्रे॑ । रज॑सः । विऽध॑र्मणि । दे॒वेभ्यः॑ । सो॒म॒ । प॒व॒मा॒न॒ । पू॒य॒से॒ ।
त्वाम् । उ॒शिजः॑ । प्र॒थ॒माः । अ॒गृ॒भ्ण॒त॒ । तुभ्य॑ । इ॒मा । विश्वा॑ । भुव॑नानि । ये॒मि॒रे॒ ॥ ३० ॥

वेङ्कट० त्वम् पवित्रे लोकस्य[3] विधारके[4] देवेभ्यः सोम! पवमान! पूयसे। त्वाम् ऋत्विजः मुख्याः गृह्णन्ति। तुभ्यम् इमानि विश्वानि भूतानि नियच्छन्ति[5] आत्मानम् ॥ ३० ॥

[6]इति सप्तमाष्टके तृतीयाध्याये सप्तदशो वर्गः[6] ॥

प्र रे॒भ ए॒त्यति॒ वार॑म॒व्ययं॒ वृषा॒ वने॒ष्वव॑ चक्रद॒द्धरिः॑ ।
सं धी॒तयो॑ वावशा॒ना अ॑नूषत॒ शिशुं॑ रिहन्ति म॒तयः॒ पनि॑प्नतम् ॥ ३१ ॥

---

१. सर्वज्ञ वि[२] अ[१]. २. व्याचयति वि[२] अ[१]. ३. लोके अ[१]. ४. पिधारके वि[२] अ[१]; विचारके वि[१]. ५. यन्ति वि[१]. ६-६. नास्ति मूको.

प्र । रेभः । एति । अति । वारम् । अव्ययम् । वृषा । वनेषु । अव । चक्रदत् । हरिः ।
सम् । धीतयः । वावशानाः । अनूषत । शिशुम् । रिहन्ति । मतयः । पनिप्नतम् ॥ ३१ ॥

**वेङ्कट०** प्र अति गच्छति[1] शब्दं कुर्वन् [2]वालम् अविमयम्[2] । वृषा उदकेषु अव क्रन्दति हरिः । सम् स्तुवन्ति ध्यातारः ऋत्विजः कामयमानाः शिशुम् लिहन्ति स्तोतारः शब्दं कुर्वाणम् ॥३१॥

**स सूर्यस्य रश्मिभिः परि व्यत तन्तुं तन्वानस्त्रिवृतं यथा विदे ।**
**नयन्नृतस्य प्रशिषो नवीयसीः पतिर्जनीनामुप याति निष्कृतम् ॥ ३२ ॥**

सः । सूर्यस्य । रश्मिऽभिः । परि । व्यत । तन्तुम् । तन्वानः । त्रिऽवृतम् । यथा । विदे ।
नयन् । ऋतस्य । प्रऽशिषः । नवीयसीः । पतिः । जनीनाम् । उप । याति । निःऽकृतम् ॥३२॥

**वेङ्कट०** सः[3] सूर्यस्य रश्मिभिः परि वेष्टयति आत्मानम् यज्ञम् तन्वानः सवनैर्वेदैः वा त्रिवृतम्, यथा जानाति । नयन् सत्यस्य यजमानस्य प्रशासनानि[4] नवतराणि आत्मानं तस्याभिमतं साधयन् पतिः जातानाम्[5] उप याति स्थानम् ॥ ३२ ॥

**राजा सिन्धूनां पवते पतिर्दिव ऋतस्य याति पथिभिः कनिक्रदत् ।**
**सहस्रधारः परि षिच्यते हरिः पुनानो वाचं जनयन्नुपावसुः ॥ ३३ ॥**

राजा । सिन्धूनाम् । पवते । पतिः । दिवः । ऋतस्य । याति । पथिऽभिः । कनिक्रदत् ।
सहस्रऽधारः । परि । सिच्यते । हरिः । पुनानः । वाचम् । जनयन् । उपऽवसुः ॥ ३३ ॥

**वेङ्कट०** सिन्धूनाम्[6] राजा पवते । दिवः पतिः यज्ञस्य याति मार्गैः शब्दं कुर्वन् । बहुधारः परि सिच्यते हरिः पूयमानः वाचम् जनयन् उपगतधनः ॥ ३३ ॥

**पवमान मह्यर्णो वि धावसि सूरो न चित्रो अव्ययानि पव्यया ।**
**गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि ॥ ३४ ॥**

पवमान । महि । अर्णः । वि । धावसि । सूरः । न । चित्रः । अव्ययानि । पव्यया ।
गभस्तिऽपूतः । नृऽभिः । अद्रिऽभिः । सुतः । महे । वाजाय । धन्याय । धन्वसि ॥ ३४ ॥

**वेङ्कट०** पवमान ! महद् उदकम् वि धावसि सूर्यः इव [7]चायनीयः अविमयानि[7] पवित्राणि । बाहुपूत[8] ऋत्विग्भिः ग्रावभिश्च अभिषुतः महते सङ्ग्रामाय धनहिताय गच्छसि ॥ ३४ ॥

---

१. यच्छति वि[2]; यच्छन्ति अ[1]; गच्छन्ति वि[1]. २-२. अतिपालमपिमयं वि[2]; अतिवालमयिमयं अ[1]. ३. नास्ति वि[2] अ[1]. ४. प्रकाशा° वि[2] अ[1]. ५. °जांताम वि[2] अ[1]; °जांनायाम् वि[2]. ६. नास्ति वि[1]. ७-७. पायनीयोपिमयानिव वि[2] अ[1]. ८. बहुपू° वि[1].

इषमूर्जं पवमानाभ्यर्षसि श्येनो न वंसु कलशेषु सीदसि ।
इन्द्राय मद्वा मद्यो मदः सुतो दिवो विष्टम्भ उपमो विचक्षणः ॥ ३५ ॥

इषम् । ऊर्जम् । पवमान । अभि । अर्षसि । श्येनः । न । वंसु । कलशेषु । सीदसि ।
इन्द्राय । मद्वा । मद्यः । मदः । सुतः । दिवः । विष्टम्भः । उपऽमः । विऽचक्षणः ॥ ३५ ॥

वेङ्कट० अन्नम् रसम् पवमान! अभि क्षरसि । श्येनः इव कुलायेषु कलशेषु सीदसि । इन्द्राय मदकरः मदहेतुः मदः अभिषुतः द्युलोकस्य उपमीयमानः विष्टम्भः विद्रष्टा । 'स्थूणेव जनाँ[1] उपमित्[1]' ( ऋ १,५९,१ ) इत्युक्तम् ॥ ३५ ॥

[2]इति सप्तमाष्टके तृतीयाध्याये अष्टादशो वर्गः[2] ॥

सप्त स्वसारो अभि मातरः शिशुं नवं जज्ञानं जेन्यं विपश्चितम् ।
अपां गन्धर्वं दिव्यं नृचक्षसं सोमं विश्वस्य भुवनस्य राजसे ॥ ३६ ॥

सप्त । स्वसारः । अभि । मातरः । शिशुम् । नवम् । जज्ञानम् । जेन्यम् । विपःऽचितम् ।
अपाम् । गन्धर्वम् । दिव्यम् । नृऽचक्षसम् । सोमम् । विश्वस्य । भुवनस्य । राजसे ॥ ३६ ॥

वेङ्कट० सप्त स्वयं[3] सरन्त्यः अभि गच्छन्ति नद्यः[4] शिशुम् नवम्[5] जायमानम्[6] जयशीलम्[7] विपश्चितम् अपाम् मध्ये वर्तमानम् गन्धर्वम् दिवि भवम् नृणां द्रष्टारम् सोमम् सर्वस्य भुवनस्य विराजनार्थमिति ॥ ३६ ॥

ईशान इमा भुवनानि वीयसे युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद् घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ३७ ॥

ईशानः । इमा । भुवनानि । वि । ईयसे । युजानः । इन्दो इति । हरितः । सुऽपर्ण्यः ।
ताः । ते । क्षरन्तु । मधुऽमत् । घृतम् । पयः । तव । व्रते । सोम । तिष्ठन्तु । कृष्टयः ॥ ३७ ॥

वेङ्कट० ईश्वरो भवन् इमानि भुवनानि मध्येन गच्छसि योजयन् इन्दो! रथे अश्वाः सुपतनाः । ताः तव स्वभूताः क्षरन्तु मधुमत् घृतम् पयः च । तव कर्मणि सोम! तिष्ठन्तु मनुष्याः ॥३७॥

त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद् वयं स्याम भुवनेषु जीवसे ॥ ३८ ॥

---

१. जानान् मूको. २-२. नास्ति मूको. ३. स्वरं वि[२]. ४. 'द्यः स्तुतिं वि[२] अ[१]. ५. नवां वि[२] अ[१]. ६. छायमानं वि[२] अ[१]; जनयमानं वि[१]. ७. जनयशीलं वि[१].

त्वम् । नृऽचक्षाः । असि । सोम । विश्वतः । पवमान । वृषभ । ताः । वि । धावसि ।
सः । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । वयम् । स्याम । भुवनेषु । जीवसे ॥ ३८ ॥

**वेङ्कट०** त्वम् नृणां द्रष्टा भवसि [1]सर्वेषु भुवनेषु सोम![1] पवमान! †वृषभ! ताः अपः† च वि धावसि । सः नः‡ पवस्व वसुहिरण्ययुक्तं धनम् । वयम् स्याम भुवनेषु एषु जीवितुं प्रभवः[2] ॥ ३८ ॥

गोवित् पवस्व वसुविद्धिरण्यविद् रेतोधा इन्दो भुवनेष्वर्पितः ।
त्वं सुवीरो असि सोम विश्ववित् तं त्वा विप्रा उप गिरेम आसते ॥ ३९ ॥

गोऽवित् । पवस्व । वसुऽवित् । हिरण्यऽवित् । रेतःऽधाः । इन्दो इति । भुवनेषु । अर्पितः ।
त्वम् । सुऽवीरः । असि । सोम । विश्वऽवित् । तम् । त्वा । विप्राः । उप । गिरा । इमे । आसते ॥

**वेङ्कट०** गवादीनां[3] वेत्ता[3] पवस्व रेतसो धाता ओषधीनाम् इन्दो! त्वम् उदकेषु अर्पितः । त्वम् सुवीरः असि सोम! सर्वस्य दाता । तम् त्वाम् इमे विप्राः स्तुत्या उप आसते ॥ ३९ ॥

उन्मध्व ऊर्मिर्वननां अतिष्ठिपदपो वसानो महिषो वि गाहते ।
राजा पवित्ररथो वाजमारुहत् सहस्रभृष्टिर्जयति श्रवो बृहत् ॥ ४० ॥

उत् । मध्वः । ऊर्मिः । वननाः । अतिस्थिपत् । अपः । वसानः । महिषः । वि । गाहते ।
राजा । पवित्रऽरथः । वाजम् । आ । अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ॥ ४० ॥

**वेङ्कट०** उत् स्थापयति मध्वः ऊर्मिः [4]वननीया वाचः[4] । उदकानि आच्छादयन् महान् सोमः वि गाहते । राजा पवित्ररथः सोमः सङ्ग्रामम् आ रोहति । बहुभ्रंशनः जयति च[5] महद् अन्नम् ॥ ४० ॥

[5]इति सप्तमाष्टके तृतीयाध्याये एकोनविंशो वर्गः[5] ॥

स भन्दना उदियर्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि ।
ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत इन्दविन्द्रमस्मभ्यं याचतात् ॥ ४१ ॥

सः । भन्दनाः । उत् । इयर्ति । प्रजाऽवतीः । विश्वऽआयुः । विश्वाः । सुऽभराः । अहःऽदिवि ।
ब्रह्म । प्रजाऽवत् । रयिम् । अश्वऽपस्त्यम् । पीतः । इन्दो इति । इन्द्रम् । अस्मभ्यम् । याचतात् ॥

1-1. नास्ति वि[1]. †-† पृषता भवः मूको. ‡ न मूको. २. नास्ति वि[1]. ३ नास्ति मूको. ४-४. वनीया वाचा वि[1]. ५-५. नास्ति मूको.

वेङ्कट० 'सः स्तुतीः[1] प्रेरयति प्रजाभिः स्तोतृभिर्युक्ताः सर्वस्य गन्ता सर्वाः[2] 'सुष्ठु ह्रियमाणाः[1] अहोरात्रयोः। अन्नम् प्रजायुक्तम् रयिम् च व्याप्तगृहम् पीतः त्वम् इन्द्रेण इन्दो! तम् इन्द्रम् अस्मभ्यम् याचतात्[4] ॥ ४१ ॥

सो अग्रे अह्नां हरिर्हर्यतो मदः प्र चेतसा चेतयते अनु द्युभिः ।
द्वा जना यातयन्नन्तरीयते नरा च शंसं दैव्यं च धर्तरि ॥ ४२ ॥

सः । अग्रे । अह्नाम् । हरिः । हर्यतः । मदः । प्र । चेतसा । चेतयते । अनु । द्युऽभिः ।
द्वा । जना । यातयन् । अन्तः । ईयते । नराशंसम् । च । दैव्यम् । च । धर्तरि ॥ ४२ ॥

वेङ्कट० सः मुखे अह्नाम् [5]हरिः कान्तः[5] मदः अनु प्र ज्ञायते मनुष्याणाम् चेतसा दीप्तिभिः। द्वौ जनौ दैव्यं[6] मनुष्यं च कार्येषु प्रेरयन् द्यावापृथिव्योः[7] अन्तः[8] गच्छति। सोऽयं नरैः शंसनीयम् दैव्यम्[9] च रयिं धारके यजमाने प्रयच्छति ॥ ४२ ॥

अञ्जते व्यञ्जते समञ्जते क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं हिरण्यपावाः पशुमासु गृभ्णते ॥ ४३ ॥

अञ्जते । वि । अञ्जते । सम् । अञ्जते । क्रतुम् । रिहन्ति । मधुना । अभि । अञ्जते ।
सिन्धोः । उत्ऽश्वासे । पतयन्तम् । उक्षणम् । हिरण्यऽपावाः । पशुम् । आसु । गृभ्णते ॥४३॥

वेङ्कट० सोमम् अञ्जते, विविधं च अञ्जते, सह च अञ्जते। [10]गोभिः श्रीणन्तीत्यर्थः[10]। तं देवाः कर्तारं सोमम् आस्वादयन्ति, मधुरेण च गव्येन अभि अञ्जते। सिन्धोः समुच्छ्रिते देशे गच्छन्तम् सेक्तारम् हिरण्येन सह पुनन्तः द्रष्टारं सोमम् आसु वसतीवरीषु गृह्णन्ति ॥ ४३ ॥

विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।
अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीळन्नसरद्वृषा हरिः ॥ ४४ ॥

विपःऽचिते । पवमानाय । गायत । मही । न । धारा । अति । अन्धः । अर्षति ।
अहिः । न । जूर्णाम् । अति । सर्पति । त्वचम् । अत्यः । न । क्रीळन् । असरत् । वृषा । हरिः ॥

वेङ्कट० मेधाविने[11] पवमानाय स्तुतिम् उच्चारयत। महती इव वर्षधारा अति गच्छति अन्नं सोमात्मकम्। सोऽयं सोमः पवित्रम् अति सर्पति, यथा जीर्णाम् त्वचम् [12]अहिः अतिसर्पति[12]। अश्वः इव क्रीळन्[13] सरति वृषा हरितवर्णः ॥ ४४ ॥

---

१-१. नास्ति वि[2] अ[1]. २. सर्व वि[1]; सर्वा वि[1] अ[1]. ३-३. सुष्टुभ्रियमाणाम् वि[1] अ[1]. ४ याचकात् वि[1]; याचकान् वि[2] अ[1]. ५-५ हरिकान्तो वि[1]; परिकान्तो अ[1]. ६. देव्य वि[1]; देव्यं अ[1]. ७. °थिव्यौ वि[1] अ[1]. ८. भ्रुटितम् वि[1] अ[1]. ९. देव्यम् वि[1] अ[1]. १०-१०. गोभिश्री° वि[1]; गोभिः श्रीणातीत्यर्थः वि[2] अ[1]. ११. मेधाविनो मूको. १२-१२. अभिरतिसरति वि[1]; अभिसरतिसर्पति अ[1]; अहरतिसर्पन्ति वि[1]. १३ क्रीडन् वि[2] अ[1]

अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ ४५ ॥

अग्रेऽगः । राजा । अप्यः । तविष्यते । विऽमानः । अह्नाम् । भुवनेषु । अर्पितः ।
हरिः । घृतऽस्नुः । सुऽदृशीकः । अर्णवः । ज्योतिःऽरथः । पवते । राये । ओक्यः ॥ ४५ ॥

**वेङ्कट०** अग्रे गच्छन् राजा अप्सु संस्कृतः तविष्यते वर्धिष्यते पूर्वपक्षेषु विनिर्माता दिवसानाम् उदकेषु अर्पितः । हरितवर्णः प्रस्रुतघृतः[1] शोभनदर्शनः उदकवान् ज्योतीरथः पवते धनार्थम् गृहहितः ॥ ४५ ॥

[2]इति सप्तमाष्टके तृतीयाध्याये त्रिंशो वर्गः[2] ॥

असर्जि स्कम्भो दिव उद्यतो मदः परि त्रिधातुर्भुवनान्यर्षति ।
अंशुं रिहन्ति मतयः पनिप्नतं गिरा यदि निर्णिजमृग्मिणो ययुः ॥ ४६ ॥

असर्जि । स्कम्भः । दिवः । उत्ऽयतः । मदः । परि । त्रिऽधातुः । भुवनानि । अर्षति ।
अंशुम् । रिहन्ति । मतयः । पनिप्नतम् । गिरा । यदि । निःऽनिजम् । ऋग्मिणः । ययुः ॥४६॥

**वेङ्कट०** सृज्यते स्कम्भयिता द्युलोकस्य उद्यतः सोमः । परि गच्छति त्रिधातुः सोमः भुवनानि[3] । द्रोणकलशः आधवनीयः[4] पूतभृदिति धातवः । तमिमम् अंशुम् लिहन्ति पूजकाः शब्दायमानम् । स्तुत्या यदि एनं[5] निर्णिक्तम् स्तोतार ऋत्विजः गच्छन्ति, लिहन्ति तदा यजमानास्तमिति ॥ ४६ ॥

प्र ते धारा अत्यण्वानि मेष्यः पुनानस्य संयतो यन्ति रंहयः ।
यद्गोभिरिन्दो चम्वोः समज्यस आ सुवानः सोम कलशेषु सीदसि ॥ ४७ ॥

प्र । ते । धाराः । अति । अण्वानि । मेष्यः । पुनानस्य । सम्ऽयतः । यन्ति । रंहयः ।
यत् । गोभिः । इन्दो इति । चम्वोः । सम्ऽअज्यसे । आ । सुवानः । सोम । कलशेषु । सीदसि ॥४७॥

**वेङ्कट०** प्र अति गच्छन्ति तव धाराः [6]मेष्यः अवेः[6] सूक्ष्माणि लोमानि पूयमानस्य सङ्गृह्यमाणस्य रंहणशीलाः[7] । यदा उदकैः इन्दो! त्वम् अधिषवणफलकयोः आभिमुख्येन समज्यसे, स ततः सीदसि सूयमानः त्वम् सोम! कलशेषु ॥ ४७ ॥

पवस्व सोम क्रतुविन्न उक्थ्योऽव्यो वारे परि धाव मधु प्रियम् ।
जहि विश्वान् रक्षस इन्दो अत्रिणो बृहद्वदेम विदथे सुवीराः ॥ ४८ ॥

---

१. प्रसृतघृत वि[2] अ[1]; प्रस्रुतः वि[1]. २-२. नास्ति मूको. ३. भवनानि मूको. ४. आ:नीय वि[2] अ[2]; आसव° वि[1]. ५. एन मूको. ६-६. मेष्यो वि[1]; मेष्यापे वि[2] अ[2]. ७. रंहशीला वि[1].

पव॑स्व । सो॒म॒ । क्र॒तु॒ऽवित् । नः॒ । उ॒क्थ्यः॑ । अव्यः॑ । वारे॑ । परि॑ । धा॒व॒ । मधु॑ । प्रि॒यम् ।
ज॒हि । विश्वा॑न् । र॒क्षसः॑ । इ॒न्दो॒ इति॑ । अ॒त्रिणः॑ । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥४८॥

**वेङ्कट०** पवस्व सोम! कर्मणो लम्भयिता अस्माकम् प्रशस्यः। पवित्रे परि क्षर प्रियम् मधु। जहि विश्वान् राक्षसान् इन्दो! अदनशीलान् ॥ ४८ ॥

[1]इति सप्तमाष्टके तृतीयाध्याये एकविंशो वर्गः[1] ॥

[ ८७ ]

[1]उशना काव्य ऋषिः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः[1]।

प्र तु द्र॑व॒ परि॒ कोशं॒ नि षी॑द॒ नृभिः॑ पुना॒नो अ॒भि वाज॑मर्ष ।
अश्वं॒ न त्वा॑ वा॒जिनं॑ म॒र्जय॒न्तोऽच्छा॑ ब॒र्ही र॑श॒नाभि॑र्नयन्ति ॥ १ ॥

प्र । तु । द्र॒व॒ । परि॑ । कोश॑म् । नि । सी॒द॒ । नृऽभिः॑ । पु॒ना॒नः । अ॒भि । वाज॑म् । अ॒र्ष॒ ।
अश्व॑म् । न । त्वा॒ । वा॒जिन॑म् । म॒र्जय॑न्तः । अच्छ॑ । ब॒र्हिः । र॒श॒नाभिः॑ । न॒य॒न्ति॒ ॥ १ ॥

**वेङ्कट०** उशना। प्र द्रव शीघ्रम्, परि नि सीद च द्रोणकलशम् नृभिः पूयमानः, अभि अर्ष सङ्ग्रामम्। अश्वम् इव त्वां बलिनम् मर्जयन्तः यज्ञं प्रति नयन्ति अङ्गुलीभिः[2] ॥ १ ॥

स्वा॒यु॒धः प॑वते दे॒व इन्दु॑रशस्ति॒हा वृ॒जनं॒ रक्ष॑माणः ।
पि॒ता दे॒वानां॑ ज॒नि॒ता सु॒दक्षो॑ विष्ट॒म्भो दि॒वो ध॒रुणः॑ पृथि॒व्याः ॥ २ ॥

सु॒ऽआ॒यु॒धः । प॒व॒ते॒ । दे॒वः । इन्दुः॑ । अ॒श॒स्ति॒ऽहा । वृ॒जन॑म् । रक्ष॑माणः ।
पि॒ता । दे॒वाना॑म् । ज॒नि॒ता । सु॒ऽदक्षः॑ । वि॒ष्ट॒म्भः । दि॒वः । ध॒रुणः॑ । पृ॒थि॒व्याः ॥ २ ॥

**वेङ्कट०** शोभनायुधः पवते देवः इन्दुः रक्षोहा यजमानानामुपद्रवम् रक्षमाणः पालयिता जनकः देवानाम् सुबलः धारयिता[3] दिवः धारकः च पृथिव्याः ॥ २ ॥

ऋषि॒र्विप्रः॑ पुरए॒ता जना॑नामृ॒भुर्धीर॑ उ॒शना॒ काव्ये॑न ।
स चि॑द्विवेद॒ निहि॑तं॒ यदा॑सामपी॒च्यं१॒ गुह्यं॒ नाम॒ गोना॑म् ॥ ३ ॥

ऋषिः॑ । विप्रः॑ । पु॒रः॒ऽए॒ता । जना॑नाम् । ऋ॒भुः । धीरः॑ । उ॒शना॑ । काव्ये॑न ।
सः । चि॒त् । वि॒वे॒द॒ । नि॒ऽहि॑तम् । यत् । आ॒सा॒म् । अ॒पी॒च्य॑म् । गुह्य॑म् । नाम॑ । गोना॑म् ॥३॥

**वेङ्कट०** द्रष्टा मेधावी पुरएता जनानाम् महान् धृष्टः[4] अयम् उशना कवित्वेन। सः अयं लभते

---

१-१. नास्ति मूको. २. तु. निघ २,५; अङ्गुलिभिः अ[1]. ३. पालयिता वि[2] अ[1]. ४. दृढः वि[3]; दृष्टः अ[1]; सृष्टः वि[1].

निहितम् यत् आसाम् गवाम् अन्तर्हितम् गुह्यम् उदकं पयोलक्षणमिति ॥ ३ ॥

एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णे परि पवित्रे अक्षाः ।
सहस्रसाः शतसा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ४ ॥

एषः । स्यः । ते । मधुऽमान् । इन्द्र । सोमः । वृषा । वृष्णे । परि । पवित्रे । अक्षारिति ।
सहस्रऽसाः । शतऽसाः । भूरिऽदावा । शश्वत्ऽतमम् । बर्हिः । आ । वाजी । अस्थात् ॥ ४ ॥

**वेङ्कट०** सः[1] एषः तुभ्यम् मधुमान् इन्द्र! सोमः वृषा वृष्णे[2] परि क्षरति पवित्रे। सहस्रस्य दाता शतस्य च अपि च भूरेर्दाता नित्यम् यज्ञम् आ तिष्ठति बलवानिति[3] ॥ ४ ॥

एते सोमा अभि गव्या सहस्रा महे वाजायामृताय श्रवांसि ।
पवित्रेभिः पवमाना असृग्रञ्छ्रवस्यवो न पृतनाजो अत्याः ॥ ५ ॥

एते । सोमाः । अभि । गव्या । सहस्रा । महे । वाजाय । अमृताय । श्रवांसि ।
पवित्रेभिः । पवमानाः । असृग्रन् । श्रवस्यवः । न । पृतनाजः । अत्याः ॥ ५ ॥

**वेङ्कट०** एते सोमाः सृज्यन्ते गव्यानि[4] [5]सहस्राणि महते[5] बलाय अमृतत्वाय च अन्नान्याशिराणि लक्षीकृत्य पवित्रैः पूयमानाः अन्नकामाः इव सेनानां जेतारः अश्वाः ॥ ५ ॥

[6]इति सप्तमाष्टके तृतीयाध्याये द्वाविंशो वर्गः[6] ॥

परि हि ष्मा पुरुहूतो जनानां विश्वासरद्भोजना पूयमानः ।
अथा भर श्येनभृत प्रयांसि रयिं तुञ्जानो अभि वाजमर्ष ॥ ६ ॥

परि । हि । स्म । पुरुऽहूतः । जनानाम् । विश्वा । असरत् । भोजना । पूयमानः ।
अथ । आ । भर । श्येनऽभृत । प्रयांसि । रयिम् । तुञ्जानः । अभि । वाजम् । अर्ष ॥ ६ ॥

**वेङ्कट०** परि असरत् हि स्म बहुभिराहूतः[7] जनानाम् विश्वानि भोजनानि पूयमानः । सम्प्रति च [8]आ हर[8] हे [9]दिवः श्येनेनाहृत![9] सोम! । अन्नानि रयिम् प्रयच्छन् अभि गच्छ सङ्ग्रामम् ॥ ६ ॥

एष सुवानः परि सोमः पवित्रे सर्गो न सृष्टो अदधावदर्वा ।
तिग्मे शिशानो महिषो न शृङ्गे गा गव्यन्नभि शूरो न सत्वा ॥ ७ ॥

---

१. नास्ति वि[1]. २. वृणे वि[2] अ[1]; वृक्षेण वि[1]. ३. °नित्यर्थः अ[1]. ४. गन्तव्यानि मूको. ५-५. °स्राणामपहृते मूको. ६-६. नास्ति मूको. ७. बहुमितः वि[1]. ८-८. वाहर वि[2] अ[1]. ९-९. दिवश्येनाना° वि[2] अ[1].

एषः । सुवानः । परि । सोमः । पवित्रे । सर्गः । न । सृष्टः । अदधावत् । अर्वा ।
तिग्मे इति । शिशानः । महिषः । न । शृङ्गे इति । गाः । गव्यन् । अभि । शूरः । न । सत्वा ॥७॥

वेङ्कट० एषः सूयमानः[1] परि धावति सोमः पवित्रे अश्वः इव विसृष्टः गमनशीलः । [2]तिग्मे शृङ्गे[2] तीक्ष्णीकुर्वन् महिषः इव गाः इच्छंश्च शूरः इव अभि गच्छति युद्धं[3] सदनशीलः ॥ ७ ॥

एषा ययौ परमादन्तरद्रेः कूचित् सतीरूर्वे गा विवेद ।
दिवो न विद्युत् स्तनयन्त्यभ्रैः सोमस्य ते पवत इन्द्र धारा ॥ ८ ॥

एषा । आ । ययौ । परमात् । अन्तः । अद्रेः । कूऽचित् । सतीः । ऊर्वे । गाः । विवेद ।
दिवः । न । विऽद्युत् । स्तनयन्ती । अभ्रैः । सोमस्य । ते । पवते । इन्द्र । धारा ॥ ८ ॥

वेङ्कट० एषा आ जगाम उच्छ्रितात्स्थानात् । अपि च पणीनाम्[4] अद्रेः अन्तः कूचित्[5] कुहचित् गूढे देशे वर्तमानाः ऊर्वे[6] गाः लब्धवती । यत्र पणिभिरपहृता गावो निहिताः तद् ऊर्वम् । दिवः इव विद्युत् स्तनितशब्दं[7] कुर्वती[8] अभ्रैः उत्पादिता सोमस्य ते पवते [9]इन्द्र! धारा पानाय[9] ॥ ८ ॥

उत स्म राशिं परि यासि गोनामिन्द्रेण सोम सरथं पुनानः ।
पूर्वीरिषो बृहतीर्जीरदानो शिक्षा शचीवस्तव ता उपष्टुत् ॥ ९ ॥

उत । स्म । राशिम् । परि । यासि । गोनाम् । इन्द्रेण । सोम । सऽरथम् । पुनानः ।
पूर्वीः । इषः । बृहतीः । जीरदानो इति जीरऽदानो । शिक्ष । शचीऽवः । तव । ताः । उपऽस्तुत् ॥९॥

वेङ्कट० अपि च खलु सङ्घम् परि गच्छसि गवाम् इन्द्रेण सोम! एकं रथमास्थाय पूयमानः । बहूनि अन्नानि बृहन्ति[10] क्षिप्रदान! प्रयच्छ प्रज्ञावन्! [11]तव तानि उपस्तूयमानः[11] त्वमिति ॥ ९ ॥

[12]इति सप्तमाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[12] ॥

[८८]

[12]उशना काव्य ऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः[12] ।

अयं सोम इन्द्र तुभ्यं सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
त्वं ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १ ॥

---

१. °नः परिगच्छति अ[1]. २-२. तिग्मशृङ्गैः मूको. ३. नास्ति वि[1]. ४. वर्णिनाम् मूको. ५. कचित् अ[1]. ६. ऊवे वि[1]; ऊर्वो वि[3] अ[1]. ७. स्कन्दितश° वि[3] अ[1]. ८. कुर्वन्तो वि[1,3]; कुर्वन्ति अ[1]. ९-९. इन्द्रसाराय वि[1]. १०. हन्ति वि[2]; वहन्ति अ[1]; बृहति वि[1]. ११-११. त पदान्यु° वि[3] अ[1]; त वतान्यु° वि[1]. १२-१२. नास्ति मूको.

अयम् । सोमः । इन्द्र । तुभ्यम् । सुन्वे । तुभ्यम् । पवते । त्वम् । अस्य । पाहि ।
त्वम् । ह । यम् । चकृषे । त्वम् । ववृषे । इन्दुम् । मदाय । युज्याय । सोमम् ॥ १ ॥

**वेङ्कट०** अयम् सोमः इन्द्र! तुभ्यम् अभिषूयते, तुभ्यम् एव पवते, त्वम् एव अमुं पिब । त्वम् खलु यम् कृतवानसि, यं वा त्वम् वृतवानसि दीप्तं मदाय सहायाय, सोमम् तं पिबेति ॥ १ ॥

स ईं रथो न भुरिषाळयोजि महः पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥ २ ॥

सः । ईम् । रथः । न । भुरिषाट् । अयोजि । महः । पुरूणि । सातये । वसूनि ।
आत् । ईम् । विश्वा । नहुष्याणि । जाता । स्वःऽसाता । वने । ऊर्ध्वा । नवन्त ॥ २ ॥

**वेङ्कट०** सः अयम् रथः इव युज्यते भूरेर्भारस्य सोढा महान् बहूनि धनानि दातुम् । अनन्तरमेव एनं सर्वाणि मनुष्यजातानि[1] युद्धे वननीये उन्मुखानि सङ्गच्छन्तीति ॥ २ ॥

वायुर्न यो नियुत्वाँ इष्टयामा नासत्येव हव आ शंभविष्ठः ।
विश्ववारो द्रविणोदाइव त्मन् पूषेव धीजवनोऽसि सोम ॥ ३ ॥

वायुः । न । यः । नियुत्वान् । इष्टऽयामा । नासत्याऽइव । हवे । आ । शम्ऽभविष्ठः ।
विश्वऽवारः । द्रविणोदाःऽइव । त्मन् । पूषाऽइव । धीऽजवनः । असि । सोम ॥ ३ ॥

**वेङ्कट०** वायुः इव यः नियुत्वान् । नियुतो वायोरश्वाः[2] । अभिलषितागमनः अश्विनौ इव च आ-ह्वाने अत्यन्तं सुखस्य भावयिता विश्वैर्वरणीयः द्रविणोदाः इव आत्मनि यस्त्वं भवसि, स त्वम् पूषा इव कर्मणां प्रवर्तयिता भवसि सोम! ॥ ३ ॥

इन्द्रो न यो महा कर्माणि चक्रिर्हन्ता वृत्राणामसि सोम पूर्भित् ।
पैद्वो न हि त्वमहिनाम्नां हन्ता विश्वस्यासि सोम दस्योः ॥ ४ ॥

इन्द्रः । न । यः । महा । कर्माणि । चक्रिः । हन्ता । वृत्राणाम् । असि । सोम । पुःऽभित् ।
पैद्वः । न । हि । त्वम् । अहिऽनाम्नाम् । हन्ता । विश्वस्य । असि । सोम । दस्योः ॥ ४ ॥

**वेङ्कट०** इन्द्रः इव यः महान्ति कर्माणि ताच्छील्येन करोषि, स त्वम् हन्ता वृत्राणाम् भवसि सोम! पुरां भेत्ता[3] । हन्ता अश्वः[4] इव [5]त्वम् अहिनाम्नाम्[5] भवसि । यो नाम कश्चिदाहन्ता[2] भवति[6] । हन्ता भवसि विश्वस्य सोम! दस्योः ॥ ४ ॥

---

१. °ष्या° वि[1]. २. मयो मश्वाः वि[1]; वायो अश्वाः वि[2] अ[1]. ३. भेक्ता वि[2]; भोक्ता अ[1]. ४. तु. निघ १,१४. ५-५. महिम्नां वि[2] अ[1]; त्वं महीनाम्नां वि[1]. ६. भवसि वि[2] अ[1].

अग्निर्न यो वन आ सृज्यमानो वृथा पाजांसि कृणुते नदीषु ।
जनो न युध्वा महत उपब्दिरियर्ति सोमः पवमान ऊर्मिम् ॥ ५ ॥

अग्निः । नः । यः । वने । आ । सृज्यमानः । वृथा । पाजांसि । कृणुते । नदीषु ।
जनः । न । युध्वा । महतः । उपब्दिः । इयर्ति । सोमः । पवमानः । ऊर्मिम् ॥ ५ ॥

**वेङ्कट०** अग्निः इव यः अरण्ये वि-सृज्यमानः अनायासेन बलानि कुरुते नदीषु अन्तरिक्ष्यासु । जनः इव युद्धस्य कर्ता महतः शत्रोः शब्दापयिता प्रेरयति सोमः[1] पवमानः ऊर्मिम्[2] ॥ ५ ॥

एते सोमा अति वाराण्यव्या दिव्या न कोशासो अभ्रवर्षाः ।
वृथा समुद्रं सिन्धवो न नीचीः सुतासो अभि कलशाँ असृग्रन् ॥ ६ ॥

एते । सोमाः । अति । वाराणि । अव्या । दिव्याः । न । कोशासः । अभ्रऽवर्षाः ।
वृथा । समुद्रम् । सिन्धवः । न । नीचीः । सुतासः । अभि । कलशान् । असृग्रन् ॥ ६ ॥

**वेङ्कट०** एते सोमाः [3]अति गच्छन्ति[3] वालानि अविमयानि दिव्यानि इव उदकानि अभ्रैर्वृष्यमाणानि । अनायासेन समुद्रम् नद्यः इव नीचीनाग्राः सुताः कलशान् अभि सृजन्ति गच्छन्तीति ॥ ६ ॥

शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ॥ ७ ॥

शुष्मी । शर्धः । न । मारुतम् । पवस्व । अनभिऽशस्ता । दिव्या । यथा । विट् ।
आपः । न । मक्षु । सुऽमतिः । भव । नः । सहस्रऽअप्साः । पृतनाषाट् । न । यज्ञः ॥ ७ ॥

**वेङ्कट०** [4]वेगवान् मारुतम् इव[4] शर्धः पवस्व, अनिन्दिताः दिव्या[5] यथा विट् पवते । 'मरुतो वै [6]देवानां विशः'[6] ( तै २,२,५,७ ) इति ब्राह्मणम् । न च तां निन्दन्ति केचन । आपः इव क्षिप्रं पवमानस्त्वम् अस्माकम् सुमतिः भव बहुरूपः पृतनानामभिभविता इन्द्रः इव[7] यष्टव्यः ॥ ७ ॥

राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम ।
शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम ॥ ८ ॥

राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरम् । तव । सोम । धाम ।
शुचिः । त्वम् । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥ ८ ॥

---

१. सोम मूको. २. ऊर्मी वि[२] अ[१]. ३-३. °गच्छति वि[२] अ[१]; अभिगच्छति वि[१]. ४-४. येन त्वामा ··· वि[२] अ[१], ५. त्रुटितम् वि[२] अ[१]. ६-६. देवानामपिग वि[२] अ[१]; देव विश वि[१]. ७. नास्ति अ[१].

**वेङ्कट०** इयं गतेति ( ऋ १,९१,३ द्र. ) ॥ ८ ॥

[1]इति सप्तमाष्टके तृतीयाऽध्याये चतुर्विंशो वर्गः[1] ॥

## [ ८९ ]

[1]उशना काव्य ऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः[1] ।

प्रो स्य वह्निः पथ्याभिरस्यान् दिवो न वृष्टिः पवमानो अक्षाः ।
सहस्रधारो असदन्न्य१स्मे मातुरुपस्थे वन आ च सोमः ॥ १ ॥

प्रो इति । स्यः । वह्निः । पथ्याभिः । अस्यान् । दिवः । न । वृष्टिः । पवमानः । अक्षारिति ।
सहस्रऽधारः । असदत् । नि । अस्मे इति । मातुः । उपऽस्थे । वने । आ । च । सोमः ॥ १ ॥

**वेङ्कट०** प्र स्यन्दते स एव वोढा मार्गैः[2] । दिवः इव वृष्टिः पवमानः क्षरति[3] । सोऽयं बहुधारः अस्मासु नि-षीदति[4] । पृथिव्याश्च उपस्थे वने द्रोणकलशे च आ सीदतु सोमः ॥ १ ॥

राजा सिन्धूनामवसिष्ट वासं ऋतस्य नावमारुहद् रजिष्ठाम् ।
अप्सु द्रप्सो वावृधे श्येनजूतो दुह ईं पिता दुह ईं पितुर्जाम् ॥ २ ॥

राजा । सिन्धूनाम् । अवसिष्ट । वासः । ऋतस्य । नावम् । आ । अरुहत् । रजिष्ठाम् ।
अप्ऽसु । द्रप्सः । ववृधे । श्येनऽजूतः । दुहे । ईम् । पिता । दुहे । ईम् । पितुः । जाम् ॥ २ ॥

**वेङ्कट०** [5]राजा सिन्धूनाम्[5] आच्छादयति वासः श्रयणम् । यज्ञस्य नावम् ऋजुतमाम् आ रोहति । सोऽयम् द्रप्सः वसतीवरीषु वर्धते । श्येनेन दिव आहृतं तमिमम् पितुः द्युलोकाद् जातम् सः पिता दोग्धि अभिमतं रसमिति ॥ २ ॥

सिंहं नसन्त मध्वो अयासं हरिमरुषं दिवो अस्य पतिम् ।
शूरो युत्सु प्रथमः पृच्छते गा अस्य चक्षसा परि पात्युक्षा ॥ ३ ॥

सिंहम् । नसन्त । मध्वः । अयासम् । हरिम् । अरुषम् । दिवः । अस्य । पतिम् ।
शूरः । युत्ऽसु । प्रथमः । पृच्छते । गाः । अस्य । चक्षसा । परि । पाति । उक्षा ॥ ३ ॥

**वेङ्कट०** सिंहसदृशम् एनं प्राप्नुवन्ति उदकस्य गन्तारम्[6] हरितवर्णम् आरोचमानम् अस्य दिवः पतिम् । सोऽयं शूरः युद्धेषु मुख्यः सन् 'क गताः पणिभिरपहृता गाव' इति पृच्छते[7] । अस्य तेजसा परि रक्षति उक्षा इन्द्रः ॥ ३ ॥

---

१-१. नास्ति मूको. २. मार्गे वि॰ अ॰. ३. रक्षति वि॰ अ॰. ४. °दंतु वि॰. ५-५. नास्ति वि॰ अ॰. ६. हन्तारं वि॰ अ॰. ७. पृच्छ मूको.

मधुपृष्ठं घोरमयासमश्वं रथे युञ्जन्त्युरुचक्र ऋष्वम् ।
स्वसार ईं जामयो मर्जयन्ति सनाभयो वाजिनमूर्जयन्ति ॥ ४ ॥

मधुऽपृष्ठम् । घोरम् । अयासम् । अश्वम् । रथे । युञ्जन्ति । उरुऽचक्रे । ऋष्वम् ।
स्वसारः । ईम् । जामयः । मर्जयन्ति । सऽनाभयः । वाजिनम् । ऊर्जयन्ति ॥ ४ ॥

वेङ्कट० मधुयुक्तपृष्ठम् घोरम् गमनशीलम् अश्वम् रथे युञ्जन्ति महाचक्रे दर्शनीयम् । तमिमम् एकस्मात् पाणेरुत्पन्ना अङ्गुलयः मर्जयन्ति । [1]तदेवाह — अङ्गुलयो बलिनं सोमं बलिनं कुर्वन्तीति[1] ॥ ४ ॥

चतस्र ईं घृतदुहः सचन्ते समाने अन्तर्धरुणे निषत्ताः ।
ता ईमर्षन्ति नमसा पुनानास्ता ईं विश्वतः परि षन्ति पूर्वीः ॥ ५ ॥

चतस्रः । ईम् । घृतऽदुहः । सचन्ते । समाने । अन्तः । धरुणे । निऽसत्ताः ।
ताः । ईम् । अर्षन्ति । नमसा । पुनानाः । ताः । ईम् । विश्वतः । परि । सन्ति । पूर्वीः ॥ ५ ॥

वेङ्कट० [2]चतस्रः एनं घृतस्य दोग्ध्र्यो गावः† सेवन्ते समाने धारकेऽन्तरिक्षे अन्तः निषण्णाः । ताः एनं गच्छन्ति हविषा शोधयन्त्यः । ताः एनं सर्वतः परि भवन्ति प्रजाः‡[2] ॥ ५ ॥

विष्टम्भो दिवो धरुणः पृथिव्या विश्वा उत क्षितयो हस्ते अस्य ।
असत्त उत्सो गृणते नियुत्वान् मध्वो अंशुः पवत इन्द्रियाय ॥ ६ ॥

विष्टम्भः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत । क्षितयः । हस्ते । अस्य ।
असत् । ते । उत्सः । गृणते । नियुत्वान् । मध्वः । अंशुः । पवते । इन्द्रियाय ॥ ६ ॥

वेङ्कट० [3]सोमो दिवं विष्टभ्नाति, धारयति च पृथिवीम्, सर्वा अपि च प्रजाः ‡अस्य हस्ते‡ भवन्ति[3] । सोऽयं भवति तुभ्यम् उत्सः स्तुवते अश्ववान् । उत्सः उत्सरन्त्यस्मात्[4] कामा[5] इति । सोऽयम् मध्वः[6] रसः[7] पवते इन्द्रियं जनयितुम् । 'अंशुः शमष्टमात्रो भवति' इति यास्कः ( २,५ ) ॥ ६ ॥

वन्वन्नवातो अभि देववीतिमिन्द्राय सोम वृत्रहा पवस्व ।
शग्धि महः पुरुश्चन्द्रस्य रायः सुवीर्यस्य पतयः स्याम ॥ ७ ॥

वन्वन् । अवातः । अभि । देवऽवीतिम् । इन्द्राय । सोम । वृत्रऽहा । पवस्व ।
शग्धि । महः । पुरुऽचन्द्रस्य । रायः । सुऽवीर्यस्य । पतयः । स्याम ॥ ७ ॥

---

१-१. नास्ति वि[1]. २-२. नास्ति वि[1]. † नात्र: मूको. ‡ प्रश्ना मूको. ३-३. नास्ति वि[1]. ‡-‡ अस्य हस्ते मूको. ४. उत्सरत्यस्मात् अ[1]; °न्त्यस्मान् वि[1,2]. ५ कामान् वि[2] अ[1]. ६. मद्धो वि[3]; मद्वा अ[1]; मद्ये वि[1]. ७. रस वि[1].

**वेङ्कट०** सम्भजन्[1] शत्रुभिरनभिगतः अभि गच्छ यज्ञम्। इन्द्राय सोम! वृत्रहा पवस्व[2]। देहि महद् बहुभिः स्पृहणीयं धनम्। सुवीर्यस्य धनस्य वयम् पतयः स्याम इति ॥ ७ ॥

[3]इति सप्तमाष्टमे तृतीयाध्याये पञ्चविंशो वर्गः[3] ॥

[९०]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः[3]।

प्र हिन्वानो जनिता रोदस्यो रथो न वाजं सनिष्यन्नयासीत्।
इन्द्रं गच्छन्नायुधा संशिशानो विश्वा वसु हस्तयोरादधानः ॥ १ ॥

प्र। हिन्वानः। जनिता। रोदस्योः। रथः। न। वाजम्। सनिष्यन्। अयासीत्।
इन्द्रम्। गच्छन्। आयुधा। सम्ऽशिशानः। विश्वा। वसु। हस्तयोः। आऽदधानः ॥ १ ॥

**वेङ्कट०** वसिष्ठः। प्र गच्छति प्रेर्यमाणः जनयिता द्यावापृथिव्योः[4] रथः इव युद्धम् सनिष्यन्, इन्द्रम् गच्छन्, आयुधानि च तीक्ष्णीकुर्वन्, विश्वानि च धनानि स्तोतृणाम् हस्तयोः आदधानः ॥ १ ॥

अभि त्रिपृष्ठं वृषणं वयोधामाङ्गूषाणामवावशन्त वाणीः।
वना वसानो वरुणो न सिन्धून् वि रत्नधा दयते वार्याणि ॥ २ ॥

अभि। त्रिऽपृष्ठम्। वृषणम्। वयःऽधाम्। आङ्गूषाणाम्। अवावशन्त। वाणीः।
वना। वसानः। वरुणः। न। सिन्धून्। वि। रत्नऽधाः। दयते। वार्याणि ॥ २ ॥

**वेङ्कट०** अभि कामयन्ते त्रिपृष्ठम् त्रिषवणम् वृषणम् अन्नस्य दातारम् स्तोतृणाम् स्तुतयः। उदकानि आच्छादयन् वरुणः इव सिन्धून् विविधं प्रयच्छति[5] रत्नानां दाता वरणीयानि धनानि ॥ २ ॥

शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि।
तिग्मायुधः क्षिप्रधन्वा समत्स्वषाळ्हः साह्वान् पृतनासु शत्रून् ॥ ३ ॥

शूरऽग्रामः। सर्वऽवीरः। सहावान्। जेता। पवस्व। सनिता। धनानि।
तिग्मऽआयुधः। क्षिप्रऽधन्वा। समत्ऽसु। अषाळ्हः। सह्वान्। पृतनासु। शत्रून् ॥ ३ ॥

**वेङ्कट०** शूराणां[6] वीराणां सङ्घो यस्य विद्यते सः शूरग्रामः। सर्वे वीराश्च अस्य भवन्ति। सहनवान् जेता पवस्व सम्भक्ता शत्रुधनानि तिग्मायुधः क्षिप्रधनुष्कः युद्धेषु असोढा अभिभवन् सेनासु शत्रून् ॥ ३ ॥

उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरंधी।
अपः सिषासन्नुषसः स्व१र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥ ४ ॥

---

१. पवस्वत्रवातः संभ° वि[1]. २. नास्ति वि[1]. ३-३. नास्ति मूको. ४. 'व्यौ वि[2] अ[1]. ५. प्रग° वि[2] अ[1]. ६. शूरो मूको.

उरुऽगव्यूतिः । अभयानि । कृण्वन् । समीचीने इति सम्ऽईचीने । आ । पवस्व । पुरन्धी इति पुरम्ऽधी । अपः । सिसासन् । उषसः । स्वः । गाः । सम् । चिक्रदः । महः । अस्मभ्यम् । वाजान् ॥४॥

**वेङ्कट०** विस्तीर्णमार्गः अभयानि स्तोतॄणाम् कृण्वन्[1] सङ्गते च द्यावापृथिव्यौ कुर्वन् आ पवस्व । अन्तरिक्षम् सम्भक्तुमिच्छन् उषसः आदित्यम् रश्मींश्च सम् क्रन्दसे महान्ति अन्नानि अस्मभ्यम् इति ॥ ४ ॥

मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम् ।
मत्सि शर्धो मारुतं मत्सि देवान् मत्सि महामिन्द्रमिन्दो मदाय ॥ ५ ॥

मत्सि । सोम । वरुणम् । मत्सि । मित्रम् । मत्सि । इन्द्रम् । इन्दो इति । पवमान । विष्णुम् । मत्सि । शर्धः । मारुतम् । मत्सि । देवान् । मत्सि । महाम् । इन्द्रम् । इन्दो इति । मदाय ॥

**वेङ्कट०** तर्पय वरुणादीनिति[2] ॥ ५ ॥

एवा राजेव क्रतुमाँ अमेन विश्वा घनिघ्नद् दुरिता पवस्व ।
इन्दो सूक्ताय वचसे वयो धा यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । राजाऽइव । क्रतुऽमान् । अमेन । विश्वा । घनिघ्नत् । दुःऽइता । पवस्व । इन्दो इति । सुऽउक्ताय । वचसे । वयः । धाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** एवम् राजा इव कर्मवान् बलेन विश्वानि दुरितानि विनाशयन् पवस्व । इन्दो! सूक्ताय अस्माकम् वचसे तन्निष्कृत्यर्थम् अन्नं धेहि । यूयम् इति गतम्[3] ( ऋ ७,६७,१०;६८,९ प्रभृ. ) ।

[4]इति सप्तमाष्टके तृतीयाध्याये षड्विंशो वर्गः[4] ॥

व्याख्यत्तृतीयमध्यायं सप्तमस्याष्टकस्य सः ।
कुण्डिनस्य कुले जाता माताऽभूद्यस्य सुन्दरी ॥ ६ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके तृतीयोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके तृतीयोऽध्यायः ॥



१. कुर्वन् अ[2]. २. °रुणादी° मूको. ३ नास्ति वि[2] अ[2]. ४-४. नास्ति मूको.

अथ चतुर्थोऽध्यायः ।

वेङ्कट०

'असर्जि वक्वा रथ्ये' इति व्याचिख्यासति माधवः ।
अश्वाद्योषधिपर्यन्ते[1] वाच्यं देवगणे वदन् ॥ १ ॥

अश्वाकृतिर्दधिक्रावा दिवि देवोऽस्ति कश्चन ।
ततोऽश्वाः प्रादुरभवंस्तत्त्वमारोप्य[2] ते स्तुताः ॥ २ ॥

ऋषेर्गृत्समदस्याग्र आसीदिन्द्रः कपिञ्जलः ।
तुष्टाव तमृषिर्ज्ञात्वा स सूक्ताभ्याम् 'कनिक्रदत्'[3] ॥ ३ ॥

मण्डूकानामथाक्षाणां सन्ति ग्राव्णां च[4] देवताः ।
'यो वः सेनानीर्महतः'[5], '[6]प्र वो ग्रावाणः सविता'†[6] ॥ ४ ॥

स्तूयन्तेऽचेतनाः केचिदिह देवैरधिष्ठिताः ।
शकुनिर्द्रुघणश्चेति तत्र विद्धि निदर्शनम् ॥ ५ ॥

स्तूयन्ते यज्ञसंयोगादपि चान्ये रथादयः ।
अथापि युद्धसंयोगाद् रथादीनां स्तुतिर्भवेत् ॥ ६ ॥

'अहावनंदता हते'[7], 'ओषधयः संवदन्ते'[8] ।
इत्यपामोषधीनां च [9]देवताः सम्प्रदर्शिताः[9] ॥ ७ ॥

अग्न्यादयः सन्निहिताः सर्वदा लौकिकेष्वपि ।
यमेन यम्याः संवादे[10] सोऽयमर्थ उदीरितः ॥ ८ ॥

न सर्वे चेतना देवा नापि सर्वे अचेतनाः ।
इति वादैर्विजानीमो मन्त्रब्राह्मणगोचरैः ॥ ९ ॥

इतिहासपुराणैर्ये देवतात्वेन दर्शिताः ।
तानाहुश्चेतनान् देवान् भवन्त्यन्ये[11] त्वचेतनाः ॥ १० ॥

---

१. अश्वाद्यौषधि° वि[2] अ[1], वेंकअ[1]. २. °स्तत्वमा° वि[2] अ[1]; °स्तत्वामा° वि[1]. ३. ऋ २,४२,१.
४. ग्राव्णा श्च अ[1]. ५. ऋ १०,३४,१२. ६-६. सोमो ग्रावाण ऋक्षयः वि[2] अ[1]. † ऋ १०,१७५,१.
७. शौ ३,१३,१. ८. ऋ १०,९७,२२. ९-९. °वता °र्शिता वि[2] अ[1]. १०. सम्पाते वि[2] अ[1].
११. भवन्त्वन्ये वि[2] अ[1]

अत्र वाजसनेयकम्—"[1]न वा अत्र देवताऽस्त्यनुयाजेषु[1] देवं बर्हिः इति [2]तत्र नाग्निर्नेन्द्रो[2] न सोमः" ( माश १,८,२,१५ ) इत्यादि। पठामश्च —

'द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः[3] सर्वदेहिनाम्' ॥ ( मनु ८,८७ ) इति[4] ॥

[९१]

[5]कश्यपो मारीच ऋषिः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः[5]।

असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमो मनीषी।
दश स्वसारो अधि सानो अव्येऽजन्ति वह्निं सदनान्यच्छ ॥ १ ॥

असर्जि। वक्वा। रथ्ये। यथा। आजौ। धिया। मनोता। प्रथमः। मनीषी।
दश। स्वसारः। अधि। सानौ। अव्ये। अजन्ति। वह्निम्। सदनानि। अच्छ ॥ १ ॥

**वेङ्कट०** कश्यपः। सृज्यते[6] शब्दायमानः, यथा रथार्हे सङ्ग्रामे रथः सृज्यते, अङ्गुल्या प्रथमः मनोता। यस्मिन् देवानां मनांसि प्रोतानि[7]। प्राज्ञः दश अङ्गुलयः अविमये अधि[8] समुच्छ्रिते प्रेरयन्ति वोढारं सोमम् यज्ञगृहेष्विति ॥ १ ॥

वीती जनस्य दिव्यस्य कव्यैरधि सुवानो नहुष्येभिरिन्दुः।
प्र यो नृभिरमृतो मर्त्येभिर्मर्मृजानोऽविभिर्गोभिरद्भिः ॥ २ ॥

वीती। जनस्य। दिव्यस्य। कव्यैः। अधि। सुवानः। नहुष्येभिः। इन्दुः।
प्र। यः। नृऽभिः। अमृतः। मर्त्येभिः। मर्मृजानः। अविऽभिः। गोऽभिः। अत्ऽभिः ॥ २ ॥

**वेङ्कट०** भक्षणाय दैव्यस्य जनस्य कविभिः अधि गच्छति यज्ञं मनुष्यैः सूयमानः इन्दुः। प्र गच्छति[9] यः यज्ञम् अमृतः नेतृभिः[10] मर्त्यैः[11] शोध्यमानः पवित्रैः अधिषवणचर्मणा वसतीवरीभिश्च ॥ २ ॥

वृषा वृष्णे रोरुवदंशुरस्मै पवमानो रुशदीर्ते पयो गोः।
सहस्रमृक्वा पथिभिर्वचोविदध्वस्मभिः सूरो अण्वं वि याति ॥ ३ ॥

वृषा। वृष्णे। रोरुवत्। अंशुः। अस्मै। पवमानः। रुशत्। ईर्ते। पयः। गोः।
सहस्रम्। ऋक्वा। पथिऽभिः। वचःऽवित्। अध्वस्मऽभिः। सूरः। अण्वम्। वि। याति ॥ ३ ॥

---

1-1. नो वा अनूयाजेष्वस्ति देवता वि[2] अ[1]. 2-2. तन्नाग्निर्ने° वि[2] अ[1]. 3 वृत्तिज्ञाः वि[1]. 4. नास्ति अ[1], वेंऋअ. 5-5. नास्ति मूको. 6. °न्ते मूको. 7. प्रेता° वि[2] अ[1]. 8. अपि मूको. 9. यच्छ° वि[2] अ[1]. 10. नास्ति मूको. 11. मध्ये वि[2] अ[1].

वेङ्कट० वृषा इन्द्राय शब्दायमानः सोमः अस्मै पूयमानः श्वेतम् गोः पयः गच्छति आशिरम्। बहुभिर्मार्गैः स्तोत्रवान् स्तुतेः ज्ञाता ध्वंसनवर्जितैः सुवीर्यः सोमः सूक्ष्मच्छिद्रं पवित्रम् अतीत्य[1] गच्छति ॥ ३ ॥

रुजा दृळ्हा चिद्रक्षसः सदांसि पुनान इन्द ऊर्णुहि वि वाजान् ।
वृश्चोपरिष्टात् तुजता वधेन ये अन्ति दूरादुपनायमेषाम् ॥ ४ ॥

रुज । दृळ्हा । चित् । रक्षसः । सदांसि । पुनानः । इन्दो इति । ऊर्णुहि । वि । वाजान् ।
वृश्च । उपरिष्टात् । तुजता । वधेन । ये । अन्ति । दूरात् । उपऽनायम् । एषाम् ॥ ४ ॥

वेङ्कट० विनाशय दृढान्यपि रक्षसः स्थानानि। पूयमानस्त्वम् इन्दो! [2]वि ऊर्णुहि[2] अन्नानि। [3]वृश्च उपरिष्टात् हिंसकेन[3] आयुधेन ये अन्ति[4] दूराद् वा गच्छन्ति एषाम् राक्षसानाम् उपनेतारं स्वामिनम् इति ॥ ४ ॥

स प्रत्नवन्नव्यसे विश्ववार सूक्ताय पथः कृणुहि प्राचः ।
ये दुष्षहासो वनुषा बृहन्तस्तांस्ते अश्याम पुरुकृत् पुरुक्षो ॥ ५ ॥

सः । प्रत्नऽवत् । नव्यसे । विश्वऽवार । सुऽउक्ताय । पथः । कृणुहि । प्राचः ।
ये । दुःऽसहासः । वनुषा । बृहन्तः । तान् । ते । अश्याम । पुरुऽकृत् । पुरुक्षो इति पुरुऽक्षो ॥

वेङ्कट० सः पुराणाय इव नवतराय विश्वैर्वरणीय![5] कुरु प्राचीनान्[6] मार्गान्[7] मह्यमपि शोभन-स्तुतिकाय। ये सोढुमशक्याः रक्षसा[8] हिंसया युक्ताः महान्तः, [9]तान् त्वदीयान्[9] अंशान् वयम् अश्याम यज्ञे हे बहुकर्मन्! बहुशब्द![10] ॥ ५ ॥

एवा पुनानो अपः स्वर्गा अस्मभ्यं तोका तनयानि भूरि ।
शं नः क्षेत्रमुरु ज्योतींषि सोम ज्योङ्नः सूर्यं दृशये रिरीहि ॥ ६ ॥

एव । पुनानः । अपः । स्वः । गाः । अस्मभ्यम् । तोका । तनयानि । भूरि ।
शम् । नः । क्षेत्रम् । उरु । ज्योतींषि । सोम । ज्योक् । नः । सूर्यम् । दृशये । रिरीहि ॥ ६ ॥

वेङ्कट० एवं पूयमानः सोम! त्वम् अस्मभ्यम् प्रयच्छ अन्तरिक्षम् दिवम्[11] पृथिवीम् पुत्रान् पौत्रांश्च बहून् सुखकरम् क्षेत्रम्[12] विस्तीर्णानि च[12] ज्योतींषि चिरं द्रष्टुम् सूर्यम् च ॥ ६ ॥

[13]इति सप्तमाष्टके चतुर्थाध्याये प्रथमो वर्गः[13] ॥

---

१. अधीत्य वि[२] अ[१]. २. त्रुटितम् वि[२] अ[१]. ३-३. विश्वोपरिष्टाद्वध स केन मूको. ४. अन्तितो वि[२] अ[१]. ५. °णीयः वि[१]. ६. प्राचीनम् अ[१]. ७. मार्गं अ[१]. ८. राक्षसा वि[१]. ९-९. त्वांस्तदीयान् वि[२]; त्वां तदीयान् अ[१]. १०. °शब्दः वि[१]. ११. इव वि[२] अ[१]. १२. नास्ति वि[२] अ[१]. १३-१३. नास्ति मूको.

[ ९२ ]

[1-1]कश्यपो मारीच ऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः[1] ।

परि सुवानो हरिरंशुः पवित्रे रथो न सर्जि सनये हियानः ।
आपच्छ्लोकमिन्द्रियं पूयमानः प्रति देवाँ अजुषत प्रयोभिः ॥ १ ॥

परि । सुवानः । हरिः । अंशुः । पवित्रे । रथः । न । सर्जि । सनये । हियानः ।
आपत् । श्लोकम् । इन्द्रियम् । पूयमानः । प्रति । देवान् । अजुषत । प्रयःऽभिः ॥ १ ॥

**वेङ्कट०** परि सृज्यते[2] सूयमानः हरिः सोमः पवित्रे रथः इव धनार्थं प्रेर्यमाणः । आप्नोति च स्तुतिम् [3]इन्द्रियम् इन्द्रनिमित्ताम्[3] पूयमानः । प्रति सेवते च देवान् अन्नैः ॥ १ ॥

अच्छा नृचक्षा असरत् पवित्रे नाम दधानः कविरस्य योनौ ।
सीदन् होतेव सदने चमूषूपेमग्मन्नृषयः सप्त विप्राः ॥ २ ॥

अच्छ । नृऽचक्षाः । असरत् । पवित्रे । नाम । दधानः । कविः । अस्य । योनौ ।
सीदन् । होताऽइव । सदने । चमूषु । उप । ईम् । अग्मन् । ऋषयः । सप्त । विप्राः ॥ २ ॥

**वेङ्कट०** अभिसरति[4] नृणां द्रष्टा पवित्रे[5] उदकम् धारयन् कविः अस्य आत्मनः[6] स्थाने पवित्रे सीदन् होता इव यज्ञे चमूषु । तदर्थं सरति । तमिमम् उप गच्छन्ति ऋषयः सप्त मेधाविनः भरद्वाजः कश्यपो गौतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इति ॥ २ ॥

प्र सुमेधा गातुविद्विश्वदेवः सोमः पुनानः सद एति नित्यम् ।
भुवद्विश्वेषु काव्येषु रन्तानु जनान् यतते पञ्च धीरः ॥ ३ ॥

प्र । सुऽमेधाः । गातुऽवित् । विश्वऽदेवः । सोमः । पुनानः । सदः । एति । नित्यम् ।
भुवत् । विश्वेषु । काव्येषु । रन्ता । अनु । जनान् । यतते । पञ्च । धीरः ॥ ३ ॥

**वेङ्कट०** प्र गच्छति सुप्रज्ञः व्याप्तदेवः सोमः पूयमानः[7] स्थानम् नित्यम् । भवति च[8] विश्वेषु [9]स्तोत्रेषु रन्ता[9] । सोऽयम् अनु गच्छति धीरः पञ्च जनान् ॥ ३ ॥

तव त्ये सोम पवमान निण्ये विश्वे देवास्त्रय एकादशासः ।
दश स्वधाभिरधि सानो अव्ये मृजन्ति त्वा नद्यः सप्त यह्वीः ॥ ४ ॥

---

१-१. नास्ति मूको. २. मृज्यते वि[2] अ[1]. ३-३. 'यन्निमिः वि[1]; इन्द्रियनिमित्तां वि[2] अ[1]. ४. अच्छ अभि° वि[2] अ[1]. ५. पवित्रम् वि[1]. ६. आत्मन वि[2] अ[3]. ७. °मान वि[1]. ८. नास्ति वि[2] अ[1]. ९-९. °त्रेषु त्र रन्ता वि[1].

तव॑ । त्ये । सो॒म॒ । प॒व॒मा॒न॒ । नि॒ण्ये । विश्वे॑ । दे॒वाः । त्रयः॑ । ए॒का॒द॒शासः॑ ।
दश॑ । स्व॒धाभिः॑ । अधि॑ । सानौ॑ । अव्ये॑ मृ॒जन्ति॑ । त्वा॒ । न॒द्यः॑ । स॒प्त । य॒ह्वीः ॥ ४ ॥

**वेङ्कट०** तव अमी सोम! पवमान! अन्तर्हिते स्थाने वर्तन्ते विश्वे देवाः त्रयस्त्रिंशत्सङ्ख्याः । दश अङ्गुल्यः त्वां जलैः[1] पवित्रे[2] शोधयन्ति, त्वा नद्यः च सप्त महत्यः ॥ ४ ॥

तन्नु स॒त्यं पव॑मानस्यास्तु॒ यत्र॒ विश्वे॑ का॒रवः॑ सं॒नस॑न्त ।
ज्योति॒र्यदह्ने॒ अकृ॑णोदु लो॒कं प्राव॒न्मनुं॒ दस्य॑वे क॒रभीक॑म् ॥ ५ ॥

तत् । नु॒ स॒त्यम् । पव॑मानस्य । अ॒स्तु॒ । यत्र॑ । विश्वे॑ । का॒रवः॑ । स॒म्ऽनस॑न्त ।
ज्योतिः॑ । यत् । अह्ने॑ । अकृ॑णोत् । ऊँ इति॑ । लो॒कम् । प्र । आ॒व॒त् । मनु॑म् । दस्य॑वे । क॒ः । अ॒भीक॑म् ॥

**वेङ्कट०** तत्[3] स्थानं सत्यभूतम् पवमानस्य अस्माकम् अस्तु, यत्र सर्वे स्तोतारः सङ्गच्छन्ते । यत् अस्य ज्योतिः दिवसाय प्रकाशं करोति, तज्ज्योतिः प्र आवत्[4] मनुम् राजानम्, दस्यवे च अभिगन्तारम् अकार्षीत् ॥ ५ ॥

परि॒ सद्मे॑व पशु॒मान्ति॒ होता॒ राजा॒ न स॒त्यः समि॑तीरिया॒नः ।
सोमः॑ पुना॒नः क॒लशाँ॑ अयासी॒त् सीद॑न्मृ॒गो न म॑हि॒षो वने॑षु ॥ ६ ॥

परि॑ । सद्म॑ऽइव । प॒शु॒ऽमन्ति॑ । होता॑ । राजा॑ । न । स॒त्यः । सम्ऽइ॑तीः । इ॒या॒नः ।
सोमः॑ । पु॒ना॒नः । क॒लशा॑न् । अ॒या॒सी॒त् । सीद॑न् । मृ॒गः । न । म॒हि॒षः । वने॑षु ॥ ६ ॥

**वेङ्कट०** यथा पशुमतः यज्ञगृहान् होता परि याति, यथा वा राजा सत्यकर्मा सङ्ग्रामान्[5] गच्छन्, तथा सोमः पूयमानः परि याति [6]कलशान् वनेषु[6] उदकेषु सीदन् महिषाख्यः मृगः इव ॥ ६ ॥

[7]इति सप्तमाष्टके चतुर्थाध्याये द्वितीयो वर्गः[7] ॥

## [९३]

[7]नोधा गौतम ऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः[7] ।

सा॒कमु॒क्षो म॑र्जयन्त॒ स्वसा॑रो॒ दश॒ धीर॑स्य धी॒तयो॒ धनु॑त्रीः ।
हरिः॒ पर्य॑द्रव॒ज्जाः सूर्य॑स्य॒ द्रोणं॑ ननक्षे॒ अत्यो॒ न वा॒जी ॥ १ ॥

सा॒क॒म्ऽउक्षः॑ । म॒र्ज॒य॒न्त॒ । स्वसा॑रः । दश॑ । धीर॑स्य । धी॒तयः॑ । धनु॑त्रीः ।
हरिः॑ । परि॑ । अ॒द्र॒व॒त् । जाः । सूर्य॑स्य । द्रोण॑म् । न॒न॒क्षे॒ । अत्यः॑ । न । वा॒जी ॥ १ ॥

---

१. बलैः मूको. २. °त्रैः मूको. ३. नास्ति वि[1]. ४. आपत् वि[1] अ[1]. ५. °माव वि[1] अ[1]. ६-६. कलशात्पवनेषु वि अ[1] ७-७. नास्ति मूको.

वेङ्कट० नोधाः। [1]सह सिञ्चन्त्यः[1] शोधयन्ति अङ्गुलयः सोमम्। दश अङ्गुलयः धीरस्य सोमस्य प्रेरयित्र्यः। हरिः परि द्रवति[2] सूर्यस्य जायाः दिशः, द्रोणकलशम् व्याप्नोति अतनशीलः इव अश्वः ॥ १ ॥

सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः।
मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः ॥ २ ॥

सम्। मातृऽभिः। न। शिशुः। वावशानः। वृषा। दधन्वे। पुरुऽवारः। अत्ऽभिः।
मर्यः। न। योषाम्। अभि। निःऽकृतम्। यन्। सम्। गच्छते। कलशे। उस्रियाभिः ॥ २ ॥

वेङ्कट० सम् धार्यते, मातृभिः इव पुत्रः, कामयमानः वृषा बहुभिर्वरणीयः वसतीवरीभिः। मर्यः इव जायाम् अभि गच्छन् निष्कृतम् स्थानम् सम् गच्छते कलशे अद्भिः ॥ २ ॥

उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः।
मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ ३ ॥

उत। प्र। पिप्ये। ऊधः। अघ्न्यायाः। इन्दुः। धाराभिः। सचते। सुऽमेधाः।
मूर्धानम्। गावः। पयसा। चमूषु। अभि। श्रीणन्ति। वसुऽभिः। न। निक्तैः ॥ ३ ॥

वेङ्कट० अपि च प्र आप्याययति[3] ऊधः गोः सोमः ओषधीषु प्रविश्य। सोऽयम् इन्दुः सुमेधाः धाराभिः सङ्गच्छते। सुप्रज्ञम् इमम् गावः चमूषु स्थितम् उच्छ्रितम् पयसा अभि श्रीणन्ति वस्त्रैः इव निक्तैः ॥ ३ ॥

स नो देवेभिः पवमान रदेन्दो रयिमश्विनं वावशानः।
रथिरायतामुशती पुरंधिरस्मद्र्य१गा दावने वसूनाम् ॥ ४ ॥

सः। नः। देवेभिः। पवमान। रद। इन्दो इति। रयिम्। अश्विनम्। वावशानः।
रथिरऽयताम्। उशती। पुरम्ऽधिः। अस्मद्र्यक्। आ। दावने। वसूनाम् ॥ ४ ॥

वेङ्कट० सः अस्मभ्यं देवैः सह पवमान! प्रयच्छ इन्दो! रयिम् अश्वयुक्तम् [4]कामयमानः। रथिरायताम्[4] रथवान् रथिरः[5] तद्वदाचरताम् कामयमाना तव बुद्धिः अस्मदभिमुखी आ गच्छतु वसूनाम् दानाय ॥ ४ ॥

नू नो रयिमुप मास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥

---

१-१. सह सिंच सिञ्च वि[२] अ[१]. २. द्रवन्ति वि[२] अ[२]. ३. व्यावयति वि[२] अ[१]. ४-४. °मानो ररां वि[१]. ५. रथिः मूको.

नु । नः । रयिम् । उप॑ । मास्व । नृऽवन्त॑म् । पुनानः । वाताप्य॑म् । विश्वऽचन्द्रम् ।
प्र । वन्दितुः । इन्दो इति॑ । तारि । आयुः । प्रातः । मक्षु । धियाऽव॑सुः । जगम्यात् ॥ ५ ॥

**वेङ्कट०** क्षिप्रम् अस्मभ्यम् रयिम् उप कुरु मनुष्यैर्युक्तम् पूयमानः उदकम्[1] च सर्वेषां ह्लादकम्। प्र तारि [2]वर्धितम् अस्तु इन्दो![2] स्तोतुः आयुः। प्रातः इति गतम् ( ऋ १,५८,९;३०,५;८,८०,१० प्रभृ. ) ॥ ५ ॥

[3]इति सप्तमाष्टके चतुर्थाध्याये तृतीयो वर्गः[3] ॥

## [ ९४ ]

[3]कण्वो घौर ऋषिः । पवमानः सोमो देवता । त्रिष्टुप् छन्दः[3] ।

अधि॒ यद॑स्मिन् वा॒जिनी॑व॒ शुभः॒ स्पर्ध॑न्ते॒ धियः॒ सूर्ये॒ न विशः॑ ।
अपो॒ वृ॑णा॒नः पव॑ते कवी॒यन् व्र॒जं न प॑शु॒वर्ध॑नाय॒ मन्म॑ ॥ १ ॥

अधि॑ । यत् । अ॒स्मिन् । वा॒जिनि॑ऽइव । शुभः॑ । स्पर्ध॑न्ते । धियः॑ । सूर्ये॑ । न । विशः॑ ।
अपः॑ । वृ॒णा॒नः । प॒व॒ते । क॒वि॒ऽयन् । व्र॒जम् । न । प॒शु॒ऽवर्ध॑नाय । मन्म॑ ॥ १ ॥

**वेङ्कट०** कण्वः। अधि स्पर्धन्ते अहमहमिकयोपतिष्ठन्ति यदा अस्मिन् सोमे अश्वे इव अलङ्काराः अङ्गुल्यः[4] सूर्ये इव च उदिते[5] रश्मयः, तदानीम् अयं सोमः उदकानि आच्छादयन् पवते कवित्वम् आचरन्, यथा गवाम् व्रजम् मननीयं बोद्धव्यं रक्षितव्यम् पशूनां वर्धनाय गोपः परिपवत इति ॥ १ ॥

द्वि॒ता व्यू॒र्ण्वन्न॒मृत॑स्य॒ धाम॑ स्व॒र्विदे॒ भुव॑नानि प्रथन्त ।
धियः॑ पिन्वा॒नाः स्वस॑रे॒ न गाव॑ ऋता॒यन्ती॑र॒भि वा॑वश्र॒ इन्दु॑म् ॥ २ ॥

द्वि॒ता । वि॒ऽऊ॒र्ण्वन् । अ॒मृत॑स्य । धाम॑ । स्वः॒ऽविदे॑ । भुव॑नानि । प्र॒थ॒न्त॒ ।
धियः॑ । पि॒न्वा॒नाः । स्वस॑रे । न । गावः॑ । ऋ॒त॒ऽयन्तीः॑ । अ॒भि । वा॒व॒श्रे॒ । इन्दु॑म् ॥ २ ॥

**वेङ्कट०** उदकस्य स्थानम् अन्तरिक्षम् सोमो द्वैधम् व्यूर्ण्वन् मध्येन गच्छति। तस्मै सर्वज्ञाय भुवनानि विस्तीर्णानि भवन्ति। रश्मीनां सञ्चरणार्थं[6] तमिमम् इन्दुम् धियः वाचः यज्ञमिच्छन्त्यः अभि शब्दायन्ते,[7] यथा पयः क्षरन्त्यः गावः गोष्ठे वत्सानिति ॥ २ ॥

परि॒ यत् क॒विः काव्या॒ भर॑ते॒ शूरो॒ न रथो॒ भुव॑नानि॒ विश्वा॑ ।
दे॒वेषु॒ यशो॒ मर्ता॑य॒ भूष॒न् दक्षा॑य रा॒यः पु॑रु॒भूषु॒ नव्यः॑ ॥ ३ ॥

---

१. च उद° वि[1]. २-२. वर्धिमन्तिन्दो वि[1]. ३-३. नास्ति मूको. ४. नास्ति अ[1]. ५. °तौ मूको. ६. सच्चरार्थं वि[1]. ७. शब्दापयन्ते वि[1] अ[1].

परि । यत् । कविः । काव्या । भरते । शूरः । न । रथः । भुवनानि । विश्वा ।
देवेषु । यशः । मर्ताय । भूषन् । दक्षाय । रायः । पुरुऽभूषु । नव्यः ॥ ३ ॥

**वेङ्कट०** परि गच्छति यदा[1] कविकर्माणि[2] कविः सोमः[3], शत्रूणां बाधकः रथः यथा साङ्ग्रामिकाणि भूतानि परियाति तद्वत्, तदा देवेषु स्थितम् [4]धनम् मर्ताय[4] भावयितुमिच्छन् धनस्य वृद्ध्यर्थं बहुषु यज्ञभवनेषु[5] स्तोतव्यः भवति ॥ ३ ॥

श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥ ४ ॥

श्रिये । जातः । श्रिये । आ । निः । इयाय । श्रियम् । वयः । जरितृऽभ्यः । दधाति ।
श्रियम् । वसानाः । अमृतऽत्वम् । आयन् । भवन्ति । सत्या । सम्ऽइथा । मितऽद्रौ ॥ ४ ॥

**वेङ्कट०** श्रिये जातः सोमः श्र्यर्थमेव[6] अंशुभ्यः आभिमुख्येन निर्-गच्छति । निर्गतश्च[7] सः श्रियम् जीवितम् च स्तोतृभ्यः दधाति[8] । ताम् श्रियम् वसानाः जरितारो न म्रियन्ते । भवन्ति सत्यानि युद्धानि मितगमने सोमे । न पराजीयन्त[9] इति ॥ ४ ॥

इषमूर्जमभ्यर्षाश्वं गामुरु ज्योतिः कृणुहि मत्सि देवान् ।
विश्वानि हि सुषहा तानि तुभ्यं पवमान बाधसे सोम शत्रून् ॥ ५ ॥

इषम् । ऊर्जम् । अभि । अर्ष । अश्वम् । गाम् । उरु । ज्योतिः । कृणुहि । मत्सि । देवान् ।
विश्वानि । हि । सुऽसहा । तानि । तुभ्यम् । पवमान । बाधसे । सोम । शत्रून् ॥ ५ ॥

**वेङ्कट०** अन्नम् रसम् अभि गमय, गाम् अश्वम् च । उरु [10]च ज्योतिः कृणुहि[10] । तर्पय च देवान् । विश्वानि हि तानि रक्षांसि तव सोम! अनायासेनाऽभिभवितुं[11] शक्यानि । पवमान! बाधसे सोम! शत्रून् इति ॥ ५ ॥

[12]इति सप्तमाष्टके चतुर्थाध्याये चतुर्थो वर्गः[12] ॥

## [ ९५ ]

[12]प्रस्कण्वः काण्व ऋषिः । पवमानः सोमो देवता त्रिष्टुप् छन्दः[12] ।

कनिक्रन्ति हरिरा सृज्यमानः सीदन् वनस्य जठरे पुनानः ।
नृभिर्यतः कृणुते निर्णिजं गा अतो मतीर्जनयत स्वधाभिः ॥ १ ॥

---

१. यथा अ[1]. २. कविः कर्माणि वि[2] अ[1]. ३. सोम मूको. ४-४. धनमत्ता वि[2] अ[1]; धनमर्ताय वि[1]. ५. यज्ञाहवनेषु वि[2] अ[1]. ६. श्रियर्थमे° वि[1,2] अ[1]. ७. निर्गच्छतश्च वि[2] अ[1]. ८. ददाति वि[2] अ[1]; दधातति वि[1]. ९. परिजीयन्त वि[2]; पराजीयत वि[1]. १०-१०. जो···कृ° वि[2] अ[1]. ११. नायासेनानी वि[2] अ[1]. १२-१२. नास्ति मूको.

कनिक्रन्ति । हरिः । आ । सृज्यमानः । सीदन् । वनस्य । जठरे । पुनानः ।
नृऽभिः । यतः । कृणुते । निःऽनिजम् । गाः । अतः । मतीः । जनयत । स्वधाभिः ॥ १ ॥

**वेङ्कट०** प्रस्कण्वः। शब्दायते हरिः सृज्यमानः[1]। आकारः पूरणः। सीदन् कलशस्य जठरे पूयमानः। ऋत्विग्भिः यतः करोति आत्मनो रूपम् गाः पय आच्छादयन्। अस्मै सोमाय स्तुतीः[2] स्तोतारः! जनयत हविर्भिः सह[3] ॥ १ ॥

हरिः सृजानः पथ्यामृतस्येयर्ति वाचमरितेव नावम् ।
देवो देवानां गुह्यानि नामाविष्कृणोति बर्हिषि प्रवाचे ॥ २ ॥

हरिः । सृजानः । पथ्याम् । ऋतस्य । इयर्ति । वाचम् । अरिताऽइव । नावम् ।
देवः । देवानाम् । गुह्यानि । नाम । आविः । कृणोति । बर्हिषि । प्रऽवाचे ॥ २ ॥

**वेङ्कट०** हरिः[4] सृज्यमानः यज्ञस्य पथि भवाम् प्रेरयति वाचम्, यथा नाविकः प्रेरयति नावम्। देवः देवानाम् गुह्यानि शरीराणि आविः करोति यज्ञे प्रवचे स्तोत्रे ॥ २ ॥

अपामिवेदूर्मयस्तर्तुराणाः प्र मनीषा ईरते सोममच्छ ।
नमस्यन्तीरुप च यन्ति सं चा च विशन्त्युशतीरुशन्तम् ॥ ३ ॥

अपाम्ऽइव । इत् । ऊर्मयः । तर्तुराणाः । प्र । मनीषाः । ईरते । सोमम् । अच्छ ।
नमस्यन्तीः । उप । च । यन्ति । सम् । च । आ । च । विशन्ति । उशतीः । उशन्तम् ॥ ३ ॥

**वेङ्कट०** अपाम् इव ऊर्मयः[5] त्वरमाणाः[6] प्र ईरयन्ति स्तुतीः सोमम् प्रति। पूजयन्त्यः[7] ताः सोमम् उप यन्ति, सम् च यन्ति, ततः आ विशन्ति च कामयमानाः कामयमानम् ॥ ३ ॥

तं मर्मृजानं महिषं न सानावंशुं दुहन्त्युक्षणं गिरिष्ठाम् ।
तं वावशानं मतयः सचन्ते त्रितो बिभर्ति वरुणं समुद्रे ॥ ४ ॥

तम् । मर्मृजानम् । महिषम् । न । सानौ । अंशुम् । दुहन्ति । उक्षणम् । गिरिऽस्थाम् ।
तम् । वावशानम् । मतयः । सचन्ते । त्रितः । बिभर्ति । वरुणम् । समुद्रे ॥ ४ ॥

**वेङ्कट०** तम् परिचर्यमाणम् महिषम् इव सानौ वर्तमानम् अंशुम् दुहन्ति सेक्तारम् ग्रावसु स्थितम्। तम् कामयमानम् स्तुतयः सेवन्ते। त्रिस्थानः[8] इन्द्रः एनम् बिभर्ति वारकं[9] शत्रूणाम् अन्तरिक्षे ॥४॥

---

१. पूज्यमान वि[२] अ[१]. २. स्तुति मूको. ३. सहेति अ[१]. ४. हरि मूको. ५. अमी वि[२] अ[१]. ६. °माण वि[२] अ[१]; °माणः वि[१]. ७. पूयन्तः वि[१]; पूरयन्त्यः वि[२] अ[१]. ८. स्त्रिस्थान वि[१]; तिस्थान वि[२] अ[१]. ९. मारकं वि[२] अ[१].

इष्यन् वाचमुपवक्तेव होतुः पुनान इन्दो वि ष्या मनीषाम् ।
इन्द्रश्च यत् क्षयथः सौभगाय सुवीर्यस्य पतयः स्याम ॥ ५ ॥

इष्यन् । वाचम् । उपवक्ताऽइव । होतुः । पुनानः । इन्दो इति । वि । स्य । मनीषाम् ।
इन्द्रः । च । यत् । क्षयथः । सौभगाय । सुऽवीर्यस्य । पतयः । स्याम ॥ ५ ॥

वेङ्कट० प्रेरयन् वाचम् उपवक्ता इव होतुः अध्वर्युः प्रतिगरं कुर्वन् पूयमानः [1]इन्दो! बद्धां[1] बुद्धिं वि मुञ्च कुरु धनप्रदानाभिमुखीम्[2]। इन्द्रः च त्वं च [3]यदा सह क्षयथः[3], तदा[4] वयम् सुवीर्यस्य धनस्य पतयः स्याम[5] ॥ ५ ॥

[6]इति सप्तमाष्टके चतुर्थाध्याये पञ्चमो वर्गः[6] ॥

## [ ९६ ]

[1]दैवोदासिः प्रतर्दन ऋषिः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः[1]।

प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना ।
भद्रान् कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥

प्र । सेनाऽनीः । शूरः । अग्रे । रथानाम् । गव्यन् । एति । हर्षते । अस्य । सेना ।
भद्रान् । कृण्वन् । इन्द्रऽहवान् । सखिऽभ्यः । आ । सोमः । वस्त्रा । रभसानि । दत्ते ॥ १ ॥

वेङ्कट० प्रतर्दनो दैवोदासिः[7]। प्र एति सेनानीः शूरः रथानाम् अग्रे गा इच्छन्। हृष्यति च अस्य सेना। भद्रान् कृण्वन् इन्द्रस्य हवान् यजमानेभ्यः आ दत्ते सोमः वस्त्राणि पयांसि[8] वेगनिमित्तानि इन्द्रस्य ॥ १ ॥

समस्य हरिं हरयो मृजन्त्यश्वहयैरनिशितं नमोभिः ।
आ तिष्ठति रथमिन्द्रस्य सखा विद्वाँ एना सुमतिं यात्यच्छ ॥ २ ॥

सम् । अस्य । हरिम् । हरयः । मृजन्ति । अश्वऽहयैः । अनिऽशितम् । नमःऽभिः ।
आ । तिष्ठति । रथम् । इन्द्रस्य । सखा । विद्वान् । एन । सुऽमतिम् । याति । अच्छ ॥ २ ॥

वेङ्कट० अस्य हरिम्[9] सम् मृजन्ति सोमस्य हरितवर्णमंशुम् अङ्गुलयः [10]ऋत्विजो वा[10]। सोऽयं[11] सोमो व्याप्तहयैः असंस्कृतमयुक्तं[12] नामकैः आ तिष्ठति[13] आत्मीयं पवित्ररथम् इन्द्रस्य सखा [14]सोमः। अथ[14] [15]प्राज्ञः अनेन[15] रथेन सुष्टुतिं स्तोतारम् अभिगच्छति ॥ २ ॥

---

१-१. इन्दो बद्धो बद्धां वि[2] अ[1]; इवो बन्धां वि[1]. २. धनप्रधानाभिमुखीम् वि[2]; धनप्रधानाभिमुखम् अ[1]. ३-३. यदान्वहक्षयः वि[1]; यदा समक्षयः वि[2] अ[1]. ४. तदा च अ[1]. ५. °म इत्यर्थः अ[1]. ६-६. नास्ति मूको. ७. देवोदासि वि[2] अ[1]; देवोदासीः वि[1]. ८. वयांसि मूको. ९. नास्ति त्रि[1]. १०-१०. नास्ति त्रि[1]. ११. यं वि[1]. १२. असंयुक्तमसंस्कृतं अ[1]. १३. तिषन्ति मूको. १४-१४. सोमोस वि[2] अ[1], १५-१५. प्रज्ञोनेन वि[2] अ[1]; प्राज्ञोनोने वि[1].

स नो देव देवताते पवस्व महे सोम प्सरस इन्द्रपानः ।
कृण्वन्नपो वर्षयन् द्यामुतेमामुरोरा नो वरिवस्या पुनानः ॥ ३ ॥

सः । नः । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । इन्द्रऽपानः ।
कृण्वन् । अपः । वर्षयन् । द्याम् । उत । इमाम् । उरोः । आ । नः । वरिवस्य । पुनानः ॥३॥

वेङ्कट० सः अस्माकम् देव! यज्ञे पवस्व महते सोम! पानाय इन्द्रस्य पातव्यः 'कृण्वन् उदकानि'[1] द्यावापृथिव्यौ च वर्षयन्। 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' ( ऋ १,१६४,५१ ) इत्येवमभिप्रायम्। विस्तीर्णादन्तरिक्षाद् आ गच्छन् अस्मान् परिचर पूयमानः ॥ ३ ॥

अजीतयेऽहतये पवस्व स्वस्तये सर्वतातये बृहते ।
तदुशन्ति विश्व इमे सखायस्तदहं वश्मि पवमान सोम ॥ ४ ॥

अजीतये । अहतये । पवस्व । स्वस्तये । सर्वऽतातये । बृहते ।
तत् । उशन्ति । विश्वे । इमे । सखायः । तत् । अहम् । वश्मि । पवमान । सोम ॥ ४ ॥

वेङ्कट० यथा वयं शत्रुभिरजिता भवेम तथा अहतार्थम्[2] पवस्व अविनाशाय महते यज्ञाय। तत् त्वदीयं रक्षणम् इच्छन्ति विश्वे इमे मदीयाः सखायः। तत् एव अहम् च कामये पवमान! सोम![3] ॥ ४ ॥

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥

सोमः । पवते । जनिता । मतीनाम् । जनिता । दिवः । जनिता । पृथिव्याः ।
जनिता । अग्नेः । जनिता । सूर्यस्य । जनिता । इन्द्रस्य । जनिता । उत । विष्णोः ॥ ५ ॥

वेङ्कट० सोमः क्षरति जनयिता बुद्ध्यादीनामिति ॥ ५ ॥

[4]इति सप्तमाष्टके चतुर्थोऽध्याये षष्ठो वर्गः[4] ॥

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ ६ ॥

ब्रह्मा । देवानाम् । पदऽवीः । कवीनाम् । ऋषिः । विप्राणाम् । महिषः । मृगाणाम् ।
श्येनः । गृध्राणाम् । स्वऽधितिः । वनानाम् । सोमः । पवित्रम् । अति । एति । रेभन् ॥ ६ ॥

---

१-१. कृण्वन्त्युदकानि वि[२] अ[१]; काण्वन्नुदकानि वि[१]. २. अहस्तादर्थं मूको. ३. नास्ति वि[२] अ[१]. ४-४ नास्ति मूको.

**वेङ्कट०** सोमः देवानाम् ऋत्विजाम् ब्रह्मा, कवीनाम् पदवीः। पदानि स्खलितानि[1] यो गमयति[2] स पदवीः। मेधाविनाम् ऋषिः। यः परोक्षं पश्यति तम् ऋषिमाहुः। अयम् मृगाणाम् महिषः भवति, गृध्राणाम् श्येनः, छेदकानाम् स्वधितिः। एवंप्रभावः सोमः पवित्रम् अति[3] गच्छति शब्दायमानः ॥ ६ ॥

प्रावी॑विपद्वा॒च ऊ॒र्मिं न सिन्धु॒र्गिर॒ः सोम॒ः पव॑मानो मनी॒षाः ।
अ॒न्तः पश्य॑न् वृ॒जने॒माव॑रा॒ण्या ति॑ष्ठति वृष॒भो गोषु॑ जा॒नन् ॥ ७ ॥

प्र । अ॒वी॒वि॒प॒त् । वा॒चः । ऊ॒र्मिम् । न । सिन्धुः॑ । गिरः॑ । सोमः॑ । पव॑मानः । म॒नी॒षाः ।
अ॒न्तरिति॑ । पश्य॑न् । वृ॒जना॑ । इ॒मा । अव॑राणि । आ । ति॒ष्ठ॒ति॒ । वृ॒ष॒भः । गोषु॑ । जा॒नन् ॥७॥

**वेङ्कट०** [4]प्र वेपयति[4] शब्दस्य सङ्घम् इव सिन्धुः गिरः सोमः पवमानः[5] मनस ईप्सिताः[6] हृदयङ्गमाः। अन्तः पश्यन् बलानि इमानि दुर्बलैर्वारयितुमशक्यानि आ तिष्ठति वृषभः महान्[7] गवां [8]जयाय जानन्[8]। परबलानि प्रविशतीत्यर्थः ॥ ७ ॥

स म॑त्स॒रः पृ॒त्सु व॒न्वन्नवा॑तः स॒हस्र॑रेता अ॒भि वाज॑मर्ष ।
इन्द्रा॑येन्दो॒ पव॑मानो मनी॒ष्यं१॒॑शोरू॒र्मिमी॑रय॒ गा इ॑ष॒ण्यन् ॥ ८ ॥

सः । म॒त्स॒रः । पृ॒त्ऽसु । व॒न्वन् । अवा॑तः । स॒हस्र॑ऽरेताः । अ॒भि । वाज॑म् । अ॒र्ष॒ ।
इन्द्रा॑य । इ॒न्दो॒ इति॑ । पव॑मानः । म॒नी॒षी । अं॒शोः । ऊ॒र्मिम् । ई॒र॒य॒ । गाः । इ॒ष॒ण्यन् ॥ ८ ॥

**वेङ्कट०** [9]सः मदकरः[9] सङ्ग्रामेषु[10] प्रविशन् अन्यैर्गन्तुमशक्यः सहस्ररेताः अभि गच्छ बलं शत्रूणाम्। इन्द्राय इन्दो! पवमानः मनीषी त्वम् अंशोः ऊर्मिम् प्रेरय शब्दान् इषण्यन् ॥ ८ ॥

परि॑ प्रि॒यः क॒लशे॑ दे॒ववा॑त॒ इन्द्रा॑य॒ सोमो॒ रण्यो॒ मदा॑य ।
स॒हस्र॑धारः श॒तवा॑ज॒ इन्दु॑र्वा॒जी न सप्ति॒ः सम॑ना जिगाति ॥ ९ ॥

परि॑ । प्रि॒यः । क॒लशे॑ । दे॒वऽवा॑तः । इन्द्रा॑य । सोमः॑ । रण्यः॑ । मदा॑य ।
स॒हस्र॑ऽधारः । श॒तऽवा॑जः । इन्दुः॑ । वा॒जी । न । सप्तिः॑ । सम॑ना । जि॒गा॒ति॒ ॥ ९ ॥

**वेङ्कट०** परि गच्छति प्रियः कलशे देवैरभिगतः इन्द्राय सोमः रमणीयः मदार्थम् सहस्रधारः बहुबलः इन्दुः बलवान् इव अश्वः सङ्ग्रामे ॥ ९ ॥

स पू॒र्व्यो व॑सु॒विज्जाय॑मानो मृजा॒नो अ॒प्सु दु॑दुहा॒नो अद्रौ॑ ।
अ॒भि॒श॒स्ति॒पा भुव॑नस्य॒ राजा॑ वि॒दद् गा॒तुं ब्रह्म॑णे पू॒यमा॑नः ॥ १० ॥

---

१. स्खलतानि वि[2]; खलतानि अ[1]. २. गमयन्ति मूको. ३-३. अधि वि[2] अ[1]. ४-४. प्रेरयति वि[2] अ[1]. ५. °नः महिषा वि[1]. ६. ईशिती वि[2] अ[1]; ईशीरति वि[1]. ७. नास्ति वि[1]. ८-८. जयाय मानन् वि[2] अ[1]; जयायजा वि[1]. ९-९. समः करं वि[2] अ[1]. १०. ग्रामेषु वि[2] अ[1].

सः । पूर्व्यः । वसुऽवित् । जायमानः । मृजानः । अप्ऽसु । दुदुहानः । अद्रौ ।
अभिशस्तिऽपाः । भुवनस्य । राजा । विदत् । गातुम् । ब्रह्मणे । पूयमानः ॥ १० ॥

**वेङ्कट०** सः प्रत्नः धनानां लम्भकः जायमानः मृज्यमानः उदकेषु दुह्यमानः [1]अभिषवग्राव्णि अभिशस्तेः[1] परिरक्षकः भुवनस्य राजा प्रयच्छति मार्गम् यजमानेभ्यः कर्मार्थम् पूयमानः ॥१०॥

[2]इति सप्तमाष्टके चतुर्थाध्याये सप्तमो वर्गः[2] ॥

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ११ ॥

त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि । चक्रुः । पवमान । धीराः ।
वन्वन् । अवातः । परिऽधीन् । अप । ऊर्णु । वीरेभिः । अश्वैः । मघऽवा । भव । नः ॥ ११ ॥

**वेङ्कट०** त्वया हि अस्माकम् पितरः सोम! पूर्वे अङ्गिरसः कर्माणि चक्रुः पवमान! प्राज्ञाः । रक्षांसि [3]सम्भजन् तैरनभिगतो[3] रक्षांसि [4]अप ऊर्णुहि[4] । वीरैः अश्वैः च सह मघवा त्वम् अस्माकम् भव ॥ ११ ॥

यथापवथा मनवे वयोधा अमित्रहा वरिवोविद्धविष्मान् ।
एवा पवस्व द्रविणं दधान इन्द्रे सं तिष्ठ जनयायुधानि ॥ १२ ॥

यथा । अपवथाः । मनवे । वयःऽधाः । अमित्रऽहा । वरिवःऽवित् । हविष्मान् ।
एव । पवस्व । द्रविणम् । दधानः । इन्द्रे । सम् । तिष्ठ । जनय । आयुधानि ॥ १२ ॥

**वेङ्कट०** यथा अपवथाः मनवे राज्ञे अन्नस्य धाता[5], अमित्राणां हन्ता, धनस्य दाता, पुरोडाशादिभिर्युक्तः, एवम् पवस्व धनम् प्रयच्छन्, इन्द्रे च सम्यक् तिष्ठ, प्रकाशय च त्वदीयानि आयुधानि ॥ १२ ॥

पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये ।
अव द्रोणानि घृतवान्ति सीद मदिन्तमो मत्सर इन्द्रपानः ॥ १३ ॥

पवस्व । सोम । मधुऽमान् । ऋतऽवा । अपः । वसानः । अधि । सानौ । अव्ये ।
अव । द्रोणानि । घृतऽवन्ति । सीद । मदिन्ऽतमः । मत्सरः । इन्द्रऽपानः ॥ १३ ॥

**वेङ्कट०** पवस्व सोम! मधुरः यज्ञवान् उदकानि आच्छादयन् पवित्रे। अव सीद कलशान् उदकवतः अत्यन्तं मदकरः मदः इन्द्रस्य पातव्यः ॥ १३ ॥

---

1-1. °ग्राव्ण्याभिशस्तेः वि[1]; ग्राप्स्यभिशस्ते वि[2]; °ग्राव्यभिशस्ते अ[1].　2-2. नास्ति मूको.
3-3. सभजन्तैर° वि[2] अ[1]; सभैजन्तैर° वि[1].　4-4. त्रुटितम् वि[2] अ[1]; अपौर्णहि वि[1].　5. दाता वि[2] अ[1].

वृष्टिं दिवः शतधारः पवस्व सहस्रसा वाजयुर्देववीतौ ।
सं सिन्धुभिः कलशे वावशानः समुस्रियाभिः प्रतिरन् न आयुः ॥ १४ ॥

वृष्टिम् । दिवः । शतऽधारः । पवस्व । सहस्रऽसाः । वाजऽयुः । देवऽवीतौ ।
सम् । सिन्धुऽभिः । कलशे । वावशानः । सम् । उस्रियाभिः । प्रऽतिरन् । नः । आयुः ॥ १४ ॥

**वेङ्कट०** वृष्टिम् दिवः शतधारः पवस्व । सहस्रस्य दाता अन्नकामः यजमानानां यज्ञे कलशे सम् गच्छस्व सिन्धुभिः कामयमानः तथा गोभिश्च वर्धयन् अस्माकम् आयुः ॥ १४ ॥

एष स्य सोमो मतिभिः पुनानोऽत्यो न वाजी तरतीदरातीः ।
पयो न दुग्धमदितेरिषिरमुर्विव गातुः सुयमो न वोळ्हा ॥ १५ ॥

एषः । स्यः । सोमः । मतिऽभिः । पुनानः । अत्यः । न । वाजी । तरति । इत् । अरातीः ।
पयः । न । दुग्धम् । अदितेः । इषिरम् । उरुऽइव । गातुः । सुऽयमः । न । वोळ्हा ॥ १५ ॥

**वेङ्कट०** एषः सोमः पूजकैः पूयमानः अतनशीलः अश्वः इव तरति एव[1] शत्रून्, पयः इव दुग्धम् पशोः अन्वेषणीयम्, विस्तीर्णः इव च मार्गः समाश्रयणीयः[2], नियन्तुं शक्यः इव च अश्वः ॥१५॥

[3]इति सप्तमाष्टके चतुर्थाध्याये अष्टमो वर्गः[3] ॥

स्वायुधः सोतृभिः पूयमानोऽभ्यर्ष गुह्यं चारु नाम ।
अभि वाजं सप्तिरिव श्रवस्याऽभि वायुमभि गा देव सोम ॥ १६ ॥

सुऽआयुधः । सोतृऽभिः । पूयमानः । अभि । अर्ष । गुह्यम् । चारु । नाम ।
अभि । वाजम् । सप्तिःऽइव । श्रवस्या । अभि । वायुम् । अभि । गाः । देव । सोम ॥ १६ ॥

**वेङ्कट०** स्वायुधः सोतृभिः[4] पूयमानः[5] स्तुतिभिः सह अभि गमय गुहायां निहितम् चारु त्वदीयं शरीरं रसात्मकम् । अभि अर्ष च अन्नम् अश्वः इव अन्नेच्छायाम्[6] अस्मदीयायाम् अभि प्राणम् अभि च पशून् देव! सोम![7] ॥ १६ ॥

शिशुं जज्ञानं हर्यतं मृजन्ति शुम्भन्ति वह्निं मरुतो गणेन ।
कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ १७ ॥

शिशुम् । जज्ञानम् । हर्यतम् । मृजन्ति । शुम्भन्ति । वह्निम् । मरुतः । गणेन ।
कविः । गीःऽभिः । काव्येन । कविः । सन् । सोमः । पवित्रम् । अति । एति । रेभन् ॥ १७ ॥

---

१. एवं वि[2] अ[1]. २. साश्रयणीयो वि[2] अ[1]; समाश्रणीयो वि[1]. ३-३. नास्ति मूको. ४. स्तोतृभिः वि[2] अ[1]. ५. °मानो हि वि[2] अ[1]. ६. चान्ने° वि[2] अ[1] ७. सोमः मूको.

वेङ्कट० शिशुम् जायमानम् स्पृहणीयम् शोधयन्ति । मरुतः चैनमात्मीयेन गणेन वह्निम् अलङ्कुर्वन्ति । सोऽयं कविकर्मणैव[1] कविः सन् सोमः पवित्रम् अति[2] गच्छति शब्दायमानः ॥ १७ ॥

ऋषिमना य ऋषिकृत् स्वर्षाः सहस्रणीथः पदवीः कवीनाम् ।
तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ १८ ॥

ऋषिऽमनाः । यः । ऋषिऽकृत् । स्वःऽसाः । सहस्रऽनीथः । पदऽवीः । कवीनाम् ।
तृतीयम् । धाम । महिषः । सिसासन् । सोमः । विऽराजम् । अनु । राजति । स्तुप् ॥ १८ ॥

वेङ्कट० दर्शकमनस्कः यः दर्शनस्य कर्ता सर्वस्य सम्भक्ता [3]बहुनयः पदानां[3] निधाता कवीनाम् । सोऽयम् तृतीयम् स्थानम् महान् सम्भक्तुमिच्छन्[4] सोमः विराजन्तम् इन्द्रम् अनु राजति स्तूयमानः ॥ १८ ॥

चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ १९ ॥

चमूऽसत् । श्येनः । शकुनः । विऽभृत्वा । गोऽविन्दुः । द्रप्सः । आयुधानि । बिभ्रत् ।
अपाम् । ऊर्मिम् । सचमानः । समुद्रम् । तुरीयम् । धाम । महिषः । विवक्ति ॥ १९ ॥

वेङ्कट० चमसेषु सीदन् अयम् श्येनः शक्तः विहरणशीलः गवां लम्भकः द्रवणशीलः[5] आयुधानि धारयन् अपाम् प्रेरकमन्तरिक्षे सोमो नः तुरीयम् स्थानम्[6] महान् सेवते । सूर्यलोकस्योपरि चन्द्रमसो लोक इति 'यमः पृथिव्या अधिपतिः स मावतु अग्निः × × × वायुः × × × आदित्यः × × × चन्द्रमा नक्षत्राणाम्' ( तै. त ३,४,५,१ ) इत्यादिमन्त्रैः[7] ज्ञायते । इति ॥ १९ ॥

मर्यो न शुभ्रस्तन्वं मृजानोऽत्यो न सृत्वा सनये धनानाम् ।
वृषेव यूथा परि कोशमर्षन् कनिक्रदच्चम्वोरा विवेश ॥ २० ॥

मर्यः । न । शुभ्रः । तन्वम् । मृजानः । अत्यः । न । सृत्वा । सनये । धनानाम् ।
वृषाऽइव । यूथा । परि । कोशम् । अर्षन् । कनिक्रदत् । चम्वोः । आ । विवेश ॥ २० ॥

वेङ्कट० मनुष्यः[8] इव शुभ्रः शरीरम् शोधयन्, अत्यः इव च सरणशीलः लाभाय धनानाम्, वृषभः इव च[9] गोयूथानि पात्रम् परिगच्छन् शब्दं कुर्वन् अधिषवणफलकयोः आ विशति ॥ २० ॥

[9]इति सप्तमाष्टके चतुर्थाध्याये नवमो वर्गः[9] ॥

---

१. कविः कर्मणेव वि[2] अ[1]. २. अधि वि[2] अ[1]. ३-३. °नयनपादा° वि[2] अ[1]. ४. °मिच्छ मूको. ५. द्रविणशील वि[1] अ[1]. ६. नास्ति वि[1]. ७. इतिमन्त्रैः वि[1]. ८. मनुष्या वि[1]. ९-९ नास्ति मूको.

पवस्वेन्दो पवमानो महोभिः कनिक्रदत् परि वाराण्यर्ष ।
क्रीळञ्चम्वो३रा विश पूयमान इन्द्रं ते रसो मदिरो ममत्तु ॥ २१ ॥

पवस्व । इन्दो इति । पवमानः । महःऽभिः । कनिक्रदत् । परि । वाराणि । अर्ष ।
क्रीळन् । चम्वोः । आ । विश । पूयमानः । इन्द्रम् । ते । रसः । मदिरः । ममत्तु ॥ २१ ॥

वेङ्कट० [1]इन्दो ! पूयमानः त्वम् ऋत्विग्भिः शब्दं कुर्वन् परि गच्छ अवेर्वालानि† । क्रीळन् अधिषवणफलकयोः आ विश पूयमानः । इन्द्रम् ते रसः मदकरः मदयतु[1] ॥ २१ ॥

प्रास्य धारा बृहतीरसृग्रन्नक्तो गोभिः कलशाँ आ विवेश ।
साम कृण्वन्त्सामन्यो विपश्चित् क्रन्दन्नेत्यभि सख्युर्न जामिम् ॥ २२ ॥

प्र । अस्य । धाराः । बृहतीः । असृग्रन् । अक्तः । गोभिः । कलशान् । आ । विवेश ।
साम । कृण्वन् । सामन्यः । विपःऽचित् । क्रन्दन् । एति । अभि । सख्युः । न । जामिम् ॥ २२ ॥

वेङ्कट० प्र [2]सृज्यन्ते अस्य धाराः महत्यः । सोऽयं गव्यैः अक्तः कलशान् आ विशति[2] । सोऽयम् साम[3] कृण्वन् सामगानकुशलः इति सुशब्दं सोममाह । विपश्चित् क्रन्दन् अभि गच्छति चमसम्[4], यथा सख्युः जायाम्[5] इतरोऽभिगच्छति । यथा 'आगधिता परिगधिता' ( ऋ १,१२६,६ ) इतीन्द्रः स्वनयस्य जायामुवाचेति ( तु. बृदे ३,१५० ) ॥ २२ ॥

अपघ्नन्नेषि पवमान शत्रून् प्रियां न जारो अभिगीत इन्दुः ।
सीदन् वनेषु शकुनो न पत्वा सोमः पुनानः कलशेषु सत्ता ॥ २३ ॥

अपऽघ्नन् । एषि । पवमान । शत्रून् । प्रियाम् । न । जारः । अभिऽगीतः । इन्दुः ।
सीदन् । वनेषु । शकुनः । न । पत्वा । सोमः । पुनानः । कलशेषु । सत्ता ॥ २३ ॥

वेङ्कट० अपघ्नन् एषि पवमान ! शत्रून्, प्रियाम् इव असतीम्[6] जारः, स्तोतृभिः अभिष्टुतः त्वम् इन्दुः । सीदन् वृक्षेषु शकुनः इव पतनशीलः सोमः पूयमानः कलशेषु निषण्णो भवति ॥ २३ ॥

आ ते रुचः पवमानस्य सोम योषेव यन्ति सुदुघाः सुधाराः ।
हरिरानीतः पुरुवारो अप्स्वचिक्रदत् कलशे देवयूनाम् ॥ २४ ॥

आ । ते । रुचः । पवमानस्य । सोम । योषाऽइव । यन्ति । सुऽदुघाः । सुऽधाराः ।
हरिः । आऽनीतः । पुरुऽवारः । अप्ऽसु । अचिक्रदत् । कलशे । देवऽयुनाम् ॥ २४ ॥

---

१-१. नास्ति वि[1]. † अपेर्वा° मूको. २-२. नास्ति वि[1]. ३. सोम वि[2] अ[1]. ४. चमुं वि[1]; चयू वि[3]; चमूं अ[1]. ५. जायानम्भवर वि[1]; जायार्न्न पर वि[2] अ[1]. ६. भवाति वि[2] अ[1].

**वेङ्कट०** आ यन्ति ते रुचः पवमानस्य [1]सोम! स्त्री इव[1] सुदुघाः सुधाराः[2] दीप्ताः पतन्ति धाराः। हरितवर्णः[3] आनीतः पुरुवारः वसतीवरीषु क्रन्दते च कलशे यजमानानाम् इति[4] ॥ २४ ॥

[5]इति सप्तमाष्टके चतुर्थाध्याये दशमो वर्गः[5] ॥

[ ९७ ]

[6]१-३ मैत्रावरुणिर्वसिष्ठ ऋषिः, ४-६ वासिष्ठ इन्द्रप्रमतिः, ७-९ वासिष्ठो वृषगणः, १०-१२ वासिष्ठो मन्युः, १३-१५ वासिष्ठ उपमन्युः, १६-१८ वासिष्ठो व्याघ्रपात्, १९-२१ वासिष्ठः शक्तिः, २२-२४ वासिष्ठः कर्णश्रुत्, २५-२७ वासिष्ठो मृळीकः, २८-३० वासिष्ठो वसुक्रः, ३१-४४ पराशरः शाक्त्यः, ४५-५८ कुत्स आङ्गिरसः। पवमानः सोमो देवता। त्रिष्टुप् छन्दः[6]।

अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्।
सुतः पवित्रं पर्येति रेभन् मितेव सद्म पशुमान्ति होता ॥ १ ॥

अस्य। प्रेषा। हेमना। पूयमानः। देवः। देवेभिः। सम्। अपृक्त। रसम्।
सुतः। पवित्रम्। परि। एति। रेभन्। मिताऽइव। सद्म। पशुऽमन्ति। होता ॥ १ ॥

**वेङ्कट०** क्रमेण तृचानाम् ऋषीन् दर्शयति शौनकः—

"'अस्य प्रेषा' वसिष्ठस्य वासिष्ठास्तु नवापरे।
इन्द्रप्रमतिरेवाद्यस्ततो वृषगणः परः ॥
मन्युश्चैवोपमन्युश्च व्याघ्रपाच्छक्तिरेव च।
कर्णश्रुन्मृळीकश्चैव[6] वसुक्रोऽथ पराशरः ॥
चतुर्दशव्रते (?) कुत्सः सूक्तशेषः ऋषिः स्मृतः।" (तु. ऋअ २,९,९७) इति ॥

सोमस्य प्रेरकेण हिरण्येन पूयमानः अंशुः देवः देवैः आत्मीयरसम् सम् पर्चयति। सुतः पवित्रम् परि गच्छति शब्दायमानः निर्मितान् इव यज्ञगृहान् बद्धपशून् होता ॥ १ ॥

भद्रा वस्त्रा समन्या वसानो महान् कविर्निवचनानि शंसन्।
आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥ २ ॥

भद्रा। वस्त्रा। समन्या। वसानः। महान्। कविः। निऽवचनानि। शंसन्।
आ। वच्यस्व। चम्वोः। पूयमानः। विऽचक्षणः। जागृविः। देवऽवीतौ ॥ २ ॥

---

१-१. सोमास्तीव्राः अ[1]. २. नास्ति अ[1]. ३. °वर्ण वि[2] अ[1]; अतिवर्णा वि[1]. ४. नास्ति वि[2] अ[1]. ५-५. नास्ति मूको. ६. त्रुटितम् वि[2] अ[1].

वेङ्कट० भद्राणि वस्त्राणि तेजांसि सङ्ग्रामार्हाणि च[1] वसानः महान् कविः आभिमुख्येन [2]वक्तव्यानि शंसन् आ विश[2] चम्वोः[3] पूयमानः विचक्षणः जागरणशीलः यज्ञे ॥ २ ॥

समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे ।
अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

सम् । ऊँ इति । प्रियः । मृज्यते । सानौ । अव्ये । यशःऽतरः । यशसाम् । क्षैतः । अस्मे इति ।
अभि । स्वर । धन्व । पूयमानः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

वेङ्कट० [4]सम् मृज्यते[4] प्रियः समुच्छ्रिते पवित्रे यशस्वितमः[5] यशस्विनाम् क्षितिं प्राप्तः अस्मदर्थम् अभि शब्दय अन्तरिक्षे पूयमानः । यूयम् इति गतम् ( ऋ ७,१,२० ) ॥ ३ ॥

प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय ।
स्वादुः पवाते अति वारमव्यमा सीदाति कलशं देवयुर्नः ॥ ४ ॥

प्र । गायत । अभि । अर्चाम । देवान् । सोमम् । हिनोत । महते । धनाय ।
स्वादुः । पवाते । अति । वारम् । अव्यम् । आ । सीदाति । कलशम् । देवऽयुः । नः ॥ ४ ॥

वेङ्कट० प्र गायत, अभि अर्चत[6] देवान्, सोमम् प्रेरयत महद्धनं प्राप्तुम् । स्वादुः सोमः अति पवते पवित्रम्, आ सीदति च पात्रम् देवकामः सोमः अस्मदीयः[7] ॥ ४ ॥

इन्दुर्देवानामुप सख्यमायन्त्सहस्रधारः पवते मदाय ।
नृभिः स्तवानो अनु धाम पूर्वमगन्निन्द्रं महते सौभगाय ॥ ५ ॥

इन्दुः । देवानाम् । उप । सख्यम् । आऽयन् । सहस्रऽधारः । पवते । मदाय ।
नृऽभिः । स्तवानः । अनु । धाम । पूर्वम् । अगन् । इन्द्रम् । महते । सौभगाय ॥ ५ ॥

वेङ्कट० इन्दुः देवानाम् उप आगच्छन्[8] सख्यम् सहस्रधारः पवते मदार्थम् । नृभिः स्तूयमानः प्रत्नम् धाम अनु गच्छति । तदेवाह — गच्छति इन्द्रम् महते अभ्युदयायेति ॥ ५ ॥

[9]इति सप्तमाष्टके चतुर्थाध्याये एकादशो वर्गः[9] ॥

स्तोत्रे राये हरिरर्षा पुनान इन्द्रं मदो गच्छतु ते भराय ।
देवैर्याहि सरथं राधो अच्छा यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

---

१. नास्ति वि[2] अ[1]. २-२. °व्यानीति निशंसनापि वि[2] अ[1]; °व्यानि शंसन्नापि वि[1]. ३. चमेवा वि[1] वि[2] अ[1]; चर्मोः वि[1]. ४-४. समृज्यते मूको. ५. यशस्वतिमो वि[1]. ६. अर्चाय वि[1]; अर्चय अ[1]; अर्चम वि[1]. ७. °दीयम् वि[2] अ[1]. ८. ग° मूको. ९-९. नास्ति मूको.

स्तोत्रे । राये । हरिः । अर्ष । पुनानः । इन्द्रम् । मदः । गच्छतु । ते । भराय ।
देवैः । याहि । सऽरथम् । राधः । अच्छ । यूयम् । पात । स्वस्तिभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** स्तोत्रे क्रियमाणे धनार्थम् हरिः अर्ष पूयमानः । इन्द्रम् मदः तव गच्छतु सङ्ग्रामार्थम् । देवैः आगच्छ समानं रथमास्थाय अस्माकं धनार्थमिति ॥ ६ ॥

प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ ७ ॥

प्र । काव्यम् । उशनाऽइव । ब्रुवाणः । देवः । देवानाम् । जनिम । विवक्ति ।
महिऽव्रतः । शुचिऽबन्धुः । पावकः । पदा । वराहः । अभि । एति । रेभन् ॥ ७ ॥

**वेङ्कट०** [1]प्र ब्रवीति अयमृषिः उशना इव[1] स्तोत्रम् ब्रुवाणः स्तोता देवानाम् जन्मानि । महाकर्मा दीप्तबन्धुः शोधकः स्थानानि अभि गच्छति शब्दं कुर्वन् वराहः[2] वराहारः ( तु. या ५,४ ) सोमः । यद्वा पादेन शब्दं कुर्वन् कश्चन [3]वराह इति[3] ॥ ७ ॥

प्र हंसासस्तृपलं मन्युमच्छामादस्तं वृषगणा अयासुः ।
आङ्गूष्यं पवमानं सखायो दुर्मर्षं साकं प्र वदन्ति वाणम् ॥ ८ ॥

प्र । हंसासः । तृपलम् । मन्युम् । अच्छ । अमात् । अस्तम् । वृषऽगणाः । अयासुः ।
आङ्गूष्यम् । पवमानम् । सखायः । दुःऽमर्षम् । साकम् । प्र । वदन्ति । वाणम् ॥ ८ ॥

**वेङ्कट०** प्र यान्ति शत्रुभिर्हन्यमानाः हंसरूपाः वा क्षिप्रकारिणम् अभिमन्तारं सोमं प्रति भयाद् यज्ञगृहम् अमी वृषगणाः । स्तोत्रार्हम्[4] पवमानम् सखायः दुर्मर्षम् शत्रुभिर्दुर्धरम्[5] यज्ञे सह स्तुवन्ति शब्दायमानम् ॥ ८ ॥

स रंहत उरुगायस्य जूतिं वृथा क्रीळन्तं मिमते न गावः ।
परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ ९ ॥

सः । रंहते । उरुऽगायस्य । जूतिम् । वृथा । क्रीळन्तम् । मिमते । न । गावः ।
परीणसम् । कृणुते । तिग्मऽशृङ्गः । दिवा । हरिः । ददृशे । नक्तम् । ऋज्रः ॥ ९ ॥

**वेङ्कट०** सः वेगं करोति उरुगमनस्याऽऽदित्यस्य वेगितां गतिं प्रति । तम् अनायासेन गच्छन्तम् अन्ये गन्तारः न परिच्छिन्दन्ति । स महत्तेजः कुरुते तीक्ष्णशृङ्गः । सोऽयम् अन्तरिक्षे दिवा हरितवर्णः दृश्यते, रात्रौ ऋज्रः[6] ऋजुगामी विस्पष्ट इति[7] ॥ ९ ॥

---

१-१. काव्यंपिरशेन वि[१]. २-२. पराहारः वि[२] अ[१]. ३-३. अवगाहति अ[१]. ४. स्तोगर्ह वि[२] अ[१]; स्तोत्राहं वि[१]. ५. °भिर्दुम्मरं वि[१]. ६. ऋजु वि[२] अ[१]; ऋज वि. ७. नास्ति वि[२] अ[१].

इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन् मदाय ।
हन्ति रक्षो बाधते पर्यरातीर्वरिवः कृण्वन् वृजनस्य राजा ॥ १० ॥

इन्दुः । वाजी । पवते । गोऽन्योघाः । इन्द्रे । सोमः । सहः । इन्वन् । मदाय ।
हन्ति । रक्षः । बाधते । परि । अरातीः । वरिवः । कृण्वन् । वृजनस्य । राजा ॥ १० ॥

**वेङ्कट०** इन्दुः वाजी पवते **गमनशीलनिचीनाग्ररससङ्घातः** इन्द्रे सोमः **बलकरं रसम् प्रेरयन् मदार्थम्** । हन्ति रक्षः, परि बाधते **च शत्रुम्, धनम्** कृण्वन् **बलस्य ईशिता ॥ १० ॥**

**'इति सप्तमाष्टके चतुर्थाध्याये द्वादशो वर्गः' ॥**

अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ ११ ॥

अध । धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिऽदुग्धः ।
इन्दुः । इन्द्रस्य । सख्यम् । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥ ११ ॥

**वेङ्कट०** [1]इन्दुः धारया[1] **मधुना सम्पर्चयन् देवान्** पवित्रं तिरस्-कुर्वन् पवते[2] **ग्रावदुग्धः** । इन्दुः इन्द्रस्य सख्यम् **सेवमानः** देवः देवस्य **मदकरः मदार्थम् पवते**[2] ॥ ११ ॥

अभि प्रियाणि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ १२ ॥

अभि । प्रियाणि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन । पृञ्चन् ।
इन्दुः । धर्माणि । ऋतुऽथा । वसानः । दश । क्षिपः । अव्यत । सानौ । अव्ये ॥ १२ ॥

**वेङ्कट०** प्रियाणि अभि पवते **पूयमानः** देवः देवान् स्वेन रसेन **सम्-पृञ्चन्** इन्दुः **धारकाणि तेजांसि कालेषु आच्छादयन्** । **तमिमं** दश **अङ्गुलयः समुच्छ्रिते पवित्रे गमयन्ति, गच्छन्ति वा तत्र पूयमानमिति ॥ १२ ॥**

वृषा शोणो अभिकनिक्रदद्गा नदयन्नेति पृथिवीमुत द्याम् ।
इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचेतयन्नर्षति वाचमेमाम् ॥ १३ ॥

वृषा । शोणः । अभिऽकनिक्रदत् । गाः । नदयन् । एति । पृथिवीम् । उत । द्याम् ।
इन्द्रस्यऽइव । वग्नुः । आ । शृण्वे । आजौ । प्रऽचेतयन् । अर्षति । वाचम् । आ । इमाम् ॥१३॥

**वेङ्कट०** वृषा[3] **शोणवर्णः अभिशब्दायमानः**[6] **पशून् शब्दमुत्पादयन् गच्छति** पृथिवीम् **अपि च**

---

**१-१. नास्ति मूको. २-२. नास्ति वि**[2]; **इन्दुर्धारा···धार° वि**[1]; **इन्दुर्धारा धार° अ**[1]. **३.** °तेतिपवते वि[3] अ[1]; °ते त पवतति **वि**[1]. **४. नास्ति वि**[1]. **५. नास्ति वि**[2] **अ**[1]. **६.** शब्दादिशब्दायमानः **वि**[2] **अ**[1].

थाम्। तस्य च शब्दः सङ्ग्रामे इन्द्रस्य इव[1] शब्दः श्रूयते। प्रज्ञापयन् गमयति[2] इमाम् वाचम् उच्चैः शब्दायत इति ॥ १३ ॥

रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमंशुम् ।
पवमानः संतनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ १४ ॥

रसाय्यः । पयसा । पिन्वमानः । ईरयन् । एषि । मधुऽमन्तम् । अंशुम् ।
पवमानः । सम्ऽतनिम् । एषि । कृण्वन् । इन्द्राय । सोम । परिऽसिच्यमानः ॥ १४ ॥

वेङ्कट० आस्वाद्यः[3] पयसा क्षरन् प्रेरयन् गच्छसि[4] मधुमन्तम् अंशुम्। 'अंशुः[5] शमष्टमात्रो भवति' इति यास्कः (२,५)। [6]सोमरस उक्तः[6]। पवमानः सन्तनिम्[7] सन्तताम्[8] धाराम् कृण्वन् एषि[9] इन्द्राय सोम! परिषिच्यमानः ॥ १४ ॥

एवा पवस्व मदिरो मदायोदग्राभस्य नमयन् वधस्नैः ।
परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥ १५ ॥

एव । पवस्व । मदिरः । मदाय । उदऽग्राभस्य । नमयन् । वधस्नैः ।
परि । वर्णम् । भरमाणः । रुशन्तम् । गव्युः । नः । अर्ष । परि । सोम । सिक्तः ॥ १५ ॥

वेङ्कट० एवम् पवस्व मदकरः मदार्थम् उदकग्राहिणम्[10] मेवम् प्रह्वीकुर्वन् आयुधैः[11]। श्वेतं परितो बिभ्राणः गा इच्छन् अस्माकम् [12]परि अर्ष[12] पवित्रे सिक्तः ॥ १५ ॥

[13]इति सप्तमाष्टके चतुर्थाध्याये त्रयोदशो वर्गः[13] ॥

जुष्टी न इन्दो सुपथा सुगान्युरौ पवस्व वरिवांसि कृण्वन् ।
घनेव विष्वग्दुरितानि विघ्नन्नधि ष्णुना धन्व सानो अव्ये ॥ १६ ॥

जुष्टी । नः । इन्दो इति । सुऽपथा । सुऽगानि । उरौ । पवस्व । वरिवांसि । कृण्वन् ।
घनाऽइव । विष्वक् । दुःऽइतानि । विऽघ्नन् । अधि । स्नुना । धन्व । सानौ । अव्ये ॥ १६ ॥

वेङ्कट० प्रीतो भूत्वा अस्माकम् [14]इन्दो! सुपथानि[14] सुगमनानि[15] च धनानि कुर्वन् विस्तीर्णे कलशे पवस्व। कूटेन इव लोहम् विष्वग् दुरितानि [16]विघ्नन् अधि[16] गच्छ समुच्छ्रिते पवित्रे [17]सः स्नुना स्रवता[17] धारासङ्घेन ॥ १६॥

---

१. इति वि[2] अ[1]. २. गमयन्ति वि[2] अ[1]; गमयाति वि[1]. ३. आस्वाद्य वि[2] अ[1]. ४. गच्छति अ[1]. ५. नास्ति वि[2] अ[1]. ६. °रसयुक्तः वि[2] अ[1]. ७. सन्ततिः वि[2]; सन्तनिः अ[1]. ८. सस्तुतां वि[1]. ९. एषीति मूको. १०. उदग्राहिणं वि[2] अ[1]. ११. °युधै मूको. १२-१२. परियर्ष वि[2] अ[1]; पर्युर्षु वि[1]. १३-१३. नास्ति मूको. १४-१४. इन्दोर्न्नपथानि वि[1]. १५. सुगमानि वि[1]. १६-१६. °घ्नन्नेत्वधि वि[2] अ[1]. १७-१७. सः सुना वि[1]; सः स्नना अ[1]; स्नुदता वि[1].

वृष्टिं नो अर्ष दिव्यां जिगत्नुमिळावतीं शंगयीं जीरदानुम् ।
स्तुकेव वीता धन्वा विचिन्वन् बन्धूँरिमाँ अवराँ इन्दो वायून् ॥ १७ ॥

वृष्टिम् । नः । अर्ष । दिव्याम् । जिगत्नुम् । इळाऽवतीम् । शम्ऽगयीम् । जीरऽदानुम् ।
स्तुकाऽइव । वीता । धन्व । विऽचिन्वन् । बन्धून् । इमान् । अवरान् इन्दो इति । वायून् ॥१७॥

वेङ्कट० वृष्टिम् नः गमय दिवि भवाम् गमनशीलाम् अन्नवतीम् सुखस्य निवासभूताम् क्षिप्रदानाम्। स्तुकशब्दश्चापत्यवचनः। अपत्यानि इव कान्तानि विचिन्वन् गच्छ[1] बन्धून् इमान् अस्मान् पार्थिवान् इन्दो! त्वाम्[2] अभिगच्छतः ॥ १७ ॥

ग्रन्थिं न वि ष्य ग्रथितं पुनान ऋजुं च गातुं वृजिनं च सोम ।
अत्यो न क्रदो हरिरा सृजानो मर्यो देव धन्व पस्त्यावान् ॥ १८ ॥

ग्रन्थिम् । न । वि । स्य । ग्रथितम् । पुनानः । ऋजुम् । च । गातुम् । वृजिनम् । च । सोम ।
अत्यः । न । क्रदः । हरिः । आ । सृजानः । मर्यः । देव । धन्व । पस्त्यऽवान् । १८ ॥

वेङ्कट० ग्रथितम्[3] माम् [4]वि मुञ्च ततः[4] ग्रन्थिम् इव पूयमानः। ऋजुम् च मार्गम् बलम् च सोम! मह्यं देहि। अश्वः इव क्रन्दसि हरिः सृज्यमानः। मनुष्यहितः मारको वा[5] शत्रूणाम् देव! गच्छ गृहवान् ॥ १८ ॥

जुष्टो मदाय देवतात इन्दो परि ष्णुना धन्व सानो अव्ये ।
सहस्रधारः सुरभिरदब्धः परि स्रव वाजसातौ नृषह्ये ॥ १९ ॥

जुष्टः । मदाय । देवऽताते । इन्दो इति । परि । स्नुना । धन्व । सानौ । अव्ये ।
सहस्रऽधारः । सुरभिः । अदब्धः । परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥ १९ ॥

वेङ्कट० पर्याप्तः मदाय यज्ञे त्वम् इन्दो! परि गच्छ स्रवता धारासङ्घेन समुच्छ्रिते पवित्रे। बहुधारः सुगन्धिः अहिंसितः परि स्रव अन्नलाभनिमित्ते युद्धे ॥ १९ ॥

अरश्मानो येऽरथा अयुक्ता अत्यासो न ससृजानास आजौ ।
एते शुक्रासो धन्वन्ति सोमा देवासस्ताँ उप याता पिबध्यै ॥ २० ॥

अरश्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न । ससृजानासः । आजौ ।
एते । शुक्रासः । धन्वन्ति । सोमाः । देवासः । तान् । उप । यात । पिबध्यै ॥ २० ॥

---

१. गच्छन् वि[1]. २. त्वम मूको. ३. ग्रन्थितं वि[1]. ४-४. मुञ्चततः वि[2]; मुञ्चत अ[1]; विमुञ्चत वि[1]. ५. नास्ति वि[2] अ[1].

वेङ्कट० रश्मिवर्जिताः रथवर्जिताः च अयुक्ताः च ये अश्वाः इव सृज्यमानाः युद्धे भवन्ति, एते ज्वलन्तः[1] गच्छन्ति सोमाः । हे देवाः! तान् उप आगच्छत पानायेति ॥ २० ॥

[2]इति सप्तमाष्टके चतुर्थाध्याये चतुर्दशो वर्गः[2] ॥

एवा नं इन्दो अभि देववीतिं परिं स्रव नभो अर्णश्चमूषुं ।
सोमों अस्मभ्यं काम्यं बृहन्तं रयिं ददातु वीरवन्तमुग्रम् ॥ २१ ॥

एव । नः । इन्दो इतिं । अभि । देवऽवीतिम् । परिं । स्रव । नभः । अर्णः । चमूषुं ।
सोमः । अस्मभ्यम् । काम्यम् । बृहन्तम् । रयिम् । ददातु । वीरऽवन्तम् । उग्रम् ॥ २१ ॥

वेङ्कट० एवम् अस्माकम् इन्दो! [3]यज्ञम् प्रति[3] परि स्रव दिवः उदकम् चमसेषु । सोमः[4] अस्मभ्यम् इति स्पष्टम् ॥ २१ ॥

तक्षद्यदी मनसो वेनतो वाग् ज्येष्ठस्य वा धर्मणि क्षोरनीके ।
आदीमायन् वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ २२ ॥

तक्षत् । यदि । मनसः । वेनतः । वाक् । ज्येष्ठस्य । वा । धर्मणि । क्षोः । अनीके ।
आत् । ईम् । आयन् । वरम् । आ । वावशानाः । जुष्टम् । पतिम् । कलशे । गावः । इन्दुम् ॥

वेङ्कट० संस्करोति यदि एनम् मनसः कामयमानस्य कृते स्तोतुः वाक्, यथा श्रेष्ठस्य राजादेः धारकं योगक्षेमविषयं कर्मोद्दिश्य शब्दायमानस्य मुखतः स्थितस्य जानपदिकस्य वाक् श्रेष्ठं स्तौति । अनन्तरमेव एनम् आ गच्छन्ति[5] वरणीयम् कामयमानाः पर्याप्तम् पतिम् कलशे स्थितम् गावः इन्दुम् इति ॥ २२ ॥

प्र दानुदो दिव्यो दानुपिन्व ऋतमृताय पवते सुमेधाः ।
धर्मा भुवद्वृजन्यस्य राजा प्र रश्मिभिर्दशभिर्भारि भूमं ॥ २३ ॥

प्र । दानुऽदः । दिव्यः । दानुऽपिन्वः । ऋतम् । ऋताय । पवते । सुऽमेधाः ।
धर्मा । भुवत् । वृजन्यस्य । राजा । प्र । रश्मिऽभिः । दशऽभिः । भारि । भूमं ॥ २३ ॥

वेङ्कट० प्र पवते दातॄणां दाता दिव्यः दातृभ्यः कामानां क्षारयिता [6]सत्यभूतं रसं[6] सत्यभूताय इन्द्राय सुप्रज्ञः । धारयिता भवति बलसङ्घस्य राजा । प्र धार्यते च दशभिः अङ्गुलीभिः अत्यन्तमिति ॥ २३ ॥

---

१. ज्वलयन्तो वि[1]; ज्वलन्ते अ[1]. २-२. नास्ति मूको. ३-३. नास्ति वि[1]. † नास्ति अ[1]. ४. सो वि[1]. ५. °स्तौति वि[1] अ[1]. ६-६. °तरसं वि[1] अ[1].

पवित्रेभिः पवमानो नृचक्षा राजा देवानामुत मर्त्यानाम् ।
द्विता भुवद्रयिपती रयीणामृतं भरत् सुभृतं चार्विन्दुः ॥ २४ ॥

पवित्रेभिः । पवमानः । नृऽचक्षाः । राजा । देवानाम् । उत । मर्त्यानाम् ।
द्विता । भुवत् । रयिऽपतिः । रयीणाम् । ऋतम् । भरत् । सुऽभृतम् । चारु । इन्दुः ॥ २४ ॥

वेङ्कट० पवित्रैः पूयमानः नृणां द्रष्टा राजा उभयेषां देवमनुष्याणां द्विधा भवति देवेषु[1] मनुष्येषु च[1] धनानां पतिः । सोऽयम् उदकम् बिभर्ति सुसम्भृतम् कल्याणम् इन्दुः ॥ २४ ॥

अर्वाँ इव श्रवसे सातिमच्छेन्द्रस्य वायोरभि वीतिमर्ष ।
स नः सहस्रा बृहतीरिषो दा भवा सोम द्रविणोवित् पुनानः ॥ २५ ॥

अर्वान्ऽइव । श्रवसे । सातिम् । अच्छ । इन्द्रस्य । वायोः । अभि । वीतिम् । अर्ष ।
सः । नः । सहस्रा । बृहतीः । इषः । दाः । भव । सोम । द्रविणःऽवित् । पुनानः ॥ २५ ॥

वेङ्कट० अश्वः इव युद्धे अन्नार्थम् त्वम् अस्माकं[2] धनलाभं[3] प्रति इन्द्रस्य[4] वायोः पानम् अभि गच्छ । सः त्वं बहूनि बृंहितानि अन्नानि अस्मभ्यं प्रयच्छ । भव सोम! धनस्य दाता पुनानः ॥ २५ ॥

[5]इति सप्तमाष्टके चतुर्थाध्याये पञ्चदशो वर्गः[5] ॥

देवाव्यो नः परिषिच्यमानाः क्षयं सुवीरं धन्वन्तु सोमाः ।
आयज्यवः सुमतिं विश्ववारा होतारो न दिवियजो मन्द्रतमाः ॥ २६ ॥

देवऽअव्यः । नः । परिऽसिच्यमानाः । क्षयम् । सुऽवीरम् । धन्वन्तु । सोमाः ।
आऽयज्यवः । सुऽमतिम् । विश्वऽवाराः । होतारः । न । दिविऽयजः । मन्द्रऽतमाः ॥ २६ ॥

वेङ्कट० देवानां तर्पयितारः नः[7] परितः[8] पात्रेषु सिच्यमानाः गृहम् सुपुत्रम् प्रेरयन्तु सोमाः आभिमुख्येन प्रयच्छन्तः सुमतिम् विश्ववाराः होतारः इव दिविस्थितान् देवान् यजन्तः शब्देन मन्द्रतमाः ॥ २६ ॥

एवा देव देवताते पवस्व महे सोम प्सरसे देवपानः ।
महश्चिद्धि ष्मसि हिताः समर्ये कृधि सुष्ठाने रोदसी पुनानः ॥ २७ ॥

एव । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । देवऽपानः ।
महः । चित् । हि । स्मसि । हिताः । सऽमर्ये । कृधि । सुस्थाने इति सुऽस्थाने । रोदसी इति । पुनानः ॥

---

1. °षु अपि च वि[1]. 2. नास्ति वि[1]. 3. °स्मान् वि[1]. 4. धनं लाभं वि[1] अ[1]. 5. इन्द्र मूको. 6-6. नास्ति मूको. 7. न वि[3] अ[1]. 8. पतितः वि[1]; पत्रे वि[3]; पात्रे अ[1].

**वेङ्कट०** एवम् देव! यज्ञे पवस्व महते पानाय सोम! देवानां पातव्यः। महतोऽपि शत्रोः अभिभवितारो भवेम प्रेरिताः सङ्ग्रामे। कुरु चास्माकं द्यावापृथिव्यौ शोभनावासस्थाने पूयमानः ॥ २७ ॥

अश्वो न क्रदो वृषभिर्युजानः सिंहो न भीमो मनसो जवीयान् ।
अर्वाचीनैः पथिभिर्ये रजिष्ठा आ पवस्व सौमनसं न इन्दो ॥ २८ ॥

अश्वः । न । क्रदः । वृषऽभिः । युजानः । सिंहः । न । भीमः । मनसः । जवीयान् ।
अर्वाचीनैः । पथिऽभिः । ये । रजिष्ठाः । आ । पवस्व । सौमनसम् । नः । इन्दो इति ॥

**वेङ्कट०** अश्वः इव क्रन्दसि[1] ऋत्विग्भिः युज्यमानः[2] सिंहः इव भीमः मनसः अपि वेगवत्तरः[3] अभिमुखैर्मार्गैः। ये मार्गा भवन्ति अत्यन्तमृजवस्तैः। आ पवस्व [4]सौमनसम् अस्माकम् इन्दो![4] ॥ २८ ॥

शतं धारा देवजाता असृग्रन्त्सहस्रमेनाः कवयो मृजन्ति ।
इन्दो सनित्रं दिव आ पवस्व पुरएतासि महतो धनस्य ॥ २९ ॥

शतम् । धाराः । देवऽजाताः । असृग्रन् । सहस्रम् । एनाः । कवयः । मृजन्ति ।
इन्दो इति । सनित्रम् । दिवः । आ । पवस्व । पुरःऽएता । असि । महतः । धनस्य ॥ २९ ॥

**वेङ्कट०** शतम् धाराः देवार्थं प्रादुर्भूताः सृज्यन्ते। सहस्रम् एनाः धाराः कवयः शोभयन्ति। इन्दो! भजनसाधनं पुत्रादीनां धनम् अन्तरिक्षात् आ पवस्व। पुरोगन्ता भवसि महतः धनस्य ॥ २९ ॥

दिवो न सर्गा अससृग्रमह्नां राजा न मित्रं प्र मिनाति धीरः ।
पितुर्न पुत्रः क्रतुभिर्यतान आ पवस्व विशे अस्या अजीतिम् ॥ ३० ॥

दिवः । न । सर्गाः । अससृग्रम् । अह्नाम् । राजा । न । मित्रम् । प्र । मिनाति । धीरः ।
पितुः । न । पुत्रः । क्रतुऽभिः । यतानः । आ । पवस्व । विशे । अस्यै । अजीतिम् ॥ ३० ॥

**वेङ्कट०** सर्गाः यथा[5] आदित्यस्य अह्नाम् सम्बन्धिनो रश्मयो विसृज्यन्ते, तद्वत् सोमस्य धाराः विसृज्यन्ते। सोऽयम् राजा [6]सोमः न[6] हिनस्ति मित्रम् प्राज्ञः। पितुः इव पुत्रः कर्मभिः यतमानः आ पवस्व अस्यै [7]विशे अपराभवम्[7]। यथा न पराजिता भवन्ति तथा कुर्विति ॥ ३० ॥

[8]इति सप्तमाष्टके चतुर्थाध्याये षोडशो वर्गः[8] ॥

---

१. क्रन्दन् वि[२] अ[१]. २. यजमानः वि[२] अ[१]; युज्यमानाः वि[१]. ३. वेगवन्तः वि[१]. ४-४. नास्ति अ[१]. ५. यदा वि[२]. ६-६. सोमोन्त्र वि[२]; सोमेन्न अ[१]; सोनोन वि[१]. ७-७. विशेवराभवं वि[२] अ[१]; शिवेपराभवं वि[१]. ८-८. नास्ति मूको.

प्र ते धारा मधुमतीरसृग्रन् वारान् यत् पूतो अत्येष्यव्यान् ।
पवमान पवसे धाम गोनां जज्ञानः सूर्यमपिन्वो अर्कैः ॥ ३१ ॥

प्र । ते । धाराः । मधुऽमतीः । असृग्रन् । वारान् । यत् । पूतः । अतिऽएर्षि । अव्यान् ।
पवमान । पवसे । धाम । गोनाम् । जज्ञानः । सूर्यम् । अपिन्वः । अर्कैः ॥ ३१ ॥

वेङ्कट० प्र सृज्यन्ते[1] तव मधुमत्यः धाराः, [2]वालान् यदा[2] पूतः त्वम् अधिगच्छसि अविमयान्[3] । पवमान! पवसे धारकं पयो लक्षीकृत्य गवाम् । जायमानः त्वम् सूर्यम् पूरयसि स्वतेजोभिरर्चनीयैः[4] ॥ ३१ ॥

कनिक्रददनु पन्थामृतस्य शुक्रो वि भास्यमृतस्य धाम ।
स इन्द्राय पवसे मत्सरवान् हिन्वानो वाचं मतिभिः कवीनाम् ॥ ३२ ॥

कनिक्रदत् । अनु । पन्थाम् । ऋतस्य । शुक्रः । वि । भासि । अमृतस्य । धाम ।
सः । इन्द्राय । पवसे । मत्सरऽवान् । हिन्वानः । वाचम् । मतिऽभिः । कवीनाम् ॥ ३२ ॥

वेङ्कट० यज्ञस्य मार्गम् अनु शब्दायते अभिषूयमाणः । शुक्रः त्वं राजसे [5]अमरणस्य स्थानभूतः[5] । सः त्वम् इन्द्राय पवसे रसवान् प्रेरयन्[6] वाचम् स्तुतिभिः सह[7] स्तोतॄणाम्[8] ॥ ३२ ॥

दिव्यः सुपर्णोऽव चक्षि सोम पिन्वन् धाराः कर्मणा देववीतौ ।
एन्दो विश कलशं सोमधानं क्रन्दन्निहि सूर्यस्योप रश्मिम् ॥ ३३ ॥

दिव्यः । सुऽपर्णः । अव । चक्षि । सोम । पिन्वन् । धाराः । कर्मणा । देवऽवीतौ ।
आ । इन्दो इति । विश । कलशम् । सोमऽधानम् । क्रन्दन् । इहि । सूर्यस्य । उप । रश्मिम् ॥

वेङ्कट० दिवि भवः दिव्यः[9] सुपतनः अधस्तात् पश्य सोम! क्षरन् धाराः कर्मणा यज्ञे । आ विश इन्दो! कलशम् सोमनिधानम् । क्रन्दन् उप गच्छ सूर्यस्य रश्मिम् इति ॥ ३३ ॥

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ३४ ॥

तिस्रः । वाचः । ईरयति । प्र । वह्निः । ऋतस्य । धीतिम् । ब्रह्मणः । मनीषाम् ।
गावः । यन्ति । गोऽपतिम् । पृच्छमानाः । सोमम् । यन्ति । मतयः । वावशानाः ॥ ३४ ॥

वेङ्कट० ऋग्यजुस्सामलक्षणाः [9]तिस्रः वाचः[9] प्र ईरयति यजमानः । यज्ञस्य धारयित्रीम् ब्रह्मणः

---

१. सृजन्ते वि[1]. २-२. बलान्यथा वि[2] अ[1]. ३. °मयोत् वि[1,2]. ४. स्वतेजसोभिरर्चनीये वि[1]. ५-५. °मरणस्थान° अ[1]. ६. नास्ति वि[1]. ७. °ह इति अ[1]. ८. नास्ति वि[2] अ[1]. ९-९. नास्ति अ[1].

सोमस्य मनस ईशित्रीं कल्याणीं वाचम् प्रेरयति च। गावः च गच्छन्ति गोपतिम् सोमं पृच्छन्त्यः। सोमम् यन्ति स्तोतारश्च कामयमानाः ॥ ३४ ॥

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥ ३५ ॥

सोमम् । गावः । धेनवः । वावशानाः । सोमम् । विप्राः । मतिऽभिः । पृच्छमानाः ।
सोमः । सुतः । पूयते । अज्यमानः । सोमे । अर्काः । त्रिऽस्तुभः । सम् । नवन्ते ॥ ३५ ॥

**वेङ्कट०** सोमम् गावः धेनवः कामयमानाः, सोमम् मेधाविनः स्तुतिभिः पृच्छन्तो भवन्ति। सोमः सुतः पूयते गोभिः अज्यमानः। सोमे मन्त्राः त्रिष्टुब्रूपाः एते सम् गच्छन्ते अस्माभिः क्रियमाणाः[1] ॥ ॥ ३५ ॥

[2]इति सप्तमाष्टके चतुर्थाध्याये सप्तदशो वर्गः[2] ॥

एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।
इन्द्रमा विश बृहता रवेण वर्धया वाचं जनया पुरंधिम् ॥ ३६ ॥

एव । नः । सोम । परिऽसिच्यमानः । आ । पवस्व । पूयमानः । स्वस्ति ।
इन्द्रम् । आ । विश । बृहता । रवेण । वर्धय । वाचम् । जनय । पुरम्ऽधिम ॥ ३६ ॥

**वेङ्कट०** एवम्[3] नः सोम! परिषिच्यमानः आ पवस्व पवित्रे पूयमानः अविनाशम्[4]। [5]इन्द्रम् चापि आ† विश[5] महता शब्देन। वर्धय च[6] वाचम्, जनय च प्रज्ञानम्[7] ॥ ३६ ॥

आ जागृविर्विप्र ऋता मतीनां सोमः पुनानो असदच्चमूषु ।
सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ ३७ ॥

आ । जागृविः । विप्रः । ऋता । मतीनाम् । सोमः । पुनानः । असदत् । चमूषु ।
सपन्ति । यम् । मिथुनासः । निऽकामाः । अध्वर्यवः । रथिरासः । सुऽहस्ताः ॥ ३७ ॥

**वेङ्कट०** आ सीदति[8] जागरणशीलः ज्ञाता सत्यानां स्तुतीनाम् सोमः पूयमानः चमसेषु, स्पृशन्ति यम् [9]सङ्गताः नितरां[9] कामयमानाः अध्वर्यवः नेतारः सुहस्ताः ॥ ३७ ॥

स पुनान उप सूरे न धातोभे अप्रा रोदसी वि ष आवः ।
प्रिया चिद्यस्य प्रियसास ऊती स तू धनं कारिणे न प्र यंसत् ॥ ३८ ॥

---

1. प्रियमाणा वि[2] अ[1]; °माणः वि[1]. 2-2. नास्ति मूको. 3. एना वि[2] अ[1]. 4. विना विनाशम् वि[2] अ[1]; विनाश वि[1]. 5-5. नास्ति वि[1]. † नास्ति मूको. 6. नास्ति वि[2] अ[1]. 7. प्रस्थान वि[2] अ[1]. 8. सीदं वि[1]. 9-9. संगच्छति तातिरां वि[2] अ[1].

सः । पुनानः । उप । सूरे । न । धाता । आ । उभे इति । अप्राः । रोदसी इति । वि । सः । आवरित्यावः ।
प्रिया । चित् । यस्य । प्रिऽसासः । ऊती । सः । तु । धनम् । कारिणे । न । प्र । यंसत् ॥३८॥

**वेङ्कट०** सः पूयमानः उप गच्छति इन्द्रे, यथा सूर्ये संवत्सरः । आ पूरयति च उभे द्यावापृथिव्यौ । [1]तेजसा वि वृणोति च सः तमः । यस्य[1] प्रियस्य दातुः सोमस्य प्रिया धारा रक्षणाय भवति, सः क्षिप्रम् अस्मभ्यम् धनम् प्र यच्छतु भृतकाय इव भृतिम् ॥ ३८ ॥

स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् ।
येना नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमुष्णन् ॥ ३९ ॥

सः । वर्धिता । वर्धनः । पूयमानः । सोमः । मीढ्वान् । अभि । नः । ज्योतिषा । आवीत् ।
येन । नः । पूर्वे । पितरः । पदऽज्ञाः । स्वःऽविदः । अभि । गाः । अद्रिम् । उष्णन् ॥ ३९ ॥

**वेङ्कट०** सः वर्धिता[2] वर्धमानः[3] पूयमानः सोमः सेक्ता अभि रक्षतु अस्मान् तेजसा, येन अस्माकम् पूर्वे पितरः पणिभिरपहृतानां गवाम् पदज्ञाः सर्वज्ञाः[4] शिलोच्चयम् पशून् अभि उष्णन् । उषिरिह मुष्णातिना समानकर्मेति ॥ ३९ ॥

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥ ४० ॥

अक्रान् । समुद्रः । प्रथमे । विऽधर्मन् । जनयन् । प्रऽजाः । भुवनस्य । राजा ।
वृषा । पवित्रे । अधि । सानौ । अव्ये । बृहत् । सोमः । ववृधे । सुवानः । इन्दुः ॥ ४० ॥

**वेङ्कट०** क्रामति समुद्रः, यस्मादापः समुद्द्रवन्ति । प्रथमे विधारके अन्तरिक्षे जनयन् प्रजाः भुवनस्य राजा । सः ऽयम् वृषा अविमये[5] पवित्रे समुच्छ्रिते अत्यन्तं वर्धते सूयमानः सोमः दीप्तः ॥४०॥

[6]इति सप्तमाष्टके चतुर्थाध्याये अष्टादशो वर्गः[6] ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ४१ ॥

महत् । तत् । सोमः । महिषः । चकार । अपाम् । यत् । गर्भः । अवृणीत । देवान् ।
अदधात् । इन्द्रे । पवमानः । ओजः । अजनयत् । सूर्ये । ज्योतिः । इन्दुः ॥ ४१ ॥

**वेङ्कट०** महत् तत् सोमः महान् [7]अकरोत्, अपाम्[7] गर्भः यत् अयम् अवृणीत देवान् । अदधात् च इन्द्रे पवमानः बलम् । अजनयत् च सूर्ये ज्योतिः इन्दुः ॥ ४१ ॥

---

१. तेजसा वि वृणोति च सतमो यस्य वि[२] अ[१]; °ति वसतमो वि[१]. २. वर्द्धयिता वि[१]. ३. वर्धमान वि[२] अ[१]; बद्धमानः वि[१]. ४. नास्ति मूको. ५. नास्ति वि[१]. ६-६. नास्ति मूको. ७-७. अकरोपां वि[२] अ[१]; अकरोः पां वि[१].

मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः ।
मत्सि शर्धो मारुतं मत्सि देवान् मत्सि द्यावापृथिवी देव सोम ॥ ४२ ॥

मत्सि । वायुम् । इष्टये । राधसे । च । मत्सि । मित्रावरुणा । पूयमानः ।
मत्सि । शर्धः । मारुतम् । मत्सि । देवान् । मत्सि । द्यावापृथिवी इति । देव । सोम ॥ ४२ ॥

**वेङ्कट०** वाय्वादीन् तर्पयसि अन्नाय धनाय चेति[1] ॥ ४२ ॥

ऋजुः पवस्व वृजिनस्य हन्तापामीवां बाधमानो मृधश्च ।
अभिश्रीणन् पयः पयसाभि गोनामिन्द्रस्य त्वं तव वयं सखायः ॥ ४३ ॥

ऋजुः । पवस्व । वृजिनस्य । हन्ता । अप । अमीवाम् । बाधमानः । मृधः । च ।
अभिऽश्रीणन् । पयः । पयसा । अभि । गोनाम् । इन्द्रस्य । त्वम् । तव । वयम् । सखायः ॥४३॥

**वेङ्कट०** ऋजुगमनः पवस्व उपद्रवस्य हन्ता अप[2] बाधमानः रक्षः शत्रून् च अस्मदीयान् । अभिश्रीगन्[3] आत्मीयं रसम् गवाम् पयसा[4] अभि गच्छसि । इन्द्रस्य त्वम् असि सखा[5], तव वयम् सखायः ॥४३॥

मध्वः सूदं पवस्व वस्व उत्सं वीरं च न आ पवस्वा भगं च ।
स्वदस्वेन्द्राय पवमान इन्दो रयिं च न आ पवस्वा समुद्रात् ॥ ४४ ॥

मध्वः । सूदम् । पवस्व । वस्वः । उत्सम् । वीरम् । च । नः । आ । पवस्व । भगम् । च ।
स्वदस्व । इन्द्राय । पवमानः । इन्दो इति । रयिम् । च । नः । आ । पवस्व । समुद्रात् ॥४४॥

**वेङ्कट०** मध्वः [6]घनीभूतं रसम्[6] पवस्व । धनस्य उत्स्यन्दकम् वीरम् च अस्मभ्यम् आ पवस्व, धनम् च । रुचितो भव इन्द्राय पवमानः । इन्दो! रयिम् च अस्मभ्यम् आ पवस्व अन्तरिक्षात् ॥ ४४ ॥

सोमः सुतो धारयात्यो न हित्वा सिन्धुर्न निम्नमभि वाज्यक्षाः ।
आ योनिं वन्यमसदत् पुनानः समिन्दुर्गोभिरसरत् समद्भिः ॥ ४५ ॥

सोमः । सुतः । धारया । अत्यः । न । हित्वा । सिन्धुः । न । निम्नम् । अभि । वाजी । अक्षारिति ।
आ । योनिम् । वन्यम् । असदत् । पुनानः । सम् । इन्दुः । गोभिः । असरत् । सम् । अत्ऽभिः ॥

**वेङ्कट०** सोमः सुतः धारया अश्वः इव गन्ता सिन्धुः इव च निम्नम् अभि क्षरति बलवान् । आ सीदति स्थानम् वृक्षभवम् पुनानः । सोऽयम् सम् सरति सङ्गच्छते श्रयणैः वसतीवरीभिश्च ॥४५॥

[7]इति सप्तमाष्टके चतुर्थाध्याये एकोनविंशो वर्गः[7] ॥

---

१. चेत्यर्थः अ१. २. अव मूको. ३. °श्रिणन् वि२ अ१. ४. पयसाम् वि२ अ१. ५. °खा सह अ१. ६-६. °भूतरसं वि२ अ१. ७-७. नास्ति मूको.

एष स्य ते पवत इन्द्र सोमश्चमूषु धीर उशते तवस्वान् ।
स्वर्चक्षा रथिरः सत्यशुष्मः कामो न यो देवयतामसर्जि ॥ ४६ ॥

एषः । स्यः । ते । पवते । इन्द्र । सोमः । चमूषु । धीरः । उशते । तवस्वान् ।
स्वःऽचक्षाः । रथिरः । सत्यऽशुष्मः । कामः । न । यः । देवऽयताम् । असर्जि ॥ ४६ ॥

वेङ्कट० सः[1] एषः ते पवते इन्द्र! सोमः चमूषु प्राज्ञः[2] कामयमानाय वेगवान्[1] सर्वदर्शनः रथवान् सत्यबलः कामः इव यः यजमानानां सृष्टः ॥ ४६ ॥

एष प्रत्नेन वयसा पुनानस्तिरो वर्पांसि दुहितुर्दधानः ।
वसानः शर्म त्रिवरूथमप्सु होतेव याति समनेषु रेभन् ॥ ४७ ॥

एषः । प्रत्नेन । वयसा । पुनानः । तिरः । वर्पांसि । दुहितुः । दधानः ।
वसानः । शर्म । त्रिऽवरूथम् । अप्ऽसु । होताऽइव । याति । समनेषु । रेभन् ॥ ४७ ॥

वेङ्कट० एषः प्रत्नेन अन्नेन पूयमानः अन्नात्मिकया धारया क्षरन्, तिरस्-कुर्वन् पृथिव्याः रूपाणि, [4]स्वतेजसाऽऽच्छादयन् त्रिवरूथम्[4] गृहम् [5]यज्ञमण्डपम् अप्सु[5] स्थितः[6] होता इव याति सङ्गेषु शब्दायमानः ॥ ४७ ॥

नू नस्त्वं रथिरो देव सोम परि स्रव चम्वोः पूयमानः ।
अप्सु स्वादिष्ठो मधुमाँ ऋतावा देवो न यः सविता सत्यमन्मा ॥ ४८ ॥

नु । नः । त्वम् । रथिरः । देव । सोम । परि । स्रव । चम्वोः । पूयमानः ।
अप्ऽसु । स्वादिष्ठः । मधुऽमान् । ऋतऽवा । देवः । न । यः । सविता । सत्यऽमन्मा ॥ ४८ ॥

वेङ्कट० क्षिप्रम् नः[7] त्वम् रथवान् [8]देव! सोम![8] परि स्रव अधिषवणफलकयोः पूयमानः वसतीवरीषु स्वादुतमः मधुमान्[9] यज्ञवान् देवः इव यः सविता सत्यस्तुतिकः ॥ ४८ ॥

अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः ।
अभी नरं धीजवनं रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ ४९ ॥

अभि । वायुम् । वीती । अर्ष । गृणानः । अभि । मित्रावरुणा । पूयमानः ।
अभि । नरम् । धीऽजवनम् । रथेऽस्थाम् । अभि । इन्द्रम् । वृषणम् । वज्रऽबाहुम् ॥ ४९ ॥

---

१-१. नास्ति वि[1]. २. प्राज्ञं वि[2] अ[1]. ३. नास्ति वि[2] अ[1]. ४-४. °दयन्तिवरूथं वि[2] अ[1]; °दयन्निवरूथं वि[1]. ५-५. यज्ञ… मप्सु वि[2] अ[1]. ६. स्तुतो अ[1]. ७. नास्ति अ[1]. ८-८. देवतेजसो वि[1]. ९. मधुतमान् मूको.

वेङ्कट० अभि गच्छ वायुम् पानाय स्तूयमानः। अभि गच्छ मित्रावरुणौ च पूयमानः। अभि गच्छ च नरम् बुद्धया समं वेगं कुर्वाणम् रथे स्थितम् इत्यश्विनावुक्तौ[१] मन्यन्ते। अभि इति स्पष्टम् ॥ ४९ ॥

अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः।
अभि चन्द्रा भर्तवे नो हिरण्याभ्यश्वान् रथिनो देव सोम ॥ ५० ॥

अभि। वस्त्रा। सुऽवसनानि। अर्ष। अभि। धेनूः। सुऽदुघाः। पूयमानः।
अभि। चन्द्रा। भर्तवे। नः। हिरण्या। अभि। अश्वान्। रथिनः। देव। सोम ॥ ५० ॥

वेङ्कट० अभि गमय अस्माकं सुपरिधानानि वस्त्राणि, अभि[२] च धेनूः सुदुघाः पूयमानः, अभि[३] च ह्लादकानि हिरण्यानि भरण्यानि भरणाय अस्माकम्, अभि च अश्वान् रथवतः देव! सोम! ॥ ५० ॥

[४]इति सप्तमाष्टके चतुर्थाध्याये विंशो वर्गः[४] ॥

अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः।
अभि येन द्रविणमश्नवामाऽभ्यार्षेयं जमदग्निवन्नः ॥ ५१ ॥

अभि। नः। अर्ष। दिव्या। वसूनि। अभि। विश्वा। पार्थिवा। पूयमानः।
अभि। येन। द्रविणम्। अश्नवाम। अभि। आर्षेयम्। जमदग्निऽवत्। नः ॥ ५१ ॥

वेङ्कट० अस्माकम् उभयानि धनानि[५] अभि अर्ष। तथा येन वयं धनम् अश्नवाम तद् अभि अर्ष। किंच अभि अर्ष ऋषीणां योग्यं धनम् जमदग्नेरिव अस्माकमपि। यद्वा यथा जमदग्नेर्मन्त्रः[६] स्वादुतमः, एवम् अस्माकमपि स्वादुतमं मन्त्रं कुर्विति कुत्सः प्रार्थयते ॥ ५१ ॥

अया पवा पवस्वैना वसूनि मांश्चत्व इन्दो सरांसि प्र धन्व।
ब्रध्नश्चिदत्र वातो न जूतः पुरुमेधश्चित् तकवे नरं दात् ॥ ५२ ॥

अया। पवा। पवस्व। एना। वसूनि। माँश्चत्वे[७]। इन्दो इति। सरांसि। प्र। धन्व।
ब्रध्नः। चित्। अत्र। वातः। न। जूतः। पुरुऽमेधः। चित्। तकवे। नरम्। दात् ॥ ५२ ॥

वेङ्कट० अनया पवमानया धारया पवस्व एनानि धनानि। अभिमन्यमानानां चातके[८] उदके त्वम् इन्दो! प्र गच्छ। ब्रध्नः आदित्यः अस्मिन् सोमे पूयमाने वातः इव वेगितः बहुयज्ञः इन्द्रश्च। तकतिः[९] गतिकर्मसु पठितः[१०]। सोममभिगच्छते मह्यं नेतारं पुत्रम् प्रयच्छतु ॥ ५२ ॥

---

१. 'नावृत्तौ वि[२] अ[१]; 'नावृक्तौ वि[१]. २. अपि वि[१]. ३. अपि वि[२] अ[१]. ४-४. नास्ति मूको. ५. धानानि मूको. ६. 'र्मन्त्र मूको. ७. वैप १,२४७५C द्र. ८. चाद वि[२] अ[१]. ९. तगनिः वि[२] अ[१]; तकतिः वि[१]. १०. तु. निघ २,१४.

उत नं एना पंवया पंवस्वाधिं श्रुते श्रवाय्यस्य तीर्थे ।
षष्टिं सहस्रां नैगुतो वसूंनि वृक्षं न पक्कं धूनवद्रणाय ॥ ५३ ॥

उत । नः । एना । पवया । पवस्व । अधि । श्रुते । श्रवाय्यस्य । तीर्थे ।
षष्टिम् । सहस्रा । नैगुतः[१] । वसूंनि । वृक्षम् । न । पक्वम् । धूनवत् । रणाय ॥ ५३ ॥

वेङ्कट० अपि च अस्माकम् अनया धारया पवस्व श्रवणीयस्य[२] सोमस्य तव श्रुते शब्दस्य स्थाने यज्ञे । सोऽयं शत्रूणां हन्ता षष्टिम् सहस्राणि वसूनि[३] वृक्षम् इव पक्वफलम् अस्माकं शत्रूणां जयार्थम् अकम्पयदिति ॥ ५३ ॥

मही॑मे अ॑स्य वृषनाम शूषे माँश्चत्वे वा पृश्नने वा वधत्रे ।
अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥ ५४ ॥

महि॑ । इमे इति॑ । अस्य । वृषनाम । शूषे इति॑ । माँश्चत्वे । वा । पृश्नने । वा । वधत्रे इति॑ ।
अस्वापयत् । निऽगुतः । स्नेहयत् । च । अप । अमित्रान् । अप । अचितः । अच । इतः ॥५४॥

वेङ्कट० महती इमे अस्य सोमस्य सुखकरे वर्षणनमने, शराणां वर्षणं शत्रूणां नमनम्, अश्वैः क्रियमाणे युद्धे[४] अपि वा स्पर्शनसाध्ये बाहुयुद्धे शत्रूणां हिंसनशीले[५] भवतः[६] । [७]सोऽयम् अस्वापयत्[७] शत्रून् स्नेहयत्[८] च । स्नेहनं[९] प्राद्रावणम् । अथ प्रत्यक्षः—[१०]अप गमय अमित्रान् अप गमय च अचितः अस्निग्धान्[१०] इतः अस्मत्सकाशादिति ॥ ५४ ॥

सं त्री पवित्रा वितंतान्येष्यन्वेकं धावसि पूयमानः ।
असि भगो असि दात्रस्य दातासि मघवा मघवद्भ्य इन्दो ॥ ५५ ॥

सम् । त्री । पवित्रा । विऽतंतानि । एषि । अनु । एकम् । धावसि । पूयमानः ।
असि । भगः । असि । दात्रस्य । दाता । असि । मघऽवा । मघवत्ऽभ्यः । इन्दो इति ॥ ५५ ॥

वेङ्कट० [११]सम् एषि त्रीणि[११] पवित्राणि[१२] विततानि अग्निम् वायुम् सूर्यं च । अनु धावसि च एकम् आविकम् पूयमानः । असि भजनीयः । असि च धनस्य दाता । असि च धनवान् अन्येभ्यो धनवद्भ्यः त्वम् इन्दो ! ॥ ५५ ॥

[१३]इति सप्तमाष्टके चतुर्थाध्याये एकविंशो वर्गः[१३] ॥

---

१. वैप १,१७९८ d,g द्र. २. श्रयणीयस्य वि[१] अ[१]. ३. वस्त्राणि वि[२]. ४. नास्ति वि[२] अ[१]. ५. हिंसनीलेन वि[१]; हिंसनशीले हे वि[२] अ[१]. ६. भव " वि[१]; भगवन् अ[१]; भवत वि[१]. ७-७ त्रुटितम् वि[२] अ[१]. ८. स्नेहयत्र वि[१]; यत् अ[१]; स्नेहय वि[१]. ९. स्नेहण वि[१]; स्नेहय वि[२] अ[१]. १०-१०. वेग ऋ यामित्रा-नवगामयव चितो स्नि° वि[१] अ[१]; अ गमय वि[१]. ११-११. समयचित्रीणि वि[२] अ[१]. १२. पवित्रा वि[२] अ[१]. १३-१३. नास्ति मूको.

एष विश्ववित् पवते मनीषी सोमो विश्वस्य भुवनस्य राजा ।
द्रप्साँ ईरयन् विदथेष्विन्दुर्वि वारमव्यं समयाति याति ॥ ५६ ॥

एषः । विश्वऽवित् । पवते । मनीषी । सोमः । विश्वस्य । भुवनस्य । राजा ।
द्रप्सान् । ईरयन् । विदथेषु । इन्दुः । वि । वारम् । अव्यम् । समया । अति । याति ॥ ५६ ॥

**वेङ्कट०** एषः सर्वज्ञः पवते मेधावी सोमः विश्वस्य भुवनस्य राजा। द्रप्सान् प्रेरयन् यज्ञेषु इन्दुः वि अति याति अविमयम् वालम् समया इति ॥ ५६ ॥

इन्दुं रिहन्ति महिषा अदब्धाः पदे रेभन्ति कवयो न गृध्राः ।
हिन्वन्ति धीरा दशभिः क्षिपाभिः समञ्जते रूपमपां रसेन ॥ ५७ ॥

इन्दुम् । रिहन्ति । महिषाः । अदब्धाः । पदे । रेभन्ति । कवयः । न । गृध्राः ।
हिन्वन्ति । धीराः । दशऽभिः । क्षिपाभिः । सम् । अञ्जते । रूपम् । अपाम् । रसेन ॥ ५७ ॥

**वेङ्कट०** इन्दुम् आस्वादयन्ति महान्तः अहिंसिताः[1]। तस्यास्य धारास्थाने शब्दायन्ते यथा धनमभिकाङ्क्षमाणाः कवयः स्तुवन्तः[2] शब्दायन्ते। तमिमं प्रेरयन्ति ऋत्विजः दशभिः अङ्गुलीभिः, सम् अञ्जते च सोमस्य रूपम् अंशुम् अपाम् रसेन ॥ ५७ ॥

त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५८ ॥

त्वया । वयम् । पवमानेन । सोम । भरे । कृतम् । वि । चिनुयाम । शश्वत् ।
तत् । नः । मित्रः । वरुणः । ममहन्ताम् । अदितिः । सिन्धुः । पृथिवी । उत । द्यौः ॥ ५८ ॥

**वेङ्कट०** त्वया वयम् पवमानेन सोम! सङ्ग्रामे बहु कर्तव्यम् वि चिनुयाम। तत् नः (ऋ १,९४,१६) इति गतम् ॥ ५८ ॥

[3]इति सप्तमाष्टके चतुर्थाध्याये द्वाविंशो वर्गः[3] ॥

## [ ९८ ]

[1]अम्बरीषो वार्षागिरः, ऋजिश्वा भारद्वाजश्च ऋषी। पवमानः सोमो देवता। अनुष्टुप् छन्दः, एकादशी बृहती[2]।

अभि नो वाजसातमं रयिमर्ष पुरुस्पृहम् ।
इन्दो सहस्रभर्णसं तुविद्युम्नं विभ्वासहम् ॥ १ ॥

---

१. °हिंसितारः अ[1]. २. स्तुवन्ते वि[2] अ[1]. ३-३. नास्ति मूको.

अभि । नः । वाजऽसातमम् । रयिम् । अर्ष । पुरुऽस्पृहम् ।
इन्दो इति । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभ्वऽसहम् ॥ १ ॥

वेङ्कट० "अम्बरीष ऋजिश्वा च द्वौ सूक्तम् 'अभि नः' सह" (तु. ऋअ २,९,९८) इति शौनकः। अभि अर्ष अस्माकम् अत्यन्तं बलप्रदम् रयिम् बहुभिः स्पृहणीयम् इन्दो! बहुभरणम् बह्वन्नम् महतोऽभिभवितारम्[1] ॥ १ ॥

परि ष्य सुवानो अव्ययं रथे न वर्माव्यत ।
इन्दुरभि द्रुणा हितो हियानो धाराभिरक्षाः ॥ २ ॥

परि । स्यः । सुवानः । अव्ययम् । रथे । न । वर्म । अव्यत ।
इन्दुः । अभि । द्रुणा । हितः । हियानः । धाराभिः । अक्षारिति ॥ २ ॥

वेङ्कट० परि वस्ते सूयमानः[2] पवित्रम्, यथा रथे स्थितः कवचं परिव्ययति। सोऽयम् इन्दुः अभि हितः द्रोणकलशेन प्रेर्यमाणः धाराभिः क्षरति ॥ २ ॥

परि ष्य सुवानो अक्षा इन्दुरव्ये मदच्युतः ।
धारा य ऊर्ध्वो अध्वरे भ्राजा नैति गव्ययुः ॥ ३ ॥

परि । स्यः । सुवानः । अक्षारिति । इन्दुः । अव्ये । मदऽच्युतः ।
धारा । यः । ऊर्ध्वः । अध्वरे । भ्राजा । न । एति । गव्यऽयुः ॥ ३ ॥

वेङ्कट० स एष सूयमानः[3] परि क्षरति इन्दुः पवित्रे मदेन प्रेरितः। धारया यः ऊर्ध्वः यज्ञे [4]भ्राजमानया इव[4] दीप्त्या गच्छति गोकामः ॥ ३ ॥

स हि त्वं देव शश्वते वसु मर्ताय दाशुषे ।
इन्दो सहस्रिणं रयिं शतात्मानं विवाससि ॥ ४ ॥

सः । हि । त्वम् । देव । शश्वते । वसु । मर्ताय । दाशुषे ।
इन्दो इति । सहस्रिणम् । रयिम् । शतऽआत्मानम् । विवाससि ॥ ४ ॥

वेङ्कट० सः हि त्वम् देव! बहवे धनम् मर्ताय यजमानाय[5] प्रयच्छसि[6]। तथा सति इन्दो! मह्यं च सहस्रसङ्ख्यम् रयिम् बहुरूपम् प्रेरय ॥ ४ ॥

वयं ते अस्य वृत्रहन् वसो वस्वः पुरुस्पृहः ।
नि नेदिष्ठतमा इषः स्याम सुम्नस्याध्रिगो ॥ ५ ॥

---

१. °तोऽतिभवि° वि[1]. २. पूयमानः वि[2] अ[1]. ३. स्तूयमानः वि[1] अ[1]; सूयमानः वि[1]. ४-४. भ्राजमान इव वि[2] अ[1]. ५. याजनानि यः वि[2] अ[1]. ६. °च्छति मूको.

वयम् । ते । अस्य । वृत्रऽहन् । वसो इति । वस्वः । पुरुऽस्पृहः ।
नि । नेदिष्ठऽतमाः । इषः । स्याम । सुम्नस्य । अध्रिगो इत्यध्रिऽगो ॥ ५ ॥

वेङ्कट० वयम् ते अस्य शत्रुहन्! वासयितः! धनस्य बहुभिः स्पृहणीयस्य अन्तिकतमाः नितराम् स्याम अन्नस्य सुखस्य च हे अधृतगमन! ॥ ५ ॥

द्विर्यं पञ्च स्वयशसं स्वसारो अद्रिसंहतम् ।
प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त्यूर्मिणम् ॥ ६ ॥

द्विः । यम् । पञ्च । स्वऽयशसम् । स्वसारः । अद्रिऽसंहतम् ।
प्रियम् । इन्द्रस्य । काम्यम् । प्रऽस्नापयन्ति । ऊर्मिणम् ॥ ६ ॥

वेङ्कट० यम् दश स्वसारः[1] स्वभूतयशसम् ग्रावभिः संहतम्[2] प्रियम् इन्द्रस्य काम्यम् वसतीवरीभिः प्रस्नापयन्ति धाराभिः युक्तम् । उत्तरत्र सम्बन्धः ॥ ६ ॥

[3]इति सप्तमाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः[3] ॥

परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण ।
यो देवान् विश्वाँ इत् परि मदेन सह गच्छति ॥ ७ ॥

परि । त्यम् । हर्यतम् । हरिम् । बभ्रुम् । पुनन्ति । वारेण ।
यः । देवान् । विश्वान् । इत् । परि । मदेन । सह । गच्छति ॥ ७ ॥

वेङ्कट० परि पुनन्ति तं स्पृहणीयम् हरितवर्णम् बभ्रुवर्णम्[4] च बालेन, यः देवान् विश्वान् एव मादकेन सह परि गच्छति ॥ ७ ॥

अस्य वो ह्यवसा पान्तो दक्षसाधनम् ।
यः सूरिषु श्रवो बृहद् दधे स्वर्ण हर्यतः ॥ ८ ॥

अस्य । वः । हि । अवसा । पान्तः । दक्षऽसाधनम् ।
यः । सूरिषु । श्रवः । बृहत् । दधे । स्वः । न । हर्यतः ॥ ८ ॥

वेङ्कट० अस्य यूयं हि रक्षणेन पिबन्तो भवथ बलस्य [5]साधनं रसम्[5], यः अयम् सूरिषु महद् अन्नम् स्थापयति आदित्यः इव स्पृहणीयः ॥ ८ ॥

स वां यज्ञेषु मानवी इन्दुर्जनिष्ट रोदसी ।
देवो देवी गिरिष्ठा अस्रेधन् तं तुविष्वणि ॥ ९ ॥

---

१. स्वसार मूको. २. सङ्गतं वि[२] अ[१]. ३-३. नास्ति मूको. ४. बभ्रूवर्णं मूको. ५-५. °न रसं वि[२] अ[१].

सः । वाम् । यज्ञेषु । मानवी इति । इन्दुः । जनिष्ट । रोदसी इति ।
देवः । देवी इति । गिरिऽस्थाः । अस्रेधन् । तम् । तुविऽस्वनि ॥ ९ ॥

**वेङ्कट०** सः वाम् यज्ञेषु हे मानव्यौ! इन्दुः अजायत द्यावापृथिव्यौ! । देवः देव्यौ! ग्रावसु स्थितः । तम् जातम् ग्रावभिः अस्रेधन् अघ्नन्[1] बहुस्वने उपरे यज्ञे वेति ॥ ९ ॥

इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे । नरे च दक्षिणावते देवाय सदनासदे ॥१०॥

इन्द्राय । सोम । पातवे । वृत्रऽघ्ने । परि । सिच्यसे । नरे । च । दक्षिणाऽवते । देवाय । सदनऽसदे ॥१०॥

**वेङ्कट०** इन्द्रस्य सोम! पानार्थम् वृत्रघ्ने परि सिच्यसे मनुष्याय च दक्षिणां[2] प्रयच्छते देवार्थम् यज्ञगृहे[3] सीदते ॥ १० ॥

ते प्रत्नासो व्युष्टिषु सोमाः पवित्रे अक्षरन् ।
अपप्रोथन्तः सनुतर्हुरश्चितः प्रातस्ताँ अप्रचेतसः ॥ ११ ॥

ते । प्रत्नासः । विऽउष्टिषु । सोमाः । पवित्रे । अक्षरन् ।
अपऽप्रोथन्तः । सनुतः । हुरःऽचितः । प्रातरिति । तान् । अप्रऽचेतसः ॥ ११ ॥

**वेङ्कट०** ते प्रत्नाः उषसः व्युच्छनेषु सोमाः पवित्रे क्षरन्ति अपप्रोथन्तः अन्तर्हितान् स्तेनान् ( तु. निघ ३,२४ ) प्रातः एव तान् अप्रज्ञान् । अपप्रोथनं [4]वाचा अपप्रेरणमिति[4] ॥ ११ ॥

तं सखायः पुरोरुचं यूयं वयं च सूरयः ।
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम् ॥ १२ ॥

तम् । सखायः । पुरःऽरुचम् । यूयम् । वयम् । च । सूरयः ।
[5]अश्याम । वाजऽगन्ध्यम् । सनेम । वाजऽपस्त्यम्[5] ॥ १२ ॥

**वेङ्कट०** तम् हे सखायः! पुरतो रोचमानम् यूयम् वयम् च प्राज्ञाः अश्नीयाम[6] बलकरगन्धम्, भजेमहि च बलकरपतनमिति ॥ १२ ॥

[7]इति सप्तमाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः[7] ॥

## [ ९९ ]

[7]रेभसूनू काश्यपौ ऋषी । पवमानः सोमो देवता । अनुष्टुप् छन्दः, प्रथमा बृहती[7] ।

आ हर्यताय धृष्णवे धनुस्तन्वन्ति पौंस्यम् ।
शुक्रां वयन्त्यसुराय निर्णिजं विपामग्रे महीयुवः ॥ १ ॥

---

१. धघ्नन वि[२]; अघ्न वि[१]; सदघ्नन् अ[१]. २. दक्षिणाः वि[१]. ३. यज्ञे गृहे वि[२] अ[१]. ४-४. °चा च प्रे° वि[२] अ[१]; °च पप्रे' वि[१]. ५-५. निगमो निरुक्तिश्च या ५,१५ द्र. ६. अश्नी वि[२] अ[१]; अश्नीव वि[१]. ७-७. नास्ति मूको.

आ । हर्यताय । धृष्णवे । धनुः । तन्वन्ति । पौंस्यम् ।
शुक्राम् । वयन्ति । असुराय । निःऽनिर्जम् । विपाम् । अग्रे । महीयुवः ॥ १ ॥

वेङ्कट० रेभसूनू काश्यपौ। आ तन्वन्ति धनुः [1]धनुषि ज्यां[1] कुर्वन्ति स्पृहणीयाय धृष्णवे सोमाय पुंस्त्वस्य द्योतकमिति सोमस्य धाराविसर्गार्थं वितन्यमानं पवित्रमाह। तदेवोक्तम्—शुक्लवर्णाम् वितन्वन्ति बलिने सोमाय निर्णिजम्, यया सोमो [2]निर्णिज्यते, पवित्रम्[2] मेधाविनाम् अग्रे देवानाम् ऋत्विजः पूजाकामाः ॥ १ ॥

अध॑ क्षपा परि॑ष्कृतो वाजाँ॑ अ॒भि प्र गा॑हते ।
यदी॑ वि॒वस्व॑तो धि॒यो हरि॑ हिन्वन्ति॒ यात॑वे ॥ २ ॥

अध॑ । क्षपा । परि॑ऽकृतः । वाजा॑न् । अ॒भि । प्र । गा॒ह॒ते ।
यदि॑ । वि॒वस्व॑तः । धिय॑ः । हरि॑म् । हि॒न्वन्ति॑ । यात॑वे ॥ २ ॥

वेङ्कट० अथ क्षपायां क्षपयित्र्यां सेनायाम् अलङ्कृतः[3] सोमः बलानि अभि प्र गच्छति[4]। यदि एनं यजमानस्य अङ्गुलयः हरिम् प्रेरयन्ति गमनाय ॥ २ ॥

तम॑स्य मर्जयामसि॒ मदो॒ य इन्द्र॒पात॑मः ।
यं गाव॑ आ॒सभि॑र्द॒धुः पु॒रा नू॒नं च॑ सू॒रय॑ः ॥ ३ ॥

तम् । अ॒स्य॒ । म॒र्जया॒म॒सि॒ । मद॑ः । यः । इन्द्र॒ऽपात॑मः ।
यम् । गाव॑ः । आ॒सऽभि॑ः । द॒धुः । पु॒रा । नू॒नम् । च॒ । सू॒रय॑ः ॥ ३ ॥

वेङ्कट० तम् सोमस्य रसं शोधयामः, मदः यः इन्द्रेणाऽत्यन्तं पातव्यः, यम् गावः गन्तारः आस्यैः धारयन्ति। पुरा च सम्प्रति च स्तोतारः[5] पिबन्ति आस्यैरिति ॥ ३ ॥

तं गाथ॑या पुरा॒ण्या पु॑ना॒नम॒भ्य॑नूषत ।
उ॒तो कृ॑पन्त धी॒तयो॑ दे॒वानां॒ नाम॒ बिभ्र॑तीः ॥ ४ ॥

तम् । गाथ॑या । पु॒रा॒ण्या । पु॒ना॒नम् । अ॒भि । अ॒नू॒ष॒त॒ ।
उ॒तो इति॑ । कृ॒प॒न्त॒ । धी॒तय॑ः । दे॒वाना॑म् । नाम॑ । बिभ्र॑तीः ॥ ४ ॥

वेङ्कट० तम् वाचा प्रत्नया[6] पूयमानम् अभि स्तुवन्ति। अपि[7] च कल्पयन्ति[8] अङ्गुलयः देवार्थम् नमनम् बिभ्राणाः ॥ ४ ॥

---

१-१. धनुर्ज्यम् वि॰. २-२. °ज्यते वितन्वन्ति पवित्रम् मूको. ३. °ङ्कृतां वि॰ अ॰; °ङ्कृत वि॰. ४. यच्छति वि॰ अ॰; यच्छन्ति वि॰. ५. सोतारः मूको. ६. प्रत्नाय वि॰. ७. नास्ति वि॰. ८. नास्ति वि॰ अ॰.

तमुक्षमाणमव्यये वारे पुनन्ति धर्णसिम् ।
दूतं न पूर्वचित्तय आ शासते मनीषिणः ॥ ५ ॥

तम् । उक्षमाणम् । अव्यये । वारे । पुनन्ति । धर्णसिम् ।
दूतम् । न । पूर्वऽचित्तये । आ । शासते । मनीषिणः ॥ ५ ॥

वेङ्कट० तम् सिच्यमानम् पवित्रे पुनन्ति धारकम् । तमिमम् दूतम् इव परेषां पूर्वमेव[1] प्रज्ञापनाय अर्थयन्ते मेधाविनो यजमानाः ॥ ५ ॥

[2]इति सप्तमाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः[2] ॥

स पुनानो मदिन्तमः सोमश्चमूषु सीदति ।
पशौ न रेत आदधत् पतिर्वचस्यते धियः ॥ ६ ॥

सः । पुनानः । मदिन्ऽतमः । सोमः । चमूषु । सीदति ।
पशौ । न । रेतः । आऽदधत् । पतिः । वचस्यते । धियः ॥ ६ ॥

वेङ्कट० सः पूयमानः अत्यन्तं मदयिता सोमः चमूषु सीदति । पशौ इव रेतः आदधत् ऋषभः पतिः स्तूयते कर्मणः[3] ॥ ६ ॥

स मृज्यते सुकर्मभिर्देवो देवेभ्यः सुतः ।
विदे यदासु संददिर्महीरपो वि गाहते ॥ ७ ॥

सः । मृज्यते । सुकर्मऽभिः । देवः । देवेभ्यः । सुतः ।
विदे । यत् । आसु । सम्ऽददिः । महीः । अपः । वि । गाहते ॥ ७ ॥

वेङ्कट० सः मृज्यते सुकर्मभिः देवः देवार्थम् सुतः । ज्ञायते यत् आसु प्रजासु सम्यग् धनस्य दाता, तदानीं महतीः अपः वि गाहते वसतीवरीः ॥ ७ ॥

सुत इन्दो पवित्र आ नृभिर्यतो वि नीयसे ।
इन्द्राय मत्सरिन्तमश्चमूष्वा नि षीदसि ॥ ८ ॥

सुतः । इन्दो इति । पवित्रे । आ । नृऽभिः । यतः । वि । नीयसे ।
इन्द्राय । मत्सरिन्ऽतमः । चमूषु । आ । नि । सीदसि ॥ ८ ॥

वेङ्कट० निगदसिद्धेति ॥ ८ ॥

[1]इति सप्तमाष्टके चतुर्थाध्याये षड्विंशो वर्गः[2] ॥

---

१. पूर्वमिव वि[2] अ[1]. १-२. नास्ति मूको. ३. कर्मणा वि[2] अ[1]

[ १०० ]

[1]रेभसून् काश्यपावृषी । पवमानः सोमो देवता । अनुष्टुप् छन्दः[1] ।

अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ १ ॥

अभि । नवन्ते । अद्रुहः । प्रियम् । इन्द्रस्य । काम्यम् ।
वत्सम् । न । पूर्वे । आयुनि । जातम् । रिहन्ति । मातरः ॥ १ ॥

वेङ्कट० यथा प्रथमे [2]वयसि वत्सम् मातरः जातम् लिहन्ति, तथा सोमम् इन्द्रस्य प्रियम् कमनीयम् अद्रोहाः वसतीवर्यः अभि गच्छन्ति[2] ॥ १ ॥

पुनान इन्दवा भर सोम द्विबर्हसं रयिम् ।
त्वं वसूनि पुष्यसि विश्वानि दाशुषो गृहे ॥ २ ॥

पुनानः । इन्दो इति । आ । भर । सोम । द्विऽबर्हसम् । रयिम् ।
त्वम् । वसूनि । पुष्यसि । विश्वानि । दाशुषः । गृहे ॥ २ ॥

वेङ्कट० [3]पूयमानः इन्दो! आ भर सोम! द्वयोः स्थानयोः[3]† परिबृंहणशीलम्[4] धनम्। त्वम् हि धनानि पुष्यसि विश्वानि यजमानस्य गृहे ॥ २ ॥

त्वं धियं मनोयुजं सृजा वृष्टिं न तन्यतुः ।
त्वं वसूनि पार्थिवा दिव्या च सोम पुष्यसि ॥ ३ ॥

त्वम् । धियम् । मनःऽयुजम् । सृज । वृष्टिम् । न । तन्यतुः ।
त्वम् । वसूनि । पार्थिवा । दिव्या । च । सोम । पुष्यसि ॥ ३ ॥

वेङ्कट० त्वम् धाराम् मनोवेगाम् सृज वृष्टिम् इव तन्यतुः । शिष्टं स्पष्टमिति ॥ ३ ॥

परि ते जिग्युषो यथा धारा सुतस्य धावति ।
रंहमाणा व्यव्ययं वारं वाजीव सानसिः ॥ ४ ॥

परि । ते । जिग्युषः । यथा । धारा । सुतस्य । धावति ।
रंहमाणा । वि । अव्ययम् । वारम् । वाजीऽइव । सानसिः ॥ ४ ॥

वेङ्कट० वि परि धावति [5]अव्ययम् वारम्[5] जेतुः इव अश्वः शत्रूणां [5]सम्भजनशीलः तव[5] वेगं कुर्वाणा धारा इति ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[1]. ३-३ नास्ति वि[1]. † स्थान वि[2] अ[1]. ४. °बृहल वि[2] अ[1]; °बृहन् वि[1]. ५-५. शीलः स्तव वि[1].

क्रत्वे दक्षाय नः कवे पवस्व सोम धारया ।
इन्द्राय पातवे सुतो मित्राय वरुणाय च ॥ ५ ॥

क्रत्वे । दक्षाय । नः । कवे । पवस्व । सोम । धारया ।
इन्द्राय । पातवे । सुतः । मित्राय । वरुणाय । च ॥ ५ ॥

**वेङ्कट०** क्रत्वे प्रज्ञानाय च बलाय च अस्माकम् कवे ! । शिष्टं स्पष्टम् ॥ ५ ॥

[1]इति सप्तमाष्टके चतुर्थाध्याये सप्तविंशो वर्गः[1] ॥

पवस्व वाजसातमः पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तमः ॥ ६ ॥

पवस्व । वाजऽसातमः । पवित्रे । धारया । सुतः ।
इन्द्राय । सोम । विष्णवे । देवेभ्यः । मधुमत्ऽतमः ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

त्वां रिहन्ति मातरो हरिं पवित्रे अद्रुहः ।
वत्सं जातं न धेनवः पवमान विधर्मणि ॥ ७ ॥

त्वाम् । रिहन्ति । मातरः । हरिम् । पवित्रे । अद्रुहः ।
वत्सम् । जातम् । न । धेनवः । पवमान । विऽधर्मणि ॥ ७ ॥

**वेङ्कट०** वसतीवर्यः त्वाम् लिहन्ति विधर्मणि यज्ञे इति ॥ ७ ॥

पवमान महि श्रवश्चित्रेभिर्यासि रश्मिभिः ।
शर्धन् तमांसि जिघ्नसे विश्वानि दाशुषो गृहे ॥ ८ ॥

पवमान । महि । श्रवः । चित्रेभिः । यासि । रश्मिऽभिः ।
शर्धन् । तमांसि । जिघ्नसे । विश्वानि । दाशुषः । गृहे ॥ ८ ॥

**वेङ्कट०** पवमान ! महत् श्रवणीयम् अन्तरिक्षम् चित्रैः रश्मिभिः परि-यासि । शिष्टं स्पष्टमिति ॥ ८ ॥

त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ॥ ९ ॥

त्वम् । द्याम् । च । महिऽव्रत । पृथिवीम् । च । अति । जभ्रिषे ।
प्रति । द्रापिम् । अमुञ्चथाः । पवमान । महिऽत्वना ॥ ९ ॥

---

१-१. नास्ति मूको.

वेङ्कट० त्वम् द्यावापृथिव्यौ अत्यन्तं बिभर्षि महाकर्मन्[1], प्रति मुञ्चसि च[1] कवचम् पवमान! महत्त्वेन युक्तः इति ॥ ९ ॥

[2]इति सप्तमाष्टके चतुर्थाध्याये अष्टात्रिंशो वर्गः[2] ॥

व्याख्यच्चतुर्थमध्यायं सप्तमस्याष्टकस्य सः ।
भवगोलकुले यस्य मातुरासीत् समुद्भवः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके चतुर्थोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके चतुर्थोऽध्यायः ॥



१. नास्ति वि[1] अ[1]. २-२. नास्ति मूको.

अथ पञ्चमोऽध्याय.[1] ।

वेङ्कट०

'पुरोजिती वो अन्धसः' व्याचिख्यासति माधवः ।
प्रयाजदेवतास्वादौ[2] वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

भवन्तीहोभये देवाः प्रबला दुर्बलास्तथा ।
सूर्यः सोमो देवगुरुर्भौमः सौम्योऽर्किभार्गवौ ॥ २ ॥

कठैर्ग्रहाणां सर्वेषां तत्र यज्ञः प्रचोदितः ।
'भौमाय नवकपालं पुरोडाशम्' इति श्रुतिः ॥ ३ ॥

समस्ता साऽवमन्तव्या कठकाम्येष्टितो[3] बुधैः ।
हवींषि दक्षिणाश्चैव प्रकारं च बुभुत्सुभिः ॥ ४ ॥

भवन्ति प्रबलैरन्यैर्दुर्बलाश्च समन्विताः ।
हविर्भाजस्ततस्तेषां पृथक् मन्त्रा न कल्पिताः ॥ ५ ॥

श्रुतिसामान्यतस्तेषां तत्र याज्याश्चरुक्रमात्[4] ।
'अग्निर्मूर्धा(र्धो)[5], '(उ)द् बुध्यस्वाग्ने'[6], 'प्र वः शुक्राय'[7] चोदिताः[8] ॥ ६ ॥

श्रुतिसामान्यतः प्रीताः तत्र चाङ्गारकादयः ।
अङ्गारकस्य[9] चाग्नेश्च समाना प्रकृतिर्यतः[10] ॥ ७ ॥

तथैव देवो यः कश्चित् आप्रीसूक्तेषु कीर्त्यते ।
तात्पर्यं समिदादीनां कीर्तनेष्विति निर्णयः ॥ ८ ॥

अचेतनान् इज्यमानान्[11] अग्निर्दृष्ट्वेदमुक्तवान् ।
[12]'प्रयाजान्मे अनूयाजान्†'[12] सर्वान्[13] दत्तेति देवताः ॥ ९ ॥

एवं च हुतभागग्निः प्रयाजेष्विति मन्यते ।
तमेव प्राग् वषट्कारात् ध्येयं यस्ककुलोद्भवः[14] ॥ १० ॥

न त्वनाग्नेयतां स्पष्टं पुनराधानगोचरात् ।
ब्राह्मणादवगच्छामस्तदिदं ब्राह्मणं शृणु ॥ ११ ॥

---

१. नास्ति वि[1]; श्रोः सप्तमेऽष्टके पञ्चमोऽध्यायः आरभ्यते अध्यायार्थे प्रतिपादिका कारिका अ[1]. २. प्रयाजदेवयाजादौ वेंकम. ३. कठराम्येष्टितो वि[1]; कठकाम्येष्टिको वि[2] अ[1]. ४. °ज्यापुरोरुचः वि[1]; °ज्या ··· चरु वि[2] अ[1]. ५. ऋ ८,४४,१६. ६. मा १५,५४. ७. ऋ ७,४,१. ८. चोदिता वि[2] अ[1]. ९ °रकश्च वि[2]; °कश्चा वि[1]. १०. प्रकृति ··· वि[2] अ[1]; प्रकृतिह्यनिः वि[1]. ११. इज्यायमान् वि[2]. १२-१२. प्रयाजाम अनुयाजाः वेंकम. † ऋ १०,५१,८. १३. सर्वा वि[2] अ[1] वेंकअ. १४. यास्ककु° वि[1]; °कोद्भव वि[2] अ[1].

'नानाग्नेयं पुनराधेये कुर्यात्। यदनाग्नेयं[1] पुनराधेयं[2] कुर्यात्। व्यृद्धमेव[3] तत्। अनाग्नेयं वा एतत्[4] क्रियते। यत्समिधस्तनूनपातमिडो बर्हिर्यजति' (तैब्रा १,३,१,२;३) इति।

अग्नेर्वाचकशब्दानां स्पष्टं याज्यास्वदर्शनात्।
अनाग्नेयप्रवादोऽयम् इति यास्कस्य दर्शनम् ॥ १२ ॥

[5]'ऋतवो ह वै यज्ञेषु† देवेषु भागमीषिरे'[5]।
इत्यादिके शतपथे प्रयाजा ऋतुदेवताः ॥ १३ ॥

उक्ताः [6]प्रवेशितोऽग्निश्च तेष्वृतुष्विति दर्शनम्।
वसन्तमृतूनामिति[6] तेन कुर्मोऽनुमन्त्रणम् ॥ १४ ॥

अत्र वाजसनेयकम्—[7]'स वै[7] समिधो यजति। वसन्तो वै समित् ×××। अथ तनूनपातं यजति। ग्रीष्मो वै 'तनूनपात्। ग्रीष्मो ह्यासां[8] प्रजानां तनूस्तपति' (माश १,५,३,९-१० [तु. काश २,५,१,७-८]) इति[9]।

ननु [10]च द्विप्रकृतयः[10] स्वयमेवेति[11] केचन।
स्वतन्त्रा देवतास्तेषाम् आग्नेयत्वं कथं भवेत् ॥ १५ ॥

तत्र अन्ततः[12] श्रूयते—'स होवाचाग्निर्यन्मां प्रथमं[13] यजध्वे क्व मम तनो भागः स्यादिति। ते होचुः देवाः। न त्वामायतनाच्च्यवयेमेति। तानृतूनग्निरुपमन्त्रयाञ्चक्रे', इत्युक्त्वाऽन्तत[14] आह—'स[11] एषोऽग्निः ऋतुष्वन्वाभक्तः[15] स वा ओषधीः पचति या इमा ऋतवः पचन्तीति' (तु. काश २,५,३,४-५)।

तदपरैः परिहारोऽत्र वृद्धैर्वाच्यः प्रयत्नतः।
अस्माकं परिहारोऽत्र शीघ्रं न प्रत्यभादिति ॥ १६ ॥

## [ १०१ ]

[16]१-३ अन्धीगुः श्यावाश्विः, ४-६ ययातिर्नाहुषः, ७-९ नहुषो मानवः, १०-१२ मनुः सांवरणः,
१३-१६ वैश्वामित्रो वाच्यो वा प्रजापतिर्ऋषिः। पवमानः सोमो देवता।
अनुष्टुप् छन्दः, द्वितीयातृतीये गायत्र्यौ[16]।

पुरोजिती वो अन्धसः सुताय मादयित्नवे।
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥

१. यदग्नेयं वेंकम; यदनाग्नेये वि[२] अ[१]. २. नास्ति वि[२] अ[१]. ३. पूर्वमेव वि[२] अ[१]; वृद्धमेव वि[१] वेंकम. ४. तत वेंकम. ५-५. काश २,५,३,१ (तु. माश १,६,१,१) † यज्ञे काश माश. ६-६. तु. माश १,६,१; काश २,५,३. ७-७. नास्ति वि[२] अ[१]. ८-८. नास्ति वि[१]. ९. इत्यादि वि[१,२] अ[१]. १०-१०. यद्वाः प्रभृतय वि[१]; यद्वा प्रभृतय वि[२]; यद्वा प्रभृतयः अ[१]. ११. °मेवेह वि[१]. १२. नास्ति वेंकम. १३. न प्र° वि[१] अ[१]. १४. °क्ता तत वि[१]. १५. °न्वाभरत अ[१]. १६-१६. नास्ति मूको.

पुरःऽजिती । वः । अन्धसः । सुताय । मादयित्नवे ।
अप । श्वानम् । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यम् ॥ १ ॥

वेङ्कट० कात्यायनः—पुरोजिती षोडशान्धीगुः श्यावाश्विर्ययातिर्नाहुषो नहुषो मानवो मनुः सांवरण इति तृचाः । शेषे प्रजापतिः' ( ऋअ २.९,१०१ ) इति । पुरःस्थितजयस्य अदनीयस्य सोमस्य यूयं सुताय मदकराय दीर्घजिह्वम् श्वानम् अप श्नथिष्टन[1] हे सखायः! । यथा राक्षसाः सुतं सोमं न लिहन्ति तथा कुरुतेति ॥ १ ॥

यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ २ ॥

यः । धारया । पावकया । परिऽप्रस्यन्दते । सुतः । इन्दुः । अश्वः । न । कृत्व्यः ॥ २ ॥

वेङ्कट० यः धारया शोधयित्र्या परिप्रस्यन्दते अभिषुतः इन्दुः अश्वः इव कर्मण्यः ॥ २ ॥

तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञं हिन्वन्त्यद्रिभिः ॥ ३ ॥

तम् । दुरोषम् । अभि । नरः । सोमम् । विश्वाच्या । धिया । यज्ञम् । हिन्वन्ति । अद्रिऽभिः ॥३॥

वेङ्कट० तम् दुर्दहम् अभि प्रेरयन्ति ऋत्विजः सोमम् सर्वान् कामान् अञ्चित्र्या[2] धिया यष्टव्यम् ग्रावभिः ॥ ३ ॥

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
पवित्रवन्तो अक्षरन् देवान् गच्छन्तु वो मदाः ॥ ४ ॥

सुतासः । मधुमत्ऽतमाः । सोमाः । इन्द्राय । मन्दिनः ।
पवित्रऽवन्तः । अक्षरन् । देवान् । गच्छन्तु । वः । मदाः ॥ ४ ॥

वेङ्कट० सुताः मधुमत्तमाः सोमाः इन्द्रस्य मदकराः पवित्रवन्तः क्षरन्ति । देवान् गच्छन्तु युष्माकं रसाः इति प्रत्यक्षः ॥ ४ ॥

इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसा ॥ ५ ॥

इन्दुः । इन्द्राय । पवते । इति । देवासः । अब्रुवन् ।
वाचः । पतिः । मखस्यते । विश्वस्य । ईशानः । ओजसा ॥ ५ ॥

वेङ्कट० इन्दुः इन्द्रार्थम् पवते इति स्तोतारः वदन्ति । तदानीम् अयम् वाचस्पतिः सोमः[3] पूजामिच्छति विश्वस्य ईशानः बलेन ॥ ५ ॥

[4]इति सप्तमाष्टके पञ्चमाध्याये प्रथमो वर्गः[4] ॥

---

१. श्नथिष्टन मूको. २. अवन्त्या वि[1] अ[1]; अन्चन्त्य वि[2]. ३. सोम वि[1] अ[1]; सोमं वि[2].
४-४. नास्ति मूको.

सहस्रधारः पवते समुद्रो वाचमीङ्खयः। सोमः पती रयीणां सखेन्द्रस्य दिवेदिवे ॥ ६॥

सहस्रऽधारः । पवते । समुद्रः । वाचम्ऽईङ्खयः ।
सोमः । पतिः । रयीणाम् । सखा । इन्द्रस्य । दिवेऽदिवे ॥ ६ ॥

वेङ्कट० बहुधारः पवते, यस्मात्[1] समुद्रवन्ति [2]रसाः, यश्च[2] वाचं प्रेरयति। सोमः इति स्पष्टम् ॥ ६ ॥

अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ७ ॥

अयम् । पूषा । रयिः । भगः । सोमः । पुनानः । अर्षति ।
पतिः । विश्वस्य । भूमनः । वि । अख्यत् । रोदसी इति । उभे इति ॥ ७ ॥

वेङ्कट० अयम् पोषकः भजनीयः रयिः धनहेतुः सोमः पूयमानः गच्छति। पतिः विश्वस्य भूतस्य प्रकाशयति द्यावापृथिव्यौ उभे ॥ ७ ॥

समु प्रिया अनूषत गावो मदाय घृष्वयः ।
सोमासः कृण्वते पथः पवमानास इन्दवः ॥ ८ ॥

सम् । ऊँ इति । प्रियाः । अनूषत । गावः । मदाय । घृष्वयः ।
सोमासः । कृण्वते । पथः । पवमानासः । इन्दवः ॥ ८ ॥

वेङ्कट० सम् स्तुवन्ति प्रियाः वाचः सोमस्य मदार्थम् परस्परं स्पर्धमानाः। सोमाः कृण्वन्ति मार्गान् पूयमानाः दीप्ताः ॥ ८ ॥

य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ९ ॥

यः । ओजिष्ठः । तम् । आ । भर । पवमान । श्रवाय्यम् ।
यः । पञ्च । चर्षणीः । अभि । रयिम् । येन । वनामहै ॥ ९ ॥

वेङ्कट० यः ओजस्वितमः[3] रसः, तम् आ भर पवमान![4] श्रवणीयम्, यः पञ्च चर्षणीः[5] अभि तिष्ठति, धनम् च येन वनामहे[6] ॥ ९ ॥

सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः ॥ १० ॥

---

१. यस्मात् पवते वि[2] अ[2] २-२. रया यश्च वि[2] अ[2]; रसाश्च वि[1]. ३. ओजिस्थितमो वि[1,2]; ओजिस्थिरतमो अ[1]. ४. पवमानं मूको. ५. वर्षणीः मूको. ६. वनामहे वि[2] अ[2].

सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्ऽतमाः ।
मित्राः । सुवानाः । अरेपसः । सुऽआध्यः । स्वःऽविदः ॥ १० ॥

वेङ्कट० सोमाः पवन्ते दीप्ताः अस्मभ्यम् अतिशयेन मार्गस्य लम्भकाः सखायः[1] सूयमानाः[2] अपापाः शोभनाऽऽध्यानाः[3] सर्वज्ञाः ॥ १० ॥

[4]इति सप्तमाष्टके पञ्चमाध्याये द्वितीयो वर्गः[4] ॥

सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
इषमस्मभ्यमभितः समस्वरन् वसुविदः ॥ ११ ॥

सुऽस्वानासः । वि । अद्रिऽभिः । चितानाः । गोः । अधि । त्वचि ।
इषम् । अस्मभ्यम् । अभितः । सम् । अस्वरन् । वसुऽविदः ॥ ११ ॥

वेङ्कट० सूयमानाः[5] विविधम् सम् स्वरन्ति ग्रावभिः ज्ञायमानाः अधिषवणचर्मणि अन्नम् अस्मभ्यम् अभितः धनस्य लम्भकाः ॥ ११ ॥

एते पूता विपश्चितः सोमासो दध्याशिरः ।
सूर्यासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ १२ ॥

एते । पूताः । विपःऽचितः । सोमासः । दधिऽआशिरः ।
सूर्यासः । न । दर्शतासः । जिगत्नवः । ध्रुवाः । घृते ॥ १२ ॥

वेङ्कट० एते पूताः मेधाविनः सोमाः दधिमिश्रणाः सूर्याः इव दर्शनीयाः भवन्ति गमनशीलाः ध्रुवाः उदके ॥ १२ ॥

प्र सुन्वानस्यान्धसो मर्तो न वृत तद्वचः ।
अप श्वानमराधसं हता मखं न भृगवः ॥ १३ ॥

प्र । सुन्वानस्य । अन्धसः । मर्तः । न । वृत । तत् । वचः ।
अप । श्वानम् । अराधसम् । हत । मखम् । न । भृगवः ॥ १३ ॥

वेङ्कट० सूयमानस्य सोमस्य तत्[6] वचनं घोषम् [7]मारकः श्वा[7] न प्र वृत न भजताम् । तथा श्वानम् तं संराधककर्मरहितम्[8] अप हत, यथा पुरा मखम्[9] अपराद्धम् [10]भृगवः अपहतवन्तः[10] ॥ १३ ॥

---

१. सहायाः अ[1]. २. स्तूय° वि[2] अ[1]. ३. शोभमानाः वि[2] अ[1]; शोभनाद्ध्याना वि[1]. ४-४. नास्ति मूको. ५. तूयमाना मूको. ६. त्वत वि[1]; नास्ति वि[2] अ[1]. ७-७. कश्मारकश्व वि[1]; मारकश्वा वि[2] अ[1]. ८. असंराधक° वि[2] अ[1]. ९. मघम् मूको. १०-१०. हतवन्तः वि[1]; °वो वहतवन्त वि[2] अ[1].

आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
सरज्जारो न योषणां वरो न योनिमासदम् ॥ १४ ॥

आ । जामिः । अत्के । अव्यत । भुजे । न । पुत्रः । ओण्योः ।
सरत् । जारः । न । योषणाम् । वरः । न । योनिम् । आऽसदम् ॥ १४ ॥

**वेङ्कट०** आ [1]बध्यते बन्धुः[1] सोमः आच्छादके पवित्रे यथा रक्षकयोः मातापित्रोः भुजे पुत्रः । सोऽयं सरति जारः इव असतीम्, वरः इव च कन्याम्, स्वं स्थानम् आसत्तुं[2] कलशम् ॥ १४ ॥

स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ १५ ॥

सः । वीरः । दक्षऽसाधनः । वि । यः । तस्तम्भ । रोदसी इति ।
हरिः । पवित्रे । अव्यत । वेधाः । न । योनिम् । आऽसदम् ॥ १५ ॥

**वेङ्कट०** सः वीरः बलसाधनः भवति, यः वि अस्तभ्नात् द्यावापृथिव्यौ । हरितवर्णः पवित्रे बध्यते विधाता इव गृहस्य स्थानम् आसत्तुम्[2] ॥ १५ ॥

अव्यो वारेभिः पवते सोमो गव्ये अधि त्वचि ।
कनिक्रदद्वृषा हरिरिन्द्रस्याभ्येति निष्कृतम् ॥ १६ ॥

अव्यः । वारेभिः । पवते । सोमः । गव्ये । अधि । त्वचि ।
कनिक्रदत् । वृषा । हरिः । इन्द्रस्य । अभि । एति । निःऽकृतम् ॥ १६ ॥

**वेङ्कट०** अवेः वालेभ्यः पवते सोमः गव्ये [3]च चर्मणि[3] । शब्दायमानः वृषा हरिः इन्द्रस्य अभि गच्छति स्थानम् ॥ १६ ॥

[4]इति सप्तमाष्टके पञ्चमाध्याये तृतीयो वर्गः[4] ॥

## [ १०२ ]

[1]त्रित आप्त्य ऋषिः । पवमानः सोमो देवता । उष्णिक् छन्दः[1] ।

क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रिया भुवदध द्विता ॥ १ ॥

क्राणा । शिशुः । महीनाम् । हिन्वन् । ऋतस्य । दीधितिम् ।
विश्वा । परि । प्रिया । भुवत् । अध । द्विता ॥ १ ॥

---

१-१. ॰न्ते बन्धवः अ[1]. २. ॰सत्तुं मूको. ३-३. तव च चर्मणि वि[2] अ[1]. ४-४. नास्ति मूको.

**वेङ्कट०** त्रितः । कुर्वाणो यज्ञम् अपाम् शिशुः प्रेरयन् यज्ञस्य धारकं स्वरसम् विश्वानि प्रियाणि परि भवति । अपि च द्वैधं भवति दिवि च पृथिव्यां च वर्तत इति ॥ १ ॥

उप॑ त्रि॒तस्य॑ पा॒ष्यो॒३॑रभ॑क्त॒ यद् गुहा॑ प॒दम् । य॒ज्ञस्य॑ स॒प्त धाम॑भि॒रध॑ प्रि॒यम् ॥२॥

उप॑ । त्रि॒तस्य॑ । पा॒ष्यो॑ः । अभ॑क्त । यत् । गुहा॑ । प॒दम् ।
य॒ज्ञस्य॑ । स॒प्त । धाम॑ऽभिः । अध॑ । प्रि॒यम् ॥ २ ॥

**वेङ्कट०** सोमो[1] [2]यदा उप अभक्त[2] मम त्रितस्य पाष्योः[3] अधिषवणफलकयोः पदम् स्थानम् गुहायां हविर्धाने, अनन्तरम् यज्ञस्य सप्तभिः धारकैश्छन्दोभिः[4] प्रियम् सोमम् अभिष्टुवन्ति । अपि वा सप्तभिरुदकैः अभिषुण्वन्ति ॥ २ ॥

त्रीणि॑ त्रि॒तस्य॒ धार॑या पृ॒ष्ठेष्वेर॑या र॒यिम् । मिमी॑ते अ॒स्य॒ योज॑ना॒ वि सु॒क्रतु॑ः ॥३॥

त्रीणि॑ । त्रि॒तस्य॑ । धार॑या । पृ॒ष्ठेषु॑ । आ । ई॒र॒य॒ । र॒यिम् ।
मिमी॑ते । अ॒स्य॒ । योज॑ना । वि । सु॒ऽक्रतु॑ः ॥ ३ ॥

**वेङ्कट०** त्रीणि सवनानि त्रितस्य धारया सोम! धारय[5] । पृष्ठेषु च सामसु आ गमय दातारम् इन्द्रम्[6] । अस्य इन्द्रस्य योजनानि स्तोत्राणि वि मिमीते सुप्रज्ञः स्तोतेति ॥ ३ ॥

ज॒ज्ञा॒नं स॒प्त मा॒तरो॑ वे॒धाम॑शासत श्रि॒ये । अ॒यं ध्रु॒वो र॑यी॒णां चिके॑त॒ यत् ॥ ४ ॥

ज॒ज्ञा॒नम् । स॒प्त । मा॒तर॑ः । वे॒धाम् । अ॒शा॒स॒त॒ । श्रि॒ये । अ॒यम् । ध्रु॒वः । र॒यी॒णाम् । चिके॑त । यत् ॥

**वेङ्कट०** जायमानम्[7] सप्त [8]मातरः नद्यः छन्दांसि वा विधातारं सोमम् अनुशासति श्रियोऽर्थम्† यजमानानाम्, यस्मात् अयम् सोमः ध्रुवः जानाति‡ धनानि[8] ॥ ४ ॥

अ॒स्य व्र॒ते स॒जोष॑सो॒ विश्वे॑ दे॒वासो॑ अ॒द्रुह॑ः । स्पा॒र्हा भ॑वन्ति॒ रन्त॑यो जु॒षन्त॒ यत् ॥५॥

अ॒स्य । व्र॒ते । स॒ऽजोष॑सः । विश्वे॑ । दे॒वास॑ः । अ॒द्रुह॑ः । स्पा॒र्हाः । भ॒व॒न्ति॒ । रन्त॑यः । जु॒षन्त॑ । यत् ॥५॥

**वेङ्कट०** [9]सोमस्य व्रते सङ्गताः विश्वे देवाः द्रोहवर्जिताः स्पृहणीयाः भवन्ति, रन्तारः† सुतम् यत् एनं सेवन्ते[9] ॥ ५ ॥

[10]इति सप्तमाष्टके पञ्चमाध्याये चतुर्थो वर्गः[10] ॥

यमी॒ गर्भ॑मृता॒वृधो॑ दृ॒शे चारु॒मजी॑जनन् । क॒विं मंहि॑ष्ठमध्व॒रे पु॑रु॒स्पृह॑म् ॥ ६ ॥

---

१. सोमस्य सो॰ वि[1]. २-२. यदोवाभक्त वि[2] अ[1]; दयोपाभक्त वि[1]. ३. चाष्टो वि[2]; चाद्योः अ[1]; वादष्टयोः वि[1]. ४. °धारकेश्शब्दो वि[2] अ[1]; धारकै छन्दोभिः वि[1]. ५. धारय: वि[2] अ[1]. ६. नास्ति वि[1]. ७. ज्ञानं वि[2]. ८-८. नास्ति वि[1]. † श्रियार्थं मूको. ‡ जानान मूको. ९-९ नास्ति वि[1]. † रान्तरः वि[1] अ[1]. १०-१०. नास्ति मूको.

यम् । ईम् इति । गर्भम् । ऋतऽवृधः । दृशे । चारुम् । अजीजनन् । कविम् । मंहिष्ठम् । अध्वरे । पुरुऽस्पृहम् ॥

वेङ्कट० [1]यम् एनं[1] गर्भभूतम् यज्ञस्य वर्धयित्र्यः आपः [2]अजीजनन् दर्शनाय[2] सर्वेषाम् चारुम् क्रान्तप्रज्ञम् मंहिष्ठम्[3] यज्ञे बहुभिः स्पृहणीयम् । पूर्वत्र[4] सम्बन्धः ॥ ६ ॥

समीचीने अभि त्मना यह्वी ऋतस्य मातरा । तन्वाना यज्ञमानुषग्यदञ्जते ॥ ७ ॥

समीचीने इति सम्ऽईचीने । अभि । त्मना । यह्वी इति । ऋतस्य । मातरा ।
तन्वानाः । यज्ञम् । आनुषक् । यत् । अञ्जते ॥ ७ ॥

वेङ्कट० सङ्गते द्यावापृथिव्यौ अभि गच्छति स्वयमेव महत्यौ[5] यज्ञस्य निर्मात्र्यौ । यज्ञम् तन्वानाः अध्वर्यवः यत् अनुषक्तम्[6] वसतीवरीभिः अञ्जते सोममिति ॥ ७ ॥

क्रत्वा शुक्रेभिरक्षभिर्ऋणोरप व्रजं दिवः । हिन्वन्नृतस्य दीधितिं प्राध्वरे ॥ ८ ॥

क्रत्वा । शुक्रेभिः । अक्षऽभिः । ऋणोः । अप । व्रजम् । दिवः । हिन्वन् । ऋतस्य । दीधितिम् । प्र । अध्वरे ॥

वेङ्कट० कर्मणा उज्ज्वलद्भिः अक्षैरिवाश्नुवानैः तेजोभिः अन्धकारव्रजम्[7] [8]अप ऋणोति[8] अन्तरिक्षात् प्रेरयन् यज्ञस्य धारकं रसम् यज्ञे ॥ ८ ॥

[9]इति सप्तमाष्टके पञ्चमाध्याये पञ्चमो वर्गः[9] ॥

## [ १०३ ]

[1]द्वित आप्त्य ऋषिः । पवमानः सोमो देवता । उष्णिक् छन्दः[1] ।

प्र पुनानाय वेधसे सोमाय वच उद्यतम् । भृतिं न भरा मतिभिर्जुजोषते ॥ १ ॥

प्र । पुनानाय । वेधसे । सोमाय । वचः । उत्ऽयतम् । भृतिम् । न । भर । मतिऽभिः । जुजोषते ॥ १ ॥

वेङ्कट० द्वित आप्त्यः । प्र भर पूयमानाय विधात्रे सोमाय वचः उद्युक्तम्, [10]भृतकाय इव[10] भृतिम्, स्तुतिभिः प्रीयमाणाय ॥ १ ॥

परि वाराण्यव्यया गोभिरञ्जानो अर्षति । त्री षधस्था पुनानः कृणुते हरिः ॥२॥

परि । वाराणि । अव्यया । गोभिः । अञ्जानः । अर्षति । त्री । सधऽस्था । पुनानः । कृणुते । हरिः ॥२॥

वेङ्कट० परि गच्छति पवित्रं गोविकारैः अज्यमानः । त्रीणि स्थानानि पूयमानः करोति हरितवर्णः द्रोणकलशम् आधवनीयं पूतभृतमिति[11] ॥ २ ॥

---

१-१. नास्ति वि[1]. २-२. [°]नन् स्पर्शनाय दर्श[°] अ[1]. ३. नास्ति मूको. ४. सर्वत्र वि[1] अ[1]. ५. महत्यो मूको. ६. आरसक्तं वि[1]. ७. [°]कारैव्रजम् वि[1]; [°]कारप्रजम् वि[2] अ[1]. ८-८. अवाप्नोति वि[1] अ[1]. ९-९. नास्ति मूको. १०-१०. [°]कायेव वि[2] अ[1]. ११. पूतभृतभृतमिति वि[1]; पूतभृतभृवमिति अ[1].

परि कोशं मधुश्चुतमव्यये वारे अर्षति । अभि वाणीर्ऋषीणां सप्त नूषत ॥३॥

परि । कोशम् । मधुऽश्चुतम् । अव्यये । वारे । अर्षति । अभि । वाणीः । ऋषीणाम् । सप्त । नूषत ॥ ३ ॥

**वेङ्कट०** परि गमयति कोशम् मधुश्च्युतम् आत्मीयं रसं पवित्रे । तम् अभि स्तुवन्ति ऋषीणाम् सप्त छन्दांसि ॥ ३ ॥

परि णेता मतीनां विश्वदेवो अदाभ्यः । सोमः पुनानश्चम्वोर्विशद्धरिः ॥ ४ ॥

परि । नेता । मतीनाम् । विश्वऽदेवः । अदाभ्यः । सोमः । पुनानः । चम्वोः । विशत् । हरिः ॥ ४ ॥

**वेङ्कट०** परि विशति नेता स्तुतीनाम् सर्वदेवः अहिंसितः सोमः पूयमानः अधिषवणफलकयोः हरिः ॥४॥

परि दैवीरनु स्वधा इन्द्रेण याहि सरथम् । पुनानो वाघद्वाघद्भिरमर्त्यः ॥ ५ ॥

परि । दैवीः । अनु । स्वधाः । इन्द्रेण । याहि । सऽरथम् । पुनानः । वाघत् । वाघत्ऽभिः । अमर्त्यः ॥

**वेङ्कट०** परि याहि दैवानि बलानि अनु देवसेनाः इन्द्रेण सरथम् पूयमानः उह्यमानः ऋत्विग्भिः अमर्त्यः ॥ ५ ॥

परि सप्तिर्न वाजयुर्देवो देवेभ्यः सुतः । व्यानशिः पवमानो वि धावति ॥६॥

परि । सप्तिः । न । वाजऽयुः । देवः । देवेभ्यः । सुतः । विऽआनशिः । पवमानः । वि । धावति ॥६॥

**वेङ्कट०** परि वि धावति अश्वः इव युद्धमिच्छन् देवः[1] देवार्थम् सुतः व्यापी पवमानः ॥ ६ ॥

[2]इति सप्तमाष्टके पञ्चमाध्याये षष्ठो वर्गः[2] ॥

## [ १०४ ]

[3]पर्वतनारदौ काण्वौ, काश्यप्यौ शिखण्डिन्यावप्सरसौ वा ऋषी । पवमानः सोमो देवता । उष्णिक् छन्दः[3] ।

सखाय आ नि षीदत पुनानाय प्र गायत । शिशुं न यज्ञैः परि भूषत श्रिये ॥१॥

सखायः । आ । नि । सीदत । पुनानाय । प्र । गायत । शिशुम् । न । यज्ञैः । परि । भूषत । श्रिये ॥

**वेङ्कट०** पर्वतनारदौ । हे सखायः ! आ नि सीदत । अथ पूयमानाय प्रकर्षेण गायत । शिशुम् इव अलङ्कारैः अभिषुतम् यज्ञैः हविर्भिर्मिश्रणैः[3] अलङ्कुरुत शोभनार्थम् ॥ १ ॥

समी वत्सं न मातृभिः सृजता गयसाधनम् । देवाव्यं मदमभि द्विशवसम् ॥२॥

सम् । ईम् । इति । वत्सम् । न । मातृऽभिः । सृजत । गयऽसाधनम् ।
देवऽअव्यम् । मदम् । अभि । द्विऽशवसम् ॥ २ ॥

---

१. नास्ति वि[1]. २-२. नास्ति मूको. ३-३. 'णैरिति अ'.

वेङ्कट० अभि सम् सृजत एनं वसतीवरीभिः वत्सम् इव मातृभिः गृहस्य साधकम् देवानां रक्षकम् मदम् [1]द्विगुणमेव गमयति[1] बलमिति ॥ २ ॥

पुनाता दक्षसाधनं यथा शर्धाय वीतये । यथा मित्राय वरुणाय शंतमः ॥ ३ ॥

पुनात । दक्षऽसाधनम् । यथा । शर्धाय । वीतये । यथा । मित्राय । वरुणाय । शम्ऽतमः ॥ ३ ॥

वेङ्कट० पुनीत बलस्य साधकम्[2] यथा असौ वेगार्थम् पानाय भवति, यथा वा मित्रावरुणयोः सुखकरः ॥ ३ ॥

अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत । गोभिष्टे वर्णमभि वासयामसि ॥ ४ ॥

अस्मभ्यम् । त्वा । वसुऽविदम् । अभि । वाणीः । अनूषत । गोभिः । ते । वर्णम् । अभि । वासयामसि ॥

वेङ्कट० अस्मभ्यम् त्वां[3] धनस्य दातारम् अभि स्तुवन्ति वाचः [4]अस्मदीयाः । ते[4] वयं तव वर्णम् गोविकारैः अभि वासयामः ॥ ४ ॥

स नो मदानां पत इन्दो देवप्सरा असि । सखेव सख्ये गातुवित्तमो भव ॥५॥

सः । नः । मदानाम् । पते । इन्दो इति । देवऽप्सराः । असि ।
सखाऽइव । सख्ये । गातुवित्ऽतमः । भव ॥ ५ ॥

वेङ्कट० सः अस्माकम् हे मदानाम्[5] रसानां स्वामिन्! इन्दो! दीप्तरूपः भवसि । स त्वम् सखा इव सख्ये अत्यन्तं मार्गस्य लम्भकः भव[6] ॥ ५ ॥

सनेमि कृध्य१स्मदा रक्षसं कं चिदत्रिणम् । अपादेवं द्वयुमंहो युयोधि नः ॥६॥

सनेमि । कृधि । अस्मत् । आ । रक्षसम् । कम् । चित् । अत्रिणम् ।
अप । अदेवम् । द्वयुम् । अंहः । युयोधि । नः ॥ ६ ॥

वेङ्कट० पुराणम् सख्यम् कुरु अस्मासु । अपि च राक्षसम् कम् चित् अपि अदनशीलम्[7] अप युयोधि अदेवम् द्वयाविनं सत्यानृतयुक्तम् पापम् च अस्मत्त इति ॥ ६ ॥

[8]इति सप्तमाष्टके पञ्चमाध्याये सप्तमो वर्गः[8] ॥

[ १०५ ]

[8]पर्वतनारदौ काण्वौ ऋषी । पवमानः सोमो देवता । उष्णिक् छन्दः[8] ।

तं वः सखायो मदाय पुनानमभि गायत । शिशुं न यज्ञैः स्वदयन्त गूर्तिभिः ॥१॥

---

१-१. द्विगुणेवगमिति वि[1]. २. धारकं वि[1]. ३. त्वा वि[1]. ४-४. °दीयान्ते वि[1]. ५. मादकानां वि[1]. ६. भवं वि[2] अ[1]; भवः वि[3]. ७. अभ्यथनशीलं वि[2] अ[1]. ८-८. नास्ति मूको.

तम्। वः। सखायः। मदाय। पुनानम्। अभि। गायत। शिशुम्। न। यज्ञैः। स्वदयन्त। गूर्तिऽभिः ॥१॥

**वेङ्कट०** तम् यूयम् सखायः! मदार्थं पूयमानम् अभि गायत। तमिमम् शिशुम् इव अलङ्कारैः स्वादूकुर्वन्ति मिश्रणैः स्तुतिभिश्च[1] ॥ १ ॥

सं वत्सइव मातृभिरिन्दुर्हिन्वानो अज्यते। देवावीर्मदो मतिभिः परिष्कृतः ॥२॥

सम्। वत्सःऽइव। मातृऽभिः। इन्दुः। हिन्वानः। अज्यते। देवऽअवीः। मदः। मतिऽभिः। परिऽकृतः ॥२॥

**वेङ्कट०** सम् अज्यते वत्स इव[2] मातृभिः वसतीवरीभिः इन्दुः प्रेर्यमाणः देवानां रक्षकः मदः स्तुतिभिः अलङ्कृतः ॥ २ ॥

अयं दक्षाय साधनोऽयं शर्धाय वीतये। अयं देवेभ्यो मधुमत्तमः सुतः ॥ ३ ॥

अयम्। दक्षाय। साधनः। अयम्। शर्धाय। वीतये। अयम्। देवेभ्यः। मधुमत्ऽतमः। सुतः ॥

**वेङ्कट०** अयम् बलाय साधनीयः[3]। अयम् वेगार्थं भक्षणीयः। अयम् इति स्पष्टम्[4] ॥ ३ ॥

गोमन्न इन्दो अश्ववत् सुतः सुदक्ष धन्व। शुचिं ते वर्णमधि गोषु दीधरम् ॥४॥

गोऽमत्। नः। इन्दो इति। अश्वऽवत्। सुतः। सुऽदक्ष। धन्व।
शुचिम्। ते। वर्णम्। अधि। गोषु। दीधरम् ॥ ४ ॥

**वेङ्कट०** गवाश्वयुक्तम् अस्माकम् इन्दो! सुतः सुबल! पवस्व। शुचिम् तव वर्णम् रसम्[5] अधि धारयामि गव्येषु ॥ ४ ॥

स नो हरीणां पत इन्दो देवप्सरस्तमः। सखेव सख्ये नर्यो रुचे भव ॥ ५ ॥

सः। नः। हरीणाम्। पते। इन्दो इति। देवप्सरःऽतमः। सखाऽइव। सख्ये। नर्यः। रुचे। भव ॥५॥

**वेङ्कट०** सः अस्माकं हे हरितवर्णानां पशूनां[6] स्वामिन्! इन्दो! देवप्सरस्तमः सखा इव सख्ये नृहितः रुचे भव ॥ ५ ॥

सनेमि त्वमस्मदाँ अदेवं कं चिदत्रिणम्। साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥६॥

सनेमि। त्वम्। अस्मत्। आ। अदेवम्। कम्। चित्। अत्रिणम्।
सह्वान्। इन्दो इति। परि। बाधः। अप। द्वयुम् ॥ ६ ॥

**वेङ्कट०** पुराणं सख्यम् त्वम् अस्मासु कुरु। तथा अदेवनशीलम् कम् चित् अपि अदनशीलम्[7] अस्मत्तः अप [8]युयोधि। अभिभवन् इन्दो![8] परि जहि बाधमानान्, अप युयोधि च द्वयाविनमिति ॥ ६ ॥

[9]इति सप्तमाष्टके पञ्चमाध्याये अष्टमो वर्गः[9] ॥

---

१. °भिः वि[1]. २. इव च अ[1]. ३. शासनीयः वि[2] अं[1]. ४. स्पष्टमिति अ[1]. ५. नास्ति वि[2]. ६. अंशूनां मूको. ७. अव्यसनशीलम् वि[2] अ[1]. ८-८. युयोध्य हि भवन्तीन्दो वि[2] अ[1]. ९-९ नास्ति मूको

[ १०६ ]

[1]आद्यानां तिसृणां दशम्यादिचतुर्दश्यन्तानां च अग्निश्चाक्षुष ऋषिः, चतुर्थ्यादिषष्ठ्यन्तानां चक्षुर्मानवः, सप्तम्यादिनवम्यन्तानां मनुराप्सवः। पवमानः सोमो देवता। उष्णिक् छन्दः[1]।

इन्द्र॒मच्छ॑ सु॒ता इ॒मे वृष॑णं यन्तु॒ हर॑यः। श्रु॒ष्टी जा॒तास॒ इन्द॑वः स्व॒र्विदः॑ ॥ १ ॥

इन्द्र॑म्। अच्छ॑। सु॒ताः। इ॒मे। वृष॑णम्। य॒न्तु॒। हर॑यः। श्रु॒ष्टी। जा॒तासः॑। इन्द॑वः। स्वः॒ऽविदः॑ ॥१॥

**वेङ्कट०** अग्निश्चाक्षुषश्चक्षुर्मानवो मनुराप्सवः इति त्रीँस्तृचान् अपश्यन्, अवशिष्टं पुनरग्निः। इन्द्रम् अभि यन्तु सुताः इमे हरितवर्णाः वृषणम् क्षिप्रम् जाताः सोमाः सर्वज्ञाः ॥ १ ॥

अ॒यं भरा॑य सान॒सिरिन्द्रा॑य पवते सु॒तः। सोमो॒ जैत्र॑स्य चेतति॒ यथा॑ वि॒दे ॥२॥

अ॒यम्। भरा॑य। सा॒न॒सिः। इन्द्रा॑य। प॒व॒ते। सु॒तः। सोम॑ः। जैत्र॑स्य। चे॒त॒ति॒। यथा॑। वि॒दे ॥

**वेङ्कट०** [2]अयम् सङ्ग्रामाय भजनीयः इन्द्राय पवते अभिषुतः। सोमः जयशीलमिन्द्रम् जानाति, यथा इन्द्रो लोकैः ज्ञातः†[2] ॥ २ ॥

अ॒स्येदिन्द्रो॒ मदे॒ष्वा ग्रा॒भं गृ॑भ्णीत सान॒सिम्। वज्रं॑ च॒ वृष॑णं भर॒त् सम॑प्सु॒जित् ॥३॥

अ॒स्य। इत्। इन्द्रः॑। मदे॑षु। आ। ग्रा॒भम्। गृ॒भ्णी॒त। सा॒न॒सिम्।
वज्र॑म्। च॒। वृष॑णम्। भ॒रत्। सम्। अ॒प्सु॒ऽजित् ॥ ३ ॥

**वेङ्कट०** [3]सोमस्यैव† इन्द्रः मदेषु‡ सम्भजनीयम् धनुः गृह्णाति। वज्रम् च वर्षितारम् सम् बिभर्ति¶ उदकार्थं वृत्रस्य जेता[3] ॥ ३ ॥

प्र ध॑न्वा सोम॒ जागृ॑वि॒रिन्द्रा॑येन्दो॒ परि॑ स्रव। द्यु॒मन्तं॒ शुष्म॒मा भ॑रा स्व॒र्विद॑म् ॥४॥

प्र। ध॒न्व॒। सो॒म॒। जागृ॑विः। इन्द्रा॑य। इ॒न्दो॒ इति॑। परि॑। स्र॒व।
द्यु॒ऽमन्त॑म्। शुष्म॑म्। आ। भ॒र॒। स्वः॒ऽविद॑म् ॥ ४ ॥

**वेङ्कट०** [4]प्र क्षर सोम! जागरणशीलः। इन्द्राय[4] इन्दो! परि[5] स्रव। प्रदीप्तिमत्[6] च बलम् आ हर[7] सर्वस्य लम्भकम्[8] ॥ ४ ॥

इन्द्रा॑य॒ वृष॑णं॒ मदं॒ पव॑स्व वि॒श्वद॑र्शतः। स॒हस्र॑यामा पथि॒कृद्वि॒चक्ष॒णः ॥ ५ ॥

इन्द्रा॑य। वृष॑णम्। मद॑म्। पव॑स्व। वि॒श्वऽद॑र्शतः। स॒हस्र॑ऽयामा। प॒थि॒ऽकृत्। वि॒ऽच॒क्ष॒णः ॥५॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[1]. † जातः मूको. ३-३. नास्ति वि[1]. † सोमस्येव वि[2] अ[1]. ‡ मन्देषु मूको. ¶ बिर्ति मूको. ४-४. य वि[1]. ५. परितः वि[2] अ[1]. ६. दीप्ति॰ वि[1]. ७. भर वि[3]. ८. ॰कः वि[1].

वेङ्कट० [1]इन्द्राय वर्षितारम् मदम् पवस्व सर्वस्य† दर्शनीयः बहुमार्गः‡ पथिकृत् विद्रष्टा[1] ॥ ५ ॥

[2]इति सप्तमाष्टक पञ्चमाध्याये नवमो वर्गः[2] ॥

अस्मभ्यं गातुवित्तमो देवेभ्यो मधुमत्तमः । सहस्रं याहि पथिभिः कनिक्रदत् ॥६॥

अस्मभ्यम् । गातुवित्ऽतमः । देवेभ्यः । मधुमत्ऽतमः । सहस्रम् । याहि । पथिऽभिः । कनिक्रदत् ॥

वेङ्कट० अस्मभ्यम् मार्गस्य [3]अत्यन्तं लम्भकः[3] देवेभ्यः च स्वादुतमः बहुभिः पथिभिः याहि शब्दं कुर्वन् ॥ ६ ॥

पवस्व देववीतय इन्दो धाराभिरोजसा । आ कलशं मधुमान्त्सोम नः सदः ॥७॥

पवस्व । देवऽवीतये । इन्दो इति । धाराभिः । ओजसा । आ । कलशम् । मधुऽमान् । सोम । नः । सदः ॥

वेङ्कट० पवस्व देवानां भक्षणाय इन्दो! [4]धाराभिः बलेन । आ सीद च कलशम् रसवान् सोम! अस्मदीयम्[4] ॥ ७ ॥

तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः । त्वां देवासो अमृताय कं पपुः ॥ ८ ॥

तव । द्रप्साः । उदऽप्रुतः । इन्द्रम् । मदाय । ववृधुः । त्वाम् । देवासः । अमृताय । कम् । पपुः ॥ ८ ॥

वेङ्कट० [5]तव †द्रप्साः उदकं† प्रति गच्छन्तः इन्द्रम् मदार्थं वर्धयन्ति । त्वाम् देवाः अमरार्थम् सुखकरम् पिबन्ति‡[5] ॥ ८ ॥

आ नः सुतास इन्दवः पुनाना धावता रयिम् । वृष्टिद्यावो रीत्यापः स्वर्विदः ॥९॥

आ । नः । सुतासः । इन्दवः । पुनानाः । धावत । रयिम् । वृष्टिऽद्यावः । रीतिऽआपः । स्वःऽविदः ॥९॥

वेङ्कट० [4]आ गमयत अस्मभ्यं हे सुताः! इन्दवः[4] पूयमानाः यूयम् रयिम् । वृष्टिमती द्यौः यैः [6]क्रियते रीत्यप्का च पृथिवी[6] ते तथोक्ताः । द्वितीयमामन्त्रितम् । सर्वज्ञाः ॥ ९ ॥

सोमः पुनान ऊर्मिणाव्यो वारं वि धावति । अग्रे वाचः पवमानः कनिक्रदत् ।१०।

सोमः । पुनानः । ऊर्मिणा । अव्यः । वारम् । वि । धावति । अग्रे । वाचः । पवमानः । कनिक्रदत् ॥

वेङ्कट० सोमः पूयमानः धारया पवित्रम् वि धावति अग्रे स्तोत्रस्य पूयमानः शब्दं कुर्वन् ॥ १० ॥

[2]इति सप्तमाष्टके पञ्चमाध्याये दशमो वर्गः[2] ॥

धीभिर्हिन्वन्ति वाजिनं वने क्रीळन्तमत्यविम् । अभि त्रिपृष्ठं मतयः समस्वरन् ॥११॥

---

१-१. नास्ति अ[1]. † मदयितारं वि[2]. ‡ सर्वत्र वि[2]. $ °मार्गं वि[2]. २ २. नास्ति मूको. ३-३. °त्यन्तल° मूको ४-४. नास्ति वि[1]. ५-५. नास्ति वि[1]. †-† °प्सा उद° मूको. ‡ पिबति मूको. ६-६. क्रियतेरित्यपि का च पृथिवी मूको.

धीभिः । हिन्वन्ति । वाजिनम् । वने । क्रीळन्तम् । अतिऽअविम् ।
अभि । त्रिऽपृष्ठम् । मतयः । सम् । अस्वरन् ॥ ११ ॥

**वेङ्कट०** अङ्गुलीभिः प्रेरयन्ति वाजिनम् उदके क्रीडन्तम् अतिक्रान्तपवित्रम्[1]। अभि सम् स्वरन्ति स्तुतयः त्रिपृष्ठम्, यः[2] स्पृशति त्रीणि पात्राणि सवनानि वेति ॥ ११ ॥

असर्जि कलशाँ अभि मीळ्हे सप्तिर्न वाजयुः । पुनानो वाचं जनयन्नसिष्यदत् ॥ १२ ॥

असर्जि । कलशान् । अभि । मीळ्हे । सप्तिः । न । वाजऽयुः । पुनानः । वाचम् । जनयन् । असिस्यदत् ॥

**वेङ्कट०** सृज्यते कलशेषु सङ्ग्रामे अश्वः इव अन्नमिच्छन् पूयमानः वाचम् जनयन्[3] स्यन्दते ॥ १२ ॥

पवते हर्यतो हरिरति ह्वरांसि रंह्या । अभ्यर्षन्त्स्तोतृभ्यो वीरवद्यशः ॥ १३ ॥

पवते । हर्यतः । हरिः । अति । ह्वरांसि । रंह्या । अभिऽअर्षन् । स्तोतृऽभ्यः । वीरऽवत् । यशः ॥ १३ ॥

**वेङ्कट०** पवते स्पृहणीयः हरितवर्णः अति गच्छति कुटिलानि वेगेन अभिगमयन् स्तोतृभ्यः [4]पुत्रयुक्तम् यशः[4] ॥ १३ ॥

अया पवस्व देवयुर्मधोर्धारा असृक्षत । रेभन् पवित्रं पर्येषि विश्वतः ॥ १४ ॥

अया । पवस्व । देवऽयुः । मधोः । धाराः । असृक्षत । रेभन् । पवित्रम् । परि । एषि । विश्वतः ॥ १४ ॥

**वेङ्कट०** [4]अनया धारया पवस्व[4] देवकामः । सोमस्य धाराः सृज्यन्ते । शब्दं कुर्वन् पवित्रम् परि गच्छसि[5] सर्वतः ॥ १४ ॥

[6]इति सप्तमाष्टके पञ्चमाध्याये एकादशो वर्गः[6] ॥

## [ १०७ ]

[1]सप्तर्षय ऋषयः ( १ भारद्वाजो बार्हस्पत्यः, २ कश्यपो मारीचः, ३ गोतमो राहूगणः, ४ भौमोऽत्रिः, ५ विश्वामित्रो गाथिनः, ६ जमदग्निर्भार्गवः, ७ मैत्रावरुणिर्वसिष्ठः ) पवमानः सोमो देवता । प्रगाथाः ( = १,४,६,८,९,१०,१२,१४,१७ बृहत्यः, २,५,७,११,१३,१५,१८ सतोबृहत्यः ) तृतीया षोडशी च द्विपदा विराट्, १९-२६ प्रगाथाः ( =विषमा बृहत्यः, समाः सतोबृहत्यः ) ।[1]

परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वाँ यो नर्यो अप्स्व१न्तरा सुषाव सोममद्रिभिः ॥ १ ॥

---

१. 'क्रान्तमतिक्रान्तपवि' मूको. २. य वि[1] अ[1]. ३. जनवत् वि[1] अ[1]; जनयम्म वि[2]. ४-४. नास्ति वि[1]. ५. °च्छति वि[1] अ[1]. ६-६. नास्ति मूको.

परि । इतः । सिञ्चत । सुतम् । सोमः । यः । उत्ऽतमम् । हविः ।
दधन्वान् । यः । नर्यः । अप्ऽसु । अन्तः । आ । सुसाव । सोमम् । अद्रिऽभिः ॥ १ ॥

वेङ्कट० सप्तर्षयः । इतः परि सिञ्चत अभिषुतम् । यः सोमः भवति उत्तमम् हविः, यः च मनुष्यहितः वसतीवरीषु अन्तरिक्षे वा गच्छन् भवति, तम् सोमम् ग्रावभिः सुषाव अध्वर्युः, तं परिषिञ्चतेति ॥ १ ॥

नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिंतरः ।
सुते चित् त्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ २ ॥

नूनम् । पुनानः । अविऽभिः । परि । स्रव । अदब्धः । सुरभिम्ऽतरः ।
सुते । चित् । त्वा । अप्ऽसु । मदामः । अन्धसा । श्रीणन्तः । गोभिः । उत्ऽतरम् ॥ २ ॥

वेङ्कट० इदानीम् पूयमानः पवित्रैः परि स्रव अहिंसितः अत्यन्तं [1]सुगन्धिः । अभिषुते[1] सति त्वाम् अप्सु संसृष्टं स्तुमः सक्तुभिः गव्यैश्च श्रीणन्तः उद्गततरम् ॥ २ ॥

परि सुवानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ ३ ॥

परि । सुवानः । चक्षसे । देवऽमादनः । क्रतुः । इन्दुः । विऽचक्षणः ॥ ३ ॥

वेङ्कट० परि स्रवति सूयमानः दर्शनाय देवानां तर्पयिता कर्ता इन्दुः विद्रष्टा । सेयं द्विपदेति ॥ ३ ॥

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ ४ ॥

पुनानः । सोम । धारया । अपः । वसानः । अर्षसि ।
आ । रत्नऽधाः । योनिम् । ऋतस्य । सीदसि । उत्सः । देव । हिरण्ययः ॥ ४ ॥

वेङ्कट० पूयमानः[2] त्वम् सोम! धारया उदकानि आच्छादयन् गच्छसि । आ सीदसि[3] रत्नानां दाता [4]यज्ञस्य स्थानम्[4] । उत्सः त्वम् देव! हिरण्मयः हिरण्योत्पत्तिस्थानमिति ॥ ४ ॥

दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धूतो विचक्षणः ॥ ५ ॥

दुहानः । ऊधः । दिव्यम् । मधु । प्रियम् । प्रत्नम् । सधऽस्थम् । आ । असदत् ।
आऽपृच्छ्यम् । धरुणम् । वाजी । अर्षति । नृऽभिः । धूतः । विऽचक्षणः ॥ ५ ॥

---

१-१ सुगन्धिरहितपु ते वि[२] अ[१]; °न्धिभिरभिषुते वि[१]. २. सोम पूय° वि[२] अ[१]. ३. ··· मूको.
४-४. °स्यास्थान° वि[१].

**वेङ्कट०** दिवि भवम् ऊधः प्रियम् मधु दुहानः[1] प्रत्नम् स्थानम् आ सीदति अन्तरिक्षम्। आप्रष्टव्यम् धारकम् यजमानम् अन्नवान् अभिगच्छति सोमः ऋत्विग्भिः अभिषुतः विद्रष्टा[2] ॥ ५ ॥

[3]इति सप्तमाष्टके पञ्चमाध्याये द्वादशो वर्गः[3] ॥

पुनानः सोम जागृविरव्यो वारे परि प्रियः ।
त्वं विप्रो अभवोऽङ्गिरस्तमो मध्वा यज्ञं मिमिक्ष नः ॥ ६ ॥

पुनानः । सोम । जागृविः । अव्यः । वारे । परि । प्रियः ।
त्वम् । विप्रः । अभवः । अङ्गिरःऽतमः । मध्वा । यज्ञम् । मिमिक्ष । नः ॥ ६ ॥

**वेङ्कट०** पुनानः सोम! जागरूकः अवेर्वाले परि क्षरसि प्रियः। त्वम् अङ्गिरसां [4]वरिष्ठो नेता[4] पितॄणाम् अभवः मेधावी। स त्वम् अस्मदीयम् यज्ञम् आत्मीयेन मधुना मिमिक्ष इति। मिहिः सेचनकर्मा ॥ ६ ॥

सोमो मीढ्वान् पवते गातुवित्तम ऋषिर्विप्रो विचक्षणः ।
त्वं कविरभवो देववीतम आ सूर्यं रोहयो दिवि ॥ ७ ॥

सोमः । मीढ्वान् । पवते । गातुवित्ऽतमः । ऋषिः । विप्रः । विऽचक्षणः ।
त्वम् । कविः । अभवः । देवऽवीतमः । आ । सूर्यम् । रोहयः । दिवि ॥ ७ ॥

**वेङ्कट०** सोमः सेक्ता पवते अत्यन्तं[5] मार्गस्य लम्भकः ऋषिः मेधावी विद्रष्टा। त्वम् कविः अभवः। अत्यन्तं देवकामः। सूर्यम् अपि आ रोहयः दिवि इति ॥ ७ ॥

सोम उ षुवाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ८ ॥

सोमः । ऊँ इति । सुवानः । सोतृऽभिः । अधि । स्नुऽभिः । अवीनाम् ।
अश्वयाऽइव । हरिता । याति । धारया । मन्द्रया । याति । धारया ॥ ८ ॥

**वेङ्कट०** सोमः सूयमानः सोतृभिः अधि[6] याति अवीनाम् समुच्छ्रितैः पवित्रैः बडबया[7] इव हरितवर्णया धारया मन्द्रया[8] इति ॥ ८ ॥

अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते ॥ ९ ॥

---

१. महानः वि[1]; दुहान वि[2] अ[1]. २. °ष्टेति अ[1]. ३-३. नास्ति मूको. ४-४. °ष्ठान्नेता वि[2] अ[1]. ५. अत्यन्तं वि[1]; अत्यन्त वि[2] अ[1]. ६. अभि वि[2] अ[1]. ७. बन्वबया वि[1]. ८. मन्त्रया वि[2] अ[1]; मन्दया वि[1].

[१]अनूपे । गोऽमान् । गोभिः । अक्षारिति[१] । सोमः । दुग्धाभिः । अक्षारिति[१] ।
समुद्रम् । न । सम्ऽवरणानि । अग्मन् । मन्दी । मदाय । तोशते ॥ ९ ॥

**वेङ्कट०** अनूपे निम्ने देशे गोमान् सोमः गोभिः क्षरति आत्मनो मिश्रणार्थम् दुग्धाभिः सह। समुद्रम् इव उदकानि द्रोणकलशं संवरणीयानि अन्धांसि गच्छन्ति। मदकरः मदार्थं सोमः अभिषूयते। तोशतिर्वधकर्मेति ॥ ९ ॥

आ सोम सुवानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दधिषे ॥ १० ॥

आ । सोम । सुवानः । अद्रिऽभिः । तिरः । वाराणि । अव्यया ।
जनः । न । पुरि । चम्वोः । विशत् । हरिः । सदः । वनेषु । दधिषे ॥ १० ॥

**वेङ्कट०** आ पवसे सोम! सूयमानः त्वं ग्रावभिः तिरस्-कुर्वन् पवित्रम्। हरितवर्णः सोमः चम्वोः विशति जनः इव पुरे। स त्वम् सदः काष्ठेषु करोषि पात्रेष्विति[२] ॥ १० ॥

[३]इति सप्तमाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[३] ॥

स मामृजे तिरो अण्वानि मेष्यो मीळ्हे सप्तिर्न वाजयुः ।
अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ ११ ॥

सः । ममृजे । तिरः । अण्वानि । मेष्यः । मीळ्हे । सप्तिः । न । वाजऽयुः ।
अनुऽमाद्यः । पवमानः । मनीषिऽभिः । सोमः । विप्रेभिः । ऋक्वऽभिः ॥ ११ ॥

**वेङ्कट०** सः मृज्यते[४] तिरस्-कुर्वन् अणूनि[५] रोमाणि अवेः सङ्ग्रामे इव अश्वः [६]अन्नकामः अनुमोदनीयः[६] पवमानः मनीषिभिः सोमः मेधाविभिः स्तुतिमद्भिः[७] ॥ ११ ॥

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ १२ ॥

प्र । सोम । देवऽवीतये । सिन्धुः । न । पिप्ये । अर्णसा ।
अंशोः । पयसा । मदिरः । न । जागृविः । अच्छ । कोशम् । मधुऽश्चुतम् ॥ १२ ॥

**वेङ्कट०** प्र प्यायसे सोम! देवपानाय, यथा सिन्धुः उदकेन प्रप्यायते। स त्वं मदकरः [८]सुरादिः इव[८] [९]जागरणशीलः अंशो.[९] पयसा रसेन आगच्छति कलशम् मधुनः च्युतमिति[१०] ॥ १२ ॥

---

१. यदिह एकतरत्र वोभयत्र वा कैश्चिदभियुक्तैः क्षियते रूपमिदमिष्टम् ( तु. या ५,३ ) तत् पदपाठविरोधात् प्रकरणविरोधाच्चोपेक्ष्यम्। २. चात्रेष्विति वि[१] अ[१]. ३-३. नास्ति मूको. ४. ममृते वि[१]; ममृज्यतेति वि[२]; ममृज्यते अ[१]. ५. अधूनि वि[२] अ[१]. ६-६. °काम नुमादनीयः वि[१]; °कामोनुमोदनीयं वि[२] अ[१]. ७. स्तुतिभिः वि[२] अ[१]. ८. सुराभिरिव वि[२] अ[१]; सुरामिरिव वि[१]. ९-९. शीलो शः वि[१]; °शीलो जो वि[२] अ[१]. १०. च्युत° वि[१].

आ हर्यतो अर्जुने अत्के अव्यत प्रियः सूनुर्न मर्ज्यः ।
तमीं हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ १३ ॥

आ । हर्यतः । अर्जुने । अत्के । अव्यत । प्रियः । सूनुः । न । मर्ज्यः ।
तम् । ईम् । हिन्वन्ति । अपसः । यथा । रथम् । नदीषु । आ । गभस्त्योः ॥ १३ ॥

वेङ्कट० आ अव्यत अर्जुनरूपे पवित्रे स्पृहणीयः प्रियः सूनुः इव मार्जनीयः । तम् इमं प्रेरयन्ति, वेगवन्तः[1] [2]इव रथम्[2] सङ्ग्रामेषु, वसतीवरीषु बाह्वोः अङ्गुलय इति ॥ १३ ॥

अभि सोमास आयवः पवन्ते मद्यं मदम् ।
समुद्रस्याधि विष्टपि मनीषिणो मत्सरासः स्वर्विदः ॥ १४ ॥

अभि । सोमासः । आयवः । पवन्ते । मद्यम् । मदम् ।
समुद्रस्य । अधि । विष्टपि । मनीषिणः । मत्सरासः । स्वःऽविदः ॥ १४ ॥

वेङ्कट० अभि पवन्ते[3] निर्गमयन्ति सोमाः गमनशीलाः मदकरम् मदम् अन्तरिक्षस्य अधि विष्टपि उच्छ्रिते पवित्रे मनस ईशितारः मदकराः[4] स्वर्गस्य लम्भकाः[5] ॥ १४ ॥

तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।
अर्षन्मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥ १५ ॥

तरत् । समुद्रम् । पवमानः । ऊर्मिणा । राजा । देवः । ऋतम् । बृहत् ।
अर्षत् । मित्रस्य । वरुणस्य । धर्मणा । प्र । हिन्वानः । ऋतम् । बृहत् ॥ १५ ॥

वेङ्कट० तरति समुद्रम् पवमानः धारया राजा[6] देवः अत्यन्तं सत्यभूतः[7] । प्र[8] गच्छति मित्रावरुणयोः धारणार्थं[9] प्रेर्यमाणः[10] ॥ १५ ॥

[11]इति सप्तमाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[11] ॥

नृभिर्येमानो हर्यतो विचक्षणो राजा देवः समुद्रियः ॥ १६ ॥

नृऽभिः । येमानः । हर्यतः । विऽचक्षणः । राजा । देवः । समुद्रियः ॥ १६ ॥

वेङ्कट० ऋत्विग्भिः नियम्यमानः स्पृहणीयः विद्रष्टा राजा देवः अन्तरिक्षभवः[12] । उत्तरत्र सम्बन्धः ॥ १६ ॥

---

१. येमगवन्त वि[२] अ[१]. २-२. इवान्तरम् वि[२] अ[१]; इव रथ वि[१]. ३. पवन्ति वि[२] अ[१]. ४. करां वि[२] अ[१]; करा वि[१]. ५. लम्भका वि[२] अ[१]; लम्भकाः वि[१]. ६. नास्ति वि[२] अ[१]. ७. °भूत वि[२] अ[१]. ८. नास्ति मूको. ९. धारमाणं वि[२]; धार्यमाण अ[१]. १०. °माणं वि[२] अ[१]. ११-११. नास्ति मूको. १२. °रिक्ष इव अ[१].

इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥ १७ ॥

इन्द्राय । पवते । मदः । सोमः । मरुत्वते । सुतः ।
सहस्रऽधारः । अति । अव्यम् । अर्षति । तम् । ईम् इति । मृजन्ति । आयवः ॥ १७ ॥

**वेङ्कट०** इन्द्राय पवते मदकरः[1] सोमः मरुत्वते अभिषुतः[2] । सहस्रधारः अति गच्छति पवित्रम् । तम् इमं शोधयन्ति ऋत्विजः ॥ १७ ॥

पुनानश्चमू जनयन्मतिं कविः सोमो देवेषु रण्यति ।
अपो वसानः परि गोभिरुत्तरः सीदन्वनेष्वव्यत ॥ १८ ॥

पुनानः । चमू इति । जनयन् । मतिम् । कविः । सोमः । देवेषु । रण्यति ।
अपः । वसानः । परि । गोभिः । उत्ऽतरः । सीदन् । वनेषु । अव्यत ॥ १८ ॥

**वेङ्कट०** अभिपूयमाणः चम्वोः[3] जनयन् स्तुतिम् मेधावी सोमः देवेषु रमते । उदकानि आच्छादयन् परि वीयते[4] गोविकारैः उद्गततरः[5] सीदन् पात्रेषु ॥ १८ ॥

तवाहं सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥ १९ ॥

तव । अहम् । सोम । ररण । सख्ये । इन्दो इति । दिवेऽदिवे ।
पुरूणि । बभ्रो इति । नि । चरन्ति । माम् । अव । परिऽधीन् । अति । तान् । इहि ॥ १९ ॥

**वेङ्कट०** तव अहम् सोम ! रमे[6] सख्ये इन्दो ! अन्वहम् । बहूनि रक्षांसि बभ्रुवर्ण ![7] माम्[8] नि अव चरन्ति । तान् परिधीन् त्वम् अति गच्छेति[9] ॥ १९ ॥

उताहं नक्तमुत सोम ते दिवा सख्याय बभ्र ऊधनि ।
घृणा तपन्तमति सूर्यं परः शकुना इव पप्तिम ॥ २० ॥

उत । अहम् । नक्तम् । उत । सोम । ते । दिवा । सख्याय । बभ्रो इति । ऊधनि ।
घृणा । तपन्तम् । अति । सूर्यम् । परः । शकुनाःऽइव । पप्तिम ॥ २० ॥

**वेङ्कट०** अपि च अहोरात्रयोः तव सख्यार्थम् अहम् [10]बभ्रो !† रमे[10] ऊधनि समीपे । ते वयं दीप्त्या

---

१. °कर मूको. २. अभिषुन वि[1]; °तः सोम वि[1]. ३. चमोः वि[1]; चद्वोः वि[1]; चद्वयोः अ[1]. ४. पीयते मूको. ५. उद्गीयन गततरः वि[2] अ[2]; उद् गतरः वि[1]. ६. मे वि[1]; रमते अ[1]. ७. बभुप्रर्ण वि[1]; वभूवर्ण अ[1]. ८. मा मूको. ९. गच्छति वि[2] अ[1]. १०-१०. नास्ति अ[1]. † त्रुटितम् वि[1].

तपन्तम् [1]अति पतेम[1] परस्तात्[2] स्थितम् सूर्यम् शकुनाः इव तत्र स्थितं त्वां प्राप्तुमिति ॥ २० ॥

[3]सप्तमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[3] ॥

मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ २१ ॥

मृज्यमानः । सुऽहस्त्य । समुद्रे । वाचम् । इन्वसि ।
रयिम् । पिशङ्गम् । बहुलम् । पुरुऽस्पृहम् । पवमान । अभि । अर्षसि ॥ २१ ॥

**वेङ्कट०** शोध्यमानः त्वं शोभनाङ्गुलिक![4] अन्तरिक्षे वाचम् प्रेरयसि। रयिम् हिरण्यैः पिशङ्गवर्णम् बहुलम् बहुभिः स्पृहणीयम् पवमान! स्तोतुः अभि क्षरसि ॥ २१ ॥

मृजानो वारे पवमानो अव्यये वृषाव चक्रदो वने ।
देवानां सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ २२ ॥

मृजानः । वारे । पवमानः । अव्यये । वृषा । अव । चक्रदः । वने ।
देवानाम् । सोम । पवमान । निःऽकृतम् । गोभिः । अञ्जानः । अर्षसि ॥ २२ ॥

**वेङ्कट०** मृज्यमानः[5] पूयमानः पवित्रे वर्षिता अव क्रन्दसि उदके। देवानाम् सोम! पवमान! निष्कृतम् स्थानम् गव्यैः अज्यमानः गच्छसि ॥ २२ ॥

पवस्व वाजसातयेऽभि विश्वानि काव्या ।
त्वं समुद्रं प्रथमो वि धारयो देवेभ्यः सोम मत्सरः ॥ २३ ॥

पवस्व । वाजऽसातये । अभि । विश्वानि । काव्या ।
त्वम् । समुद्रम् । प्रथमः । वि । धारयः । देवेभ्यः । सोम । मत्सरः ॥ २३ ॥

**वेङ्कट०** पवस्व अन्नलाभाय[6] विश्वानि स्तोत्राणि अभि। त्वम् अन्तरिक्षम् प्रथमः वि धारयसि देवानाम् सोम! मदकरः[7] ॥ २३ ॥

स तू पवस्व परि पार्थिवं रजो दिव्या च सोम धर्मभिः ।
त्वां विप्रासो मतिभिर्विचक्षण शुभ्रं हिन्वन्ति धीतिभिः ॥ २४ ॥

सः । तु । पवस्व । परि । पार्थिवम् । रजः । दिव्या । च । सोम । धर्मऽभिः ।
त्वाम् । विप्रासः । मतिऽभिः । विऽचक्षण । शुभ्रम् । हिन्वन्ति । धीतिऽभिः ॥ २४ ॥

---

१-१. अतीवते वि[२] अ[१]. २. त्रुटितम् वि[२]; नास्ति अ[१]. ३-३. नास्ति मूको. ४. शोधनाङ्गु° वि[१]. ५. मृज्यमाः वि[१]; मृज्यमान वि[२] अ[१]. ६. अन्नलाभानि वि[२] अ[१]; °लाभायि वि[१]. ७. °कर मूको.

वेङ्कट० सः क्षिप्रम् पवस्व पार्थिवम् लोकं प्रति दिव्यानि अपि च सोम! रजांसि धारकैः ऊर्मिभिः । त्वाम् विप्राः स्तुतिभिः विद्वष्टः! शुभ्रम् प्रेरयन्ति अङ्गुलिभिश्च[1] ॥ २४ ॥

पवमाना असृक्षत पवित्रमति धारया ।
मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥ २५ ॥

पवमानाः । असृक्षत । पवित्रम् । अति । धारया ।
मरुत्वन्तः । मत्सराः । इन्द्रियाः । हयाः । मेधाम् । अभि । प्रयांसि । च ॥ २५ ॥

वेङ्कट० पवमानाः पवित्रम् अति सृज्यन्ते धारया मरुद्भिर्युक्ताः मदकराः इन्द्रजुष्टाः[2] गन्तारः मेधाम् अन्नानि च[3] प्रति उभयं कर्तुमिति ॥ २५ ॥

अपो वसानः परि कोशमर्षतीन्दुर्हियानः सोतृभिः ।
जनयञ्ज्योतिर्मन्दना अवीवशद् गाः कृण्वानो न निर्णिजम् ॥ २६ ॥

अपः । वसानः । परि । कोशम् । अर्षति । इन्दुः । हियानः । सोतृऽभिः ।
जनयन् । ज्योतिः । मन्दनाः । अवीवशत् । गाः । कृण्वानः । न । निःऽनिजम् ॥ २६ ॥

वेङ्कट० उदकानि आच्छादयन् कलशं प्रति गच्छति इन्दुः प्रेर्यमाणः सोतृभिः[4] । सोऽयं दीप्तिम् जनयन् स्तुतीः[5] कामयते गव्यानि कृण्वन् आत्मनो रूपम् । न इति पूरणमिति ॥ २६ ॥

[6]इति सप्तमाष्टके पञ्चमाध्याये षोडशो वर्गः[6] ॥

[ १०८ ]

[7]१-२ गौरिवीतिः शाक्त्यः, ३,१४-१६ शक्तिर्वासिष्ठः, ४-५ ऊरुराङ्गिरसः, ६-७ ऋजिश्वा भारद्वाजः, ८-९ ऊर्ध्वसद्मा आङ्गिरसः, १०-११ कृतयशा आङ्गिरसः, १२-१३ ऋणञ्चयो राजर्षिर्ऋषिः । पवमानः सोमो देवता । काकुभः प्रगाथः ( = विषमाः ककुभः, समाः सतोबृहत्यः ), १३ यवमध्या गायत्री छन्दः[8] ।

पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महि द्युक्षतमो मदः ॥ १ ॥

पवस्व । मधुमत्ऽतमः । इन्द्राय । सोम । क्रतुवित्ऽतमः । मदः । महि । द्युक्षऽतमः । मदः ॥ १ ॥

वेङ्कट० कात्यायनः[9]—“ ‘पवस्व षोळश’ गौरिवीतिर्द्व्यृचं[8] शक्तिरेकामूरुर्ऋजिश्वोर्ध्वसद्मा[9] कृतयशा ऋणञ्चय इत्यृषयो द्व्यृचास्तिस्रः शक्तिः” ( ऋअ २,९,१०८ ) इति ।

---

१. अङ्गुलीभि° वि[1]. २. °ष्टा मदकरो वि[1]. ३. नास्ति वि[2] अ[1]. ४. नास्ति वि[1]. ५. स्तुतिः मूको. ६-६. नास्ति मूको. ७. °वन मूको. ८. गौरिवीतिविज वि[2] अ[1]; गौरिवीतिद्वृतः वि[1]. ९ शक्तिएकामूरुऋजिश्वोर्ध्वं° वि[2] अ[1]; °कामुरुजिश्वोर्ध्व वि[1].

इन्द्राय सोम! अत्यन्तं प्रज्ञाया लम्भकः मदकरः महान् अत्यन्तदीप्ततमः ॥ १ ॥

यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीता स्वर्विदः ।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ २ ॥

यस्य । ते । पीत्वा । वृषभः । वृषऽयते । अस्य । पीता । स्वःऽविदः ।
सः । सुऽप्रकेतः । अभि । अक्रमीत् । इषः । अच्छ । वाजम् । न । एतशः ॥ २ ॥

**वेङ्कट०** यं[1] त्वाम् पीत्वा इन्द्रः वृषभ[2] इवाचरति । अस्य [3]तव पाने[3] [4]कामानां वर्षकः[4] सर्वविदः[5] सः सुप्रज्ञः इन्द्रः अभि क्रामति शत्रूणामन्नानि, अश्वः यथा अभिगच्छति सङ्ग्राममिति ॥ २ ॥

त्वं ह्यङ्ग दैव्या पवमान जनिमानि द्युमत्तमः । अमृतत्वाय घोषयः ॥ ३ ॥

त्वम् । हि । अङ्ग । दैव्या । पवमान । जनिमानि । द्युमत्ऽतमः । अमृतऽत्वाय । घोषयः ॥ ३ ॥

**वेङ्कट०** त्वम् हि क्षिप्रम् देवसम्बन्धीनि जनिमानि । देवानित्यर्थः । पवमान! दीप्ततमः[6] तेषाम् अमृतत्वाय शब्दायसे[7] ॥ ३ ॥

येना नवग्वो दध्यङ्ङपोर्णुते येन विप्रास आपिरे ।
देवानां सुम्ने अमृतस्य चारुणो येन श्रवांस्यानशुः ॥ ४ ॥

येन । नवऽग्वः । दध्यङ् । अपऽऊर्णुते । येन । विप्रासः । आपिरे ।
देवानाम् । सुम्ने । अमृतस्य । चारुणः । येन । श्रवांसि । आनशुः ॥ ४ ॥

**वेङ्कट०** येन सोमेन नवग्वः अङ्गिराः दध्यङ् पणिभिरपहृतानां गवां द्वारम् अपोर्णुते । येन च तन्मुखाः सर्वेऽङ्गिरसः [8]तैरपहृता गा आप्नुवन्†[8] । देवानाम् सुखे यज्ञेन सञ्जाते सति उदकस्य कल्याणस्य सम्बन्धीनि, येन च अन्नानि आनशुः यजमानाः । पूर्वत्र सम्बन्धः ॥ ४ ॥

एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः । क्रीळन्नूर्मिरपामिव ॥५॥

एषः । स्यः । धारया । सुतः । अव्यः । वारेभिः । पवते । मदिन्ऽतमः । क्रीळन् । ऊर्मिः । अपाम्ऽइव ॥५॥

**वेङ्कट०** एषः धारया अभिषुतः पवित्रात् पवते मादयितृतमः[9] क्रीळन्[10] अपाम् इव ऊर्मिः ॥ ५ ॥

[11]इति सप्तमाष्टके पञ्चमाध्याये सप्तदशो वर्गः[11] ॥

---

१. तं वि[2] अ[1]. २ वृष वि[1] अ[1]; वृषषभ वि[1]. ३-३. तप वाते वि[2] अ[1]; तव पाते वि[1]. ४-४. स्वमार्थ मूको. ५ सर्वतः वि[2] अ[1]. ६. दीप्तः वि[2] अ[1]. ७. °ते सह वि[2]; °त स अ[1]. ८-८. °तानामप्सु च वि[2] अ[1]. † अप्नुवन् वि[1]. ९. मदयि° वि[2] अ[1]. १०. क्रीडन् वि[2] अ[1]. ११-११. नास्ति मूको.

य उस्रिया अप्या अन्तरश्मनो निर्गा अकृन्तदोजसा ।
अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ॥ ६ ॥

यः । उस्रियाः । अप्याः । अन्तः । अश्मनः । निः । गाः । अकृन्तत् । ओजसा ।
अभि । व्रजम् । तत्निषे । गव्यम् । अश्व्यम् । वर्मीऽइव । धृष्णो इति । आ । रुज ॥ ६ ॥

वेङ्कट० [1]यः उत्सरणशीलाः[1] अन्तरिक्षस्थिताः[2] अन्तः मेघाद् असुरैरपहृत्य निहिताः निः अकृन्तत् बलेन गाः, स त्वम् असुरैरपहृतम् [3]गव्यम् अश्व्यम्[3] च व्रजम् अभि तत्निषे परिभवसि। स त्वं कवची इव शूरः धृष्णो! आ रुज असुरान् ॥ ६ ॥

आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं रजस्तुरम् । वनक्रक्षमुदप्रुतम् ॥ ७ ॥

आ । सोत । परि । सिञ्चत । अश्वम् । न । स्तोमम् । अप्ऽतुरम् । रजःऽतुरम् ।
वनऽक्रक्षम् । उदऽप्रुतम् ॥ ७ ॥

वेङ्कट० अभिषुणुत[4] सोमम् [5]परि सिञ्चत[5] अश्वम् इव स्तोतव्यम् अपां तेजसां च प्रेरकम् उदकानां कर्षकम् उदके प्लवमानमिति ॥ ७ ॥

सहस्रधारं वृषभं पयोवृधं प्रियं देवाय जन्मने ।
ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥ ८ ॥

सहस्रऽधारम् । वृषभम् । पयःऽवृधम् । प्रियम् । देवाय । जन्मने ।
ऋतेन । यः । ऋतऽजातः । विऽववृधे । राजा । देवः । ऋतम् । बृहत् ॥ ८ ॥

वेङ्कट० सहस्रधारम् वर्षकम्[6] उदकानां वर्धकम् प्रियम् देवजातेः उदकेन यः उदकाज्जातः विवर्धते राजा देवः सत्यभूतः महान्, तम् आ सोत इति ॥ ८ ॥

अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुः । वि कोशं मध्यमं युव ॥ ९ ॥

अभि । द्युम्नम् । बृहत् । यशः । इषः । पते । दिदीहि । देव । देवऽयुः । वि । कोशम् । मध्यमम् । युव ॥

वेङ्कट० अभि प्रयच्छ द्योतमानम् महद् अन्नम् हे अन्नस्य पते! देव! देवकामः त्वम् वि गमय च अन्तरिक्ष्यं मेघम् ॥ ९ ॥

आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
वृष्टिं दिवः पवस्व रीतिमपां जिन्वा गविष्टये धियः ॥ १० ॥

---

१-१. यदुत्सरण वि[2] अ[1]; यत्सरण वि[1]. २. °रिक्षास्था वि[1]. ३-३. गव्यश्व्यम वि[1]; गव्यमर्यं यं वि[2] अ[1]. ४. अभिषिणुच वि[2] अ[1] ५-५. परिचर सिञ्चत्र वि[1]; परि च सिञ्चत वि[2] अ[1]. ६. वृषभम् वि[1].

आ । वच्यस्व । सुऽदक्ष । चम्वोः । सुतः । विशाम् । वह्निः । न । विश्पतिः ।
वृष्टिम् । दिवः । पवस्व । रीतिम् । अपाम् । जिन्व । गोऽइष्टये । धियः ॥ १० ॥

**वेङ्कट०** आ पवस्व सुबल! फलकयोः अभिषुतः विशाम् इव वोढा पतिः राजा । वृष्यमाणाम् अपाम् रीतिम् दिवः पवस्व । पूरय यजमानाय कर्माणि ॥ १० ॥

[१]इति सप्तमाष्टके पञ्चमाध्याये अष्टादशो वर्गः[१] ॥

एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवो दुहुः । विश्वा वसूनि बिभ्रतम् ॥११॥

एतम् । ऊँ इति । त्यम् । मदऽच्युतम् । सहस्रऽधारम् । वृषभम् । दिवः । दुहुः । विश्वा । वसूनि । बिभ्रतम् ॥

**वेङ्कट०** एतम् इमम् मदस्य प्रेरकम् बहुधारम् वृषभम् ऋत्विजः ( तु. तै ६,२,११,४ ) दुहन्ति सर्वाणि धनानि धारयन्तम् ॥ ११ ॥

वृषा वि जज्ञे जनयन्नमर्त्यः प्रतपञ्ज्योतिषा तमः ।
स सुष्टुतः कविभिर्निर्णिजं दधे त्रिधात्वस्य दंससा ॥ १२ ॥

वृषा । वि । जज्ञे । जनयन् । अमर्त्यः । प्रऽतपन् । ज्योतिषा । तमः ।
सः । सुऽस्तुतः । कविऽभिः । निःऽनिजम् । दधे । त्रिऽधातु । अस्य । दंससा ॥ १२ ॥

**वेङ्कट०** वृषा वि जायते जनयन् ज्योतिः अमर्त्यः प्रतपन् ज्योतिषा तमः । सः सुष्टुतः मेधाविभिः धारयति मिश्रणं गव्यम् । त्रिधातु कर्म यज्ञाख्यम् अस्य कर्मणा[२] ध्रियते ॥ १२ ॥

स सुन्वे यो वसूनां यो रायामानेता य इळानाम् । सोमो यः सुक्षितीनाम् ॥१३॥

सः । सुन्वे । यः । वसूनाम् । यः । रायाम् । आऽनेता । यः । इळानाम् । सोमः । यः । सुऽक्षितीनाम् ॥

**वेङ्कट०** सः अभिषुतः, यः[३] वसूनाम् यः च गवाम् आनेता[४], यः च अन्नानाम् सोमः, यः च सुनिवासानां गृहाणाम् आनेतेति[५] ॥ १३ ॥

यस्य न इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥ १४ ॥

यस्य । नः । इन्द्रः । पिबात् । यस्य । मरुतः । यस्य । वा । अर्यमणा । भगः ।
आ । येन । मित्रावरुणा । करामहे । आ । इन्द्रम् । अवसे । महे ॥ १४ ॥

---

१-१. नास्ति मूको. २. कर्माणि वि[२] अ[१]. ३. नास्ति वि[२] अ[१]. ४. आनेत वि[२]; आनयिता अ[२]; आनयता वि[१]. ५. आनयेतेति वि[२]; आनयतेति अ[१].

वेङ्कट० यस्य अस्माकम् इन्द्रः पिबति, यस्य च मरुतः, यस्य च अर्यमणा सह भगः, येन वा[1] मित्रावरुणौ अभिमुखीकुर्महे, येन वा[2] इन्द्रम् महते रक्षणाय आ करामहे इति ॥ १४ ॥

इन्द्राय सोम पातवे नृभिर्यतः स्वायुधो मदिन्तमः । पवस्व मधुमत्तमः ॥ १५ ॥

इन्द्राय । सोम । पातवे । नृऽभिः । यतः । सुऽआयुधः । मदिन्ऽतमः । पवस्व । मधुमत्ऽतमः ।१५।

वेङ्कट० इन्द्रस्य सोम![3] पानाय ऋत्विग्भिः यतः शोभनायुधः मादयितृतमः पवस्व मधुमत्तमः ॥१५॥

इन्द्रस्य हार्दि सोमधानमा विश समुद्रमिव सिन्धवः ।
जुष्टो मित्राय वरुणाय वायवे दिवो विष्टम्भ उत्तमः ॥ १६ ॥

इन्द्रस्य । हार्दि । सोमऽधानम् । आ । विश । समुद्रमऽइव । सिन्धवः ।
जुष्टः । मित्राय । वरुणाय । वायवे । दिवः । विष्टम्भः । उत्ऽतमः ॥ १६ ॥

वेङ्कट० इन्द्रस्य[1] हृदयम् आ विश सोम![4] सोमनिधानम् समुद्रम् इव सिन्धवः पर्याप्तः मित्रादिभ्यः द्युलोकस्य धारकः त्वम् उत्तमः[5] ॥ १६ ॥

[6]इति सप्तमाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[6] ॥

## [ १०९ ]

[6]अग्नयो धिष्ण्या ऐश्वरय ऋषयः । पवमानः सोमो देवता । द्विपदा विराट् छन्दः[6] ।

परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥

परि । प्र । धन्व । इन्द्राय । सोम । स्वादुः । मित्राय । पूष्णे । भगाय ॥ १ ॥

वेङ्कट० शौनकः[7]—"धिष्ण्या नामाग्नयः[8] सूक्तं 'परी(रि' इ)त्यैश्वरयो विदुः" इति । तदिदं द्वैपदम्[9] । परि प्र क्षर इन्द्रादिभ्यः स्वादुरसः त्वमिति ॥ १ ॥

इन्द्रस्ते सोम सुतस्य पेयाः क्रत्वे दक्षाय विश्वे च देवाः ॥ २ ॥

इन्द्रः । ते । सोम । सुतस्य । पेयाः । क्रत्वे । दक्षाय । विश्वे । च । देवाः ॥ २ ॥

वेङ्कट० तव सुतम् प्रज्ञानाय बलाय च अमी पिबन्तीति ॥ २ ॥

एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ ३ ॥

---

१. या वि[2] अ[1]. २. नास्ति वि[2] अ[1]. ३. नास्ति वि[1]. ४. नास्ति वि[1]. ५. उत्तमं वि[2] अ[1]; अत्तमः वि[1]. ६-६. नास्ति मूको. ७. ...शौन° वि[2] अ[1]. ८-८. नामग्न° वि[1]. ९. तु. ऋअ २,९,१०९.

एव । अमृताय । महे । क्षयाय । सः । शुक्रः । अर्ष । दिव्यः । पीयूषः ॥ ३ ॥

**वेङ्कट०** एवम् अमृतत्वाय महते च निवासाय सः त्वं दीप्तः पवस्व [1]दिव्यः पातव्यः[1] ॥ ३ ॥

पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ४ ॥

पवस्व । सोम । महान् । समुद्रः । पिता । देवानाम् । विश्वा । अभि । धाम ॥ ४ ॥

**वेङ्कट०** पवस्व सोम! महान् त्वं समुन्दनः पिता देवानाम् विश्वानि[2] शरीराणि अभि ॥ ४ ॥

शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजायै ॥ ५ ॥

शुक्रः । पवस्व । देवेभ्यः । सोम । दिवे । पृथिव्यै । शम् । च । प्रऽजायै ॥ ५ ॥

**वेङ्कट०** दीप्तः पवस्व देवार्थम् सोम! द्यावापृथिव्योः [3]प्रजाभ्यश्च शम् च[3] कुर्विति[4] ॥ ५ ॥

दिवो धर्तासि शुक्रः पीयूषः सत्ये विधर्मन् वाजी पवस्व ॥ ६ ॥

दिवः । धर्ता । असि । शुक्रः । पीयूषः । सत्ये । विऽधर्मन् । वाजी । पवस्व ॥ ६ ॥

**वेङ्कट०** दिवः[5] धारकः असि [6]दीप्तः पातव्यः[6] । स त्वं सत्यभूते अस्मिन् विधार्मिणि यज्ञे वाजी पवस्व ॥ ६ ॥

पवस्व सोम द्युम्नी सुधारो महामवीनामनु पूर्व्यः ॥ ७ ॥

पवस्व । सोम । द्युम्नी । सुऽधारः । महाम् । अवीनाम् । अनु । पूर्व्यः ॥ ७ ॥

**वेङ्कट०** पवस्व सोम! अन्नवान् सुधारः महताम् अवीनाम् रोम्णां सकाशाद् अनुक्रमेण प्रत्नः ॥ ७ ॥

नृभिर्येमानो जज्ञानः पूतः क्षरद्विश्वानि मन्द्रः स्वर्वित् ॥ ८ ॥

नृऽभिः । येमानः । जज्ञानः । पूतः । क्षरत् । विश्वानि । मन्द्रः । स्वःऽवित् ॥ ८ ॥

**वेङ्कट०** ऋत्विग्भिः[7] नियम्यमानः जायमानः पूतः क्षरति विश्वानि धनानि मोदमानः[8] सर्वज्ञः ॥ ८ ॥

इन्दुः पुनानः प्रजामुराणः करद्विश्वानि द्रविणानि नः ॥ ९ ॥

इन्दुः । पुनानः । प्रऽजाम् । उराणः । करत् । विश्वानि । द्रविणानि । नः ॥ ९ ॥

**वेङ्कट०** इन्दुः[9] पूयमानः प्रजाम् उरुकुर्वाणः करोतु[10] विश्वानि च द्रविणानि अस्माकम् ॥ ९ ॥

---

१-१ दिव्य पातव्य वि[१] अ[१]. २. विश्वा वि° वि[२] अ[२]. ३-३. °भ्यश्चं च वि[२]; ४. कुर्वंते वि[२] अ[१]; कुर्वंति वि[१]. ५. नास्ति अ[१] ६-६. °स पातव्य वि[२] अ[१]. ७. न ऋत्वि° वि[२] अ[१]. ८. मोदनः मूको. ९. नास्ति वि[१] अ[१]. १०. करोति वि[१] अ[१].

पव॑स्व सोम॒ क्रत्वे॒ दक्षा॒याश्वो॒ न नि॒क्तो वा॒जी धना॑य ॥ १० ॥

पव॑स्व । सो॒म॒ । क्रत्वे॑ । दक्षा॑य । अश्वः॑ । न । नि॒क्तः । वा॒जी । धना॑य ॥ १० ॥

वेङ्कट० पवस्व सोम! प्रज्ञानाय बलाय अश्वः इव अद्भिर्निर्णिक्तः[1] वेगवान् धनार्थम् च ॥ १० ॥

[2]इति सप्तमाष्टके पञ्चमाध्याये विंशो वर्गः[2] ॥

तं ते॑ सो॒तारो॒ रसं॒ मदा॑य पु॒नन्ति॒ सोमं॑ म॒हे द्यु॒म्नाय॑ ॥ ११ ॥

तम् । ते॒ । सो॒तारः॑ । रस॑म् । मदा॑य । पु॒नन्ति॑ । सोम॑म् । म॒हे । द्यु॒म्नाय॑ ॥ ११ ॥

वेङ्कट० [3]तम् तव रसम् सोतारः पुनन्ति मदार्थम् । तदेवोक्तम्—पुनन्ति† सोमम् महते अन्नायेति[3] ॥ ११ ॥

शिशुं॑ जज्ञा॒नं हरिं॑ मृजन्ति प॒वित्रे॒ सोमं॑ दे॒वेभ्य॒ इन्दु॑म् ॥ १२ ॥

शिशु॑म् । ज॒ज्ञा॒नम् । हरि॑म् । मृ॒ज॒न्ति॒ । प॒वित्रे॑ । सोम॑म् । दे॒वेभ्यः॑ । इन्दु॑म् ॥ १२ ॥

वेङ्कट० [4]हरितवर्णम् मृजन्ति पवित्रे सोमम् देवार्थम्† दीप्तम्[4] ॥ १२ ॥

इन्दुः॑ पविष्ट॒ चारु॒र्मदा॑याॅपामु॒पस्थे॑ क॒विर्भगा॑य ॥ १३ ॥

इन्दुः॑ । प॒वि॒ष्ट॒ । चारुः॑ । मदा॑य । अ॒पाम् । उ॒पऽस्थे॑ । क॒विः । भगा॑य ॥ १३ ॥

वेङ्कट० [5]इन्दुः पवते चारुः† मदार्थम् अपाम् उपस्थानेऽन्तरिक्षे कविः धनार्थम् च[5] ॥ १३ ॥

बिभ॑र्ति॒ चार्विन्द्र॑स्य॒ नाम॒ येन॒ विश्वा॑नि वृ॒त्रा ज॒घान॑ ॥ १४ ॥

बिभ॑र्ति । चारु॑ । इन्द्र॑स्य । नाम॑ । येन॑ । विश्वा॑नि । वृ॒त्रा । ज॒घान॑ ॥ १४ ॥

वेङ्कट० धारयति कल्याणम् इन्द्रस्य शरीरम्, येन शरीरेण[6] विश्वानि[7] वृत्राणि हन्ति ॥ १४ ॥

पिब॑न्त्यस्य॒ विश्वे॑ दे॒वासो॒ गोभिः॑ श्री॒तस्य॒ नृभिः॑ सु॒तस्य॑ ॥ १५ ॥

पिब॑न्ति । अ॒स्य॒ । विश्वे॑ । दे॒वासः॑ । गोभिः॑ । श्री॒तस्य॑ । नृऽभिः॑ । सु॒तस्य॑ ॥ १५ ॥

वेङ्कट० पिबन्ति अमुम्[8] सर्वे देवाः गव्यैः श्रितम् ऋत्विग्भिः सुतम् ॥ १५ ॥

प्र सु॑वा॒नो अ॑क्षाः स॒हस्र॑धारस्ति॒रः प॒वित्रं॒ वि वार॒मव्य॑म् ॥ १६ ॥

प्र । सु॒वा॒नः । अ॒क्षा॒रिति॑ । स॒हस्र॑ऽधारः । ति॒रः । प॒वित्र॑म् । वि । वार॑म् । अव्य॑म् ॥ १६ ॥

---

१. °र्निष्ट्तो वि[2]; °र्निष्ठितो अ[1]; °र्निर्णिक्तो वि[1]. २-२. नास्ति मूको. ३-३. नास्ति वि[1]. † पुनक्ति मूको. ४-४. नास्ति वि[1]. † देवार्थे वि[1] अ[1]. ५-५. नास्ति वि[1]. † चारू मूको. ६. नास्ति वि[2] अ[1]. ७. °नि धनानि वि[1], ८. अमुत् वि[2]; मस्य अ[1]; अमु वि[1].

**वेङ्कट०** प्र वि क्षरति सूयमानः बहुधारः तिरस्-कुर्वन् पवित्रम् ॥ १६ ॥

स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ १७ ॥

सः । वाजी । अक्षारिति । सहस्रऽरेताः । अतऽभिः । मृजानः । गोभिः । श्रीणानः ॥ १७ ॥

**वेङ्कट०** सः वाजी क्षरति बहुरेतस्कः वसतीवरीभिः मृज्यमानः गव्यैः श्रियमाणः ॥ १७ ॥

प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥ १८ ॥

प्र । सोम । याहि । इन्द्रस्य । कुक्षा । नृऽभिः । येमानः । अद्रिऽभिः । सुतः ॥ १८ ॥

**वेङ्कट०** प्र याहि सोम! कुक्षौ इन्द्रस्य नृभिः नियम्यमानः ग्रावभिः अभिषुतः ॥ १८ ॥

असर्जि वाजी तिरः पवित्रमिन्द्राय सोमः सहस्रधारः ॥ १९ ॥

असर्जि । वाजी । तिरः । पवित्रम् । इन्द्राय । सोमः । सहस्रऽधारः ॥ १९ ॥

**वेङ्कट०** सृज्यते वाजी तिरः पवित्रम् इन्द्राय सोमः बहुधारः ॥ १९ ॥

अञ्जन्त्येनं मध्वो रसेनेन्द्राय वृष्ण इन्दुं मदाय ॥ २० ॥

अञ्जन्ति । एनम् । मध्वः । रसेन । इन्द्राय । वृष्णे । इन्दुम् । मदाय ॥ २० ॥

**वेङ्कट०** अञ्जन्ति एनम् सोमं मधुनः रसेन गव्येन इन्द्रार्थमिति[1] ॥ २० ॥

देवेभ्यस्त्वा वृथा पाजसेऽपो वसानं हरिं मृजन्ति ॥ २१ ॥

देवेभ्यः । त्वा । वृथा । पाजसे । अपः । वसानम् । हरिम् । मृजन्ति ॥ २१ ॥

**वेङ्कट०** देवानाम् त्वाम्[2] बलार्थम् अनायासेन[3] उदकानि आच्छादयन्तम् हरिम् मृजन्ति ॥ २१ ॥

इन्दुरिन्द्राय तोशते नि तोशते श्रीणन्नुग्रो रिणन्नपः ॥ २२ ॥

इन्दुः । इन्द्राय । तोशते । नि । तोशते । श्रीणन् । उग्रः । रिणन् । अपः ॥ २२ ॥

**वेङ्कट०** इन्दुः इन्द्रार्थम् हन्यते[4] नि हन्यते च श्रियमाणो गव्यैः उग्रः प्रेरयन् उदकानीति ॥ २२ ॥

[5]इति सप्तमाष्टके पञ्चमाध्याये एकत्रिंशो वर्गः[5] ॥

[११०]

[5]त्र्यरुणस्त्रैवृष्णः त्रसदस्युः पौरुकुत्स्यश्च ऋषी । पवमानः सोमो देवता । आद्यास्तिस्रः पिपीलिकमध्या अनुष्टुभः, अन्त्यास्तिस्रो विराजः, शिष्टा ऊर्ध्वबृहत्यः[5] ।

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणया न ईयसे ॥१॥

---

१. °ति विशेषः अ॰.　२. त्वा वि॰.　३. अस्माकमना° वि॰.　४. निहन्यते वि॰.
५-५ नास्ति मूको.

परि । ऊँ इति । सु । प्र । धन्व । वाजऽसातये । परि । वृत्राणि । सक्षणिः ।
द्विषः । तरध्यै । ऋणऽयाः । नः । ईयसे ॥ १ ॥

**वेङ्कट०** त्र्यरुणत्रसदस्यू[1] । परि प्र[2] गच्छ सुष्ठु अन्नलाभाय । परि गच्छ शत्रून् सहनशीलः । तदेवोक्तम्—द्विषः तर्तुम्[3] ऋणानां यापयिता त्वम् अस्माकम् परिगच्छसीति ॥ १ ॥

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।
वाजाँ अभि पवमान प्र गाहसे ॥ २ ॥

अनु । हि । त्वा । सुतम् । सोम । मदामसि । महे । समर्यऽराज्ये ।
वाजान् । अभि । पवमान । प्र । गाहसे ॥ २ ॥

**वेङ्कट०** हे सोम! सुतम् त्वाम् वयम् अनु हि स्तुमः । स त्वं महति समर्यराज्ये[4] समनुष्यं त्वदीयं[5] राज्यम् अनुपालयितुं शत्रुबलानि पवमान! [6]अभि प्र गाहसे[6] इति ॥ २ ॥

अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
गोजीरया रंहमाणः पुरंध्या ॥ ३ ॥

अजीजनः । हि । पवमान । सूर्यम् । विऽधारे । शक्मना । पयः ।
गोऽजीरया । रंहमाणः । पुरम्ऽध्या ॥ ३ ॥

**वेङ्कट०** अजीजनः हि त्वम् पवमान! सूर्यम् पयसो विधारके अन्तरिक्षे बलेन स्तोतॄणां प्रेरितपशुकेन प्रज्ञानेन[7] युक्तः वेगं कुर्वन्निति ॥ ३ ॥

अजीजनो अमृत मर्त्येष्वाँ ऋतस्य धर्मन्नमृतस्य चारुणः ।
सदासरो वाजमच्छा सनिष्यदत् ॥ ४ ॥

अजीजनः । अमृत । मर्त्येषु । आ । ऋतस्य । धर्मन् । अमृतस्य । चारुणः ।
सदा । असरः । वाजम् । अच्छ । सनिस्यदत् ॥ ४ ॥

**वेङ्कट०** अजीजनः त्वम् अमृत! मर्त्येषु सूर्यम् उदकस्य धारके अमृतस्य कल्याणस्य अन्तरिक्षे । सदा च सरसि[8] सङ्ग्रामम् अभि भजन् ॥ ४ ॥

अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
शर्याभिर्न भरमाणो गभस्त्योः ॥ ५ ॥

---

१. त्रियरुण° वि[2] अ[1]. २. नास्ति वि[2]. ३. तत्तुम् वि[2] अ[1]. ४. समर्थराज्य वि[1]; सभरज्ये वि[2] अ[1]. ५. °यं यथा वि[1]. ६-६. अभिप्राणस वि[1]; अभिप्रयाइस वि[2] अ[1]. ७. प्रज्ञेन अ[1]. ८. नास्ति वि[1].

अभिऽअंभि । हि । श्रवसा । ततर्दिथ । उत्सम् । न । कम् । चित् । जनऽपानम् ।
अक्षितम् । शर्याभिः । न । भरमाणः । गभस्त्योः ॥ ५ ॥

वेङ्कट० अभि हि तृणवान्[1] असि अन्नार्थम् मेघम् उत्सम् इव कम् चन यस्मिन् जना उदकं पिबन्ति अक्षीणम् तम्, यथा बाह्वोः अङ्गुलीभिः[2] उदकं सम्भरन्[3] अभितृणत्ति कश्चिदिति[4] ॥ ५ ॥

आदीं के चित् पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
वारं न देवः सविता व्यूर्णुते ॥ ६ ॥

आत् । ईम् । के । चित् । पश्यमानासः । आप्यम् । वसुऽरुचः । दिव्याः । अभि । अनूषत ।
वारम् । न । देवः । सविता । वि । ऊर्णुते ॥ ६ ॥

वेङ्कट० अनन्तरम् एनम् के चित् पश्यन्तः बन्धुम् वसुरुचः नाम दिव्याः अभि अस्तुवन् । वारकम् अन्धकारम् देवः सविता न वि ऊर्णुते नापगमयति, तत एनम् अस्तुवन्निति ॥ ६ ॥

[5]इति सप्तमाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[5] ॥

त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियं दधुः ।
स त्वं नो वीर वीर्याय चोदय ॥ ७ ॥

त्वे इति । सोम । प्रथमाः । वृक्तऽबर्हिषः । महे । वाजाय । श्रवसे । धियम् । दधुः ।
सः । त्वम् । नः । वीर । वीर्याय । चोदय ॥ ७ ॥

वेङ्कट० त्वयि सोम! प्रत्नाः यजमानाः महते बलाय अन्नाय च बुद्धिम्[6] विन्यदधुः[7] । सः त्वम् अस्मानपि वीर! सङ्ग्रामे वीर्याय चोदय ॥ ७ ॥

दिवः पीयूषं पूर्व्यं यदुक्थ्यं महो गाहाद्दिव आ निरधुक्षत ।
इन्द्रमभि जायमानं समस्वरन् ॥ ८ ॥

दिवः । पीयूषम् । पूर्व्यम् । यत् । उक्थ्यम् । महः । गाहात् । दिवः । आ । निः । अधुक्षत ।
इन्द्रम् । अभि । जायमानम् । सम् । अस्वरन् ॥ ८ ॥

वेङ्कट० [8]दिवः पीयूषम्[8] प्रत्नम् यत् प्रशस्यम् तद् महतः [9]गहनात् दिवः[9] कवयः निः दुहन्ति । दुग्धम् इन्द्रम् प्रति जायमानम् सम् स्तुवन्तीति ॥ ८ ॥

---

१. तृणवान् वि[1]; तृणवान् वि[2] अ[1]. २. तु. निघ २,५; या ५,४. ३. संहर° वि[2] अ[1]. ४. किञ्चि° वि[2] अ[1]. ५-५. नास्ति मूको. ६. बन्धु वि[2]; बन्धुं अ[1]; बुधिं वि[1]. ७. न्यदधुः वि[1]. ८-८. नास्ति वि[2] अ[1]. ९-९. दहनादिव वि[2] अ[1]; दहनादिवः वि[1].

अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
यूथे न निःष्ठा वृषभो वि तिष्ठसे ॥ ९ ॥

अध । यत् । इमे इति । पवमान । रोदसी इति । इमा । च । विश्वा । भुवना । अभि । मज्मना ।
यूथे । न । निःऽस्थाः । वृषभः । वि । तिष्ठसे ॥ ९ ॥

**वेङ्कट०** सम्प्रति यत् पवमान! इमे द्यावापृथिव्यौ इमानि च विश्वानि भूतानि अभि तिष्ठसि बलेन । स त्वं तथा कुर्वन् यूथे इव निष्ठितः वृषभः तानि यूथानि भुवनानि वि तिष्ठसे ॥ ९ ॥

सोमः पुनानो अव्यये वारे शिशुर्न क्रीळन् पवमानो अक्षाः ।
सहस्रधारः शतवाज इन्दुः ॥ १० ॥

सोमः । पुनानः । अव्यये । वारे । शिशुः । न । क्रीळन् । पवमानः । अक्षारिति ।
सहस्रऽधारः । शतऽवाजः । इन्दुः ॥ १० ॥

**वेङ्कट०** सोमः पुनानः[1] पवित्रे शिशुः इव क्रीळन्[2] पवमानः क्षरति बहुधारः बहुबलः दीप्तः ॥ १० ॥

एष पुनानो मधुमाँ ऋतावेन्द्रायेन्दुः पवते स्वादुरूर्मिः । वाजसनिर्वरिवोविद्वयोधाः ॥ ११ ॥

एषः । पुनानः । मधुऽमान् । ऋतऽवा । इन्द्राय । इन्दुः । पवते । स्वादुः । ऊर्मिः ।
वाजऽसनिः । वरिवःऽवित् । वयःऽधाः ॥ ११ ॥

**वेङ्कट०** एषः पूयमानः मधुमान् यज्ञवान् इन्द्राय इन्दुः पवते स्वादुरसः ऊर्मिः धारासङ्घः अन्नस्य दाता धनस्य लम्भकः आयुषो दातेति ॥ ११ ॥

स पवस्व सहमानः पृतन्यून्त्सेधन् रक्षांस्यप दुर्गहाणि ।
स्वायुधः सासह्वान्त्सोम शत्रून् ॥ १२ ॥

सः । पवस्व । सहमानः । पृतन्यून् । सेधन् । रक्षांसि । अप । दुःऽगहानि ।
सुऽआयुधः । ससह्वान् । सोम । शत्रून् ॥ १२ ॥

**वेङ्कट०** सः[3] पवस्व अभिभवन् सङ्ग्रामकामान् अप सेधन् रक्षांसि दुर्गाणि दुर्बलैः [4]शोभनायुधः अभिभवन्[4] सोम! शत्रून् इति ॥ १२ ॥

[5]इति सप्तमाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[5] ॥

## [ १११ ]

[4]अनानतः पारुच्छेपिर्ऋषिः । पवमानः सोमो देवता । अत्यष्टिश्छन्दः[4] ।

अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति स्वयुग्वभिः सूरो न स्वयुग्वभिः ।

१. पूयमान वि[२] अ[१]. २ क्रीडन् वि[२] अ[१]. ३. नास्ति वि[२] अ[१]. ४-४. °वो हिभ° वि[२] अ[१]. ५-५. नास्ति मूको.

धारा सुतस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १ ॥

अया । रुचा । हरिण्या । पुनानः । विश्वा । द्वेषांसि । तरति । स्वयुग्वऽभिः । सूरः । न । स्वयुग्वऽभिः ।
धारा । सुतस्य । रोचते । पुनानः । अरुषः । हरिः ।
विश्वा । यत् । रूपा । परिऽयाति । ऋक्वऽभिः । सप्तऽआस्येभिः । ऋक्वऽभिः ॥ १ ॥

वेङ्कट० अनानतः पारुच्छेपिः । अनया धारया हरितवर्णया[1] पूयमानः सर्वाणि द्वेष्टॄणि[2] रक्षांसि तरति, स्वयं युक्तैः रश्मिभिः सूर्य इव तमांसि । धारा अभिषुतस्य रोचते । पूयमानो भवति आरोचमानः हरितवर्णः[3] । विश्वानि यः रूपाणि नक्षत्राणि[4] परिगच्छति रसाहरणशीलैः[5] सर्पणशीलास्यैः तेजोभिः ॥ १ ॥

त्वं त्यत् पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धीतिभिर्दमे ।
परावतो न साम तद् यत्रा रणन्ति धीतयः ।
त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ २ ॥

त्वम् । त्यत् । पणीनाम् । विदः । वसु । सम् । मातृऽभिः । मर्जयसि । स्वे । आ । दमे । ऋतस्य ।
धीतिऽभिः । दमे । पराऽवतः । न । साम । तत् । यत्र । रणन्ति । धीतयः ।
त्रिधातुऽभिः । अरुषीभिः । वयः । दधे । रोचमानः । वयः । दधे ॥ २ ॥

वेङ्कट० त्वम्[6] त्यत्[7] पणिभिरपहृतम् वसु गवात्मकम् अविदः । सम् च शोध्यते वसतीवरीभिः यज्ञस्य धात्रीभिः[8] स्वे दमे यज्ञे । दूरादिव[9] साम तव तत् श्रूयते इति घोषाभिप्रायम्, यस्मिन् शब्दे रमन्ते धर्तारः यजमानाः । सोऽयं सोमः त्रयाणां लोकानां धात्रीभिः आरोचमानाभिः दीप्तिभिः अन्नम् प्रयच्छति[10] रोचमानः[11] ॥ २ ॥

पूर्वामनु प्रदिशं याति चेकितत् सं रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो रथः ।
अग्मन्नुक्थानि पौंस्येन्द्रं जैत्राय हर्षयन् ।
वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ ३ ॥

पूर्वाम् । अनु । प्रऽदिशम् । याति । चेकितत् । सम् । रश्मिऽभिः । यतते । दर्शतः । रथः । दैव्यः । दर्शतः ।
रथः । अग्मन् । उक्थानि । पौंस्या । इन्द्रम् । जैत्राय । हर्षयन् ।
वज्रः । च । यत् । भवथः । अनपऽच्युता । समत्ऽसु । अनपऽच्युता ॥ ३ ॥

---

१. हरिवर्ण° वि[2] अ[1]. २. स्तोतॄणि वि[1] अ[1]; द्वेष्टॄनि वि[1]. ३. हरिवर्णो वि[2] अ[1]. ४. न पवित्राणि वि[1] अ[1]. ५. रसहरण° वि[1]. ६. नास्ति वि[2]. ७. नास्ति अ[1]; तत् वि[2]. ८. सत्रीभिः वि[2] अ[1]; °त्रीभिः वि[1]. ९. दूरमादिव मूको. १०. °तीत्यर्थः अ[1]. ११. नास्ति अ[1].

वेङ्कट० पूर्वाम् प्रदिशम् प्राचीम् अनु याति आनन् दिशम्। सम् गच्छते च सूर्यस्य रश्मिभिः दर्शनीयः तव रथः देवेषु भवः। गच्छन्ति उक्थानि पुंस्त्वावहानि इन्द्रम् जयार्थम् हर्षयन्ति। तथा[1] तस्य वज्रः च तमिन्द्रं गच्छति, यदा[2] सोम! त्वं च इन्द्रश्च भवथः[3] शत्रुभिः अनपच्युतौ सङ्ग्रामेष्विति ॥ ३ ॥

[4]इति सप्तमाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[4] ॥

## [ ११२ ]

[4]शिशुराङ्गिरस ऋषिः। पवमानः सोमो देवता। पङ्क्तिश्छन्दः[4]।

नानानं वा उं नो धियो वि व्रतानि जनानाम्।
तक्षा रिष्टं रुतं भिषग् ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ १ ॥

नानानम्। वै। ऊँ इति। नः। धियः। वि। व्रतानि। जनानाम्।
तक्षा। रिष्टम्। रुतम्। भिषक्। ब्रह्मा। सुन्वन्तम्। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव ॥

वेङ्कट० शिशुराङ्गिरसः। नानाजातीयकानि खलु अस्माकम् कर्माणि, तथा अन्येषामपि जनानाम् विविधानि भवन्ति। तक्षा रिष्टम् तक्षणम् इच्छति, रुतम्[5] भिषक्, सुन्वन्तम् ब्राह्मणः इति। परिस्रवतः सोमस्य अजामित्वाय मनसो विनोदनं कुर्वन्नाह — इन्द्राय इति ॥ १ ॥

जरतीभिरोषधीभिः पर्णेभिः शकुनानाम्।
कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥ २ ॥

जरतीऽभिः। ओषधीभिः। पर्णेभिः। शकुनानाम्।
कार्मारः।। अश्मऽभिः। द्युऽभिः। हिरण्यऽवन्तम्। इच्छति। इन्द्राय। इन्दो इति। परि। स्रव ॥

वेङ्कट० जीर्णाभिः[6] ओषधीभिः इषवः क्रियन्ते पर्णैश्च शकुनानाम् इषूणां पक्षभूतैः। कार्मारः[7] अयस्कारः शिलाभिः[8] दीप्ताभिः इषूणां तेजनार्थाभिः हिरण्यवन्तम् इच्छति। हिरण्यवतो ह्यपेक्षा इषुभिरिति ॥ २ ॥

कारुरहं ततो भिषगुपलप्रक्षिणी नना।
नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ॥ ३ ॥

कारुः। अहम्। ततः। भिषक्। उपलऽप्रक्षिणी। नना।
नानाऽधियः। वसुऽयवः। अनु। गाःऽइव। तस्थिम। इन्द्राय। इन्दो इति। परि। स्रव ॥३॥

---

१. यथा वि[1]. २. यथा वि[2] अ[1]. ३. भवथ मूको. ४-४. नास्ति मूको. ५. रिष्टम् वि[2] अ[1].
६. याभिः वि[2]; नास्ति अ[1]. ७. कर्मारः वि[2] अ[1]; कामारः वि[1]. ८. शिलाभिश्च वि[1].

**वेङ्कट०** यास्कः ( ६,५-६ )—"उपलप्रक्षिणी । उपलेषु प्रक्षिणोति । उपलप्रक्षेपिणी वा । ××× । 'कारुरहम्[१]'। कारुरहमस्मि । कर्ता स्तोमानाम् । 'ततो भिषक्[१]' : तत इति सन्ताननाम । पितुर्वा पुत्रस्य वा[२] । उपलप्रक्षिणी सक्तुकारिका । नना नमतेः । माता वा दुहिता वा । नानाधियो[३] नानाकर्माणः । वसूयवो[४] वसुकामाः । अन्वास्थिताः स्मो गाव इव लोकम्" इति ॥ ३ ॥

**अश्वो॑ वो॒ळ्हा॑ सु॒खं रथं॑ हस॒नामु॑पम॒न्त्रिणः॑ ।**
**शेपो॒ रोम॑ण्वन्तौ भे॒दौ वारिन्म॒ण्डूक॑ इच्छ॒तीन्द्रा॒येन्दो॒ परि॑ स्रव ॥ ४ ॥**

अश्वः॑ । वो॒ळ्हा । सु॒ऽखम् । रथ॑म् । ह॒स॒नाम् । उ॒प॒ऽम॒न्त्रिणः॑ ।
शेपः॑ । रोम॑ण्ऽवन्तौ । भे॒दौ । वाः । इत् । म॒ण्डूकः॑ । इ॒च्छ॒ति॒ । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व ॥

**वेङ्कट०** अश्वः [५]वहन् सुखम्[५] कल्याणम् रथम् इच्छति, हसनाम् वाचम् उपमन्त्रणवन्तो नर्मसचिवाः, शेपः इति स्पष्टम् ॥ ४ ॥

[६]इति सप्तमाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[६] ॥

## [ ११३ ]

[६]कश्यपो मारीच ऋषिः । पवमानः सोमो देवता । पङ्क्तिश्छन्दः[६] ।

**श॒र्य॒णाव॑ति॒ सोम॒मिन्द्रः॑ पिबतु वृत्र॒हा ।**
**बलं॒ दधा॑न आ॒त्मनि॑ करि॒ष्यन् वी॒र्यं॑ म॒हदिन्द्रा॒येन्दो॒ परि॑ स्रव ॥ १ ॥**

श॒र्य॒णाऽव॑ति । सोम॑म् । इन्द्रः॑ । पि॒ब॒तु॒ । वृ॒त्र॒ऽहा ।
बल॑म् । दधा॑नः । आ॒त्मनि॑ । क॒रि॒ष्यन् । वी॒र्य॑म् । म॒ह॒त् । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व ॥१॥

**वेङ्कट०** कश्यपः । 'शर्यणावद्[७] वै नाम कुरुक्षेत्रस्य जघनार्धे सरः' ( तु. जैब्रा ३,६४ ) तत्र सोमम् इन्द्रः पिबतु वृत्रहा । बलम् इति स्पष्टम् ॥ १ ॥

**आ प॑वस्व दिशां पत आर्जी॒कात् सो॑म मीढ्वः ।**
**ऋ॒त॒वा॒केन॑ स॒त्येन॑ श्र॒द्धया॒ तप॑सा सु॒त इन्द्रा॒येन्दो॒ परि॑ स्रव ॥ २ ॥**

आ । प॒व॒स्व॒ । दि॒शा॒म् । प॒ते॒ । आ॒र्जी॒कात् । सो॒म॒ । मी॒ढ्वः॒ ।
ऋ॒त॒ऽवा॒केन॑ । स॒त्येन॑ । श्र॒द्धया॑ । तप॑सा । सु॒तः । इन्द्रा॑य । इ॒न्दो॒ इति॑ । परि॑ । स्र॒व ॥ २ ॥

**वेङ्कट०** आ पवस्व हे दिशाम् पते! आर्जीकात्[८] ऋजोः अकुटिलात् पवित्रात्[९] सोम! सेक्तः! ऋतवाकेन ऋतस्य वचनेन सत्येन च । सत्यर्तयोः अल्पो भेदः । श्रद्धया तपसा च[१०] युक्तैर्दीक्षितैः अभिषुतः ॥ २ ॥

---

१-१. नास्ति वि[२] अ[१]. २. वा स भिषक् वि[२] अ[१]. ३. नास्ति वि[२] अ[१]. ४. नास्ति मूको. ५-५. वहरसु द्वारं वि[२] अ[१]; वहन् सुद्वाहं वि[१]. ६-६. नास्ति मूको. ७. °वर्धं वि[२] अ[१]. ८. माजाकोर् वि[१]; आजितात् वि अ[१] ९. °त्रान् वि[२] अ[१]. १०. नास्ति वि[२] अ[१].

पर्जन्यवृद्धं महिषं तं सूर्यस्य दुहिताभरत् ।
तं गन्धर्वाः प्रत्यगृभ्णन् तं सोमे रसमादधुरिन्द्रायेन्दो परि स्रव ॥ ३ ॥

पर्जन्यऽवृद्धम् । महिषम् । तम् । सूर्यस्य । दुहिता । आ । अभरत् ।
तम् । गन्धर्वाः । प्रति । अगृभ्णन् । तम् । सोमे । रसम् । आ । अदधुः । इन्द्राय । इन्दो इति । परि । स्रव ॥

वेङ्कट० पर्जन्यवृद्धम् महान्तम् तम् सूर्यस्य दुहिता हृतवती[1] । 'श्रद्धा वै सूर्यस्य दुहिता' ( माश १२, ७,३,११ ) इति वाजसनेयकम् । तम् दिव आह्रियमाणम् गन्धर्वाः प्रति-गृहीतवन्तः । प्रति-गृहीतं च तम् रसम् सोमे प्रत्यक्षेंऽशौ[2] आ अदधुः ॥ ३ ॥

ऋतं वदन्नृतद्युम्न सत्यं वदन्त्सत्यकर्मन् ।
श्रद्धां वदन्त्सोम राजन् धात्रा सोम परिष्कृत इन्द्रायेन्दो परि स्रव ॥ ४ ॥

ऋतम् । वदन् । ऋतऽद्युम्न । सत्यम् । वदन् । सत्यऽकर्मन् ।
श्रद्धाम् । वदन् । सोम । राजन् । धात्रा । सोम । परिऽकृतः । इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥

वेङ्कट० ऋतम् वदन् ऋतेन[3] द्योतमान! सत्यम् वदन् [4]सत्यकर्मन्! श्रद्धाम् यजमानानाम् आत्मनोऽपेक्षिताम् वदन्[4] सोम! राजन्! यजमानेन सोम! अलङ्कृतः ॥ ४ ॥

सत्यमुग्रस्य बृहतः सं स्रवन्ति संस्रवाः ।
सं यन्ति रसिनो रसाः पुनानो ब्रह्मणा हर इन्द्रायेन्दो परि स्रव ॥ ५ ॥

सत्यम्ऽउग्रस्य । बृहतः । सम् । स्रवन्ति । सम्ऽस्रवाः ।
सम् । यन्ति । रसिनः । रसाः । पुनानः । ब्रह्मणा । हरे । इन्द्राय । इन्दो इति । परि । स्रव ॥ ५ ॥

वेङ्कट० उद्गूर्णसत्यस्य[5] महतः सोमस्य सम् स्रवन्ति [6]संस्रवाः†, सम् यन्ति[6] च रसवतः[7] रसाः । पूयमानः ब्राह्मणेन मन्त्रेण[8] वा त्वं हरितवर्ण! इति ॥ ५ ॥

[9]इति सप्तमाष्टके पञ्चमाध्याये षड्विंशो वर्गः[9] ॥

यत्र ब्रह्मा पवमान छन्दस्यां वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परि स्रव ॥ ६ ॥

यत्र । ब्रह्मा । पवमान । छन्दस्याम् । वाचम् । वदन् ।
ग्राव्णा । सोमे । महीयते । सोमेन । आऽनन्दम् । जनयन् । इन्द्राय । इन्दो इति । परि । स्रव ॥

---

१. हृतवती वि[2] अ[1]. २. °क्षांशे अ[1]. ३. °तेन न वि[1]. ४-४. नास्ति वि[2]. ५. उद्गूर्णरूपस्य सत्यस्य अ[1]. ६-६. नास्ति वि[1]. † संस्रवा वि[2]; संस्रवं अ[1]. ७. रसावतो वि[1]; रसवेतो वि[3]; ररसवेगतो अ[1]. ८. नास्ति वि[2]. ९-९. नास्ति मूको.

**वेङ्कट०** यत्र ब्राह्मणः पवमान! छन्दसे हितां छन्दस्कृताम्[1] वाचम् वदन् अभिषवग्राव्णा युक्तः सोमे देवैः पूज्यते, सोमेन देवानाम् आनन्दम् [2]जनयन् तत्र[2] इन्द्राय इन्दो! परि स्रव इति ॥ ६ ॥

यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् ।
तस्मिन् मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥ ७ ॥

यत्र । ज्योतिः । अजस्रम् । यस्मिन् । लोके । स्वः । हितम् ।
तस्मिन् । माम् । धेहि । पवमान । अमृते । लोके । अक्षिते । इन्द्राय । इन्दो इति । परि । स्रव ॥

**वेङ्कट०** यत्र लोके अजस्रम् ज्योतिः, यस्मिन् च लोके स्वः आदित्याख्यं ज्योतिः निहितम्, तस्मिन् इति स्पष्टम् ॥ ७ ॥

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ८ ॥

यत्र । राजा । वैवस्वतः । यत्र । अवऽरोधनम् । दिवः ।
यत्र । अमूः । यह्वतीः । आपः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥

**वेङ्कट०** यत्र राजा भवति वैवस्वतः, यत्र च अवरुणद्धि आदित्यो भूतानि प्रवेशयति, यत्र च अमूः महत्यः आपः तिष्ठन्ति, तत्र इति ॥ ८ ॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ९ ॥

यत्र । अनुऽकामम् । चरणम् । त्रिऽनाके । त्रिऽदिवे । दिवः ।
लोकाः । यत्र । ज्योतिष्मन्तः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥९॥

**वेङ्कट०** यत्र कामानुगुणम्[3] चरणम् तृतीये नाके तृतीयस्यां दिवि आदित्यस्य, यत्र च लोकाः ज्योतिर्युक्ताः ॥ ९ ॥

यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ १० ॥

यत्र । कामाः । निऽकामाः । च । यत्र । ब्रध्नस्य । विष्टपम् ।
स्वधा । च । यत्र । तृप्तिः । च । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥

**वेङ्कट०** यत्र कामाः च निकामाः च विद्यन्ते, यत्र च महतः आदित्यस्य स्थानम्, अन्नम् च[4] यत्र तृप्तिः च इति ॥ १० ॥

---

१. नास्ति वि[1]. २-२. जनयन्तेत्र वि[1]; जनयन्नेत्र अ[1]; जनयन्तन्त्र वि[1]. ३. कामानुकारणं वि[1].
४. नास्ति वि[1].

यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ११ ॥

यत्र । आऽनन्दाः । च । मोदाः । च । मुदः । प्रऽमुदः । आसते ।
कामस्य । यत्र । आप्ताः । कामाः । तत्र । माम् । अमृतम् । कृधि । इन्द्राय । इन्दो इति । परि । स्रव ॥

**वेङ्कट०** आनन्दादीनां सूक्ष्मो भेदः। ते यत्र आसते, यत्र च कामस्य देवस्य सर्वे कामाः आप्ताः भवन्ति ॥ ११ ॥

[1]इति सप्तमाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[1] ॥

[ ११४ ]

[1]कश्यपो मारीच ऋषिः. पवमानः सोमो देवता । पङ्क्तिश्छन्दः[1] ॥

य इन्दोः पवमानस्यानु धामान्यक्रमीत् ।
तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इन्द्रायेन्दो परि स्रव ॥ १ ॥

यः । इन्दोः । पवमानस्य । अनु । धामानि । अक्रमीत् ।
तम् । आहुः । सुऽप्रजाः । इति । यः । ते । सोम । अविधत् । मनः । इन्द्राय । इन्दो इति । परि । स्रव ॥

**वेङ्कट०** यः इन्दोः पवमानस्य स्थानानि अनु क्रामति । तम् आहुः शोभनप्रजननोऽयम् इति । कल्याणजननमाहुः । यः ते सोम! करोति त्वदर्थम्[2] मनः, यद्वा[3] त्वदीयं मनः परिचरति[4] ॥ १ ॥

ऋषे मन्त्रकृतां स्तोमैः कश्यपोद्वर्धयन् गिरः ।
सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिन्द्रायेन्दो परि स्रव ॥ २ ॥

ऋषे । मन्त्रऽकृताम् । स्तोमैः । कश्यप । उत्ऽवर्धयन् । गिरः ।
सोमम् । नमस्य । राजानम् । यः । जज्ञे । वीरुधाम् । पतिः । इन्द्राय । इन्दो इति । परि । स्रव ॥२॥

**वेङ्कट०** ऋषे! कश्यप! मन्त्रकृताम् ऋषीणाम् स्तोमैः उपर्युपरि वर्धयन् वाचः स्तुतिरूपाः सोमम् पूजय राजानम्, यः जातः[5] पतिः वीरुधाम् ॥ २ ॥

सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः ।
देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इन्द्रायेन्दो परि स्रव ॥ ३ ॥

सप्त । दिशः । नानाऽसूर्याः । सप्त । होतारः । ऋत्विजः ।
देवाः । आदित्याः । ये । सप्त । तेभिः । सोम । अभि । रक्ष । नः । इन्द्राय । इन्दो इति । परि । स्रव ॥

---

१-१. नास्ति मूको. २. तदर्थं वि[१] अ[१]. ३. द्विः वि[१] अ[१]. ४. चरति वि[१]. ५. राज वि[२] अ[१].

**वेङ्कट०** सप्त दिशः भवन्ति । नानासूर्याः इति[1] ऋत्वभिप्रायमाहुः[2] । 'नानालिङ्गत्वाद् ऋतूनां नानासूर्यत्वम्' ( तैआ १,७,६ ) । सप्त च होतारः वषट्कर्तारः ऋत्विजः तथा देवाः अदितेः पुत्राः सप्त । 'अष्टौ पुत्रासो अदितेः' ( ऋ १०,७२,८ ) इत्यत्रोक्ताः । तैः सर्वैः सोम ! अस्मान् अभि रक्ष इति ॥ ३ ॥

यत् ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः ।
अरातीवा मा नस्तारीन्मो च नः किं चनाममदिन्द्रायेन्दो परि स्रव ॥ ४ ॥

यत् । ते । राजन् । शृतम् । हविः । तेन । सोम । अभि । रक्ष । नः ।
अरातिऽवा । मा । नः । तारीत् । मो इति । च । नः । किम् । चन । आममत् । इन्द्राय । इन्दो इति । परि । स्रव ॥ ४ ॥

**वेङ्कट०** यत् ते[3] राजन् ! सोम ! शृतम् हविः, तेन सोम ! अस्मान् अभि रक्ष । मा अस्मान् अरातित्ववान् शत्रुः वधीत् । मा एव अस्माकम् किञ्चिदपि अरातीवा हिंसीद् इति[4] ॥ ४ ॥

[5]इति सप्तमाष्टके पञ्चमाध्याये अष्टाविंशो वर्गः[5] ॥

—*—

इति ऋग्वेदे सभाष्ये नवमं मण्डलं समाप्तम् ॥



१. नास्ति वि[२] अ[१]. २. ऋत्विग्भिः प्राय° वि[२] अ[१]; ऋत्विभिः प्राय° वि[१]. ३. ते अ[१]. ४. इत्यभिप्रायः अ[१]. ५-५. नास्ति मूको.

अथ

# ऋग्वेदे सभाष्ये

## दशमं मण्डलम्

### [ १ ]

[1]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ १ ॥

अग्रे । बृहन् । उषसाम् । ऊर्ध्वः । अस्थात् । निःऽजगन्वान् । तमसः । ज्योतिषा । आ । अगात् ।
अग्निः । भानुना । रुशता । सुऽअङ्गः । आ । जातः । विश्वा । सद्मानि । अप्राः ॥ १ ॥

**वेङ्कट०** [2]'अत्र वाजसनेयकम्'[2]—"'अग्रे बृहन्नुषसामूर्ध्वो अस्थात्' इति । अग्रे ह्येष बृहन्नुषसामूर्ध्वस्तिष्ठति 'निर्जगन्वान् तमसो ज्योतिषागात्' इति [3]निर्जगन्वान् वा एष[3] [4]'रात्र्यै तमसोऽह्ना'[4] ज्योतिषेति 'अग्निर्भानुना रुशता स्वङ्गः' इति । अग्निर्वा एष भानुना रुशता स्वङ्गः 'आ जातो विश्वा सद्मान्यप्राः' इति । इमे[5] वै लोका विश्वा सद्मानि, तानेष जात आपूरयति' ( माश ६,७,३,१० ) इति ॥ १ ॥

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमांस्यक्तून् प्र मातृभ्यो अधि कनिक्रदद्गाः ॥ २ ॥

सः । जातः । गर्भः । असि । रोदस्योः । अग्ने । चारुः । विऽभृतः । ओषधीषु ।
चित्रः । शिशुः । परि । तमांसि । अक्तून् । प्र । मातृऽभ्यः । अधि । कनिक्रदत् । गाः ॥२॥

**वेङ्कट०** सः त्वं द्यावापृथिव्योः गर्भः[6] जातः भवसि अग्ने । कल्याणः विविधं ह्रियमाणः ओषधीषु । चित्रवर्णः शिशुः अग्निः[7] परि[8] भवति तमांसि रात्रीश्च । [9]'स चायम् ओषधीभ्यश्च शब्दं कुर्वन्'[9] प्र गच्छति[10] प्रजायत इति ॥ २ ॥

त्रिष्णुरित्था परममस्य विद्वाञ्जातो बृहन्नभि पाति तृतीयम् ।
आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चन्त्यत्र ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. नास्ति अ[1]. ३-३. °न्वेष वि[2] अ[1]; °न्वानेष वि[1]. ४-४. रात्रेस्तम मूको. ५. मे मूको. ६. °र्भे वि[2] अ[1]. ७. °ग्नि मूको. ८. पर वि[1]; परं वि[2] अ[1]. ९-९ नास्ति वि[1]. १०. यच्छ° मूको.

विष्णुः । इत्था । परमम् । अस्य । विद्वान् । जातः । बृहन् । अभि । पाति । तृतीयम् ।
आसा । यत् । अस्य । पयः । अक्रत । स्वम् । सऽचेतसः । अभि । अर्चन्ति । अत्र ॥ ३ ॥

**वेङ्कट०** विष्णुः अमुत्र उत्तमम्[1] अस्य अग्नेः[2] जानन् प्रादुर्भूतः महान् अभि रक्षति[3] तृतीयम् अङ्गं दिविष्ठम्[4] । आस्येन यदा अस्य अग्नेः स्वभूतम् उदकम् आत्मीयं कुर्वन्ति याचन्ते, तदानीम् एकमनसो[5] भूत्वा एनम् अभि-ष्टुवन्ति अस्मिन् लोके स्थिताः ॥ ३ ॥

अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः ।
ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता ॥ ४ ॥

अतः । ऊँ इति । त्वा । पितुऽभृतः । जनित्रीः । अन्नऽवृधम् । प्रति । चरन्ति । अन्नैः ।
ताः । ईम् । प्रति । एषि । पुनः । अन्यऽरूपाः । असि । त्वम् । विक्षु । मानुषीषु । होता ॥४॥

**वेङ्कट०** अस्मादेव[6] कारणात्[7] त्वाम्[8] अन्नस्य भर्त्र्यः[9] जनयित्र्यः परि चरन्ति अन्नस्य वर्धकम् अन्नैः । ताः [10]एनाः त्वम्[10] प्रति गच्छसि, पुनः अपि अन्यरूपाः[11] जीर्णाः दावभूतः । भवसि च त्वम् मानुषीषु विक्षु होता । 'देवो ह्येष सन् मर्त्येषु' ( तै ६,१,४,५-६ ) इति ब्राह्मणम् ॥ ४ ॥

होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशन्तम् ।
प्रत्यर्धिं देवस्यदेवस्य मह्ना श्रिया त्व१ग्निमतिथिं जनानाम् ॥ ५ ॥

होतारम् । चित्रऽरथम् । अध्वरस्य । यज्ञस्यऽयज्ञस्य । केतुम् । रुशन्तम् ।
प्रतिऽअर्धिम् । देवस्यऽदेवस्य । मह्ना । श्रिया । तु । अग्निम् । अतिथिम् । जनानाम् ॥ ५ ॥

**वेङ्कट०** अध्वरस्य होतारम् चित्ररथम् सर्वस्य यज्ञस्य पताकास्थानीयम्[12] श्वेतम् सर्वेषां देवानाम् अर्धं प्रति भवन्तम्[13] महत्त्वेन[14] । 'यत् सर्वेषामर्धमिन्द्रः[15] प्रति' ( तै ५,४,८,३ ) इति ब्राह्मणम् । श्रिया श्रयणीयम्[16] स्तुमः जनानाम् अतिथिम् अग्निम् । तु इति पूरणमिति ॥ ५ ॥

स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः ।
अरुषो जातः पद इळायाः पुरोहितो राजन् यक्षीह देवान् ॥ ६ ॥

सः । तु । वस्त्राणि । अध । पेशनानि । वसानः । अग्निः । नाभा । पृथिव्याः ।
अरुषः । जातः । पदे । इळायाः । पुरःऽहितः । राजन् । यक्षि । इह । देवान् ॥ ६ ॥

**वेङ्कट०** सः तु तेजांसि अपि च तेषां तेजसां कार्ष्ण्यशौक्ल्यादीनि [17]रूपाणि आच्छादयन् अग्निः[17]

---

१. °त्तम् मूको. २. अग्ने मूको. ३. °क्षर° मूको. ४. °ष्ठाम् वि[1]; °ष्टाम् अ[1]. ५. एव मन° वि[2] अ[1]. ६. अत्वादे° वि[2] अ[1]. ७. °णस्यां मूको. ८. नास्ति वि[2] अ[1]; त्वम् वि[1]. ९. हर्त्र्यो वि[2] अ[1]. १०-१०. एतदस्त्व वि[2] अ[1]; एनस्त्वां वि[1]. ११. °पां मूको. १२. वाकास्था° वि[1,2]; वाक° अ[1]. १३. °न्त मूको. १४. °त्वेन मूको. १५. °द्र वि[2]. १६. श्रियर्थं वि[2] अ[1]. १७-१७. °दय वि[2].

पृथिव्याः नाभौ[1] उत्तरवेद्याम् आरोचमानः जातः इडायाः[2] पदे[3] उत्तरनाभौ स त्वं पुरोनिहितः राजन्![4] [5]यज अस्मिन्[5] यज्ञे देवान् ॥ ६ ॥

**आ हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततन्थ ।**
**प्र याह्यच्छोशतो यविष्ठाथा वह सहस्येह देवान् ॥ ७ ॥**

आ । हि । द्यावापृथिवी इति । अग्ने । उभे इति । सदा । पुत्रः । न । मातरा । ततन्थ ।
प्र । याहि । अच्छ । उशतः । यविष्ठ । अथ । आ । वह । सहस्य । इह । देवान् ॥ ७ ॥

**वेङ्कट०** यथा पुत्रः[6] मातापितरौ क्षीणौ धनैः तनोति, तथा त्वम् द्यावापृथिवी आ ततन्थ उभे[7] सदा तेजोभिः । स त्वम् प्र याहि युवतम! कामयमानान् अस्मान् [8]अभि अग्रतश्च[8] सन् आ वह[9] [10]सहसः पुत्र![10] अत्र देवान् ॥ ७ ॥

[11]इति सप्तमाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः[11] ॥

[ २ ]

[11]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[11] ।

**पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।**
**ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १ ॥**

पिप्रीहि । देवान् । उशतः । यविष्ठ । विद्वान् । ऋतून् । ऋतुऽपते । यज । इह ।
ये । दैव्याः । ऋत्विजः । तेभिः । अग्ने । त्वम् । होतॄणाम् । असि । आऽयजिष्ठः ॥ १ ॥

**वेङ्कट०** प्रीणय देवान् कामयमानान् यविष्ठ! जानन् यागकालान् देवानाम् कालपते![12] यज तान् इह । ये देवेषु भवाः, 'अग्निर्होताश्विनाध्वर्युः' (मै १,९,१) इत्यत्र निदर्शिताः[13] ऋत्विजः, तैः[14] सह अग्ने! यज[15] । त्वम् होतॄणाम् [16]असि आयष्टृतमः[16] इति ॥ १ ॥

**वेषि होत्रमुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋतावा ।**
**स्वाहा वयं कृणवामा हवींषि देवो देवान् यजत्वग्निरर्हन् ॥ २ ॥**

वेषि । होत्रम् । उत । पोत्रम् । जनानाम् । मन्धाता । असि । द्रविणःऽदाः । ऋतऽवा ।
स्वाहा । वयम् । कृणवाम । हवींषि । देवः । देवान् । यजतु । अग्निः । अर्हन् ॥ २ ॥

---

१. नाभौं वि[2] अ[1]. २. इदाया वि[2] अ[1]. ३. सदे वि[2] अ[1]. ४. जानन् वि[2] अ[1]. ५-५. यदास्मि° वि[2] अ[1]; यरास्मि° वि[1]. ६. °त्रौ मूको. ७. उद्दे मूको. ८-८. °भ्यानग्र° वि[2] अ[1]; °भ्यगत्र° वि[1]. ९. पह वि[2] अ[1]. १०-१०. °सस्पु° वि[2] अ[1]; °सस्पु° अ[1]. ११-११. नास्ति मूको. १२. कापवक वि[2] अ[1]. १३. दार्शिताः वि[1]. १४. ते वि[2] अ[1]. १५. °जः वि[2] अ[1]. १६-१६. मन्यास्त्वृष्टृ° वि[1]; मन्यास्पष्टृ° अ[1].

वेङ्कट० कामयसि होत्रम् अपि च पोत्रम् यजमानार्थम्। मेधावी च भवसि धनप्रदाता सत्यवान्। हवींषि वयम् देवेभ्यः स्वाहा कुर्मः। तत्र देवः देवान् यजतु अग्निः यजनयोग्यः ॥ २ ॥

आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम्।
अग्निर्विद्वान्त्स यजात् सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति ॥ ३ ॥

आ। देवानाम्। अपि। पन्थाम्। अगन्म। यत्। शक्नवाम। तत्। अनु। प्रऽवोळ्हुम्।
अग्निः। विद्वान्। सः। यजात्। सः। इत्। ऊँ इति। होता। सः। अध्वरान्। सः। ऋतून्। कल्पयाति ॥

वेङ्कट० देवानाम् पन्थानम् येन देवान् प्राप्नोति, तमपि आ अगन्म। तत्र प्रविष्टा इत्यर्थः। यत् वयम् अनुष्ठानम् शक्नुमः, तत् अनुक्रमेण प्रवोढुम्[1]। अथ[2] सः [3]अग्निः विद्वान्[3] तं पन्थानं यजतु देवान्। सः एव[4] मनुष्याणाम् होता। सः एव यज्ञान् यज्ञकालांश्च[5] कल्पयतु[6] ॥ ३ ॥

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः।
अग्निष्टद्विश्वमा पृणाति विद्वान् येभिर्देवाँ ऋतुभिः कल्पयाति ॥ ४ ॥

यत्। वः। वयम्। प्रऽमिनाम। व्रतानि। विदुषाम्। देवाः। अविदुःऽतरासः।
अग्निः। तत्। विश्वम्। आ। पृणाति। विद्वान्। येभिः। देवान्। ऋतुऽभिः। कल्पयाति ॥४॥

वेङ्कट० यत् वः वयम् प्रहिंसितवन्तः कर्माणि जानताम् हे देवाः! [7]अत्यन्तमजानन्तः वयम्[7] भवत्सु जानत्सु नित्यनैमित्तिकानि विलोपितवन्तः[8]। अग्निः तत्र ऊनं सर्वम् आ पूरयतु जानन्[9] यैः देवान् कालैः यागयोग्यैः[10] कल्पयति ॥ ४ ॥

यत् पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः।
अग्निष्टद्धोता क्रतुविद्विजानन् यजिष्ठो देवाँ ऋतुशो यजाति ॥ ५ ॥

यत्। पाकऽत्रा। मनसा। दीनऽदक्षाः। न। यज्ञस्य। मन्वते। मर्त्यासः।
अग्निः। तत्। होता। क्रतुऽवित्। विऽजानन्। यजिष्ठः। देवान्। ऋतुऽशः। यजाति ॥ ५ ॥

वेङ्कट० [11]यत् दीनबलाः[11] मनुष्याः[12] मानुषेण पक्तव्येन[13] अल्पेन मनसा यज्ञस्य न जानन्ति, तत् अग्निः[14] होता [15]कर्म विजानन्[15] कर्मविद् यष्टृतमः देवान् स्वेस्वे काले यजतु[16] ॥ ५ ॥

विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान।
स आ यजस्व नृवतीरनु क्षाः स्पार्हा इषः क्षुमतीर्विश्वजन्याः ॥ ६ ॥

---

१. °वोढम् वि[1] अ[1]. २. नास्ति वि[1]. ३-३. अनिविद्वान् वि[2] अ[1]. ४. एष वि[2] अ[1]. ५. °कला° वि[2] अ[1]. ६. °यन वि[2] अ[1]. ७. व वि[2] अ[1]; नास्ति वि[1]. ८. वित्रोपितवः वि[2] अ[1]. ९. जान वि[1]. १०-१०. कालयोग्यैः वि[1]. ११-११. यमीन° वि[2] अ[1]; यदीन° वि[1]. १२. ध्यामा मूको. १३. वक्त° मूको. १४. °ग्नि वि[2] अ[1]. १५-१५. नास्ति वि[1]. १६. यततु वि[2] अ[1].

विश्वेषाम् । हि । अध्वराणाम् । अनीकम् । चित्रम् । केतुम् । जनिता । त्वा । जजान ।
सः । आ । यजस्व । नृऽवतीः । अनु । क्षाः । स्पार्हाः । इषः । क्षुऽमतीः । विश्वऽजन्याः ॥६॥

**वेङ्कट०** विश्वेषाम् हि यज्ञानाम् मुखम् चित्रम् प्रज्ञापकम् जनयिता त्वाम् जजान। सः[1] [2]त्वम् अनु आ प्रयच्छ[2] दासादियुक्ताः[3] भूमीः[4] स्पृहणीयानि च अन्नानि शब्दवन्ति प्रसिद्धानि सर्वजनहितानि ॥ ६ ॥

यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान ।
पन्थामनु प्रविद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि ॥ ७ ॥

यम् । त्वा । द्यावापृथिवी इति । यम् । त्वा । आपः । त्वष्टा । यम् । त्वा । सुऽजनिमा । जजान ।
पन्थाम् । अनु । प्रऽविद्वान् । पितृऽयानम् । द्युऽमत् । अग्ने । सम्ऽइधानः । वि । भाहि ॥७॥

**वेङ्कट०** यम् त्वा त्रयो[5] लोकाः अजीजनन्, यम् च त्वाम् त्वष्टा शोभनजननः[6], स त्वं पन्थानम् अनु प्रजानन् पितृयानम्, येन मनुष्याः पितॄन् प्रति गच्छन्ति[7], दीप्तियुक्तम् अग्ने! समिध्यमानः वि भाहि ॥ ७ ॥

[8]इति सप्तमाष्टके पञ्चमाध्याये त्रिंशो वर्गः[8] ॥

## [ ३ ]

[8]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[8] ।

इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ १ ॥

इनः । राजन् । अरतिः । सम्ऽइद्धः । रौद्रः । दक्षाय । सुसुऽमान् । अदर्शि ।
चिकित् । वि । भाति । भासा । बृहता । असिक्नीम् । एति । रुशतीम् । अपऽअजन् ॥ १ ॥

**वेङ्कट०** ईश्वरः राजन्![9] गन्ता समिध्यमानः रौद्रः दुरुपसर्पः वृद्ध्यर्थम् मनुष्याणां शोभनप्रसवः दृश्यते। प्राज्ञः[10] वि भाति तेजसा महता। रात्रिम्[11] च गच्छति श्वेताम्[12] दीप्तिम्[13] विसृजन् ॥ १ ॥

कृष्णां यदेनीमभि वर्पसा भूज्जनयन् योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन् दिवो वसुभिररतिर्वि भाति ॥ २ ॥

---

१. नास्ति वि[1]. २-२. °मसा प्रच्छा वि[2] अ[1]. ३. दसामियु° वि[2] अ[1]. ४. °मिः मूको. ५. त्र वि[2] अ[1]. ६. °नं जन् वि[2] अ[1]; °नजनः वि[1]. ७. प्रयतिग° वि[1]; प्रयन्तिग° अ[1]. ८-८. नास्ति मूको. ९. °जन् यमरन् वि[2] अ[1]; °जन् यम वि[1]. १०. प्र° वि[1]. ११. °तिम् वि[2] अ[1]. १२. °ता वि[2] अ[1]. १३. °प्तिजाम् वि[2] अ[1].

कृष्णाम् । यत् । एनीम् । अभि । वर्पसा । भूत् । जनयन् । योषाम् । बृहतः । पितुः । जाम् ।
ऊर्ध्वम् । भानुम् । सूर्यस्य । स्तभायन् । दिवः । वसुऽभिः । अरतिः । वि । भाति ॥ २ ॥

**वेङ्कट०** कृष्णवर्णाम् यदा रात्रिं[1] गच्छन्तीम् आत्मीयेन रूपेण अभि भवति जनयन्[2] उषसम् महतः[3] पितुः आदित्याद् जायमानाम्[4], तदानीम् आत्मीयैस्तेजोभिः सन्धुक्षणसमर्थैः[5] सूर्यस्य भानुम् उत्तम्भयन्[6] दिवः वासयितृभिस्तेजोभिः गन्ता अग्निः वि भाति ॥ २ ॥

भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभि राममस्थात् ॥ ३ ॥

भद्रः । भद्रया । सचमानः । आ । अगात् । स्वसारम् । जारः । अभि । एति । पश्चात् ।
सुऽप्रकेतैः । द्युऽभिः । अग्निः । विऽतिष्ठन् । रुशत्ऽभिः । वर्णैः । अभि । रामम् । अस्थात् ॥ ३ ॥

**वेङ्कट०** भजनीयः भजनीयया उषसा सेव्यमानः आ जगाम । स्वसारम् उषसम्[7] आगतां जरयिता अग्निः पश्चात् अभि गच्छति । सुप्रज्ञानैः तेजोभिः अग्निः सर्वतो गच्छन् श्वेतैः आत्मीयैर्वारकैस्तेजोभिः कृष्णं तेजः अभि तिष्ठति ॥ ३ ॥

अस्य यामासो बृहतो न वग्नूनिन्धाना अग्नेः सख्युः शिवस्य ।
ईड्यस्य वृष्णो बृहतः स्वासो भामासो यामन्नक्तवश्चिकित्रे ॥ ४ ॥

अस्य । यामासः । बृहतः । न । वग्नून् । इन्धानाः । अग्नेः । सख्युः । शिवस्य ।
ईड्यस्य । वृष्णः । बृहतः । सुऽआसः । भामासः । यामन् । अक्तवः । चिकित्रे ॥ ४ ॥

**वेङ्कट०** अस्य रश्मयः महान्तः न बाधन्ते स्तोतॄन् दीप्यमानाः । अग्नेः सख्युः कल्याणस्य स्तोतव्यस्य वर्षितुः[8] महतः शोभनास्याः[9] रश्मयः गमने तमांसि अञ्जन्तः[10] प्रज्ञायन्ते ॥ ४ ॥

स्वना न यस्य भामासः पवन्ते रोचमानस्य बृहतः सुदिवः ।
ज्येष्ठेभिर्यस्तेजिष्ठैः क्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षति द्याम् ॥ ५ ॥

स्वनाः । न । यस्य । भामासः । पवन्ते । रोचमानस्य । बृहतः । सुऽदिवः ।
ज्येष्ठेभिः । यः । तेजिष्ठैः । क्रीळुमत्ऽभिः । वर्षिष्ठेभिः । भानुऽभिः । नक्षति । द्याम् ॥ ५ ॥

**वेङ्कट०** स्वनन्तः[11] मरुतः इव यस्य रश्मयः सर्वतः पवन्ते रोचमानस्य बृहतः[12] सुदीप्तेः[13] प्रशस्तैः तेजस्वितमैः[14] क्रीडनवद्भिः चलद्भिः वृद्धतमैः भानुभिः यः व्याप्नोति[15] दिवम् । उत्तरत्र सम्बन्धः ॥ ५ ॥

---

१. रात्रीम् वि[1]. २. जनयम् वि[2] ३. °त वि[2] अ[1]. ४. °न वि[2] अ[1]. ५. °र्णं स° वि[1]. ६. उत्तम्नवन् वि[1]; स्तम्भ° वि[2] अ[1]. ७. उषससारम् वि[2] अ[1]. ८. °तुं मूको. ९. °नान्यस्या वि[2] अ[1]; °नस्य वि[1]. १०. °न्त मूको. ११. स्वनिन्तो वि[2] अ[1]. १२. बुध्यतः वि[2] अ[1]. १३. °प्त वि[2] अ[1]; °प्तः वि[1]. १४. यस्ते° वि[2] अ[1]. १५. °प्नोतीति वि[2] अ[1].

अस्य शुष्मासो ददृशानपवेर्जेहमानस्य स्वनयन् नियुद्भिः ।
प्रत्नेभिर्यो रुशद्भिर्देवतमो वि रेभद्भिररतिर्भाति विभ्वा ॥ ६ ॥

अस्य । शुष्मासः । ददृशानऽपवेः । जेहमानस्य । स्वनयन् । नियुत्ऽभिः ।
प्रत्नेभिः । यः । रुशत्ऽभिः । देवऽतमः । वि । रेभत्ऽभिः । अरतिः । भाति । विऽभ्वा ॥ ६ ॥

वेङ्कट० अस्य शोषकाः रश्मयः दृश्यमानायुधस्य गच्छतः शब्दायन्ते[1] वायुभिस्संयुक्ताः, प्रत्नैः यः[2] श्वेतैः[3] देवतमः गन्ता वि भाति शब्दायमानैः महान् ॥ ६ ॥

स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।
अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः ॥ ७ ॥

सः । आ । वक्षि । महि । नः । आ । च सत्सि । दिवःऽपृथिव्योः । अरतिः । युवत्योः ।
अग्निः । सुऽतुकः । सुऽतुकेभिः । अश्वैः । रभस्वत्ऽभिः । रभस्वान् । आ । इह । गम्याः ॥७॥

वेङ्कट० सः त्वम् आ वह महतः देवान् अस्माकम् । त्वम्[4] च आ सीद द्यावापृथिव्योः गन्ता युवत्योः, अग्निः सुगमः सुगमैः अश्वैः वेगवद्भिः वेगवान् इह[5] आ गच्छ[6] ॥ ७ ॥

[7]इति सप्तमाष्टके पञ्चमाध्याये एकत्रिंशो वर्गः[7] ॥

## [४]

[8]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[8] ।

प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥ १ ॥

प्र । ते । यक्षि । प्र । ते । इयर्मि । मन्म । भुवः । यथा । वन्द्यः । नः । हवेषु ।
धन्वन्ऽइव । प्रऽपा । असि । त्वम् । अग्ने । इयक्षवे । पूरवे । प्रत्न । राजन् ॥ १ ॥

वेङ्कट० प्र यच्छामि तुभ्यम् हविः, प्र ईरयामि च स्तुतिम्, भवसि यथा सन्निहितः त्वं वन्दितव्यः ह्वानेषु । सः त्वम् [9]धन्वनि इव[9] प्रपा[9] असि अग्ने ! यजमानाय मनुष्याय प्रत्न ! राजन् ! ॥ १ ॥

यं त्वा जनासो अभि संचरन्ति गाव उष्णमिव व्रजं यविष्ठ ।
दूतो देवानामसि मर्त्यानामन्तर्महाँश्चरसि रोचनेन ॥ २ ॥

यम् । त्वा । जनासः । अभि । सम्ऽचरन्ति । गावः । उष्णम्ऽइव । व्रजम् । यविष्ठ ।
दूतः । देवानाम् । असि । मर्त्यानाम् । अन्तः । महान् । चरसि । रोचनेन ॥ २ ॥

१. °न्तो वि[2] अ[1]. २. य वि[2] अ[1]. ३. °ते वि[2] अ[1]. ४. नास्ति वि[2] अ[1]. ५. इव वि[2] अ[1]. ६. °च्छतु मूको. ७-७. नास्ति मूको. ८-८. °न्वन्वि वि[2]. ९. प्रवा मूको.

**वेङ्कट०** यम् त्वा जनाः अभि सञ्चच्छन्ति गावः[1] इव वर्षासु उष्णम् व्रजम् यविष्ठ!, स त्वं देवमनुष्याणाम् दूतः भवसि (तु. या ५,१)। द्यावापृथिव्योः अन्तः महान् चरसि हविरादाय अन्तरिक्षेण ॥२॥

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना ।
धनोरधि प्रवता यासि हर्यञ्जिगीषसे पशुरिवावसृष्टः ॥ ३ ॥

शिशुम् । न । त्वा । जेन्यम् । वर्धयन्ती । माता । बिभर्ति । सचनस्यमाना ।
धनोः । अधि । प्रऽवता । यासि । हर्यन् । जिगीषसे । पशुःऽइव । अवऽसृष्टः ॥ ३ ॥

**वेङ्कट०** पुत्रम् इव च[2] त्वा जयशीलम् वर्धयन्ती पृथिवी बिभर्ति सचनस्यमाना । सचनस्यशब्दः कण्ड्वादिः[3] । त्वत्सम्पर्कमिच्छन्ती[4] । स त्वम् अस्मिल्लोँके[5] अन्तरिक्षात् प्रवणेन मार्गेण यासि, कामयमानः गच्छसि च हविरादाय पशुः इव अवसृष्टः[6] ॥ ३ ॥

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन् रेरिह्यते युवतिं विश्पतिः सन् ॥ ४ ॥

[7]मूराः । अमूर । न । वयम् । चिकित्वः । महिऽत्वम् । अग्ने । त्वम् । अङ्ग । वित्से[7] ।
शये । वव्रिः । चरति । जिह्वया । अदन् । रेरिह्यते । युवतिम् । विश्पतिः । सन् ॥ ४ ॥

**वेङ्कट०** मूढाः वयम् अमूढ! प्रज्ञ![8] न जानीमः तव माहात्म्यम् । अग्ने![9] त्वम् एव [10]तव महत्त्वं[10] जानासि । शेते जीर्णः ओषधिसङ्घः[11] । अथ चरति अग्निः[12] जिह्वया तं भक्षयन् । आस्वादयति पृथिवीं[13] जीर्णौषधिकां विशां स्वामी सन् अग्निः[14] ॥ ४ ॥

कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः ।
अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयन्त मर्ताः ॥ ५ ॥

कूऽचित् । जायते । सनयासु । नव्यः । वने । तस्थौ । पलितः । धूमऽकेतुः ।
अस्नाता । आपः । वृषभः । न । प्र । वेति । सऽचेतसः । यम् । प्रऽनयन्त । मर्ताः ॥ ५ ॥

**वेङ्कट०** क्वचित्[15] प्रदेशे जायते पुराणीषु[16] जीर्णासु ओषधीषु नवतरः । अथ सर्वस्मिन्नरण्ये तिष्ठति श्वेतः धूमप्रज्ञानः[17] । सोऽयं स्नानमकुर्वन् अपेक्षितस्नानः [18]उदकानि प्र गच्छति[18] वृषभः इव अरण्यमध्यस्थानि, सचेतसः यम् मनुष्याः हविर्भिः प्रणयन्त ॥ ५ ॥

---

१. न वि[२] अ[१]; गा वि[१]. २. नास्ति वि[१]. ३. कण्वादिः मूको. ४. °न्ति मूको. ५. °ल्लो° मूको. ६. °ष्ठ वि[२] अ[१]. ७-७. या. (६,८) व्याख्यानं द्र. ८. °ज्ञा मूको. ९. नास्ति मूको. १०-१०. नास्ति वि[१]. ११. °सङ्घः वि[१]. १२. अद्रिः मूको. १३. °थिवी मूको. १४. °ग्नि इति अ[१]. १५. कुत्रचि° वि[१]. १६. °राणीषु वि[२] अ[१]. १७. धूप्र° वि[२] अ[१]. १८-१८ °कात्प्रनिग° वि[२]; °कात्प्रनिर्ग° अ[१].

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥ ६ ॥

[1]तनूत्यजाऽइव । तस्करा । वनर्गू इति । रशनाभिः । दशऽभिः । अभि । अधीताम् ।[1]
इयम् । ते । अग्ने । नव्यसी । मनीषा । युक्ष्व । रथम् । न । शुचयत्ऽभिः । अङ्गैः ॥ ६ ॥

**वेङ्कट०** शरीरत्यजौ इव धृष्टौ तस्करौ[2] अरण्यगौ पथिकम्[3] अङ्गुलीभिः दशभिः[4] मम बाहू[5] त्वाम् अग्ने! बध्नीतः । इयम् ते अग्ने! नवतरा स्तुतिः[6] । योजय रथम् इव अश्वैः आत्मानम् आत्मीयैः अङ्गैः दीप्तैः तेजोभिः ॥ ६ ॥

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।
रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो३ अप्रयुच्छन् ॥ ७ ॥

ब्रह्म । च । ते । जातऽवेदः । नमः । च । इयम् । च । गीः । सदम् । इत् । वर्धनी । भूत् ।
रक्ष । नः । अग्ने । तनयानि । तोका । रक्ष । उत । नः । तन्वः । अप्रऽयुच्छन् ॥ ७ ॥

**वेङ्कट०** अन्नम् च ते जातवेदः! नमस्कारः च इयम् च[7] स्तुतिः सदैव वर्धनी भवतु । रक्ष अस्माकम् अग्ने! पुत्रान् पौत्रांश्च । रक्ष अपि च अस्माकम् अङ्गानि अप्रमाद्यन्[8] ॥ ७ ॥

[9]इति सप्तमाष्टके पञ्चमाध्याये द्वात्रिंशो वर्गः[9] ॥

## [५]

[1]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥ १ ॥

एकः । समुद्रः । धरुणः । रयीणाम् । अस्मत् । हृदः । भूरिऽजन्मा । वि । चष्टे ।
सिसक्ति । ऊधः । निण्योः । उपऽस्थे । उत्सस्य । मध्ये । निऽहितम् । पदम् । वेरिति वेः ॥१॥

**वेङ्कट०** यस्माद् वनानि[10] समुद्द्रवन्ति [11]उदकानि वा सः एकः धर्ता रयीणाम् अस्माकम् हृदयानि अभिलषितानि[11] बहुजननः[12] वि पश्यति । सोऽयम् अन्तर्हितस्यान्तरिक्षस्य उपस्थे वर्तमानम्[13] ऊधः[14] सेवते । उत्सस्य[15] उदकाधारस्य[16] मध्ये निहितम् [17]अपाम् पदम्[17] गच्छ माध्यमिकम् ॥ १ ॥

---

१-१. निरुक्तिरर्थश्च या. (३,१४) द्र. २. तस्तरौ वि[2] अ[1]. ३. पविक[०] वि[2] अ[1]. ४. दर्शयन्तीभिः वि[2] अ[1]. ५ बाभू वि[2] अ[1]; बांभ वि[1]. ६. [०]तीः वि[2] अ[1]. ७. नास्ति वि[2] अ[1]. ८. [०]धत् मूको. ९-९. नास्ति मूको. १०. धना[०] मूको. ११-११. उदरा…तानि वि[2]; उदारास्…तानि अ[1]. १२. [०]जनो मूको. १३. [०]न मूको. १४ [०]ध मूको. १५. [०]स्य दिवः वि[1]. १६. [०]कधारस्य अ[1]. १७-१७. अपाचेमम् वि[2] अ[1].

समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।
ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ॥ २ ॥

समानम् । नीळम् । वृषणः । वसानाः । सम् । जग्मिरे । महिषाः । अर्वतीभिः ।
ऋतस्य । पदम् । कवयः । नि । पान्ति । गुहा । नामानि । दधिरे । पराणि ॥ २ ॥

**वेङ्कट०** एकम् स्थानम्[1] वृषणः मरुतः आच्छादयन्तः सम् गच्छन्ते महान्तः बडवाभिः[2] ते । ऋतस्य पदम् उदकावासम् अग्निम् कवयः नितरां रक्षन्ति, गुहायाम् उदकानि धारयन्ति दिव्यानि ॥ २ ॥

ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।
विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित् तन्तुं मनसा वियन्तः ॥ ३ ॥

ऋतयिनी इत्यृतऽयिनी । मायिनी इति । सम् । दधाते इति । मित्वा । शिशुम् । जज्ञतुः । वर्धयन्ती इति ।
विश्वस्य । नाभिम् । चरतः । ध्रुवस्य । कवेः । चित् । तन्तुम् । मनसा । विऽयन्तः ॥ ३ ॥

**वेङ्कट०** सत्यवत्यौ कर्मवत्यौ द्यावापृथिव्यौ सम् धारयतः । इमम् अग्निम् मित्वा शिशुम् जज्ञतुः[3] वर्धयित्र्यौ सम्परिच्छिद्यार्धमर्धं[4] जनयामासतुः[5] पुत्रमिव पितरौ । विश्वस्य नाभिभूतम्[6] जङ्गमस्य स्थावरस्य च कवेः अग्नेः तन्तुम् वैश्वानराख्यम् मनसा विविधं गच्छन्तो[7] मनुष्याः सुखेन युज्यन्त इति शेषः ॥ ३ ॥

ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते ।
अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ ४ ॥

ऋतस्य । हि । वर्तनयः । सुऽजातम् । इषः । वाजाय । प्रऽदिवः । सचन्ते ।
अधीवासम् । रोदसी इति । ववसाने इति । घृतैः । अन्नैः । ववृधाते इति । मधूनाम् ॥ ४ ॥

**उद्गीथ०** ......मृष्टानां[8] 'घृतानानाम् अवयवभूतैः[9] स्वांशलक्षणैः । तस्माद् वयमपि श्रेयोऽर्थम् अग्निम् आराधयामः ॥ ४ ॥

**वेङ्कट०** यज्ञस्य हि प्रवर्तनाः[10] [11]सुजातम् अग्निम् इच्छन्तः[11] बलार्थम् प्रजाः सेवन्ते । अपि च[12] अधीवासम्[13] ओषधीनक्षत्रादिरूपम्[14] वावसाने द्यावापृथिव्यौ घृतैः अन्नैः[15] च अग्निं वर्धयतः उदकानां कार्यैः ॥ ४ ॥

---

१. °न वि[२] अ[१]. २. बद्धवाहि° वि[२] अ[१]. ३. जज्तुः मूको. ४. °रिजिद्यार्थमर्चं वि[२]; समम्परिच्छ-त्यार्धमर्धं वि[१]; °रिजित्यार्थमर्चं अ[१]. ५. जयामसतुः वि[२]; जयामा° वि[१]; नास्ति अ[१]. ६. नाति° वि[२] अ[१]. ७. °न्तो जानन्तः वि[२] अ[१]. ८. [मधूनां]...मृ° वि[३]. ९-९. घृतानां नामाव° वि[२] अ. १०. °र्तकाः वि[१]. ११-११. °तमं निविच्छन्तो वि[२] अ[१]; °तमितिमिच्छन्तो वि[१]. १२. वा वि[२] अ[१]. १३. अधि° मूको. १४. °ग्न्यिरू° वि[२] अ[१]. १५. अग्नैः वि[२]; °ग्नेः अ[१].

सप्त स्वसॄररुषीर्वावशानो विद्वान् मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रिमविदत् पूषणस्य ॥ ५ ॥

[1]सप्त । स्वसॄः । अरुषीः । वावशानः[1] । विद्वान् । मध्वः । उत् । जभार । दृशे । कम् ।
अन्तः । येमे । अन्तरिक्षे । पुराऽजाः । इच्छन् । वव्रिम् । अविदत् । पूषणस्य ॥ ५ ॥

**उद्गीथ०** सप्त जिह्वा ज्वालाख्याः 'काली कराली' ( मुंउ १,२,४ ) इत्येवमाद्याः स्वसॄः भगिनीभूताः तदग्नेर्जातत्वात् । स्वयंसारिणीर्वा[2] अरुषीः आरोचनाः[3] वावशानः वावश्यमानः अत्यर्थं शब्द्यमानः । स्तोतृभिर्हूयमान इत्यर्थः । विद्वान् [4]सर्वविद् अग्निः[4] मध्वः मधुस्वादस्य मृष्टस्य हविषः । पूर्णाः इति शेषः । उत् जभार ऊर्ध्वं हरति दृशे दर्शनाय सर्वस्य । उद्धृत्य च यत् तत्र हविषि कम् उदकम् । रसीभूतं हविरित्यर्थः । तत् अन्तः मध्ये येमे नियच्छति स्थापयति । कस्यान्तर्येमे । अन्तरिक्षे आकाशे स्थितस्य पूष्णः । कुतः एतदवगम्यते । ऋगन्ते तस्य श्रवणात् आहुत्याधारत्वाच्च । पुराजाः पूर्वम् आदिसर्गे प्रजापतेः जातः । किमर्थम् आदित्यस्य अन्तः येमे । इच्छन् कर्तुं कामयमानः । किम् । वव्रिम् रूपम् । कीदृशम् । सामर्थ्याद् दीप्तम् । कस्य । पूषणस्य पूष्णः । तच्च दीप्तं रूपम् अविदत् विन्दति । तेन च हवीरसेन दीप्तरूपः पूषाऽवश्यं भवतीत्यर्थः ।

अथ 'मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्' ( ऋ १०,८८,६ ) इति मन्त्रान्तरे दर्शनाद् आदित्यात्मना यदा अग्निः स्तूयते तदा एवमर्थयोजना कार्या— सप्त रश्मीन् स्वयं सर्तॄन्[5] आरोचनान् कामयमानः स्तूयमानः स्तोतृभिः विद्वान् अग्निः मध्वः उदकस्य भौमस्य पूर्णान् उदकेवलायाम् ऊर्ध्वं हरति आदित्यात्मना स्थितः दर्शनाय प्रकाशनाय सर्वस्य । हृत्वा च उदकं द्यावापृथिव्योः मध्ये स नियच्छति अन्तरिक्षे विद्युदात्मना स्थित्वा । इच्छन् रूपम् लभते वर्षासु पूष्णः सकाशात् स्वभूतम् वा ॥ ५ ॥

**वेङ्कट०** सप्त स्वसॄः आदित्यदीप्तीः[6] आरोचमानाः कामयमानः[7] विद्वान् समुद्रोदकाद् उद्धृतवान् सर्वेषामेव दर्शनार्थम्[8] । कम् इति पूरणम् । अन्तः च ताः नियमितवान् अन्तरिक्षे प्रत्नः, इच्छन् रूपम् च प्रायच्छत्[9] । पूष्णः अस्याः पृथिव्याः पृश्निवर्णम् प्रायच्छदिति ॥ ५ ॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

[10]सप्त । मर्यादाः । कवयः । ततक्षुः । तासाम् । एकाम् । इत् । अभि । अंहुरः । गात् ।[10]
आयोः । ह । स्कम्भः । उपऽमस्य । नीळे । पथाम् । विऽसर्गे । धरुणेषु । तस्थौ ॥ ६ ॥

---

१-१. निगमोऽयं या. (५,१) द्र. २. °रिणी वा वि[2] अ. ३. आरोचमानाः वि[2]. ४-४. सर्वजेदाग्निः वि[1]; सर्वजेताग्निः अ वि[3]; त्रुटितम् वि[1]. ५. सत्रीन् मूको. ६. °त्यान् दीप्तिः वि[2] अ[1]; °त्यदीप्तिः वि[1]. ७. °ना मूको. ८. दानार्थम् मूको. ९. °च्छन् वि[2] अ[1]; प्रयच्छन् वि[1]. १०-१०. या. ( ६,२७ ) व्याख्यातम् ।

**उद्गीथ०** सप्त मर्यादाः **व्यवस्थिता अलङ्घनीयाः**—'स्तेयं तल्पारोहणं[1] ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनःपुनः सेवां पातकेऽनृतोद्यम्' ( या ६,२७ ) इति । कवयः **मेधाविनः । कवयः हिरण्यगर्भप्रभृतयः मेधाविनः** । ततक्षुः 'तक्षतिः करोतिकर्मा' ( या ४,१९ ) । कृतवन्तः । तासाम् **मर्यादानां मध्ये** एकाम् इत् **इत्-शब्दः अप्यर्थे । एकामपि मर्यादाम्** अभि **गच्छति** अंहुरः **अंहस्वान् पापवान् भवति** । आयोः[2] **यस्तु अग्न्यनुग्रहाणाम्** ह **स्कम्भभूतः भवति । स्कम्भवदाश्रयभूतो भवतीत्यर्थः । परत्रापि** उपमस्य **सर्वस्य** जगतः **उपनिमातुः अग्नेः** नीळे **स्थाने अग्निलोकाख्ये** पथाम् **वृष्टिलक्षणानाम् अपाम् उदकानाम्** विसर्गे **विसर्जने अन्तरिक्षे** धरुणेषु **उदकेषु मेघोदरागतेषु विद्युदात्मना वा** तस्थौ **तिष्ठति** ॥ ६ ॥

**वेङ्कट०** **कामजेभ्यः**[3] **क्रोधजेभ्यश्चोद्धृताः 'पानम् अक्षाः**[4] **स्त्रियो मृगया**[5] **दण्डपारुष्यं वाक्पारुष्यम् अर्थदूषणम्** (तु. मस्मृ ७,४८;५० ) **इति सप्त मर्यादाः** कवयः **कृतवन्तः** । तासाम् एकाम् **एव पापवान्**[6] अभि **गच्छति पुरुषः**[7] **। तस्य मनुष्यस्य उत्तम्भकः अग्निः**[8] **समीपभूतस्य**[9] [10]नीळे पथाम्[10] **रश्मीनाम्** विसर्गे **अन्तरिक्षमध्ये**[11] **उदकेषु तिष्ठति । पापयुक्तस्यापि**[12] **अग्निस्तत**[13] **उत्तम्भनो**[14] **भवतीति** ॥ ६ ॥

**असच्च सच्च परमे व्योमन् दक्षस्य जन्मन्नदितेरुपस्थे ।**
**अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ ७ ॥**

असत् । च । सत् । च । परमे । विऽओमन् । दक्षस्य । जन्मन् । अदितेः । उपऽस्थे ।
अग्निः । ह । नः । प्रथमऽजाः । ऋतस्य । पूर्वे । आयुनि । वृषभः । च । धेनुः ॥ ७ ॥

**उद्गीथ०** असत् च **अव्याकृतं** वस्तु सत् च **व्याकृतम्** परमे व्योमन् **व्योमनि कारणात्मना आकाशे स्थितम् तत् सर्वमग्निरेव, तन्मूलत्वाद् यागस्य, यागमूलत्वात् च सर्वस्य** । दक्षस्य **च** प्रजापतेः जन्मन् **जन्मनि उत्पत्तौ निमित्तम्** अग्निः **एव । उक्तेनैव न्यायेन** अदितेः **पृथिव्याः** उपस्थे **उपस्थाने उपरि अग्निरेव स्थितः आधिपत्येन** । [15]**मात्र एतावदर्थः**[15] । वृषभश्च धेनुः **च अन्यत् च सर्वं द्रव्यम् अस्माकम्** अग्निः **एव भवति तदात्मत्वात्**[16] **तत्कार्यकर्तृत्वाद्वा**[17] ॥ ७ ॥

**वेङ्कट०** दिक्प्रमाणादिरूपम्[18] असत् सत् च परमे **स्थाने** जातम् **आदित्यस्य** जन्मनि अदितेः उपस्थे । **तस्य सर्वस्य प्रथममेव** जातः **अस्माकम् अयम्** अग्निः । **तस्मिन्** काले वृषभः च[19] **आसीत्** धेनुः च ।

---

१. गुरुतल्पा° मूको. २. नास्ति मूको. ३. °जेत्यज्य वि[2] अ[1]. ४. °क्षा मूको. ५. °या मृगया वि[2] अ[1] ६. पावमान् वि[2] अ[1]; पावलाम् वि[1]. ७. प° वि[2] अ[1]. ८. °ग्नि वि[2] अ[1]. ९. °मीत्रम् वि[2] अ[1]; °भीप भू° वि[1]. १०-१०. पायो नीळ वि[2] अ[1]; पायो नीळे वि[1]. ११. °क्षे वि[2] अ[1]. १२. चा° वि[2] अ[1]. १३. आग्नि° वि[2] अ[1]. १४. उक्तं भवनं मूको. १५-१५. अत्र किञ्चित् त्रुटितम् भाति. १६. तदा ( °द्दा वि[2] अ[1].) तृत्वात मूको. १७. तत्कार्ये क° मूको. १८. °णानिरू° वि[2] अ[1]. १९. इव अ[1].

दक्षम् उत्पादकम् [1]अध्यतिष्ठद् अदितिम्[1] च उत्पादयित्रीमिति ॥ ७ ॥

[2]इति सप्तमाष्टके पञ्चमाध्याये त्रयस्त्रिंशो वर्गः[2] ॥

व्याख्यत् पञ्चममध्यायं सप्तमस्याष्टकस्य सः।
यज्ञनारायणकुले[3] यस्य मातुः[4] समुद्भवः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके पञ्चमोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके पञ्चमोध्यायः ॥



१-१. 'मत्यतिष्ठददिति वि[1] अ'; 'मध्यतिष्ठदिर्ति वि[2]. २-२. नास्ति मूको. ३. यस्ये नारा° मूको. ४. मानुत् वि[2].

अथ षष्ठोऽध्यायः ।

वेङ्कट० 'अयं स यस्या(स्य' अ)थाध्यायं व्याचिख्यासति माधवः ।
देवानां यज्ञसम्बन्धे वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

इतः[1] प्रत्तेन[2] हविषा वर्तन्ते दिवि देवताः ।
ततः प्रत्तैरिह[3] वयं[4] यथा[5] वर्तामहे जलैः ॥ २ ॥

'समानमेतदुदकमुच्चैत्यव[6] चाहभिः'[7] ।
इतीममर्थं प्रोवाच [8]दीर्घतमा मामतेयः[8] ॥ ३ ॥

ब्राह्मणं च भवति — 'इतःप्रदानं[9] देवा उपजीवन्ति[10], ××× अमुतःप्रदानं[11] मनुष्याः' (तै ३,२,९,७) इति ।

'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः' ।
इतीयं भगवद्गीता ब्रूतेऽर्थमिममञ्जसा ॥ ४ ॥

इतिहासपुराणेषु ननु लोकाः प्रदर्शिताः ।
उद्यानभवनोपेताः सर्वकामसमन्विताः ॥ ५ ॥

[12]देवासुराणां युद्धं[12] च पश्वन्नादिनिमित्तकम् ।
'किमिच्छन्ती सरमे(मा'[13] इ)ति पणिभिः पशवो हृताः ॥ ६ ॥

अंशावतारा देवानां सन्तीति कवयो विदुः ।
नानाविधांश्च ते लोकान् अधितिष्ठन्ति पार्थिवान्[14] ॥ ७ ॥

सप्तद्वीपा वसुमती मध्ये मेरुश्च तिष्ठति ।
अर्वाग्घिमवतोऽस्माभिर्[15] मनुष्यैर्दृश्यतेऽधुना ॥ ८ ॥

यजन्ते त इमे देवांस्तेषु[16] लोकेष्ववस्थिताः[17] ।
वैदिकाश्च पुराकल्पांस्तन्मूलान् कवयो विदुः ॥ ९ ॥

एवं च देवा यष्टारो यष्टव्याश्च तथाऽभवन् ।
अंशावतारैर्यष्टारो यष्टव्यास्तु दिवि स्थिताः ॥ १० ॥

---

१. उत वि[2] अ[1]; उतः वि[1]. २. प्रत्नेन मूको. ३. प्रत्नै° मूको. ४. मवं मूको. ५. तथा वि[1] अ[1]. ६. °च्चेत्यव वि[2] अ[1]. ७. ऋ १,१६४,५१. ८-८. दीर्घमा··· वि[2] अ[1]. ९. इकप्रजानं वि[2] अ[1] १०. °जीव्यन्ति मूको. ११. °तप्र वि[2] अ[1]. १२-१२. देवानामसुराणां वि[1]. १३. ऋ १०, १०८,१; सार° वि[2] अ[1]. १४. पाणिवाक् वि[2] अ[1]. १५. अर्वाम··· वि[1] अ[1]. १६. °वेते° वि[2] अ[1], १७. °ता वि[2] अ[1].

आप्तकामाः स्विद्[1] इत्यस्मिन् यदुवाच पतञ्जलिः ।
निदाने तच्च बोद्धव्यम् इममर्थमभीप्सुभिः ॥ ११ ॥

एकः किमिन्द्रो देवाश्च उताहो बहवोऽभवन् ।
बहवः सन्ति [2]सर्वे च[2] सदृशा नामकर्मभिः[3] ॥ १२ ॥

जनतायां 'जनतायामिन्द्रः'[4] ब्राह्मणमाह च ।
यज्ञेष्वेकस्य बहुषु न शक्या युगपद्गतिः[5] ॥ १३ ॥

[6]अत्र ब्राह्मणम्[6] — 'एकैको वै जनतायामिन्द्रः[7]'। [6]एकं वा एताविन्द्रमभिसंसुनुतः[8]। यौ द्वौ संसुनुतः (तैब्रा १,४,६,१) इति ॥

अत्र ब्रूम एक एव सर्वस्य जगतः प्रभुः[9] ।
बहुष्विन्द्रः सन्निधत्ते यज्ञेषु युगपद्विभुः ॥ १४ ॥

बहवो महिमानोऽस्य सन्ति योगेन [10]साधिताः ।
भार्यासु सौभरिरिव†[10] तैर्यज्ञेष्वेषु गच्छति ॥ १५ ॥

'नाना हि त्वा हवमानाः'[11] प्रधानाः[12] संप्रदर्शिताः ।
'आ ते इन्द्र महिमानम्'[13], 'अरं त इन्द्र कुक्षये'[14] ॥ १६ ॥

महिम्नोऽस्तित्वमेताभ्याम्[15] अवगच्छन्ति[16] वैदिकाः ।
'प्रिया धामान्ययाडग्निः'[17] इति चाधीमहे[18] वयम् ॥ १७ ॥

शाट्यायनकम् — 'कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम्' इत्युक्त्वाऽऽह — [19]'तावन्तरातिष्ठत् । तावब्रवीत् । अंशमाहरताम्† ‡आत्मना वामन्यतरस्य‡ पास्यामि[19] । महिम्नाऽन्यतरस्य' (जैब्रा १,२२८) इत्यादि ।

## [ ६ ]

[20]त्रित आप्त्य ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[20] ।

अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥ १ ॥

१. निसू २,३:२०; °काम वि[2] अ[1]. २-२. ते सर्वे वि[2]. ३. माम° वि[2] अ[1]. ४. °न्द्रं मूको; तैब्रा १,४,६,१. ५. °पत्स्थितिः वि[1]. ६-६. नास्ति वि[1]. ७. °मिन्द्र मूको. ८. °नुत वि[2] अ[1]. ९. बहु वि[2] अ[1]. १०-१०. नाधिनाहार्यासु सौहरि इव वि[2] अ[1]. † सोभरि° वि[2] वेंकअ. ११. ऋ ६,१०२,५. १२. धाना वि[2] अ[1]. १३. ऋ ८,६५,४. १४. ऋ ८,९२,२४. १५. °हिनोस्ति° वि[2]; हिमानोस्ति° अ[1] १६. अवग° वि[2] अ[1]. १७. आश्रौ १,६,३. १८. चायीम° वि[2] अ[1]. १९-१९. °तिष्ठन्तावब्रवीदशुमाहुररेधामन्मगो यामन्यतरस्या पा° वि[2] अ[1]. † आंशमा वेंकअ; °मारुहरेथाम् वि[1]. ‡-‡ आत्म्याद्यावान्य° वि[1]. २०-२०. नास्ति मूको.

अयम् । सः । यस्य । शर्मन् । अवःऽभिः । अग्नेः । एधते । जरिता । अभिष्टौ ।
ज्येष्ठेभिः । यः । भानुऽभिः । ऋषूणाम् । परिऽएति । परिऽवीतः । विभाऽवा ॥ १ ॥

**उद्गीथ०** अयम् सः **अग्निः अस्माभिराहूतः** यस्य **यागार्थस्य**[1] **अग्नेः** अभिष्टौ **यागे कृते सति** शर्मन् **शरणे** [2]अवोभिः **रक्षाभिः**[2] जरिता एधते **वर्धते** । य. **अग्निः ऋषूणाम् सूर्यरश्मीनाम्** ज्येष्ठेभिः भानुभिः **प्रशस्ताभिः वृद्धाभिर्वा दीप्तिभिः** परिवीतः **परिवृतः परिवेष्टितः** पर्येति **सर्वतो गच्छति । यत्रयत्र गन्तव्यं तत्रतत्र अप्रतिहतगतिः गच्छतीत्यर्थः** । विभावा **विविधदीप्तिः**[3] ॥ १ ॥

**वेङ्कट०** **त्रितः**[4] । अयम् सः यस्य **सुखे**[5] **रक्षणैः** अग्नेः **वर्धते**[6] जरिता **हि इज्यायाम्**[7] । **प्रशस्तैः**[8] **यः**[9] **तेजोभिः**[10] **रश्मीनाम् परिवृतः परिगच्छति दीप्तिमानिति** ॥ १ ॥

**यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः ।**
**आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥ २ ॥**

यः । भानुऽभिः । विभाऽवा । विऽभाति । अग्निः । देवेभिः । ऋतऽवा । अजस्रः ।
आ । यः । विवाय । सख्या । सखिऽभ्यः । अपरिऽह्वृतः । अत्यः । न । सप्तिः ॥ २ ॥

**उद्गीथ०** यः **च अग्निः** विभावा **विविधदीप्तिः** ऋतावा **च सत्यवान् उदकवान् यज्ञवान् वा** अजस्रः **अनुपक्षीणोऽहिंसितो वा । केनचिदनभिभूत इत्यर्थः** । भानुभिः देवेभिः **दीप्तिभिः दानादिगुणयुक्ताभिः स्तुत्याभिः प्रतिगन्त्रीभिर्वा** विभाति **विविधं दीप्यते** । यः **यश्च** आ विवाय **आभिमुख्येन गच्छति** सख्या **सख्यानि सखिभिः कर्तव्यानि हविर्वहनादीनि कर्माणि । कर्तुमिति शेषः । कस्यार्थाय** । सखिभ्यः **सखिभूतानां यजमानानाम् अर्थाय । कथं गच्छति** । अपरिह्वृतः **अपरिहिंसितः । अपरिश्रान्त इत्यर्थः । किमिव** । अत्यः न **अश्व इव । कीदृशोऽश्वः** । सप्तिः **सदा सर्पणसमर्थः । यथा सततगमनसमर्थोऽश्वोऽपरिश्रान्तो गच्छति, एवं सोऽयम् अग्निः अस्माभिराहूतो यागार्थमिति पूर्ववद् वाक्यपरिसमाप्तिः कार्या** ॥ २ ॥

**वेङ्कट०** यः **दीप्तिभिः दीप्तिमान्**[11] विभाति अग्निः **द्योतमानैः यज्ञवान्** अजस्रः । आ **गच्छति** यः **सखिभिः कर्तव्यानि कर्माणि** सखिभ्यः **अनुष्ठातुम् अकुटिलः**[12] **अतनशीलः**[13] **इव अश्वः**[14] ॥ २ ॥

**ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ ।**
**आ यस्मिन् मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥ ३ ॥**

ईशे । यः । विश्वस्याः । देवऽवीतेः । ईशे । विश्वऽआयुः । उषसः । विऽउष्टौ ।
आ । यस्मिन् । मना । हवींषि । अग्नौ । अरिष्टऽरथः । स्कभ्नाति । शूषैः ॥ ३ ॥

---

१. योगा° वि[2] अ[1]. २-२. रेभि ( भि वि[2] अ[1]. ) ज्येष्ठभिर्वृद्धाभिर्वा मूको. ३. °दीप्तः मूको.
४. °त वि[2] अ[1]. ५. सखे वि[2] अ[1] ६. वर्धयत मूको. ७. हिज्या मूको. ८. °स्थैः वि[2] अ[1].
९. नास्ति वि[1]. १०. °जोहि वि[1]. ११. °प्मा° वि[2] अ[1]; पिमान् वि[1]. १२. कु° वि[2] अ[1].
१३. हवनशीलः वि[2] अ[1]. १४. °श्वम् वि[2] अ[1].

**उद्गीथ०** [1]यः चाऽग्निः ईशे[1] ईष्टे विश्वस्याः रूर्वस्याः देववीतेः देवाशनस्य हविषः। ईशे ईष्टे च यः विश्वायुः सर्वत्राप्रतिहतगमनः सर्वजीवनो वा उषसः व्युष्टौ विवासने। आदित्यात्मना स्थितः सन् अग्निः उदयेन उषसं विवासयति इत्यतः एवमुच्यते। यस्मिन् च अग्नौ अहिंसितयज्ञरथः असुरराक्षसादिशत्रुबलैः मना मननीयानि हवींषि आ स्कभ्नाति ॥ ३ ॥

**वेङ्कट०** ईष्टे यः सर्वस्य यज्ञस्य, ईष्टे[2] सर्वगमनः उषसः व्युष्टौ अह्नि। यस्मिन् च अग्नौ[3] मननीयानि हवींषि आजुह्वानो यजमानः अहिंसितरथः[4] हिनस्ति[5] शत्रून् आत्मबलैः ॥३॥

शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति।
मन्द्रो होता स जुह्वा३ यजिष्ठः संमिश्लो अग्निरा जिघर्ति देवान् ॥ ४ ॥

शूषेभिः। वृधः। जुषाणः। अर्कैः। देवान्। अच्छ। रघुऽपत्वा। जिगाति।
मन्द्रः। होता। सः। जुह्वा। यजिष्ठः। सम्ऽमिश्लः। अग्निः। आ। जिघर्ति। देवान् ॥ ४ ॥

**उद्गीथ०** सोऽग्निः उक्तलक्षणः शूषेभिः बलैः हविर्लक्षणैः। बलनिमित्तैर्हविर्भिरित्यर्थः। वृधः वर्धितः सन् जुषाणः सेव्यमानश्च अर्कैः मन्त्रैः; यज्वभिः स्तुतिभिः शस्त्रैश्चेत्यर्थः। देवान् अन्नेन अच्छ आप्तुम् रघुपत्वा लघुपतनः शीघ्रगमनः जिगाति गच्छति। गत्वा चाहूय अनन्तरम् मन्द्रः स्तुत्यः होता होमकारी यजिष्ठः यष्टृतमः सम्मिश्लः सम्मिश्रः सम्प्रयुक्तः सर्वैः गुणैः देवैर्वा जुह्वाख्येन पात्रेण हविः आ जिघर्ति आक्षारयति देवान् प्रति। हविः देवेभ्यो ददातीत्यर्थः ॥ ४ ॥

**वेङ्कट०** स बलैः वर्धितः[6] सेव्यमानः मन्त्रैः देवान् अभि गच्छति[7] लघुगमनः। मन्द्रः[8] होता सः जुह्वा ज्वालया होमसाधनभूतया यष्टृतमः [9]सम्मिश्रः† संहतः[9] अग्निः आ जुहोति देवान् ॥ ४ ॥

तमुस्रामिन्द्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वम्।
आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥ ५ ॥

तम्। उस्राम्। इन्द्रम्। न। रेजमानम्। अग्निम्। गीःऽभिः। नमःऽभिः। आ। कृणुध्वम्।
आ। यम्। विप्रासः। मतिऽभिः। गृणन्ति। जातऽवेदसम्। जुह्वम्। सहानाम् ॥ ५ ॥

**उद्गीथ०** यम् जातवेदसम् जुह्वम् आह्वातारं दातारं वा मनुष्यादिबलानाम् अथवा सहानाम् शत्रूणामभिभवितॄणां सहायानां वा देवानां यागार्थम् आह्वातारम् विप्रासः मेधाविनः स्तोतारः मतिभिः स्तुतिभिः आ गृणन्ति आदरेण स्तुवन्ति। तम् अग्निम् उस्राम् भोगानाम् उत्स्राविणं दातारम् रेजमानम् ज्वालात्मना कम्पमानं वा इन्द्रम्[10] इव गीर्भिः स्तुतिभिः नमोभिः अन्नैश्च आ कृणुध्वम् अस्मदभिमुखं यूयमपि कुरुत[11] हे ऋत्विजः! ॥ ५ ॥

---

१-१. त्वधश्चाग्निरीशेषु मूको. २. °ष्ट वि[२] अ[१]. ३. °ग्ने वि[२] अ[१]. ४. अनिहित° वि[२] अ[१]. ५. नस्तम्नाति वि[२]. ६. °र्मृधः वि[२] अ[१]; °वर्धे वि[१]. ७. अनिर्गच्छन्ति वि[२] अ[१]. ८. मन्त्रः मूको. ९-९. संमि श्लेषं गतः वि[१]. † °श्च वि[२]; °श्र अ[१]. १०. ए इन्द्रं° वि[१२३]. ११. कुरु अ वि[२].

**वेङ्कट०** तम् उत्सरणशीलम् इन्द्रम् इव कम्पमानम् अग्निम् स्तुतिभिः नमस्कारैश्च आ[1] कृणुध्वम्। आ स्तुवन्ति[2] यम्[3] विप्राः स्तुतिभिः जातवेदसम् होतारम् अभिभवितॄणां[4] देवानाम् इति[5] ॥ ५ ॥

सं यस्मिन् विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवन्त एवैः ।
अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥ ६ ॥

सम् । यस्मिन् । विश्वा । वसूनि । जग्मुः । वाजे । न । अश्वाः । सप्तिऽवन्तः । एवैः ।
अस्मे इति । ऊतीः । इन्द्रवातऽतमाः । अर्वाचीनाः । अग्ने । आ । कृणुष्व ॥ ६ ॥

**उद्गीथ०** यस्मिन् त्वय्यग्नौ सम् जग्मुः[6] सङ्गतानि। स्वत्वेनावस्थितानीत्यर्थः। विश्वा सर्वाणि वसूनि धनानि वाजेन अन्नेन बलेन वा सह अश्वाश्च यस्मिंस्त्वय्यग्नौ स्वत्वेनावस्थिताः। कीदृशाः अश्वाः। सप्तीवन्तः सर्पणवन्तः। सततगमनसमर्था इत्यर्थः। एवैः कामैः सर्वैः सहिताः। स त्वं हे इन्द्र! परमेश्वर! अग्ने! अस्मे अस्माकमर्थाय ऊतीः। कीदृशः। वाततमाः दुर्लभत्वं गततमाः। अतिदुष्प्रापा इत्यर्थः। अर्वाचीनाः अर्वागञ्चनाः अस्मदभिमुखाः आ कृणुष्व आदरेण कुरु। सर्वान् कामानस्मभ्यं देहीत्यर्थः ॥ ६ ॥

**वेङ्कट०** सम् गतानि यस्मिन् विश्वानि धनानि सङ्ग्रामे इव अश्वाः सर्पणवन्तः गमनैः। स त्वम् अस्मासु रक्षणानि अत्यन्तम् इन्द्रेणाभिगतानि अभिमुखानि अग्ने! आ कृणुष्व[7] ॥ ६ ॥

अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ ।
तं ते देवासो अनु केतमायन्नधावर्धन्त प्रथमास ऊमाः ॥ ७ ॥

अध । हि । अग्ने । मह्ना । निऽसद्य । सद्यः । जज्ञानः । हव्यः । बभूथ ।
तम् । ते । देवासः । अनु । केतम् । आयन् । अध । अवर्धन्त । प्रथमासः । ऊमाः ॥ ७ ॥

**उद्गीथ०** अध इति हेतुनिर्देशे। हि इति प्रतिनिर्देशे। अध यस्मात् हे अग्ने! महत्त्वेन स्वेन निषद्य उपविश्य वेद्यन्ते जज्ञानः जायमानः ज्वलन् सद्यः तस्यामेव वेलायाम् हव्यः हवनार्हः आहुतिप्रक्षेपार्हः बभूथ भवसि। हि तस्मात्। तम् ते तव स्वभूतम् केतम् प्रज्ञानं ज्वालाम् अनु आयन् होमार्थम् अनुगच्छन्ति। दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः। देवासः हविषो दातारः ऋत्विग्यजमानाः। अध अनन्तरम् अवर्धन्त वर्धन्ते च। पुत्रादिवृद्ध्या युज्यन्ते चेत्यर्थः। प्रथमासः क्रियाभिजनविद्यादिगुणैश्च[8] भवन्तीति शेषः। ऊमाः त्वया रक्षितास्सन्तः ॥ ७ ॥

**वेङ्कट०** अध हि अग्ने! महत्त्वेन उपविश्य सद्यः प्रादुर्भवन् आह्वातव्यः अभवः। तादृशं तव प्रज्ञानम् अनु

---

१. अनु वि[1]. २. ष्टुपन्ति वि[2] अ[1]. ३. याम् वि[1]. ४. °विता वि[2] अ[1]; °वितान् वि[1]. ५. नास्ति वि[1]. ६. नास्ति मूको. ७. कृणस्व वि[2] अ[1]. ८. °याभिर्जन° वि[1,3].

अगच्छन्[1] देवाः। अथ अवर्धन्त त्वया[2] प्रीणिताः[3] प्रथमाः[4]। ऊमाः नाम पितर इति ॥ ७ ॥

[5]इति सप्तमाष्टके षष्ठाध्याये प्रथमो वर्गः[5] ॥

[ ७ ]

[6]त्रित आप्त्य ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[6]।

स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥ १ ॥

स्वस्ति। नः। दिवः। अग्ने। पृथिव्याः। विश्वऽआयुः। धेहि। यजथाय। देव।
सचेमहि। तव। दस्म। प्रऽकेतैः। उरुष्य। नः। उरुऽभिः। देव। शंसैः ॥ १ ॥

उद्गीथ० स्वस्ति अविनाशम् अस्मभ्यम् दिवः सकाशात् पृथिव्याः च। द्युपृथिव्यन्तरिक्षनिवासिभ्यस्सकाशादित्यर्थः। कीदृशं स्वस्ति। उच्यते—विश्वायुः सर्वान्नसहितम्। हे अग्ने! देव! धेहि। किमर्थम्। यजथाय देवयागार्थम्। सर्वोपद्रवरहितास्सर्वान्नयुक्ताश्च [6]सन्तः यथा देवान् यजेमहि तथाऽस्मान्[6] कुर्विति वाक्यार्थः। किञ्च सचेमहि सेवेमहि आराधयेम त्वां सदा इत्येतद् आशास्महे वयम्। केन। उरुभिः बहुभिः शंसैः स्तुतिभिः। एतज्ज्ञात्वा हे दस्म! देव! तव स्वभूतैः प्रकेतैः[7] प्रज्ञानैः[8] पालनोपायपरिज्ञानैः उरुष्य रक्ष नः अस्मान् ॥ १ ॥

वेङ्कट० अविनाशम् अस्मभ्यम् द्यावापृथिव्योः अग्ने! सर्वान्नम्[9] प्रयच्छ यज्ञार्थम् देव!। संसृष्टाः भवेम तव दर्शनीय! प्रज्ञानैः। रक्ष अस्मान् उरुभिः हे देव! शंसनीयैः प्रकेतैः इति[10] ॥ १ ॥

इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणन्ति राधः।
यदा ते मर्तो अनु भोगमानड्वसो दधानो मतिभिः सुजात ॥ २ ॥

इमाः। अग्ने। मतयः। तुभ्यम्। जाताः। गोभिः। अश्वैः। अभि। गृणन्ति। राधः।
यदा। ते। मर्तः। अनु। भोगम्। आनट्। वसो इति। दधानः। मतिऽभिः। सुऽजात ॥२॥

उद्गीथ० हे अग्ने! इमाः मतयः स्तुतयः तुभ्यम् त्वदर्थम् जाताः अस्मदादिस्तोतृमुखात्[11] उत्पन्नाः। उच्चरिता इत्यर्थः। गोभिः अश्वैः च सहितम् राधः धनं हिरण्यादिकम् अभि गृणन्ति अभिष्टुवन्ति अहो शोभनम् अस्मदनुरूपमिति प्रशंसन्ति। कदा। उच्यते—यदा यस्मिन् काले ते तव स्वकम् भोगम् भोगार्हं धनम्[12] मर्तः अस्मदादिको मनुष्यः अनु आनट् त्वत्तो दानानन्तरं प्राप्नोति। लभते तदेत्यर्थः। एतद् ज्ञात्वा हे वसो! प्रशस्य! वसुमन्! वा [13]सर्वस्य वसुभूत![13] वा स्वेन

१. °गच्छ वि[2] अ[1]; °गच्छन् वि[1]. २. त्वात्वा वि[2] अ[1]. ३. प्रणीता मूको. ४. °मा प्रीता अ[1]. ५-५. नास्ति मूको. ६-६. सन्तस्तथा° मूको. ७. नास्ति मूको. ८. °नैरुरुष्य रक्ष मूको. ९. °र्वान्नः वि[2] अ[1]; सर्वा वि[1]. १०. नास्ति वि[1,2]. ११. °दारिस्तो° अ वि[1,2]. १२. धनमर्थः अ वि[2]. १३-१३. सवञ्च° मूको.

तेजसा सर्वस्याच्छादयितः! वा सुजात! सुजन्मन्! शोभनकर्मार्थमुत्पन्न! वा दधानः अस्मभ्यं ददत्[१] मतिभिः स्तुतिभिः। त्वया दत्तं धनं स्थापयेति शेषः। अस्मत्स्तुत्यनुरूपम् अस्मभ्यं धनं देहीत्यभिप्रायः ॥ २ ॥

**वेङ्कट०** इमाः अग्ने! स्तुतयः त्वदर्थम् जाताः[२] गोभिः अश्वैः च सह त्वया स्तोतृभ्यो दीयमानं धनम् अभि स्तुवन्ति। यदा त्वत्तः मर्त्यः [३]धनम् अवाप्नोति[३], तदानीं वासयितः![४] शोभनजनन![५] त्वं स्तूयसे स्तुतिभिः प्रयच्छन्[६] धनानीति ॥ २ ॥

अ॒ग्निं म॑न्ये पि॒तर॑म॒ग्निमा॒पिम॒ग्निं भ्रात॑रं॒ सद॒मित् सखा॑यम् ।
अ॒ग्नेरनी॑कं बृह॒तः स॑पर्यं दि॒वि शु॒क्रं य॑ज॒तं सूर्य॑स्य ॥ ३ ॥

अ॒ग्निम् । म॒न्ये । पि॒तर॑म् । अ॒ग्निम् । आ॒पिम् । अ॒ग्निम् । भ्रात॑रम् । सद॑म् । इत् । सखा॑यम् ।
अ॒ग्नेः । अनी॑कम् । बृ॒ह॒तः । स॒प॒र्य॒म् । दि॒वि । शु॒क्रम् । य॒ज॒तम् । सूर्य॑स्य ॥ ३ ॥

**उद्गीथ०** अग्निम् मन्ये जानेऽहम् पितरम्, तत्कार्यकर्तृत्वादिति। उत्तरत्राप्ययमेव[७] न्यायः। अग्निम् एव आपिम् च ज्ञातिम् अत्रोक्तव्यतिरिक्तां मात्रादिकां मन्ये। अग्निम् एव भ्रातरम् च मन्ये। सदम् इत् सदैव सर्वकालमेव अविसंवादिनम् सखायम् च मन्ये। अग्नेः अग्नेः स्वभूतम् अनीकम् मुखम् आहवनीयाख्यम्। बृहतः महतः अनन्तगुणस्य सपर्यम् परिचरामि अभिप्रेतार्थसिद्धये स्तुतिभिः हविर्भिश्च आराधयामि। किमिव। दिवि शुक्रम् [८]यजतम् एतद्दिविस्थं[८] शुक्रं शोचिष्मद् दीप्तिमत् यजतम् यष्टव्यम् सूर्यस्य सम्बन्धि यथाऽभिप्रेतार्थसिद्धये कश्चिदाराधयति[९] एवम् ॥३॥

**वेङ्कट०** अहं जाने पितरम् अग्निम् एव भ्रातरम् सदैव सखायम्[१०]। अग्नेः ज्वालासङ्घम् महतः परिचरामि दिवि स्थिवम्[११] ज्वलन्तम् यष्टव्यम् सुवीर्यस्य ॥ ३ ॥

सि॒ध्रा अ॑ग्ने॒ धियो॑ अ॒स्मे सनु॑त्री॒र्यं त्राय॑से॒ दम॒ आ नित्य॑होता ।
ऋ॒ताव॒ा स रो॒हिद॑श्वः पुरु॒क्षुर्द्युभि॑रस्मा॒ अह॑भि॒र्वाम॑मस्तु ॥ ४ ॥

सि॒ध्राः । अ॒ग्ने॒ । धियः॑ । अ॒स्मे इति॑ । सनु॑त्रीः । यम् । त्राय॑से । दमे॑ । आ । नित्य॑ऽहोता ।
ऋ॒तऽवा॑ । सः । रो॒हित॑ऽअश्वः । पु॒रु॒ऽक्षुः । द्युऽभिः॑ । अ॒स्मै । अह॑ऽभिः । वा॒मम् । अ॒स्तु॒ ॥४॥

**उद्गीथ०** हे अग्ने! सिध्राः सिद्धा निष्पन्नाः धियः [१२]प्रज्ञाकार्याः स्तुतयः[१२] अस्मे अस्माकम् सम्बन्धिन्यः सनुत्रीः सम्भक्त्यः[१३]। तव त्वदर्थमस्माभिः स्तुतयः कृताः इति ज्ञापितमित्यभिप्रायः। यम् माम् त्रायसे पालयसि कर्मवैगुण्यात्। यस्य मम कर्म सगुणं करोषीत्यर्थः। दमे आ [१४]यज्ञगृहे मर्यादयावस्थितः[१४] नित्यहोता सततं होमकारी देवानामाह्वाता वा सन्। सः अहं तव

---

१. दधत् अ वि[२]. २. °ता वि[२] अ[१]; याताः वि[१]. ३-३. सनमृघ्नोति वि[२] अ[१]. ४. वासवित वि[२]. ५. °भजनः वि[२] अ[१], °जननः वि[१]. ६. °च्छ वि[२] अ[१]. ७. °त्राप्येवमेव अ वि[१]. ८-८. यज्ञं ममैतद्दि° मूको. ९. °राधयेति मूको. १०. सवायम् वि[२]. ११. °त वि[२]; °तः अ[१]. १२-१२. °कार्यास्तु मूको. १३. संभक्तयः वि[१२३]; संभक्तः वि[२]; संभक्त्यः अ. १४-१४. °हेऽवस्थितो मर्यादया अ.

प्रसादात् त्वत्सायुज्यं गतस्सन् ऋतावा यज्ञवान् सत्यवान् उदकवान् वा स्यामिति शेषः। रोहिदश्वः रोहित्संज्ञकाश्ववांश्च स्याम्। पुरुक्षुः बह्वन्नश्च बहुस्तुतिशब्दश्च वा स्याम्। किञ्च द्युभिः दीप्तैः अहभिः अहोभिः सामर्थ्यात् कतिपयैरपि अस्मै मह्यम् वामम् वननीयं फलं दृष्टमदृष्टं वा अस्तु ॥ ४ ॥

वेङ्कट० निष्पन्नानि अग्ने! कर्माणि मह्यम् सम्भक्तॄणि[1], यम् मनुष्यं माम्[2] त्रायसे[3] गृहे वर्तमानः[4] सर्वदा[5] देवानां ह्वाता। यज्ञवान् सः रोहिदश्वः बहुस्तुतिः दीप्तेषु अहस्सु वननीयं हविः अस्मै भवतु, दीप्तेभ्यः वा अहोभ्यः[6] ॥ ४ ॥

द्युभि॑र्हि॒तं मि॒त्रमि॑व प्र॒योगं॑ प्र॒त्नमृ॒त्विज॑मध्व॒रस्य॑ जा॒रम्।
बा॒हुभ्या॑म॒ग्निमा॒यवो॑ऽजनन्त वि॒क्षु होता॑रं॒ न्य॑सादयन्त ॥ ५ ॥

द्यु॒ऽभिः॑। हि॒तम्। मि॒त्रम्ऽइ॑व। प्र॒ऽयोग॑म्। प्र॒त्नम्। ऋ॒त्विज॑म्। अ॒ध्व॒रस्य॑। जा॒रम्। बा॒हुऽभ्या॑म्। अ॒ग्निम्। आ॒यवः॑। अ॒ज॒न॒न्त॒। वि॒क्षु। होता॑रम्। नि। अ॒सा॒द॒य॒न्त॒ ॥ ५ ॥

उद्गीथ० यत्तदोरध्याहारः क्रियते पूर्वोत्तरयोर्मन्त्रयोः। यं त्वामग्निम् हितम् मित्रमिव प्रयोगम् हितकारिणं स्निग्धमिव सर्वकार्येषु प्रयोक्तव्यम् प्रत्नम् पुराणम्। ऋत्विजम् 'अग्निर्वै देवानां होतासीत्' (ऐब्रा ३,१४) इति वचनात्। अथवा ऋतावृतौ देवानां यष्टारम्। अध्वरस्य यज्ञस्य जारम् जरयितारं परिसमापयितारम् बाहुभ्याम् आयवः मनुष्या "ऋत्विग्यजमानाः द्युभिः अहोभिश्च"। दिवसेष्वित्यर्थः। 'अजनन्त जनितवन्तः'। विक्षु विशो मनुष्यास्तदाकारेषु। देवेषु इत्यर्थः। होतारम् आह्वातारम्। नि असादयन्त नियमेन सादितवन्तश्च। देवानां यागार्थमाह्वातारं निरूपितवन्तश्चेत्यर्थः ॥ ५ ॥

वेङ्कट० स्तिमितम्(?)[9] दीप्तैराहितम् मित्रमिव कार्येषु प्रयोक्तव्यम् प्रत्नम् ऋत्विजम् अध्वरस्य जरयितारं समापयितारम्[10] बाहुभ्याम् अग्निम् आयवः जनयन्ति[10], मनुष्येषु होतारम् स्थापयन्ति[11] चेति[12] ॥५॥

स्व॒यं य॑जस्व दि॒वि दे॑व दे॒वान् किं ते॒ पाकः॑ कृणव॒दप्र॑चेताः।
यथाय॑ज ऋ॒तुभि॑र्देव दे॒वाने॒वा य॑जस्व त॒न्वं॑ सुजात ॥ ६ ॥

स्व॒यम्। य॒ज॒स्व॒। दि॒वि। दे॒व॒। दे॒वान्। किम्। ते॒। पाकः॑। कृ॒ण॒व॒त्। अप्र॑ऽचेताः। यथा॑। अय॑जः। ऋ॒तुऽभिः॑। दे॒व॒। दे॒वान्। ए॒व। य॒ज॒स्व॒। त॒न्व॑म्। सु॒ऽजा॒त॒ ॥ ६ ॥

उद्गीथ० स त्वं हे देव! अग्ने! आत्मनैव यजस्व दिवि दीप्तिमति वेदिस्थाने स्थितान् देवान्

---

१. °भर्तॄ° वि[२] अ[१]; °भ्रातॄ° वि[१]. २. नास्ति अ[१]. ३. त्रायध्वे वि[२] अ[१]; भयसे वि[१]. ४. °न वि[२] अ[१]. ५. नास्ति वि[२] अ[१]. ६. वाह्येमृ वि[२] अ[१]; वाह्योभ्यः वि[१]. ७. °यजमानामनुष्या हो° अ वि[२]; °मानहो° वि[१,३]. ८-८. नास्ति मूको. ९. स्मितम् अ[१]; नास्ति वि[१]. १०. नास्ति वि[१]. ११. स्नाप° वि[२]; स्त्रप° अ[१]. १२. चेत्यर्थः अ[१].

मानुषहोत्रा [1]देवयागं मा कार्षीः[1] । यतः ते तव[2] सम्बन्धि देवयागकर्म किम् कृणवत् करोति पाकः पक्तव्यप्रज्ञः अप्रचेताः अप्रज्ञानो मानुषो होता । त्वयाऽनधिष्ठितो न किञ्चिदपि जानातीत्यर्थः । किञ्च यथा येन प्रकारेण अयजः यजसि त्वम् देव! ऋतुभिः ऋतुदेवताभिः सह यागकालैर्वा देवान्, एव एवम् यजस्व तन्वम् । स्वमात्मानमित्यर्थः । हे सुजात! शोभनजन्मन्! शोभनदेवयागकर्मार्थमुत्पन्न! वा ॥ ६ ॥

**वेङ्कट०** स्वयम् एव यजस्व दिवि स्थितान्[3] देव![4] देवान् । [5]किम् तव[5] करोति पक्तव्यप्रज्ञः[6] अप्रचेताः मनुष्यः । यथा त्वम्[7] अयजः अन्यान्[8] देवान् स्वेषुस्वेषु[9] कालेषु, तथा आत्मानमपि यजस्व सुजात! इति ॥ ६ ॥

भवा॑ नो अग्नेऽवि॒तोत गो॒पा भवा॑ वय॒स्कृदु॒त नो॑ वयो॒धाः ।
रास्वा॑ च नः सुमहो ह॒व्यदा॑तिं॒ त्रास्वो॒त न॑स्त॒न्वो॒३॒ अप्र॑युच्छन् ॥ ७ ॥

भव॑ । नः॒ । अ॒ग्ने॒ । अ॒वि॒ता । उ॒त । गो॒पाः । भव॑ । व॒यः॒ऽकृत् । उ॒त । नः॒ । व॒यः॒ऽधाः ।
रास्व॑ । च॒ । नः॒ । सु॒ऽम॒हः॒ । ह॒व्यऽदा॑तिम् । त्रास्व॑ । उ॒त । नः॒ । त॒न्वः॑ । अप्र॑ऽयुच्छन् ॥७॥

**उद्गीथ०** हे अग्ने! नः अस्माकम् अविता भव दृष्टभयेभ्यो रक्षिता भूयास्त्वम् । उत अपि च गोपाः अदृष्टभयेभ्यः गोप्ता[10] भूयाः । भव वयस्कृत् वयसाऽत्र जीवितं लक्ष्यते[11] । जीवितस्य च समग्रस्य कर्ता भूयाः । उत नः वयोधाः वयसोऽन्नस्य च दाता भूयाः । रास्व च देहि च देवेभ्यः नः अस्माकम् स्वभूताम् हव्यदातिम् हविषो दातिं हे सुमहः! सुष्ठु महन्! [12]सुपूज्य! वा[12] । त्रास्व पालय उत अपि च नः अस्माकं स्वभूताः तन्वः शरीराणि अप्रयुच्छन् अप्रमाद्यन् ॥ ७ ॥

**वेङ्कट०** भव अस्माकम् अग्ने! रक्षकः अपि च गोपायिता[13] परेभ्यः प्रबलेभ्यः । [14]भव अन्नस्य[14] कर्ता अपि च[15] अन्नस्य दाता । देहि च अस्मभ्यम् सुपूजन! [16]यज्ञम्, त्रायस्व अपि[16] च अस्माकम् शरीराणि अप्रमाद्यन्[17] ॥ ७ ॥

[18]इति सप्तमाष्टके षष्ठाध्याये द्वितीयो वर्गः[18] ॥

## [ ८ ]

[19]त्रिशिरास्त्वाष्ट्र ऋषिः । अग्निर्देवता, अन्त्यानां तिसृणाम् इन्द्रः । त्रिष्टुप् छन्दः[19] ।

प्र के॒तुना॑ बृह॒ता या॑त्य॒ग्निरा रोद॑सी वृष॒भो रो॑रवीति ।
दि॒वश्चि॒दन्ताँ॑ उप॒माँ उदा॑नळ॒पामु॒पस्थे॑ महि॒षो व॑वर्ध ॥ १ ॥

---

१-१. °यागमाकार्षीः मूको. २. तद मूको. ३. °ता वि[2] अ[1]. ४. °वम् वि[2] अ[1]. ५-५. कितव वि[2] अ[1]. ६. व° वि[2] अ[1]. ७. धम् वि[2] अ[1]. ८. °न्या वि[2] अ[1]. ९. स्वेषु वि[2] अ[1]; स्वषु[2] वि[1]. १०. गोपि मूको. ११. वक्ष्यते मूको. १२-१२. सुपूजवा वि[1]; सुपूजया वि[2]; सुपूजयपा अ वि[2]. १३. °प° वि[2] अ[1]. १४-१४ मवानभ्य वि[2] अ[1]; पठन्नस्य वि[1]. १५. त वि[2] अ[1]. १६-१६. यज्ञास्वापि वि[2] अ[1]. १७. °दायत् वि[2] अ[1]. १८-१८. नास्ति मूको.

प्र । केतुना॑ । बृ॒ह॒ता । या॒ति॒ । अ॒ग्निः । आ । रोद॑सी॒ इति॑ । वृ॒ष॒भः । रो॒र॒वी॒ति॒ ।
दि॒वः । चि॒त् । अन्ता॑न् । उ॒प॒ऽमान् । उत् । आ॒न॒ट् । अ॒पाम् । उ॒प॒ऽस्थे॑ । म॒हि॒षः । व॒व॒र्ध॒ ॥

**उद्गीथ०** उत्तरं सूक्तं 'प्र केतुना' इति नवर्चं त्वाष्ट्रस्त्रिशिरा ददर्श। अस्याद्याभिः षड्भिः ऋग्भिरग्निं तुष्टाव। आत्मनस्त्राणार्थमन्त्येन तृचेनेन्द्रमभितुष्टाव। स्वप्नान्ते[1] किल—

"अभवत् स हि देवानां पुरोधाः प्रियकाम्यया ।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृक् ॥
तमृषिं[2] प्रहितं[3] त्विन्द्रो देवेषु बुबुधे[4] असुरः ।
सोऽस्य वज्रेण तान्याशु शिरांसि त्रीण्यथाच्छिदत्[5] ॥
तस्य यत् सोमपानं तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानम् अन्नादं तित्तिरोऽभवत्[6] ॥
तं वागभ्यवदत् तीव्रा[7] ब्रह्महाऽसि शतक्रतो! ।
प्रपन्नं हतवान् यस्माद्[8] विश्वरूपं पराङ्मुखम् ॥
तमभ्यषिञ्चत् सूक्तेन ऋषिर् 'आर्षः'[9] इति स्वयम् ।
सिन्धुद्वीपोऽपनुत्त्यर्थं तस्याश्लीलस्य पाप्मनः ॥" ( बृदे ६,१४९-१५३ )

केतुना प्रज्ञानेन बृहता महता सर्ववस्तुविषयेण युक्त इति शेषः। प्र याति प्रगच्छति अग्निः। क्व। आ रोदसी आङत्र प्रत्यर्थे। द्यावापृथिव्यौ प्रति गत्वा वृषभः इव रोरवीति देवयागकाले पृथिव्याम् अत्यर्थं शब्दं करोति। देवाह्वानकाले दिवः अन्तान् अवसानान् उपमान् सन्निकृष्टांश्च प्रदेशान् ज्वालात्मना आदित्यात्मना वा स्थितः उत् आनट् ऊर्ध्वं व्याप्नोति[10] ॥ १ ॥

**वेङ्कट०** त्रिशिरास्त्वाष्ट्रः[11]। प्र गच्छति रश्मिना महता अग्निः[12] द्यावापृथिव्यौ[13] [14]प्रति। रोरवीति[14] च[15] वृषभः। सोऽयम् दिवः अन्तान् [16]समीपांश्च उत् व्याप्नोति[16] अपाम् उपस्थाने अन्तरिक्षे महान्[17] वर्धते ॥ १ ॥

मु॒मोद॑ गर्भो॑ वृष॒भः क॒कुद्मा॑नस्रे॒मा व॒त्सः शिमी॑वाँ अरावीत् ।
स दे॒वता॑त्युद्य॑तानि कृ॒ण्वन्त्स्वेषु॒ क्षये॑षु प्रथ॒मो जि॑गाति ॥ २ ॥

मु॒मोद॑ । गर्भः॑ । वृ॒ष॒भः । क॒कुत्ऽमा॑न् । अ॒स्रे॒मा । व॒त्सः । शिमी॑ऽवान् । अ॒रा॒वी॒त् ।
सः । दे॒वऽता॑ति । उत्ऽय॑तानि । कृ॒ण्वन् । स्वेषु॑ । क्षये॑षु । प्र॒थ॒मः । जि॒गा॒ति॒ ॥ २ ॥

---

१. स्वप्नान्ते मूको. २. तस्मै ददर्श मूको. ३. प्राहिं मूको. ४. विबुधैः मूको. ५. त्रीणि चिच्छिदे अ वि[1,2]; त्रीणि चिच्छेद वि[३]. ६. °रिस्त्वभूत् बृदे. ७. ब्राह्मी बृदे. ८. यस्त्वं मूको. ९. ऋ १०,९. १०. चतुर्थपादस्य व्याख्या नास्ति। ११. °रा त्वाष्ट्रम् वि[२] अ[१]; °रास्त्वाष्ट्रम् वि[१]. १२. °ग्नि वि[२]. १३. °व्या वि[२] अ[१]. १४-१४. पतिरोवीति वि[२]; पतिरोवाति अ[१]. १५. व वि[२] अ[१]. १६-१६. °श्चाव्या° वि[२]; °श्च व्या° अ[१]. १७. °हत् वि[२] अ[१].

उद्गीथ० योनिः मुमोद मोदते सततम् आप्तकामत्वात्। वृषभः इव च ककुद्मान् अग्निविद्युदादित्यात्मना स्थितः आहवनीयाद्याधारमेघमण्डलैः उन्नतत्वसामान्यात् वर्षिता, ककुद्मांश्च ज्वालाभिः तद्वदुन्नताभिः। असेमा प्रशस्तश्च। वत्सः च नक्तोषसोः सायंप्रातराहुत्युपजीवनात्। उक्तश्चायमर्थो मन्त्रान्तरे—'नक्तोषासा समनसा विरूपे' (ऋ १,११३,३), [1]'नक्तोषासा वर्णमामेम्याने[1] धापयेते शिशुमेकं समीची' (ऋ १,९६,५) इति। शिमीवान् हविर्वहनदेवाह्वानादिकर्मवांश्च अरावीत् देवाह्वानादिशब्दं सप्रयोजनं करोति[2]। सः अग्निः देवताति यज्ञे उद्यतानि[3] उद्यमान् कर्मार्थमुत्साहान् कृण्वन् कुर्वन् स्वेषु आत्मीयेषु क्षयेषु निवासेषु आहवनीयाद्याधारेषु स्थितः प्रथमः सर्वस्मादन्यस्माद् यागसाधनात् पूर्वम् जिगाति गच्छति कर्म प्रति। यागकर्मणि व्याप्रियत इत्यर्थः ॥ २ ॥

वेङ्कट० मोदते[4] द्यावापृथिव्योः[5] गर्भः[6] वृषभः[7] ककुद्मान् उच्छ्रिततेजस्कः बन्धकवर्जितः वत्सः[8] कर्मवान् शब्दायते यज्ञ उद्यमनानि कृण्वन् आत्मीयेषु[9] स्थानेषु प्रथमः गच्छति ॥ २ ॥

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः ।
अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषन्त ॥ ३ ॥

आ । यः । मूर्धानम् । पित्रोः । अरब्ध । नि । अध्वरे । दधिरे । सूरः । अर्णः ।
अस्य । पत्मन् । अरुषीः । अश्वऽबुध्नाः । ऋतस्य । योनौ । तन्वः । जुषन्त ॥ ३ ॥

उद्गीथ० यः अग्निः मूर्धानम् मूर्धवत् प्रधानभूतम् अग्निमन्थनप्रदेशम् पित्रोः अग्नेर्मातापितृभूतयोः अरण्योरवयवम् आ अरब्ध आङीषदर्थे। रभिर्हिंसार्थः। ईषद्धिनस्ति। [10]निर्मन्थनकाले दाहेन[10] दग्धुं समर्थोऽपि सन् न दहतीत्यर्थो। वा यं च अग्निम् अध्वरे यज्ञे नि दधिरे नियमेन धारयन्ति यष्टारः। यश्चाग्निः सूरः सूर्यः। अप्येकस्य सतः अग्निविद्युदादित्यात्मनाऽग्नेरेवाभिधावस्थानात्। अर्णः अर्त्ता च गन्ता च हविरादाय देवान् प्रति सर्वत्र वा। तस्य अस्य अग्नेः स्वभूताः तन्वः मूर्त्तयः अग्निविद्युदादित्यलक्षणा ज्वालालक्षणा वा आहवनीयादिलक्षणा वा। कीदृश्यः। अरुषीः आरोचनाः अश्वबुध्नाः अशनबन्धनाः। [11]हविराहारावस्थिता इत्यर्थः[11]। जुषन्त सेवन्ते। भक्षयन्ति सर्वयजमानहवींषि इत्यर्थः। क्वावस्थिताः सेवन्ते। उच्यते—ऋतस्य यज्ञस्य सम्बन्धिनि योनौ स्थाने वेद्याख्ये। किंगुणविशिष्टे। [12]पत्मन् पत्मनि[12] पतन्ति गच्छन्ति उपविशन्त्यत्र देवता इति पत्म[13] तत्र देवताऽऽसने। वेदिस्थान इत्यर्थः। अथवा तन्वः इति द्वितीयान्तमेतत्। यथोक्ता मूर्त्तीः सेवन्ते सर्वे यजमानाः स्तुतिभिर्हविर्भिश्च ॥ ३ ॥

वेङ्कट० द्यावापृथिव्योः मूर्धानम् स्वतेजोभिः आ रभते। तस्य[14] सुवीर्यस्य गमनस्वभावं[15] तेजो यज्ञेषु

---

१-१. नास्ति मूको. २. तु. ऋ १,१००,१३. ३. तु. ऋ ८,७७४,३. ४ मुमोद वि[१]. ५. °व्यौ वि[२] अ[१]. ६. नास्ति मूको. ७. °भ वि[२] अ[१]. ८. °त्स वि[२] अ[१]. ९. नास्ति वि[२] अ[१]. १०-१०. °कालोहेन अ वि[२]. ११-११. °हारावस्थीत्यर्थः अ वि[१,३]; °रस्थि इत्य° वि[३]. १२-१२. पद्मन् पद्मनि अ वि[२]. १३. पद्मं अ वि[२]. १४- तव्य वि[२] अ[१]. १५. भावं वि[२] अ[१].

कवयः नि दधिरे । अस्य[1] पतने[2] यत्रासौ पतति तस्मिन्[3] आरोचमानाः व्याप्तान्तरिक्षाः[4] यज्ञे[5] तनूः सेवन्ते विद्वांसः ॥ ३ ॥

उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा ।
ऋताय सप्त दधिषे पदानि जनयन् मित्रं तन्वे३ स्वायै ॥ ४ ॥

उषःऽउषः । हि । वसो इति । अग्रम् । एषि । त्वम् । यमयोः । अभवः । विभाऽवा ।
ऋताय । सप्त । दधिषे । पदानि । जनयन् । मित्रम् । तन्वे । स्वायै ॥ ४ ॥

**उद्गीथ०** उष इति षष्ठ्यर्थसम्बोधनविभक्तिरेषा । उषश्शब्देन चात्र सामर्थ्यात् सायंप्रातस्सन्ध्ये उच्येते । हे वसो! स्वेन ज्योतिषा सर्वस्याच्छादयितः! वसुमन्! वा सर्वस्य वसुभूत! वा प्रशस्य! वा अग्ने! उषसः सायंसन्ध्यायाः। उषसः प्रातस्सन्ध्यायाश्च अग्रम् पूर्वम् हि यस्मात् एषि गच्छसि व्याप्रियमाणः[6] । त्वम् [7]यमयोः युग्मयोः परस्परवियुक्तयोरहोरात्रयोः विभावा दीप्तिमान् अभवः भवसि । ऋताय यज्ञार्थम् सप्त पदानि सप्तसङ्ख्याकानि धिष्ण्यादिस्थानानि दधिषे धारयसि मित्रम् आदित्यम् जनयन् उत्पादयन्[7] । एकस्मादादित्यात् (?) । तन्वे[8] स्वायै पञ्चम्यर्थे चतुर्थी । तन्वः स्वायाः स्वस्माच्छरीरात् । अग्नेः[9] [10]आदित्यजन्म 'मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायत प्रातरुद्यन्' ( ऋ १०,८८,६ ), 'स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् । तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः' ( ऋ १०,८८,१० ) इत्यादिषु[10] श्रूयते[9] ॥ ४ ॥

**वेङ्कट०** सर्वस्या एव[11] उषसः त्वम् अग्रम् एषि वासयितः![12] । त्वम् अहोरात्रयोः अभवः दीप्तिमान्[13] । यज्ञार्थम् धारयसि सप्त स्थानानि[14] ऋतूऽर् जनयन्[15] मित्रम् देवम् स्वस्मात् शरीरात्[16] ॥ ४ ॥

भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि ।
भुवो अपां नपाज्जातवेदो भुवो दूतो यस्य हव्यं जुजोषः ॥ ५ ॥

भुवः । चक्षुः । महः । ऋतस्य । गोपाः । भुवः । वरुणः । यत् । ऋताय । वेषि ।
भुवः । अपाम् । नपात् । जातऽवेदः । भुवः । दूतः । यस्य । हव्यम् । जुजोषः ॥ ५ ॥

**उद्गीथ०** भुवः भवसि । चक्षुः । कस्य । महः महतः ऋतस्य यज्ञस्य । गोपाः गोपयिता च । भुवः भवसि च त्वमेव वरुणः आदित्यः । कदा । यत् यदा ऋताय उदकार्थं भौमरसलक्षणस्योदकस्यादानार्थं पृथिवीं प्रति वेषि गच्छसि तदा । भुवः भवसि च त्वमेव अपाम्

---

१. स्व वि[2] अ[1]. २. °तिः वि[2] अ[1], ३. तमसिन् वि[2] अ[1]. ४. व्याप्ता वि[2] अ[1]. ५. यज्ञेन वि[1] अ[1]. ६. विप्रियमाणः मूको. ७-७. यमयोः मूको; पूर्त्तिः सायणानुसारिणी द्र. ८. तन्वै अ वि[1]. ९. नास्ति मूको. १०-१०. एष भाष्यांशः १०,८,६ मन्त्रभाष्ये लेखकप्रमादात् सन्निविष्टस्तत इहोद्धृतः । ११. इव वि[2] अ[2]. १२. वासयातः वि[1]. १३. दिप्ति° वि[1]. १४. °नान् वि[2] अ[1]. १५. तनयन्तम् वि[2] अ[2]. १६. °र वि[2].

वृष्टिलक्षणानाम् अपाम् नपात् मेघः। कथम्। अद्भ्यो हि मेघो जायते, मेघात् त्वं विद्युद्रूपो जायसे। हे जातवेदः! भुवः भवसि च दूतः [1]त्वमेव। कस्य[1]। यस्य यजमानस्य हविः जुजोषः सेवसे भक्षयसि तस्य ॥ ५ ॥

**वेङ्कट०** भवसि[2] प्रकाशकः सूर्यः। महतो यज्ञस्य गोपायिता भुवः[3], वरुणः[4] च। यदा यज्ञाय[5] आगच्छसि। भवसि [6]च अपाम् नपात्[6] जातप्रज्ञ!। भुवः दूतः[7] तस्य, यस्य हव्यम् सेवसे ॥ ५ ॥

[8]इति सप्तमाष्टके षष्ठाध्याये तृतीयो वर्गः[8] ॥

**भुवो॑ य॒ज्ञस्य॒ रज॑सश्च ने॒ता यत्रा॑ नि॒युद्भिः॒ सच॑से शि॒वाभिः॑ ।**
**दि॒वि मू॒र्धानं॑ दधिषे स्व॒र्षां जि॒ह्वाम॑ग्ने चकृषे हव्य॒वाह॑म् ॥ ६ ॥**

भुवः॑ । य॒ज्ञस्य॑ । रज॑सः । च॒ । ने॒ता । यत्र॑ । नि॒युत्ऽभिः॑ । सच॑से । शि॒वाभिः॑ ।
दि॒वि । मू॒र्धान॑म् । द॒धि॒षे॒ । स्वः॒ऽसाम् । जि॒ह्वाम् । अ॒ग्ने॒ । च॒कृ॒षे॒ । ह॒व्य॒ऽवाह॑म् ॥ ६ ॥

**उद्गीथ०** भुवः भवसि त्वम् यज्ञस्य रजसः च नेता प्रापयिता इतो लोकात्। 'अग्निर्वा इतो वृष्टिं समीरयति' ( या ७,२४ [ तु. तैसं २,४,१०,२; काठ ११,१०; मै २,४,८ ] ) इति श्रुतेः। क्व नेता। उच्यते—यत्र यस्मिन्नन्तरिक्षे लोके नियुद्भिः शिवाभिः नियुत्संज्ञकाभिरश्वजातिभिः सख्यादिभिः सम्बद्धं वायुम् सचसे हविषोदकेन च सेवसे तत्रान्तरिक्षे नेताऽसि। दिवि द्युलोके च मूर्धानम् शिरोवत् प्रधानभूतम् दधिषे हविर्नयनद्वारेण धारयसि। कम्। स्वर्षाम् स्वरिति द्यौरुच्यते। दिवः सनितारं सम्भक्तारमादित्यम्। जिह्वास्थानीयां च ज्वालाम्। हे अग्ने! करोषि हव्यवाहम् हविषां वोढ्रीम् ॥ ६ ॥

**वेङ्कट०** भुवः यज्ञस्य उदकस्य च नेता यस्मिन् काले वायुभिः सङ्गच्छसे[9] कल्याणैः। दिवि च आदित्यात्मना मूर्धानम् करोषि सर्वस्य सम्भक्तारम्। ज्वालाम् च अग्ने! करोषि हविषां वोढ्रीम्[10] ॥ ६ ॥

**अ॒स्य त्रि॒तः क्रतु॑ना व॒व्रे अ॒न्तरि॒च्छन् धी॒तिं पि॒तुरेवैः॒ पर॑स्य ।**
**स॒च॒स्यमा॑नः पि॒त्रोरु॒पस्थे॑ जा॒मि ब्रु॑वा॒ण आयु॑धानि वेति ॥ ७ ॥**

अ॒स्य । त्रि॒तः । क्रतु॑ना । व॒व्रे । अ॒न्तः । इ॒च्छन् । धी॒तिम् । पि॒तुः । एवैः॑ । पर॑स्य ।
स॒च॒स्यमा॑नः । पि॒त्रोः । उ॒पऽस्थे॑ । जा॒मि । ब्रु॒वा॒णः । आयु॑धानि । वे॒ति ॥ ७ ॥

**उद्गीथ०** अत्रेतिहासः—त्रितमृषिमनुचरमिन्द्रः किलोवाच। आयुधानि वेत्सि त्वम्। त्रिशिरसो वधे मे साहाय्यं कुर्विति। स एवमुक्तस्त्रितो यज्ञे भागं वव्रे स्ववीर्यवृद्ध्यर्थम्। तस्मै पाणि-

१-१. त्वमेकस्य मूको. २. भव वि[2] अ[1]. ३. इव वि[2] अ[1]. ४. °णं मूको. ५. यज्ञय वि[2].
६-६. चार्यं वां नत्रात् वि[2] अ[1]; चान्नवान् वि[1]. ७. आतः वि[2]; अतः अ[1]; भूतः वि[1]. ८-८. नास्ति मूको. ९. सह सचसे वि[1]. १०. नास्ति वि[2] अ[1].

प्रक्षालनार्थमुदकं यज्ञभागं च इन्द्रो दत्तवान् । तेन यज्ञभागेन वृद्धवीर्यश्चित इन्द्रेण सहितः[1] त्रिशिरसा सह युद्ध्वा तं हत्वा तस्य स्वभूता गा[2] आजहार । स पुनरुज्जीवितो बहुतरं बलं प्राप्येन्द्रमयोधयत् । तं वज्रेण निर्भिन्नवानिन्द्रः, स पराङ्मुखीकृतः । तस्य त्रीणि शिरांसि चिच्छेद वज्रेणेन्द्रो महान्तं शत्रुजयनिमित्तं सिंहनादं कुर्वन्निति । एतद्भावि वस्तु स्वप्नान्तेऽनेन तृचेन ददर्श ।

यस्त्रैलोक्यस्याधिपतिः तस्य अस्य इन्द्रस्य क्रतुना त्रिशिरसो मम वधे साहाय्यकरणकर्मणा निमित्तेन एवैः कामैर्यज्ञभागेच्छाभिश्च चोद्यमानश्चित ऋषिरिन्द्रस्य सखा वव्रे वृतवान् प्रार्थितवान् किल[3] अन्तः मध्ये । कस्य । सामर्थ्याद्यज्ञस्य । इच्छन् धीतिन् दत्तिं भागम् । कुत इच्छन् । पितुः सर्वस्य जगतः पातुः । परस्य प्रकृष्टस्येन्द्रस्य सकाशात् । लब्धेन च तेन यज्ञभागेन अन्नेन[4] सचस्यमानः सेव्यमानः सर्वयजमानैः पित्रोः सर्वस्य मातापितृभूतयोर्द्यावापृथिव्योः उपस्थे समीपे सामर्थ्याद्यज्ञे । जामि योग्यमिन्द्रस्यानुरूपं सामर्थ्यात् [5]स्तोत्रम् ब्रुवाणः उच्चारयन् त्रितः आयुधानि स्वकीयानि वेति त्रिशिरसो मम वधार्थमागच्छति[5] ॥ ७ ॥

वेङ्कट० तृचोऽन्त्य ऐन्द्रः[6] । अस्य इन्द्रस्य कर्मणा साहाय्यरूपेण[7] अन्तः इच्छन् धारणम् परस्य पालयितुः इन्द्रस्य[8] रक्षणैः आत्मनः सचनं चेच्छन् द्यावापृथिव्योः उपस्थे आत्मनः स्वभूतस्य जामि स्तोत्रम्[9] ब्रुवाणः उदकानि गच्छति[10] । यथोत्तरत्युदकैः पूर्णात्कूपात्[11] त्रितः[12] तथा प्रवृद्धोदकं[13] तं[14] कूपमिन्द्रश्चकारेति[15] ॥ ७ ॥

स पित्र्याण्यायुधानि विद्वानिन्द्रेषित आप्त्यो अभ्ययुध्यत् ।
त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः ॥ ८ ॥

सः । पित्र्याणि । आयुधानि । विद्वान् । इन्द्रऽइषितः । आप्त्यः । अभि । अयुध्यत् ।
त्रिऽशीर्षाणम् । सप्तऽरश्मिम् । जघन्वान् । त्वाष्ट्रस्य । चित् । निः । ससृजे । त्रितः । गाः ॥८॥

उद्गीथ० मया स्वप्ने दृष्टः सः एव पूर्वोक्तः त्रितः पित्र्याणि पिताऽत्र किलाग्निरुच्यते सर्वस्य । स तानि पित्र्याण्याग्नेयानि आयुधानि विद्वान् शत्रुवधाय प्रयोक्तुं संहर्तुं च[16] जानन् इन्द्रेषितः इन्द्रेण त्रिशिरसा सह युद्धार्थं प्रेषितः सन् आप्त्यः आप्तपुत्रः[17] अभि अयुध्यत् आभिमुख्येन युद्धवान्[18] सम्प्रहृतवान् किल त्रिशीर्षाणम् त्रिशिरसं माम् सप्तरश्मिम्[19] शत्रुनियमनार्थं[20] सप्तप्रग्रहहस्तम् । अथवा सप्तरश्मिरादित्यः, तत्सदृशस्तम्[21] रश्मिवन्नियन्त्रितसप्तच्छन्दस्कं[22] वा । अभियुध्य च जघन्वान् हतवान् किल । सामर्थ्यात् सम्मूर्च्छितं कृतवानित्यर्थः । कृत्वा च त्वाष्ट्रस्य चित्

१. नास्ति मूको. २. गाव मूको. ३. किल स्वप्नान्ते वि[१,२]; किल स्वामन्ते अ त्रि[१]. ४. णेन वि[१,२]. ५-५. नास्ति मूको; पूर्तिः सायणानुसारिणी द्र. ६. °न्द्र वि[२] अ[१]. ७ रूपेण मूको. ८. नास्ति वि[१]. ९. त्वम् वि[२] अ[१]; त्रम् वि[१]. १०. इच्छति वि[१]. ११. °पा वि[२]. १२. तत् वि[२]; त्रितत् वि[१]; तितत् अ[१] मूको. १३. °क वि[२]. १४. नास्ति अ[१]. १५. रूप° वि[१] अ[१]. १६. सर्वं ह मूको. १७. वैप १,६६५ a द्र.; आप्तः पुत्रः अ वि[२]; अप्तः पुत्रः वि[१,२]. १८. युद्धं मूको. १९. °रश्मीन् मूको. २०. °नियार्थं मूको. २१. °दृशं क मूको. २२. °त्रिमश्रित° मूको.

चिदप्यर्थे। त्वष्टुः पुत्रस्य मम चान्यस्य वाऽसुरस्य स्वभूता गाः निः ससृजे निस्सृष्टवान्[1] किल। निष्कालितवानित्यर्थः ॥ ८ ॥

वेङ्कट० सः दिव्यानि उदकानि लभमान इन्द्रेण कूपात् प्रेषितः आप्त्यः[2] त्रितः त्वाष्ट्रं माम्[3] अयुध्यत्। अथ इन्द्रेण सह[4] त्रिशिरस्कम्[5] सप्तरश्मिम्[6] माम्[7] जघन्वान्। त्वाष्ट्रस्य त्रिशिरसः अन्तर्निहिताः गाः निः ससृजे त्रितः। गाः पशूनिति ॥ ८ ॥

भूरीदिन्द्र॑ उ॒दिन॑क्षन्त॒मोजोऽवा॑भिन॒त् सत्प॑ति॒र्मन्य॑मानम्।
त्वा॒ष्ट्रस्य॑ चिद्वि॒श्वरू॑पस्य॒ गोना॑माच॒क्रा॒णस्त्रीणि॑ शी॒र्षा परा॑ वर्क् ॥ ९ ॥

भूरि॑। इत्। इन्द्रः॑। उ॒त्ऽइन॑क्षन्तम्। ओजः॑। अव॑। अ॒भि॒न॒त्। सत्ऽप॑तिः। मन्य॑मानम्। त्वा॒ष्ट्रस्य॑। चि॒त्। वि॒श्वऽरू॑पस्य। गोना॑म्। आ॒ऽच॒क्रा॒णः। त्रीणि॑। शी॒र्षा। परा॑। व॒र्गिति॑ वर्क् ॥

उद्गीथ० सम्मूर्च्छ्य संज्ञां प्रतिलभ्य उत्थाय युद्धार्थम् भूरि इत् बह्विव। पूर्वतुल्यम् अतिरिक्तं वेत्यर्थः। ओजः बलम् उदिनक्षन्तम् व्याप्नुवन्तम्, कुर्वन्तमित्यर्थः। मन्यमानम् शूरं बलवन्तं वा आत्मानं चिन्तयन्तम्। अथवा मन्यतिर्दीप्तिकर्मा क्रोधकर्मा वा (तु. निघ २,६;१३)। दीप्यमानं क्रुध्यन्तं वा। अथवा 'मन्यते' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात्। इन्द्रं स्तुवन्तं मां त्वाष्ट्रम् सत्पतिः सतां पाता शोभनो वा त्रैलोक्यस्य स्वामी अव अभिनत् वज्रेण विदारितवान् किल। विदार्य च त्वाष्ट्रस्य चित् चिच्छब्दः किलार्थे। त्वष्टुः पुत्रस्य मम किल विश्वरूपस्य। गोनाम् गवां, स्वामिनः इति शेषः। आचक्राणः आकारादिशब्दं कुर्वन्नित्यर्थः[8]। त्रीणि शीर्षाणि शिरांसि परा वर्क् पराङ्मुखस्य वृकणवान् किल। ईदृशं भावि वस्तु स्वप्नान्ते दृष्टवान् अनेन तृचेन विश्वरूपः ॥ ९ ॥

वेङ्कट० बहु बलम् उद्व्याप्नुवानम्[9] इन्द्रः [10]अव अभिनत्[10] त्रिशिरसम्[11] सतां पतिः अभिमन्यमानम्[12]। त्वाष्ट्रस्य अपि च विश्वरूपस्य स्वभूता गा आत्माभिमुखीकुर्वन् त्रीणि शीर्षाणि [13]परा वर्क्[13] चिच्छेद ॥ ९ ॥

[14]इति सप्तमाष्टके षष्ठाध्याये चतुर्थो वर्गः[14] ॥

[ ९ ]

[15]त्रिशिरास्त्वाष्ट्रः, सिन्धुद्वीप आम्बरीषो वा ऋषिः। आपो देवता। गायत्री छन्दः, पञ्चमी वर्धमाना गायत्री, सप्तमी प्रतिष्ठा गायत्री, अष्टमीनवम्यौ अनुष्टुभौ[15]।

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन। म॒हे रणा॑य॒ चक्ष॑से ॥ १ ॥

आप॑ः। हि। स्थ। म॒यः॒ऽभुव॑ः। ताः। न॒ः। ऊ॒र्जे। द॒धा॒त॒न। म॒हे। रणा॑य। चक्ष॑से ॥ १ ॥

---

१. निदान मूको. २. आप्तः वि[२] अ[१]. ३. मम् वि[२] अ[१]. ४. स वि[१] अ[१]. ५. तिशिरस्कम् अ[१]. ६. प्रसप्तरश्मि वि[२] अ[१]; ऽसुप्तरश्मि वि[१]. ७. मान् मूको. ८. कुर्वित्यर्थः वि[२]; कुर्वत्यर्थः अ वि[१,३]. ९. प्तु भ्‍या वानम् वि[१]. १०-१०. अवाहिनः वि[२] अ[१]; अवाभिनः वि[१]. ११. तिशि° वि[१]. १२. °भिधमा वि[२] अ[१]. १३-१३. परावर वि[२] अ[१]; परापर वि[१]. १४-१४. नास्ति मूको.

**उद्गीथ०** एतस्मिंश्च वस्तुनि भाविनि [1]वा भूते वा सति[1] इन्द्रस्य ब्रह्महत्यापनोदनमुत्तमं[2] सूक्तम् 'आपो हि ष्ठा' इत्यब्देवत्यं खैलिक्या सह दशर्चं त्वाष्ट्रस्त्रिशिरा आम्बरीषः सिन्धुद्वीपो वा ददर्श ॥

हे आपः! या यूयं स्नानपानसम्यग्जरणादिना[3] प्रकारेण सर्वस्य जगतः मयोभुवः स्थ सुखस्य भावयित्र्यो भवथ, ताः नः अस्मान् ऊर्जे अन्नाय दधातन धत्त अन्नप्राप्तियोग्यानस्मान् कुरुत। अन्नमस्मभ्यम् दत्तेत्यर्थः। महे महते च रणाय रमणीयाय चक्षसे दर्शनाय ज्ञानाय। ज्ञानप्राप्तियोग्यांश्चाऽस्मान् कुरुतेत्यर्थः। महत्त्वं ज्ञानस्य सर्वविषयत्वात्। स्वर्गापवर्गरमणीयफलप्राप्तिश्च रमणीयत्वं ज्ञानस्य ॥ १ ॥

**वेङ्कट०** "'आपो हि' सिन्धुद्वीपो वाऽऽम्बरीषः" (ऋअ २,१०,९) इति। तत्र बृहद्देवता (६,१५२-१५३)—

"तं [4]वागभ्यवदद् ब्राह्मी[4] ब्रह्महाऽसि शतक्रतो।
प्रपन्नं हतवान् यस्माद्[5] विश्वरूपं[6] पराङ्मुखम् ॥

तमभ्यषिञ्चत् सूक्तेन ऋषिर्[7] 'आपः' इति स्वयम्।
सिन्धुद्वीपोऽप्यनुत्यर्थं[8] तस्याऽश्लीलस्य[9] पाप्मनः ॥" इति।

आपः! हि स्थ सुखस्य भावयित्र्यः ताः [10]अस्मान् अन्नाय[10] धत्त, महते[11] च रमणीयदर्शनाय ॥१॥[12]

**यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥ २ ॥**

यः। वः। शिवऽतमः। रसः। तस्य। भाजयत। इह। नः। उशतीःऽइव। मातरः ॥ २ ॥

**उद्गीथ०** यः वः युष्माकं स्वभूतः शिवतमः अतिशयेन शिवः सुखः रसः गुणो मृष्टः स्वादुर्बलारोग्यकरश्च[13], तस्य रसस्यैकदेशं तं वा रसम् भाजयत सेवयत नः अस्मिन् लोके। किमिव। उशतीः इव मातरः यथा उशतीः कामयमानाः स्तन्यरसं मातरः परेण हार्देन युक्ताः ॥ २ ॥

**वेङ्कट०** यः[14] [15]वः सुखतमः[15] रसः, तम् भाजयत इह अस्मान् कामयमानाः इव मातरः सुतं[16] रसम् ॥ २ ॥

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥ ३ ॥**

तस्मै। अरम्। गमाम। वः। यस्य। क्षयाय। जिन्वथ। आपः। जनयथ। च। नः ॥ ३ ॥

**उद्गीथ०** तस्मै पापाय शत्रवे वा तस्य पापस्य शत्रोर्वाऽर्थाय [17]वः युष्मान् अरम् शीघ्रम् गमाम[17] गमयाम यस्य पापस्य [18]शत्रोर्वा क्षयाय[18] विनाशाय जिन्वथ प्रीणयथ। तथा[19] हे [20]आपः! जनयथ च। पुत्रपौत्रादिवृद्धिजनने[20] प्रयोजयथेत्यर्थः। नः अस्मान् ॥ ३ ॥

---

१. पा भूते सति अ; वा भूते सति वि[2]; पं भूते सनि वि[1,3]. २. °मुत्तरं वि[1]. ३. °म्यग् कर° वि[1,3]. ४-४. वाह्यत्वद…तीव्रा वि[2] अ[1]. ५. यस्त्वं वि[2] अ°; नस्त्वं वि[1]. ६. क्रूपं…वि[2] अ[1]. ७. ऋग्भिर् वि[2] अ[1]. ८. °नुत्य° मूको. ९. तस्यीशिष्टस्य वि[2] अ[1]; तस्या च श्लिष्टस्य वि[1]. १०-१०. °स्मदन्ना° वि[2] अ[1]. ११. महंते वि[2] अ[1]. १२. तु. या. ( ९,२७ ) व्याख्यानम्। १३. स्वद्बालंवला° वि[1]. १४. नास्ति वि[2] अ[1]. १५-१५. व…वि[2] अ[1]. १६. तं मूको. १७-१७. नास्ति मूको.; पूर्तिः सायणानुसारिणी. १८-१८. शत्रोर्वार्थाय मूको. १९. तस्य यथा मूको. २०-२०. आपः××× क्तादि° अ वि[1,2]; आपः [पुत्र पौ] त्रादि° वि[3].

**वेङ्कट०** तदुद्दिश्य[1] पर्याप्तं युष्मान् गच्छामः, यस्य अन्नस्य निवासार्थं[2] यूयम् ओषधीः तर्पयथ[3]। [4]हे आपः! अस्मान् जनयथ[4] सपुत्रान् कुरुत रसानुप्रदानादिति ॥ ३ ॥

**शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शं योर॒भि स्र॑वन्तु नः ॥ ४ ॥**

शम् । नः॒ । दे॒वीः । अ॒भिष्ट॑ये । आपः॑ । भ॒व॒न्तु॒ । पी॒तये॑ । शम् । योः । अ॒भि । स्र॒व॒न्तु॒ । नः॒ ।४।

**उद्गीथ०** शम् सुखम् नः अस्माकम् भवन्तु पापापनोदनद्वारेण देवीः देव्यः आपः । अभिष्टये अन्वेषणाय च भवन्तु । प्रार्थितमर्थं यच्छन्तु चेत्यर्थः। अथवा अभिष्टये यागाय च । यज्ञाङ्गभावाय भवन्त्वित्यर्थः । पीतये पानाय च भवन्तु । स्नानपानादिक्रियाभिनिर्वृत्तये[5] चाव्यवच्छेदेन भवन्त्वित्यर्थः । किञ्च शम् शमनम् उत्पन्नानां रोगाणामुपशमश्च योः यावनञ्च पृथग्भावम् उत्पत्स्यमानानां भयानाम् अपनयनञ्च । कुर्वंत्य[6] इति शेषः । नः अस्माकम् अभि उपरि स्रवन्तु पावनार्थं सिच्यमानाः ॥ ४ ॥

**वेङ्कट०** सुखम् अस्माकं भवतु । देव्यः आपः हि यागार्थम् भवन्तु, पानाय च । तथा शम्[7] च योः च अभि स्रवन्तु, शमनम् उत्पन्नानां [8]रोगाणां यापनमनुत्पन्नानां[8] पृथग्भावं चेति ॥ ४ ॥

**ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम् । अ॒पो या॑चामि भेष॒जम् ॥ ५ ॥**

ईशा॑नाः । वार्या॑णाम् । क्षय॑न्तीः । च॒र्ष॒णी॒नाम् । अ॒पः । या॒चा॒मि॒ । भे॒ष॒जम् ॥ ५ ॥

**उद्गीथ०** ईशानाः ईश्वराः वार्याणाम् वारिप्रभवानां व्रीहियवादीनां वरणीयानाम् क्षयन्तीः ईश्वराः निवासयित्रीर्वा विशिष्टां गतिं गमयित्रीर्वेति चर्षणीनाम् मनुष्याणाम् [9]अपः उदकानि[9] याचामि भेषजम् 'भेषजम्' ( निघ ३,६ ) इति सुखनाम । व्याधेः पापस्य वा अपनोदकं वस्तु । तदहं प्रार्थये ॥ ५ ॥

**वेङ्कट०** ईशानाः [10]धनानाम् निवसतीः मनुष्यार्थम्[10] अपः याचामि भेषजम् इति ॥ ५ ॥

**अ॒प्सु मे॒ सोमो॑ अब्रवीद॒न्तर्विश्वा॑नि भेष॒जा । अ॒ग्निं च॑ वि॒श्वश॑म्भुवम् ॥ ६ ॥**

अ॒प्ऽसु । मे॒ । सोमः॑ । अ॒ब्र॒वी॒त् । अ॒न्तः । विश्वा॑नि । भे॒ष॒जा । अ॒ग्निम् । च॒ । वि॒श्वऽश॑म्भुवम् ॥६॥

**वेङ्कट०** पूर्वं ( ऋ १,२३,२० ) गता इति ॥ ६ ॥

**आपः॑ पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒३॒॑ मम॑ । ज्योक् च॒ सूर्यं॑ दृ॒शे ॥ ७ ॥**

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् । च॒ । सूर्य॑म् । दृ॒शे ॥ ७ ॥

---

१. तमु° वि[2] अ[1]. २. दिवा° वि[2] अ[1]. ३. °पियथा वि[2] अ[1]. ४-४. नास्ति वि[1]. ५. क्रियाभिः निर्वृ° वि[2]. ६. कुर्वन्त्य मूको. ७. गम् मूको. ८-८. °णामया° वि[2] अ[1]. ९-९. अप उ° मूको. १०-१०. धननिवसन्तिर्न मनु° वि[2] अ[1]; °सन्तीर्म° वि[2].

वेङ्कट० पूर्वं ( १,२३,२१ ) गता इति ॥ ७ ॥

इदमापः प्र वहत यत् किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ८ ॥

इदम् । आपः । प्र । वहत । यत् । किम् । च । दुःऽइतम् । मयि ।
यत् । वा । अहम् । अभिऽदुद्रोह । यत् । वा । शेपे । उत । अनृतम् ॥ ८ ॥

वेङ्कट० पूर्वं ( ऋ १,२३,२२ ) गता इति ॥ ८ ॥

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥ ९ ॥

आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि ।
पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज । वर्चसा ॥ ९ ॥

वेङ्कट० पूर्वं ( ऋ १,२३,२३ ) गता इति ॥ ९ ॥

---

सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः । वरेण्यक्रतूरहमा देवीरवसे हुवे ॥ १० ॥

उद्गीथ० अब्देवत्या खैलिक्येषा । सस्रुषीः स्रवणशीलाः निम्नानुसारिण्यः तदपसः तदेव स्रवणशीलत्वं निम्नानुसारित्वम् अपः कर्म यासां ताः दिवा नक्तम् च अहनि रात्रौ च सस्रुषीः वरेण्यक्रतूः स्नानपानपावनादिवरणीयकर्मणः[1] अहम् देवीः अपः आ हुवे आह्वयामि अवसे आत्मानो रक्षणार्थं तर्पणार्थं वा ॥ १० ॥

[2]इति सप्तमाष्टके षष्ठाध्याये पञ्चमो वर्गः[2] ॥

## [ १० ]

[2]नवमीवर्ज्यानामयुजां षष्ठ्याश्च वैवस्वती यमी ऋषिका, यमो देवता। षष्ठीवर्ज्यानां युजां नवम्याश्च वैवस्वतो यम ऋषिः, यमी देवता । त्रिष्टुप् छन्दः, त्रयोदशी विराट्स्थाना[2] ।

ओ चित् सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ॥

ओ इति । चित् । सखायम् । सख्या । ववृत्याम् । तिरः । पुरु । चित् । अर्णवम् । जगन्वान् ।
पितुः । नपातम् । आ । दधीत । वेधाः । अधि । क्षमि । प्रऽतरम् । दीध्यानः ॥ १ ॥

---

१. °कर्माणः मूको. २-२. नास्ति मूको.

उद्गीथ० उत्तरं यमयम्योः संवादसूक्तम् 'ओ चित्' इति चतुर्दशर्चम्। संवादेषु तु सर्वेषु स ऋषिर्यस्य वाक्यम् तत्[1]। उच्यते तेन वाक्येन या सा स्याद्देवता तत्र। अत्रेतिहासमाचक्षते[2]— यमी किल यमं समुद्रस्य मध्ये कञ्चिदवान्तरद्वीपं रम्यं रमणाय नीत्वा कामितवती। स च यमस्तां भगिनीत्वात् प्रत्याख्यातवानिति।

यमीवचनमेतत्। ओ इत्ययन्निपात आङुपसर्गस्यार्थे, ववृत्यामित्यनेन च क्रियापदेन सम्बध्यते। चिन्निपातः पूजार्थे। चित् पूजितमिष्टं श्रेष्ठं वेत्यर्थः। सखायम् गर्भवासादारभ्य सखिभूतं[3] यमम्[4] सख्या सख्याय, स्त्रीपुरुषसम्पर्कजनितमित्रत्वाय इत्यर्थः। आ ववृत्याम् आवर्तयामि। आभिमुख्येन स्थित्वा लज्जां परित्यज्य सम्भोगं करोमीत्यर्थः। तिरः अन्तर्हितम् अन्यजनाप्रकाशं विजनम् पुरु चित् बहु विस्तीर्णञ्चेत्यर्थः। अर्णवम् समुद्रैकदेशम् अवान्तरद्वीपम् जगन्वान् गतवती सती। धर्मस्य त्वरिता गतिरित्यनेन न्यायेन कामस्यापि त्वरितगतित्वात्। अपि च भविष्यतः पुत्रस्य पितुः तवार्थाय नपातम् अपत्यं गर्भलक्षणम्। कीदृशम्। प्रतरम् सर्वगुणोपेतमित्यर्थः। आ दधीत आदधातु[5] विधाता। गर्भाधाने हि तस्याधिकार इत्येवमुच्यते। उक्तञ्च मन्त्रान्तरे गर्भाधानादिकर्तृत्वम्[6]—

'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥' ( ऋ १०,१८४,१ ) इति।

क्व आदधातु। उच्यते। अधि क्षमि अधि पृथिव्यां मातुरुदरि, उदर इत्यर्थः। किं कुर्वन्नादधातु गर्भम्। [7]दीध्यानः ध्यायन्[7] दम्पती इत्यावयोरनुरूपताम्। आवयोरनुरूपापत्यजननार्थं[8] इत्यर्थं सम्बन्धं करोत्वित्यर्थः॥ १॥

वेङ्कट० वैवस्वतयोर्यमयम्योः संवादः। आ ववृत्याम् सखायम् [9]यमम् अहम्[9] सख्याय[10]। विस्तीर्णम् मेघम् समुद्रं वा अन्तर्धानार्थम् गच्छन् पितुः विवस्वतः[11] [12]पौत्रम् मयि आ दधातु[12] विधाता[13] यमः पृथिव्याम् अत्यन्तं दीप्यमानः तस्या अधिपतिः[14]॥ १॥

**न ते सखा॑ स॒ख्यं व॑ष्ट्ये॒तत् सल॑क्ष्मा॒ यद् विषु॑रूपा॒ भवा॑ति।**
**म॒हस्पु॒त्रासो॒ असु॑रस्य वी॒रा दि॒वो ध॒र्तार॑ उर्वि॒या परि॑ ख्यन्॥ २॥**

न। ते॒। सखा॑। स॒ख्यम्। व॒ष्टि॒। ए॒तत्। सऽल॑क्ष्मा। यत्। विषु॑ऽरूपा। भवा॑ति।
म॒हः। पु॒त्रासः॑। असु॑रस्य। वी॒राः। दि॒वः। ध॒र्तारः॑। उ॒र्वि॒या। परि॑। ख्य॒न्॥ २॥

उद्गीथ० यम्यैवमुक्ते स्वात्मानं[15] [16]परोक्षीकृत्य यमः प्रत्युवाच[16]। ते तव यम्याः सखा[17] गर्भवासलक्षणेन[18] सखिभूतो[19] यमः सख्यम् सखित्वं यत्त्वयोक्तं स्त्रीपुरुषसम्पर्कलक्षणम् एतत् न वष्टि

---

१. तत मूको. २. तत्रेतिहास° अ वि[२]. ३. सखीभूतं वि[२]. ४. समं मूको. ५. आदध अ वि[१]; दध वि[१,२]. ६. °नादित्वम् मूको. ७-७. नास्ति मूको. ८. °रूपस्यापत्य° वि[१]. ९-९. यमहं वि[२] अ[१]. १०. संख्या° वि[२] अ[१]. ११. नास्ति अ[१]. १२-१२. पौत्रमर्याधात् वि[१]; °मर्यादधातु वि[१]; धीत अ[१]. १३. °त वि[२] अ[१]. १४. °ति वि[२]; °ती अ[१]. १५. सात्मानं मूको. १६-१६. परोक्षी इत्यर्थः मूको. १७. न सखा मूको. १८. न गर्भ° मूको. १९. सखो° वि[१,३].

न कामयते नेच्छति। कस्मात् कारणात्। यत् यस्मात् सलक्ष्मा समानलक्षणा एकयोनिजत्वलक्षणा विषुरूपा भगिनी भवाति भवति[1]। यमी भवती समानयोनिजत्वाद् यस्मान्मे भगिनी भवसि त्वं तस्मात् त्वां न कामयेऽहमित्यर्थः।

'ओ चित् सखायं सख्या ववृत्याम्', 'पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः' ( ऋ १०,१०,१ ) इत्यनयोर्वचनयोर्युक्तं प्रतिवचनं 'न ते [2]सखा' इत्यादि। इदानीम् 'तिरः पुरू चिदर्णवम् जगन्वान्' इत्यस्य प्रतिवचनमाह—महः महतः असुरस्य प्राणवतः प्रज्ञावतो वा पुत्रासः पुत्रभूता इन्द्रादयः[2] लोकपालाः। [3]कीदृशाः। वीराः[3] 'वीरो वीरयत्यमित्रान्। वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा' ( या १,७ ) इति निर्वचनाद् विविधमीरयितारः शत्रूणाम् दिवः धर्तारः। उरु विस्तीर्णं विजनञ्चाऽवान्तरद्वीपं गूढसम्भोगस्थानं त्वयाऽभिप्रेतम् परि ख्यन् सर्वतः अव्यवधानेन पश्यन्ति। तस्मादत्र न कश्चिद् दुष्करं क्रियमाणं पश्यतीत्येतन्मा मंस्थास्त्वम्। उक्तञ्च मनुना—

'मन्यन्ते वै पापकृतो न कश्चित् पश्यतीति नः।
तांश्च देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः' ॥ (मस्मृ ८,८५) इति ॥ २ ॥

वेङ्कट० यमस्य वचनम्[4]। न तव सखा सख्यम् एतत् कामयते, यस्मादियं[5] [6]समानलाञ्छना एकपितृकत्वाद्[6] विषमरूपा मैथुनाऽयोग्या भवति। महतः पुत्राः बलवतो रुद्रस्य वीराः द्युलोकस्य[7] धर्तारः [8]उरवः माम्[8] परि चक्षते न कर्तव्यमिति[9] वदन्ति सर्वत्र सन्निहिताः[10] ॥ २ ॥

उ॒शन्ति॑ घा ते अ॒मृता॑स ए॒तदेक॑स्य चित् त्य॒जसं॒ मर्त्य॑स्य ।
नि ते॒ मनो॒ मन॑सि धाय्य॒स्मे जन्यु॒ः पति॑स्त॒न्व१॒मा वि॑विश्याः ॥ ३ ॥

उ॒शन्ति॑ । घ॒ । ते । अ॒मृता॑सः । ए॒तत् । एक॑स्य । चि॒त् । त्य॒जस॑म् । मर्त्य॑स्य ।
नि । ते॒ । मन॑ः । मन॑सि । धा॒यि॒ । अ॒स्मे इति॑ । जन्यु॑ः । पति॑ः । त॒न्व॑म् । आ । वि॒वि॒श्याः ॥३॥

उद्गीथ० एवं प्रत्याख्याता[11] प्रत्युवाच यमी। घ इति निपातोऽप्यर्थेऽत्र। ये अमृतासः देवाः प्रजापत्यादयः ते अपि उशन्ति कामयन्ते यदगम्यत्वेन त्वयाऽभिप्रेतम् एतत् त्यजसम् त्यज्यते परस्मै प्रदीयत इति त्यजसं दुहितृभगिन्यादिस्त्रीजातं शास्त्रेणाऽगम्यत्वेनोक्तम् एकस्य चित् मर्त्यस्य एकस्यापि मनुष्यस्य प्रजापत्यादेर्दुहितृत्वभगिनीत्वादित्वेन सम्बन्धि। दुहितृत्वभगिनीत्वादिना सम्बन्धेन स्वसम्बन्ध्यपि सदित्यर्थः। यतः प्रजापत्यादयोऽपि देवाः स्वदुहितृभगिन्यादिस्त्रीजातं त्यजसं विशेषेण कामयन्ते अतः ते तव यमस्य मनः मनसि अस्मे अस्माकं सम्बन्धिनि नि धायि निधीयताम् मम चित्तमनुचित्तं ते अस्तु। अहं त्वां कामये [12]त्वमपि मां[12] कामयस्वेत्यर्थः। जन्युः जन्युरिति लुप्तोपमम्। जन्युरिव यथा जनयिता प्रजापतिः पतिर्भूत्वा स्वदुहितुस्तन्वमाविष्टवान् सम्भोगेन, एवं त्वमपि पतिः भूत्वा मम तन्वम् शरीरं सम्भोगेन आ विविश्याः आविश ॥ ३ ॥

---

१. भवति वि[1,3]; भवाति मूको. २-२. सख्युदयः मूको. ३-३. वीराः कीदृशः अ वि[1]. ४. पवनं वि[2]. ५. °दिवयं वि[2] अ[1]. ६. समानां जनेक पवित्र कत्वा° वि[2] अ[1]; समानलाञ्छकैनवितृकत्वा° वि[3]. ७. अलो° वि[2] अ[1]. ८-८. खोमाम वि[1] अ[1]. ९. °ति पदभिति वि[2] अ[1]. १०. °ता वि[2] अ[1]. ११. प्रत्याख्यायती वि[1,3]; प्रत्याख्यायन्ती अ वि[2]. १२-१२. त्वमपि वि[1]; त्वं मामपि वि[1,3].

**वेङ्कट०** कामयन्ते खलु ते देवाः[१] एतत्[२] एकस्य मर्त्यस्य[३] पुत्रस्य त्यजसम् उत्सर्गम्, अनुमन्यन्ते[४] इत्यर्थः। तथा सति[५] तव मनः अस्माकम् मनसि [६]नि धीयताम्[६] एकमनसौ[७] भवाव। जनयिता पुत्रस्य [८]पतिस्त्वं भवन्[८] मम शरीरम् विश। यम्या वचनमिति ॥ ३ ॥

न यत् पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥ ४ ॥

न। यत्। पुरा। चकृम। कत्। ह। नूनम्। ऋता। वदन्तः। अनृतम्। रपेम।
गन्धर्वः। अप्ऽसु। अप्या। च। योषा। सा। नः। नाभिः। परमम्। जामि। तत्। नौ ॥

**उद्गीथ०** यम आह—यत् अगम्यागमनम् पुरा पूर्वं प्रजापतिः कृतवान् तेजोविशेषेण युक्तत्वात्, वयम् न चकृम न कुर्मः अपरदौर्बल्यात्। कत्-शब्दः कदेत्यस्यार्थे। 'कद्ध नूनम् कधप्रियः' (ऋ १,३८,१) इति यथा। ह-निपातो वानिपातार्थे। नूनम् इति पदपूरणो निश्चयार्थो वा। निश्चयेन ऋता ऋतं सत्यं वदन्तः ब्रुवन्तः सन्तः अनृतम् असत्यम् रपेम वदेम उदितवन्तो वयम्। न कदाचिपीत्यर्थः। अगम्यागमनं न कुर्म इति निश्चितमेतत्। नानृतं ब्रूम इत्यभिप्रायः। किञ्च गन्धर्वः गवां रश्मीनाम् उदकानां वा रश्मिभिराहृतानां मण्डले धारयिताऽऽदित्यः अप्सु 'आपः' (निघ १,३) इत्यन्तरिक्षनाम। अन्तरिक्षे आकाशे। स्थित इति शेषः सप्तमीश्रुतेः। अप्या अद्भिरसंस्कृता। अप्पूर्वं दत्ता इत्यर्थः। योषा च स्त्री सरण्यूश्च। त्वष्टुर्दुहितेत्यर्थः। सा नः द्विवचनस्य स्थाने व्यत्ययेनेदं बहुवचनम्। नौ आवयोः नाभिः नहनं तदुभयमावयोर्बन्धनं शरीरसंहननहेतुः। तावावयोः मातापितरौ इत्यर्थः। ततः किमुच्यते। परमम् उत्कृष्टम् उभयकुलविशुद्धम् तत् जामि जन्माभिजने नौ आवयोः अभिजनवताञ्चा-गम्यागमनमनन्यरूपत्वादयुक्तं कर्तुम्। तस्मादेतन्न करोमीत्यभिप्रायः ॥ ४ ॥

**वेङ्कट०** न यत् पुरा कृतवन्तः तत् कथम् इदानीं कुर्मः। इतः पूर्वं सत्यानि एव वदन्तः कथमिदानीम् अनृतम्[९] ब्रूमः। गन्धर्वः आदित्यः अन्तरिक्षे स्थितः तत्र स्थिता तद्भार्या च सा इयम् आवयोः नाभिः उत्पत्तिस्थानम्। तदेवोक्तम्—परत्र स्थितम्[१०] [११]तत् आवयोः[११] जामि बान्धवस्थानमिति। तस्मादयुक्तमिदमिति ॥ ४ ॥

गर्भे नु नौ जनिता दंपती कर्देवस्त्वष्टा सविता विश्वरूपः।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥ ५ ॥

गर्भे। नु। नौ। जनिता। दम्पती इति दम्ऽपती। कः। देवः। त्वष्टा। सविता। विश्वऽरूपः।
नकिः। अस्य। प्र। मिनन्ति। व्रतानि। वेद। नौ। अस्य। पृथिवी। उत। द्यौः ॥

---

१. नास्ति वि[१]. २. एकदा वि[२] अ[१]. ३. मन्यस्य वि[१] अ[१]; मर्त्तस्य वि[१]. ४. °न्यत वि[२]; °त स अ[१]. ५. स वि[२] अ[१]. ६-६. °यतोम् वि[२]; नियताम् वि[१]. ७. एकमनसो वि[२] अ[१]; एनमनसौ वि[१]. ८ °स्त्व अम° वि[२]; °स्त्वमभ° अ[१]. ९. न तत् वि[२] अ[१]. १०. °त वि[२] अ[१]. ११-११. दात्रयोः वि[२] वि[२]; तदापयोः वि[१].

उद्गीथ० [1]गर्भे नु नौ[1] नु निपात एवार्थे। गर्भे[2] एव। गर्भावस्थायामेवेत्यर्थः। आवाम् दम्पती जायापती कः कृतवान्। एकोदरे सहवासस्य तत्कृतत्वात्। जनिता सर्वस्य जनयिता देवः त्वष्टा प्रजापतिः सविता सर्वस्य प्रसविता। शुभाशुभस्याऽभ्यनुज्ञातेत्यर्थः। विश्वरूपः सर्वात्मक इत्यर्थः। यत एवमतः नकिः न केचित् प्र मिनन्ति प्रहिंसन्ति लोपयन्ति अस्य प्रजापतेः व्रतानि कर्माणि यदनेन[3] प्रजापतिना कृतं शुभमशुभं वा तत् प्रमाणम् अवश्यं कर्तव्यम्। तस्माद् गर्भावस्थायामेवाऽऽवयोः प्रजापतिकृते दम्पतित्वे सति सम्भोग कुर्वित्यभिप्रायः। किञ्च वेद जानाति नौ आवयोः अस्य द्वितीयार्थे षष्ठ्येषा। इदं दम्पतित्वं मातुरुदरे सहवासजनितम् पृथिवी उत अपि च द्यौः त्रयोऽपि लोकाः जानन्ति। नैतद् गूहितुं शक्यत इत्यभिप्रायः॥ ५॥

वेङ्कट० यम्याख्तिस्तः[4]। गर्भे [5]एव आवाम्[5] जनयिता प्रजापतिः दम्पती चकार देवः त्वष्टा प्रसविता सर्वस्य नानाविधानां रूपाणां कर्ता [6]सहस्रयुगलभूतौ अवासयत्[6]। न केचित् अस्य प्रजापतेः[7] प्र हिंसन्ति व्रतानि। वेद[8] आवयोः इदं वचनं साक्षिभूता[9] द्यौः च पृथिवी च॥ ५॥

[10]इति सप्तमाष्टके षष्ठाध्याये षष्ठो वर्गः[10]॥

## को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत्।
## बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन्॥ ६॥

कः। अस्य। वेद। प्रथमस्य। अह्नः। कः। ईम्। ददर्श। कः। इह। प्र। वोचत्। बृहत्। मित्रस्य। वरुणस्य। धाम। कत्। ऊँ इति। ब्रवः। आहनः। वीच्या। नॄन्॥ ६॥

उद्गीथ० कः वेद को जानाति अनुमानेन अस्य एतत्। द्वितीयास्थाने व्यत्ययेन षष्ठ्येषा। एतदगम्यागमनम् प्रथमस्य अह्नः सम्बन्धि। प्रथमेऽहनि यत् क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः। कः ईम् को वा ददर्श प्रत्यक्षतः पश्यति। न कश्चिदपीत्यर्थः। अथ दृष्टं कथञ्चिद् एकेन[11] केनचिद् आवाभ्यां [12]क्रियमाणं मैथुनं तत्[12] कः इह लोके प्र वोचत् प्रब्रवीति प्रख्यापयति। न कश्चिदपीत्यर्थः। अथ मित्रावरुणौ जानीतः पश्यतः यत् बृहत् महत् मित्रस्य वरुणस्य च धाम जन्म अभिजनः। अभिजनवतां वाचकत्वं[13] परव्यसनं प्रति अयुक्तमिति। [14]प्रज्ञातं नापि तौ[14] प्रत्यक्षतः पश्यतः[15]। अथ दृष्टं कथञ्चिन्नापि प्रख्यापयतः[16] इत्यभिप्रायः। एवमवस्थिते वस्तुनि कत् उ ब्रवः कच्छब्दोऽत्र किंशब्दार्थे। उशब्दश्च वाशब्दार्थे। किं वा ब्रवीषि त्वम् हे आहनः! आहन्तः! मर्यादया हिंसितः! वीच्या वीच्यादिनरके नॄन् मनुष्यान्। स्वकृतशुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातनेन स्वर्गप्रापणेन वा निग्रहानुग्रहयोः कर्तः! इत्यर्थः॥ ६॥

---

१-१. नास्ति वि[1,3]. २. नास्ति मूको. ३. यदनेह वि[1,3]. ४. °तिस्र वि[2] अ[1]. ५-५. एवां मूको. ६-६. °तो वि[2] अ[1]; °तौवास° वि[1]. ७. °ते वि[2] अ[1]. ८. वाद वि[2] अ[1]. ९. साक्षीभू° वि[1] अ[1]. १०-१०. नास्ति मूको. ११. °देतेन वि[1,3]. १२-१२. °माणमथनं वि[1,3]; °माणं मथनं अ वि[2]. १३. वाकत्वं मूको. १४-१४. प्रज्ञातनापि मूको. १५. पश्यति मूको. १६. प्रत्याख्याय° मूको.

**वेङ्कट०** कः इदम् जानाति[1] [2]प्रथमम् आहननम्[2] इतरेतरसङ्गमम्। कः एतत् पश्यति। कः वा प्र वक्ति[3]। महदिदं[4] मित्रावरुणयोः स्थानम् अहोरात्रात्मकम्। तत्र आहन्तः![5] कथं ब्रवीषि। सर्वस्यास्य व्यञ्जनाद्[6] व्याप्ता नरः सन्तीति ॥ ६ ॥

यमस्य मा यम्यं१ काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा ॥ ७ ॥

यमस्य । मा । यम्यम् । कामः । आ । अगन् । समाने । योनौ । सहऽशेय्याय ।
जायाऽइव । पत्ये । तन्वम् । रिरिच्याम् । वि । चित् । वृहेव । रथ्याऽइव । चक्रा ॥ ७ ॥

**उद्गीथ०** यत एवम् अतो निर्विचारम्। यमस्य तव कामः इच्छा मा[7] [8]माम् यम्यम् यमीं[8] प्रति आ अगन् आगच्छतु। ममोपरि तव यमस्य सम्भोगेच्छा जायतामित्यर्थः। किमर्थम्। उच्यते—समाने एकशब्दपर्यायोऽत्र समानशब्दः। 'समानबन्धू' ( ऋ १,११३,२ ), 'समानस्सन्नुभौ लोकावनु सञ्चरति' ( बृउ ४, ३, ७ ) इति च यथा। समान एकस्मिन् योनौ सम्भोगस्थाने शय्याख्ये सहशेय्याय सहशयनाय। अनन्तरञ्च पूर्णमनोरथा सती जाया इव पत्ये यथा भार्या पत्युरर्थाय परया [9]प्रीत्या योगात्[9] विस्रब्धा सती स्वं[10] शरीरं रतिकाले प्रकाशयति, एवम् तन्वम् शरीरमात्मीयम् रिरिच्याम् रतिकाले[11] तवाहं प्रकाशयेयमित्यर्थः। किञ्च वि चित् वृहेव चिन्निपातः पदपूरणः। वि वृहेव। वृहू उद्यमने। धर्मार्थकामान् [12]विविधमुद्यच्छाव। आसन्नानुष्ठानेन[12] उत्क्षिपाव[13] इत्यर्थः। किमिव। रथ्या इव चक्रा यथा रथस्यावयवभूते चक्रे रथमुत्क्षिपतः एवम् ॥ ७ ॥

**वेङ्कट०** यमविषयः[14] अभिलाषः यमीम्[15] मा[16] आ[17] जगाम। समाने स्थान एकस्मिन् शयने सहशयनार्हाय तस्मा अहम् [18]जाया इव पत्ये[18] आत्मीयं शरीरं पृथक् करोमि प्रयच्छामि। तथा [19]सति आवाम्[19] वि वृहेव। इतरेतरसंश्लेषो[20] विवर्हः। यथा रथ्यचक्राणि[21] वि[22] वृहन्ति ॥७॥
यम आहोत्तराभिस्तिसृभिरनन्तराभिः—

न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥ ८ ॥

न । तिष्ठन्ति । न । नि । मिषन्ति । एते । देवानाम् । स्पशः । इह । ये । चरन्ति ।
[23]अन्येन । मत् । आहनः । याहि । तूयम्[23] । तेन । वि । वृह । रथ्याऽइव । चक्रा ॥ ८ ॥

---

१. जाति वि[2] अ[1]. २-२ °ममाहनम् वि[2] अ[1]. ३. पत्ति वि[2] अ[1]; वृत्ति वि[1]. ४ महदं वि[2] अ[1]; वहदिदं वि[1]. ५. °हतत् वि[2] अ[1]. ६. वैप १,२९,६८ a द्र. ७. मां वि[1,3]. ८-८. मयि यम्यां मूको. ९-९. व्रीयोगात् वि[1,3]. १०. स्वं स्वं मूको. ११. दिकाले मूको. १२-१२. °च्छावावस° अ वि[3]; °च्छावः अवस° वि[1,2]. १३. उपक्षि° मूको. १४. °षो ऽो वि[2] अ[1]. १५. यमि मूको. १६. मां वि[2] अ[1]. १७. नास्ति मूको. १८-१८. जाये च व्यात्ये वि[2] अ[1]. १९-१९. सभ्यात्वा वि[2] अ[1]. २०. °ष वि[2] अ[1]. २१. रथ्ययाचतां वि[2] अ[1]. २२. नि वि[2] अ[1]. २३-२३. निर्वचनमर्थश्च या ५, २ द्र.

**उद्गीथ०** एतत् त्वया न मन्तव्यं न कश्चित् पश्यतीति। न क्षणमात्रमपि चरणव्यापारविरहिताः तिष्ठन्ति। न च नि मिषन्ति प्रमादरहिताः। प्रयत्नेन[1] यो यत् करोति शुभमशुभं वा, तत् सततं[2] निरीक्षन्ते चेत्यर्थः। एते देवानाम् स्वभूताः स्पशः चराः 'अहश्च रात्रिश्चोभे सन्ध्ये' (तु. मस्मृ ८,८६) इत्येवमादयो मनुना निर्दिष्टाः इह लोके ये चरन्ति इतश्चेतश्च कृताकृतप्रत्यवेक्षणार्थम् परिभ्रमन्ति। एतत् ज्ञात्वा मया सह प्रच्छन्नपापकरणचिन्तां परित्यज्य मत् मत्तः अन्येन त्वदनुरूपेण आहनः असभ्यभाषणेन मम आहन्त्रि! दुःखयित्रि! याहि मैथुनं गच्छ तूयम् क्षिप्रम्। गत्वा च तेन सह वि वृह [3]उद्यच्छ आसन्नानुष्ठानेनोत्क्षिप[3] धर्मार्थकामान्। किमिव। रथ्या इव चक्रा यथा रथस्यावयवभूते चक्रे रथमुद्यच्छतः एवम् ॥ ८ ॥

**वेङ्कट०** न क्वचित् तिष्ठन्ति, न च नि मिषन्ति एते देवानाम् चराः[4], इह ये चरन्ति। तथा सति[5] मत्तः[6] अन्येन[7] आहनः![8] आहन्त्रि! युवते! याहि[9] क्षिप्रम्। तेन सङ्गच्छस्व [10]रथ्या इव[10] चक्रम्[11] ॥ ८ ॥

## रात्रीभिरस्मा अहभिर्दशस्येत् सूर्यस्य चक्षुर्मुहुरुन्मिमीयात्।
## दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य बिभृयादजामि ॥ ९ ॥

रात्रीभिः। अस्मै। अहऽभिः। दशस्येत्। सूर्यस्य। चक्षुः। मुहुः। उत्। मिमीयात्।
दिवा। पृथिव्या। मिथुना। सबन्धू इति सऽबन्धू। यमीः। यमस्य। बिभृयात्। अजामि ॥९॥

**उद्गीथ०** किञ्च स्पशः सामान्येनोक्ताः विशेषतः उच्यन्ते। रात्रीभिः[12] सह अहोभिश्च सह दिवा च सह [13]पृथिव्या च सह मिथुनाववियुक्तौ[13] उभौ सन्ध्याकालौ समानबन्धू समान एको बन्धुर्ज्ञातिरादित्यो [14]जनकत्वाद् ययोः[14] ताभ्यां च सह अस्मै लोकाय शुभाशुभकारिणे दशस्येत् दाशति ददाति। कः। सामर्थ्याल्लोकपालजनः[15]। किं ददाति। सामर्थ्यात् कृताकृत-प्रत्यवेक्षणार्थं दृष्टिम् सूर्यस्य च सम्बन्धि चक्षुः मुहुः उत् मिमीयात् प्रतिक्षणम् उन्मिनोति चोत्करोति। तत्परिच्छिनत्तीत्यर्थः[16]। एतत् ज्ञात्वा यमीः बिभृयात् यमी धारयतु। पतित्वे परिगृह्णात्वित्यर्थः। कम्। यमस्य मम अजामि अभ्रातरमित्यर्थः। एतदुक्तं भवति — अहं तावदयोग्य एव पतित्वेन परिग्रहीतुं तव भ्रातृत्वात्। योऽपि मया भ्रातृत्वेनाभ्युपगतः सोऽप्ययोग्य इत्यभिप्रायः ॥ ९ ॥

**वेङ्कट०** अहोरात्रयोः अस्मै यमाय कल्पितं [17]भागं यज्ञे[17] यजमानः[18] प्रयच्छतु[19] सूर्यस्य च अस्मै चक्षुः

---

१. प्रयतो न मूको. २. सन्ततं अ वि[२]. ३-३. °च्छास (°च्छ अस° वि[१,३]) न्नानुष्ठानो° मूको. ४. चारः वि[२] अ[१]. ५. सनि वि[२] अ[१]. ६. मित्तः वि[२] अ[१]. ७. मन्यैन्न वि[२] अ[१]; मन्यैन वि[१]. ८. °न मूको. ९. यामिः वि[२] अ[१]. १०-१०. रथ्ययेच वि[२] अ[१]; रथ्ययेव वि[१]. ११. क्रमम् वि[२] अ[१]. १२. रात्रिभिः अ वि[१]. १३-१३. °व्या नेद्वियुक्तौ मूको. १४-१४. °त्वादायोः वि[१]. १५. °जनाः वि[१]. १६. न परि° वि[१]; त परि° वि[१]. १७-१७. °गय° वि[२] अ[१]. १८. °न वि[२] अ[१]. १९. य° वि[२] अ[१].

तेजः मुहुर्मुहुः अन्वहम्[1] उदेतु[2]। द्यावापृथिवीभ्यां सह मिथुनौ अहोरात्रे मह्यम् सबन्धू भवेताम्[3]। इयम् यमीः[4] सर्वार्थम् यमस्य [5]बिभर्तु अजामित्वम् अभार्यात्वमिति[5] ॥ ९ ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ १० ॥

आ । घ । ता । गच्छान् । उत्ऽतरा । युगानि । यत्र । जामयः । कृणवन् । अजामि ।
उप । बर्बृहि । वृषभाय । बाहुम् । अन्यम् । इच्छस्व । सुऽभगे । पतिम् । मत् ॥ १० ॥

उद्गीथ० घ इति पदपूरणो निपातः। आ गच्छान् आगमिष्यन्ति ता तानि उत्तरा उत्तराणि युगानि कालाः कलियुगान्ते। नेदानीम् वर्तते इत्यभिप्रायः। यत्र येषु कालेषु जामयः भगिन्यः कृणवन् करिष्यन्ति अजामि जामिः[6] भर्तृत्वेन नास्ति यस्य तदजामि भगिन्या अयोग्यं मैथुनलक्षणं कर्म। एतज्ज्ञात्वा उप बर्बृहि विभक्तेर्भकारस्य छान्दसोऽयं बकारः। शय्यास्थस्य समीपे धारय[7] बाहुम् आत्मीयम् वृषभाय यस्तव योनौ रेतो वर्षति तस्यार्थाय, तं परिष्वङ्क्तुमित्यर्थः। तच्च अन्यम् इच्छस्व कामयस्व हे सुभगे! पतिम् मत् मत्तः। अहमयोग्यस्तव भ्रातृत्वादित्यर्थः ॥ १० ॥[8]

वेङ्कट० आ गच्छन्तु[9] ते उत्तरे मम दिवसाः, यत्र[10] जामयः[11] स्वसारः करिष्यन्ति[12] अजामि[13] अबान्धवभार्यात्वम्[14]। तथा सति उपबर्हणं कुरु अन्यस्मै [15]यूने आत्मीयम्[15] बाहुम्। अन्यम् इच्छस्व सुभगे! पतिम् मत्तः ॥ १० ॥[8]

[16]इति सप्तमाष्टके षष्ठाध्याये सप्तमो वर्गः[16] ॥

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वे३तद्रपामि तन्वा मे तन्वं१ सं पिपृग्धि ॥ ११ ॥

किम् । भ्राता । असत् । यत् । अनाथम् । भवाति । किम् । ऊँ इति स्वसा । यत् । निःऽऋतिः । निऽगच्छात् । कामऽमूता । बहु । एतत् । रपामि । तन्वा । मे । तन्वम् । सम् । पिपृग्धि ॥ ११ ॥

उद्गीथ० यस्याह। लुप्तसप्तमीविभक्तिकयच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। किम् सः भ्राता असत् भवति। न भवतीत्यभिप्रायः, [16]यत् यस्मिन् भ्रातरि सति स्वस्रादिकम् अनाथम् भवाति भवति। तथा किम् सा स्वसा भगिनी भवति[16], यत् यस्यां भगिन्यां सत्यां भ्रातरम्

१. अछहन् मु° वि[2] अ[1]. २. °ति वि[1]; °तु द्यावापृथिवी वि[2]; द्यावापृथिवीभ्यां अ[1]. ३. हवे[?] वि[2] अ[1]. ४. °मि मूको. ५-५. बहवः जामित्वमहार्या वि[2] अ[?] ६. जामि मूको. ७. धार मूको. ८. ऋगियं या (४,२०) व्याख्यातचरा द्र. ९. °तु वि[2] अ[1]; °त वि[1]. १०. °त्र जाम यत्र यः वि[2] अ[1] ११ °य मूको. १२. कनिष्यसिवि[2] अ[1]; करिष्यन्त्यः वि[1]. १३. अजाम्यम् वि[2] अ[1]; जाम्या वि[1]. १४. बान्धव° वि[2] अ[1]; बान्धव° वि[1]. १५-१५. धूमात्मी° वि[2] अ[1]; यूयन आ° वि[1]. १६-१६. नास्ति मूको.

निर्ऋतिः दुखम् निगच्छात् नियमेन गच्छति प्राप्नोति। [1]भ्रातृभगिन्योश्च परस्परं[1] प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः। काममूता काममोहिता सती, अथवा मूङ्[2] बन्धने, कामेन बद्धा गृहीता वशीकृता सती बहु नाना रपामि प्रलपामि। एतत् ज्ञात्वा तन्वा स्वशरीरेण मे मम तनुम् शरीरम् सम् पिपृग्धि सम्पर्चय सम्भोगेन संश्लेषय[3], सम्भुङ्क्ष्व मामित्यर्थः ॥ ११ ॥

**वेङ्कट०** किम् सः भ्राता भवति, यत् यस्य [4]स्वस्रादि नाथरहितं[4] भवति। किम् वा सा स्वसा भवति, यदि उपद्रवः अस्य अभिगच्छति। सति भ्रातरि सा अहम् काममूर्च्छिता[5] बहु एतत् विलपामि। शरीरेण शरीरं मदीयम् सम् पर्चय ॥ ११ ॥

**न वा उं ते तन्वां तन्वं१ सं पंपृच्यां पापमाहुर्यः स्वसारं निगच्छात् ।**
**अन्येन मत् प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १२ ॥**

न । वै । ऊँ इति । ते । तन्वा । तन्वम् । सम् । पपृच्याम् । पापम् । आहुः । यः । स्वसारम् । निऽगच्छात् ।
अन्येन । मत् । प्रऽमुदः । कल्पयस्व । न । ते । भ्राता । सुऽभगे । वष्टि । एतत् ॥ १२ ॥

**उद्गीथ०** यम आह। न वै निपात एवार्थे। उ निपातः पदपूरणः। नैव ते तव तन्वा तन्वम् शरीरम् आत्मीयम् सम् पपृच्याम् सम्पर्चयामि सम्भोगेन संश्लेषयामि, नैवाहं त्वां सम्भोक्तुमिच्छामीत्यर्थः। कस्मात् कारणात्। यतः पापम् पापकारिणं तं पुरुषम् आहुः वदन्ति शिष्टाः, यः स्वसारम् भगिनीम् निगच्छात् नियमेनोपगच्छति सम्भुङ्क्त इत्यर्थः। एतज्ज्ञात्वा मत् मत्तः अन्येन अन्यतरेण त्वद्योग्येन पुरुषेण सह प्रमुदः प्रहर्षान् सम्भोगलक्षणान् कल्पयस्व समर्थय निर्वर्तयेत्यर्थः। ते तव भ्राता हे सुभगे! न वष्टि न कामयते नेच्छति कर्तुम् एतत्। मैथुनं त्वया सह नेच्छामीत्यर्थः ॥ १२ ॥

**वेङ्कट०** न[6] खलु तव[7] शरीरेण मदीयं शरीरम् सम् पर्चयामि। पापम् तम्[8] आहुः, यः स्वसारम् निगच्छति। तथा सति मत्तः अन्येन प्रमोदनानि कल्पयस्व। न ते भ्राता सुभगे! कामयते [9]त्वदुक्तम् एतत्[9] ॥ १२ ॥

**बतो बतासि यम नैव ते मनो हृदयं चाविदाम ।**
**अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ॥ १३ ॥**

बतः । बत । असि । यम । न । एव । ते । मनः । हृदयम् । च । अविदाम ।
अन्या । किल । त्वाम् । कक्ष्याऽइव । युक्तम् । परि । स्वजाते । लिबुजाऽइव । वृक्षम् ॥ १३ ॥

**उद्गीथ०** यमी यमं कामयमाना तेन प्रत्याख्याता सती सेर्ष्यं तमाह। बत इति निपातः

---

१-१. भ्राता भगिन्योः परस्परः अ वि[2]; भ्राता भगिन्यात परस्परः वि[1]. २. मूञ् अ वि[3]. ३. संश्लेऽ... अ वि[1,3]. ४-४. स्त्रादीनां कथकद्दिन वि[2] अ[1]. ५. कारमू° वि[2] अ[1]; °कामच्छिना वि[1]. ६. नास्ति वि[2] अ[1]. ७. तद्वः वि[2] अ[1]. ८. नास्ति वि[1]. ९-९. °दुत्तमैतत् वि[2]; °दुत्तमैस्तत् अ[1].

खेदानुकम्पयोः। बतः खिन्नो दुर्बलः बत अनुकम्प्यश्च असि भवसि त्वं हे यम! न एव-शब्दः समुच्चये। न च ते तव मनः, मनोगतं सङ्कल्पमित्यर्थः। हृदयम् च बुद्धिगतम् अध्यवसायञ्चेत्यर्थः। अविदाम विजानीमः। केन कारणेन दुर्बल इति, अथवा ज्ञातं तव दौर्बल्यकारणम्। किम्। उच्यते—मत्तः अन्या काचित् स्त्री किल त्वाम् शय्यागतं रतिकाले परि स्वजाते परिष्वङ्क्ष्यते[1]। किमिव। कक्ष्या इव युक्तम् यथा कक्ष्या रज्जुरात्मना युक्तं सम्बद्धं गाढमश्वं परिष्वजते, एवम् लिबुजा इव वृक्षम् यथा च लिबुजा वल्ली वृक्षं गाढं परिष्वजते, तद्वच्च अन्यस्यां कस्यामपि स्त्रियाम् आसक्तत्वात् दुर्बलोऽसि। अत एव च मां परिष्वङ्क्तुं[2] नेच्छसीत्यभिप्रायः ॥ १३ ॥[3]

वेङ्कट० बतः बलादतीतो[4] दुर्बलः बत असि यम!। बतेति निपातः खेदानुकम्पयोः[5]। [6]न एव[6] ते मनः हृदयम् च जानीमः[7]। अन्या किल त्वाम् परिष्वङ्क्ष्यते[8] कक्ष्या इव युक्तम् अश्वम्। 'लिबुजा लीयते व्रततिर्भवतीति विभजन्तीति' ( या ६,२८ ) सा इव च वृक्षम् इति ॥ १३ ॥[3]

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥ १४ ॥

अन्यम्। ऊँ इति। सु। त्वम्। यमि। अन्यः। ऊँ इति। त्वाम्। परि। स्वजाते। लिबुजाऽइव। वृक्षम्।
तस्य। वा। त्वम्। मनः। इच्छ। सः। वा। तव। अध। कृणुष्व। सम्ऽविदम्। सुऽभद्राम् ॥ १४ ॥

उद्गीथ० सेर्ष्यमेवमुक्ते यमः प्रत्याचक्षाणः प्रत्युवाच। अन्यम् उ सु उशब्द एवशब्दार्थे। सुशब्दोऽभिपूजितार्थे। अन्यमेवाऽभिपूजितं कञ्चित् त्वद्योग्यं पुरुषञ्च यमि! हयमिव परिष्वङ्क्ष्यसे लिबुजा इव वृक्षम् व्रततिरिव वृक्षम्, न मां भ्रातृत्वकारणेनाऽयोग्यत्वात्। अन्यः उ अन्यश्च त्वद्योग्य एव त्वाम् परि स्वजाते परिष्वङ्क्ष्यते। नाऽहं परिष्वजे भ्रातृत्वात्। तस्य वा वाशब्दः समुच्चयार्थे। तस्य च त्वद्योग्यस्य मनः चित्तम् आत्मीयम् इच्छ, वशे कर्तुमिति शेषः। तस्य च त्वं वशवर्त्तिनी[9] भवेत्यर्थः। [10]सः वा[10] तव स च पुरुषस्तव वशवर्त्ती। भवत्वित्यनुवर्त्तते। अध अथ परस्परवशम् कृणुष्व कुरु तेन सह संविदम् परस्परसम्भोगसुखसंवित्तिम् सुभद्राम् सुकल्याणीम्, इहलोकपरलोकाऽविरोधिनीमित्यर्थः ॥ १४ ॥[3]

वेङ्कट० अन्यम् एव त्वम् यमि! परिष्वङ्क्ष्यसे[11], अन्यः च त्वाम् परिष्वङ्क्ष्यते[12] लिबुजा इव वृक्षम्। तथा सति[13] तस्य वा त्वम् मनः इच्छ, [14]सः वा[14] तव इच्छतु मनः। कृणुष्व तेन संविदम् कल्याणीमिति[15] ॥ १४ ॥[3]

[16]इति सप्तमाष्टके षष्ठाध्याये अष्टमो वर्गः[16] ॥

---

१. परिष्वंक्ष्यते वि[1,3]; परिष्वक्ष्यते अ वि[2]. २. परिष्वक्तुं मूको. ३. १३शी १४शी चर्चौ या. ६,२८; ११,३४ इत्यत्र यक. व्याख्यातें द्र. ४. °दतितो वि[2]; °दतितो अ[1]. ५. वदा° मूको. ६-६. ममनेव वि[2]; यमनेव अ[1]. ७. जानाम अ[1]; जानीम वि[2]. ८. °स्वक्ष्यते वि[2] अ[1]. ९. °वर्त्तिनीव वि[2]. १०-१०. सखा मूको. ११. परिष्वक्ष्यसे वि[2]; परिष्वक्ष्यसे अ[1]. १२. परिष्वक्ष्यते वि[2]; परिष्वक्ष्यते अ[1]. १३. सि वि[2] अ[1]. १४. नास्ति वि[2] अ[1]. १५. °नमि° वि[2] अ[1]. १६-१६ नास्ति मूको.

[ ११ ]

[1]आङ्गिर्हविर्धान ऋषिः । अग्निर्देवता । जगती छन्दः, अन्त्यास्तिस्रस्त्रिष्टुभः[1] ।

वृषा वृष्णे दुदुहे दोह॑सा दि॒वः पयां॑सि य॒ह्वो अदि॑ते॒रदा॑भ्यः ।
विश्वं॒ स वे॑द॒ वरु॑णो॒ यथा॑ धि॒या स य॒ज्ञियो॑ यजतु य॒ज्ञियाँ॑ ऋ॒तून् ॥ १ ॥

वृषा॑ । वृष्णे॑ । दु॒दु॒हे॒ । दोह॑सा । दि॒वः । पयां॑सि । य॒ह्वः । अदि॑तेः । अदा॑भ्यः ।
विश्व॑म् । सः । वे॒द॒ । वरु॑णः । यथा॑ । धि॒या । सः । य॒ज्ञियः॑ । य॒ज॒तु॒ । य॒ज्ञिया॑न् । ऋ॒तून् ॥१॥

**उद्गीथ०** वृषा वर्षिता[2] आहुत्याधारत्वेन प्रणाडिकया[3] वृष्टेर्दाता अग्निः वृष्णे यज्ञद्वारेण स्तुतीनां हविषां वृष्टेश्च वर्षितुर्यजमानस्याऽर्थाय दुदुहे दोग्धि पूरयति प्रक्षारयति । कथम् । दोहसा दोहनेन[4] [5]महता प्रक्षारणेन[5] । कुतः । दिवः सकाशात् । पयांसि उदकानि वृष्टिलक्षणानि । कीदृशोऽग्निर्दुदुहे । यह्वः महान् अदाभ्यः अहिंस्यश्च । कीदृशस्य यजमानस्याऽर्थाय दुदुहे । अदितेः अक्षीणयागक्रियस्य । किञ्च विश्वम् सर्वम् सः अग्निः वेद जानाति । किमिव । वरुणः यथा आदित्य इव । केन वेद । धिया प्रज्ञया आत्माऽनुरूपया । ईदृशोऽग्निः । सः यज्ञियः यज्ञार्हः । यजतु पूजयतु यज्ञियान् यज्ञार्हान् ऋतून् देवतात्मकान् ॥ १ ॥

**वेङ्कट०** आङ्गिः[6] हविर्धानः[7] । अग्निः[8] । वर्षिता अग्निः यजमानाय दोहनसाधनेन[9] दोग्धि अदीनायाः दिवः उदकानि महान् अहिंसितः । सः अयमग्निः विश्वम् वेदितव्यं वेत्ति प्रज्ञानेन, यथा वरुणः प्रचेताः वेत्ति । सः यज्ञियः[10] यजतु यज्ञियेषु कालेष्विति ॥ १ ॥

रप॑द्ग॒न्धर्वी॒रप्या॑ च॒ योष॑णा न॒दस्य॑ ना॒दे परि॑ पातु मे॒ मनः॑ ।
इ॒ष्टस्य॒ मध्ये॒ अदि॑ति॒र्नि धा॑तु नो॒ भ्राता॑ नो ज्ये॒ष्ठः प्र॑थ॒मो वि वो॑चति ॥ २ ॥

रप॑त् । ग॒न्ध॒र्वीः॑ । अप्या॑ । च॒ । योष॑णा । न॒दस्य॑ । ना॒दे । परि॑ । पा॒तु॒ । मे॒ । मनः॑ ।
इ॒ष्टस्य॑ । मध्ये॑ । अदि॑तिः । नि । धा॒तु॒ । नः॒ । भ्राता॑ । नः॒ । ज्ये॒ष्ठः । प्र॒थ॒मः । वि । वो॒च॒ति॒ ॥२॥

**उद्गीथ०** रपत्[11] रप लप व्यक्तायां वाचि । रपितवती अग्निगुणान् व्यक्तमुक्तवती मनस्समागमयोगात् । गन्धर्वीः वाक् स्तुतिलक्षणा, अप्या च अद्भिः संस्कृता च योषणा स्त्री आहुतिलक्षणा । अग्निं सम्यक् तर्पितवतीति शेषः । नदस्य 'नदः' ( निघ ३.१६ ) इति स्तोतृनाम । स्तोतुर्मम सम्बन्धिनी । एतत् ज्ञात्वा [12]इदानीमपि नादे शब्दे[12] स्तुतिलक्षणे सम्यक्कर्तव्यत्वेन निमित्तभूते परि पातु चलत्वाद् इतश्चेतश्च गच्छत्[13] स्वस्थानस्थापनेन[14] सर्वतो रक्षत्वग्निः मे मम स्वभूतम्

---

१-१. नास्ति मूको. २. वर्षिका वि[१,३]. ३. प्रणाधिकया वि[१,३]. ४. दोहसाधनेन वि[३]; धनेन अ. ५-५. महत्प्रक्षा° मूको. ६. नास्ति वि[२] अ[१]; आ वि[१]. ७. °न मूको. ८. अगि वि[२]; आच्छिः वि[१]. ९. दोहमानाय धनेन वि[२] अ[१]. १०. °ये वि[२] अ[१]. ११. नास्ति अ वि[२]. १२-१२. °नीं शब्दे निनादे अ वि[२] १३. गच्छन् मूको. १४. स्वस्थानानेन अ वि[१]; स्वस्थापनेन वि[३]; स्वस्थानमनेन वि[२].

मनः, येनाऽहं समाहितमतिर्भूत्वा सम्यक् स्तुतिं करोमीत्यभिप्रायः । किञ्चान्यत् । इष्टस्य यज्ञस्य मध्ये अदितिः अदीनोऽग्निः नि धातु धनदानेन श्रद्धाजननेन च नित्यं स्थापयतु नः अस्मान् । किञ्च भ्राता अपि नः अस्माकं सम्बन्धी ज्येष्ठः प्रथमः सर्वप्रयोजनेषु प्रधानः वि वोचति यन्मयोक्तं तदेव विशेषेण वक्ति । एतदुक्तं भवति—अहमेव न केवलम्, सर्व एव अस्मत्कुलीनो देवयागप्रिय इति ॥ २ ॥

**वेङ्कट०** वदतु अग्निगुणान् गन्धर्वस्य स्त्री भारती अन्तरिक्ष्या सरस्वती च। स्तोतुः स्तोत्रे परि पातु च मम मनः भारती सरस्वती च। अथ अभिलषितस्य मध्ये अदितिः देवी नि धातु अस्मान् । भ्राता[1] अस्मान् ज्येष्ठः मुख्यः अधिब्रवीतु ॥ २ ॥

सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।
यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥ ३ ॥

सो इति । चित् । नु । भद्रा । क्षुऽमती । यशस्वती । उषाः । उवास । मनवे । स्वःऽवती ।
यत् । ईम् । उशन्तम् । उशताम् । अनु । क्रतुम् । अग्निम् । होतारम् । विदथाय । जीजनन् ॥

**उद्गीथ०** या पूर्वेष्वपि कालेषु अग्नियागार्थमुदितवती[2], सा एव नु क्षिप्रम् भद्रा कल्याणी क्षुमती 'क्षु शब्दे' । स्तुतिशब्दवती स्तुतिमतीत्यर्थः, अथवा प्रातरुत्थितपक्षिमनुष्यादिशब्दवती यशस्वती कीर्तिमती धनवती वा उषाः उवास उषितवतीत्यर्थः। किमर्थम् । मनवे सर्वस्य मन्त्रज्ञातुरग्नेर्यागार्थमित्यर्थः । स्वर्वती आदित्यवती । एनम् उशन्तम् स्तुतिं हविश्च कामयमानम् उशताम् यष्टुं कामयमानानां यज्वनां सम्बन्धिनम् अग्निम् होतारम् आह्वातारम् स्वेन[3] होमकारिणं वा अनु क्रतुम् विदथाय यज्ञाय यागार्थं जीजनन् जनितवन्तः प्रज्वालितवन्तः ऋत्विग्यजमानाः, तदोदितवतीति सम्बन्धः ॥ ३ ॥

**वेङ्कट०** सा उ एव खलु भजनीया शब्दवती अन्नवती उषाः व्युच्छतु मनुष्याय आदित्यवती। यदि एनम् अग्निं कामयमानम् कामयमानानां यजमानानाम् कर्मार्थम् जनयन्ति । तदेवोक्तम्[4]— अग्निम् होतारम् यज्ञार्थम् जनयन्तीति ॥ ३ ॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषितः श्येनो अध्वरे ।
यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥ ४ ॥

अध । त्यम् । द्रप्सम् । विऽभ्वम् । विऽचक्षणम् । विः । आ । अभरत् । इषितः । श्येनः । अध्वरे ।
यदि । विशः । वृणते । दस्मम् । आर्याः । अग्निम् । होतारम् । अध । धीः । अजायत ॥ ४ ॥

**उद्गीथ०** अध अथ अनन्तरम् त्यम् योऽग्नौ हूयते यज्वभिर्देवतार्थं तम् द्रप्सम् [5]नात्यल्पम् नातिबहुलं[5]

---

१. त्राता वि[2] अ[1]. २. अग्निर्यागा° वि[1]; °तवति अ वि[1,2]; °तमति वि[3]. ३. त्वेन मूको, ४. तदे मूको. ५-५. दात्यच्छमति° मूको.

यः । ते । अग्ने । सुऽमतिम् । मर्तः । अक्षत् । सहसः । सूनो इति । अति । सः । प्र । शृण्वे ।
इषम् । दधानः । वहमानः । अश्वैः । आ । सः । द्युऽमान् । अमऽवान् । भूषति । द्यून् ॥ ७ ॥

**उद्गीथ०** यः ते तव स्वभूतां हे अग्ने! सुमतिम् शोभनां स्तोतॄणां यष्टॄणाञ्चानुग्राहिकां बुद्धिम् मर्तः मनुष्यः स्तोत्राख्यो यष्ट्राख्यश्च अक्षत् अश्नोति । स्तुतिभिर्हविर्भिश्च त्वामनुग्रहशीलं परिचरतीत्यर्थः । हे सहसः सूनो! बलस्य पुत्र! सः मनुष्यः अति शृण्वे श्रूयते सर्वाँल्लोकानतीत्य प्रकर्षेण श्रूयते इषम् अन्नम् दधानः इष्टान्यर्थिभ्यो[1] ददत् वहमानः उह्यमानश्च[2] [3]अश्वैः । उत्तरकालम्[3] देवो भूत्वा द्युमान् द्युस्थानवान् दीप्तिमान् वा अमवान् आत्मवांश्च स्वाधिकारं प्रति यत्नवान् वेत्यर्थः । भूषति भवति । कियन्तं कालम् । उच्यते—आ[4] द्यून् 'द्युः' इत्यहर्नाम ( तु. निघ १,९ ) । आचन्द्रार्कमित्यर्थः ॥ ७ ॥

**वेङ्कट०** यः तव अग्ने! सुमतिम् [5]मनुष्यः अश्नुते बलस्य[5] पुत्र!, सः अत्यन्तम् [6]प्र स्तूयते । अन्नम्[6] धारयन् उह्यमानः अश्वैः अभिभवति सः दीप्तिमान् बलवान् दीप्तान् शत्रूनिति ॥७॥

यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥ ८ ॥

यत् । अग्ने । एषा । सम्ऽइतिः । भवाति । देवी । देवेषु । यजता । यजत्र ।
रत्ना । च । यत् । विऽभजासि । स्वधाऽवः । भागम् । नः । अत्र । वसुऽमन्तम् । वीतात् ॥८॥

**उद्गीथ०** यत् यदा तु अग्ने! एषा अस्मत्कृता समितिः स्तुतिसङ्गतिराहुतिसङ्गतिश्च भवाति देवी दीप्ता गुणैः । क[7] । उच्यते — देवेषु । कीदृशेषु । यजता यजतेषु यष्टव्येषु । देवाः यष्टव्या[8] अस्माभिः स्तूयन्ते इज्यन्ते चेत्यर्थः । हे यजत्र! यष्टव्य!। रत्ना रत्नानि च धनानि यत् यदा विभजासि स्तोतृभ्यो यष्टृभ्यश्च विभजसि[9] हे स्वधावः![10] हविरन्नवन्! भागम् अंशम् नः अस्माकम् प्रति अत्र काले, तदेत्यर्थः । वसुमन्तम् धनवन्तं नानाधनावयवं सर्वकार्यनिर्वर्तनक्षममित्यर्थः । वीतात् 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' (पा ७, १, ३५) इति हेःस्थानेऽत्र तातङ् । अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः । वायय गमयास्मभ्यं देहीत्यर्थः ॥ ८ ॥

**वेङ्कट०** यदा[11] अग्ने! एषा समितिः भवति देवी देवेषु यष्टव्येषु[12] यष्टव्य![13], यदा[14] सङ्गच्छन्ते[15] देवाः, यदा च रमणीयानि[16] धनानि [17]स्तोतृभ्यो विभजसि बलवन्![17], तदानीम् अस्माकमपि बहुवसुम्[18] भागम् अंशं प्रयच्छेति ॥ ८ ॥

---

१. ष्टात्° अ वि[3]; ष्टान्° अ. २. उद्यामा° अ वि[1]. ३ मश्वैतोत्तर° मूको. ४. नास्ति मूको. ५-५. °ष्यो···त्रि[2] अ[1]. ६-६. स्तूयने धारयतेन्नम् मूको. ७. नास्ति मूको. ८. व( प° वि[2,3] )ष्टव्या मूको. ९. विभजासि मूको. १०. व ह्य मूको. ११. यत् वि[2] अ[1]. १२. यष्टव्या मूको. १३. °व्या मूको. १४. नास्ति वि[1]. १५. °च्छेते वि[2] अ[1]. १६. °याभिधाप्न° वि[2]. १७-१७. °भ्यो··· वि[2]; °भ्यो ददाति अ[1]. १८. बहवसुम् वि[2]; बहुवसु अ[1]; बहुंवसुम् वि[1].

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥

श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य । द्रवित्नुम् ।
आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । माकिः । देवानाम् । अप । भूः । इह । स्याः ॥

**उद्गीथ०** हे अग्ने! श्रुधि शृणु नः अस्माकम् वचनमिति शेषः । क्व स्थितः । उच्यते— सदने स्थाने वेद्याख्ये । कीदृशे । सधस्थे सहस्थाने सर्वदेवसाधारणस्थाने । कतमद्वचनम्[1] । उच्यते— युक्ष्व आह्वातु[2] देवान् प्रति गमनाय युङ्क्ष्व रथम् आत्मीयम् । कीदृशम् । अमृतस्य देवपानस्य मधुनः द्रवित्नुम् द्रावयितारं[3] युङ्क्ष्व रथम् । तेन गत्वा च नः अस्माकं यज्ञं प्रति आ वह प्रापय रोदसी द्यावापृथिव्यौ देवपुत्रे देवस्य प्रजापतेः दुहितरौ । माकिः मा च कश्चित्[4] देवानां मध्ये एकोऽपि देवः अप भूः अपभविता स्यात् । अस्मद्यज्ञादपगन्ता[5] स्यात् । निरवशेषान् देवानाह्वयस्वेत्यर्थः । त्वमपि च इह अस्मिन् यज्ञे अस्मदीये सदा सन्निहितः स्याः भव[6] ॥ ९ ॥

**वेङ्कट०** शृणु अस्माकम् अग्ने! सहस्थाने गृहे । योजय रथम् उदकस्य द्रावकम्[7] । '[8]आ वह[8]' च अस्माकम् द्यावापृथिव्यौ ययोर्देवाः[9] पुत्राः[10] । मा च अप[11] भूः त्वम् देवानाम् सकाशात्, इहैव भव ॥९॥

[12]इति सप्तमाष्टके षष्ठाध्याये दशमो वर्गः[12] ॥

## [१२]

[13]आङ्गिर्हविर्धान ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[13] ।

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा ।
देवो यन्मर्तान् यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥ १ ॥

द्यावा । ह । क्षामा । प्रथमे इति । ऋतेन । अभिऽश्रावे । भवतः । सत्यऽवाचा ।
देवः । यत् । मर्तान् । यजथाय । कृण्वन् । सीदत् । होता । प्रत्यङ् । स्वम् । असुम् । यन् ॥

**उद्गीथ०** ह-शब्दोऽत्र पादपूरणः । द्यावा क्षामा द्यावाक्षामे द्यावापृथिव्यौ प्रथमे [13]पिण्डाधाराण्डकपालाभिमानित्वात् सृष्टौ पूर्वं जाते इत्यर्थः, प्रधाने वा । ऋतेन तन्निवासिना देवजनेन सहेत्यर्थः । अभिश्रावे आभिमुख्येन[14] श्रूयते इत्यभिश्रावस्तत्र[15] भवतः लोडर्थेऽत्र लट् । सामीप्यलक्षणा च सप्तम्येषा, गङ्गायां गावश्चरन्तीति यथा । आह्वानश्रवणादस्मद्यज्ञमभि-

---

१. तमद्व° वि[१,३]. २. आह्वान् मूको. ३. द्रवितारं मूको. ४. किंचित् अ वि[१,३]. ५. °नपगन्ता वि[१]. ६. भवत् भवत् अ वि[१,३]; भवत् वि[१]. ७. द्रावहकम् वि[२] अ[१]. ८-८ आ इ वि[२] अ[१]. ९. °व वि[२] अ[१]. १०. °त्र वि[२] अ[१]. ११. अय वि[२] अ[१]; अवः वि[१]. १२-१२. नास्ति मूको. १३. °म नित्व मूको. १४. मुख्योन मूको. १५. 'भिश्रान्त° अ वि[१,३].

यातामित्यर्थः[१]। कीदृश्यौ द्यावापृथिव्यौ। सत्यवाचा सत्यवाचौ अवितथवचने, सत्यवादिन्यावित्यर्थः। कदा अभिश्रावे भवतः। उच्यते — देवः अग्निः यत् यदा मर्तान् मनुष्यान् यजथाय देवयागाय कृण्वन् कुर्वन् प्रेरयन् सीदत् निषीदति वेद्याम् होता देवानामाह्वाता प्रत्यङ् देवान् प्रत्यञ्चिता आह्वानार्थम् स्वम् आत्मीयम् असुम् प्राणं ज्वालालक्षणं सर्वार्थदर्शनलक्षणम् यन् प्राप्तवांश्च। तदा प्राप्ते अस्मद्यागकाले देवान् द्यावापृथिवीप्रमुखान् अग्निराह्वयतीत्यर्थः ॥ १ ॥

**वेङ्कट०** द्यावाभूमी[२] मुख्ये यज्ञार्थं स्तुतिषु[३] श्रवणयोग्ये देशे भवतः सत्यस्तुतिके, देवः यदा अग्निः मनुष्यान्[४] यज्ञार्थम् कृण्वन् निषीदति होता अभिमुखम् [५]स्वम्† बलम् गच्छन्‡[५] इति द्यावापृथिवी यष्टुमिच्छन् अग्निं सूक्तेन स्तौति ॥ १ ॥

**दे॒वो दे॒वान् परि॒भूॠ॒तेन॒ वहा॑ नो ह॒व्यं प्र॑थ॒मश्चि॑कि॒त्वान् ।**
**धू॒मके॑तुः स॒मिधा॒ भाॠ॑जीको म॒न्द्रो होता॒ नित्यो॑ वा॒चा यजी॑यान् ॥ २ ॥**

दे॒वः । दे॒वान् । प॒रि॒ऽभूः । ॠ॒तेन॑ । वह॑ । नः॒ । ह॒व्यम् । प्र॒थ॒मः । चि॒कि॒त्वान् ।
धू॒मऽके॑तुः । स॒म्ऽइधा॑ । भाःऽॠ॑जीकः । म॒न्द्रः । होता॑ । नित्यः॑ । वा॒चा । यजी॑यान् ॥ २ ॥

**उद्गीथ०** यः त्वम् देवः देवान् परिभूः देवानां परिग्रहीता आह्वानहविर्नयनद्वारेण, स त्वम् ऋतेन यज्ञेन सह वह प्रापय नः अस्माकम् हव्यम् हविः प्रथमः यागसाधनानां पूर्वः प्रधानो [६]वा चिकित्वान्[६] ज्ञातवांश्च धूमकेतुः धूमस्य कर्ता च धूमपताको वा धूमज्ञानोपायश्च समिधा समिन्धनेन सन्दीपनेन भाऋजीकः ऋजुदीप्तिकः, ऊर्ध्वज्वलन इत्यर्थः, मन्द्रः स्तुत्यश्च होता आह्वाता च देवानाम् नित्यः ध्रुवः वाचा यजीयान् अतिशयेन यष्टा च ॥ २ ॥

**वेङ्कट०** देवः देवान् परिभवन् यज्ञेन सदा अस्माकम् हव्यम्[७] वह प्रथमः जानन् धूमप्रज्ञानः[८] समिन्धनेन[९] भाऋजीकः[१०] ऋजुदीप्तिः मोदनः होता नित्यः वाचा अतिशयेन यष्टा ॥ २ ॥

**स्वावृ॒ग्दे॒वस्या॒मृतं॒ यदी॒ गोरतो॑ जा॒तासो॑ धारयन्त उ॒र्वी ।**
**विश्वे॑ दे॒वा अनु॒ तत् ते॒ यजु॑र्गुर्दु॒हे यदेनी॑ दि॒व्यं घृ॒तं वाः ॥ ३ ॥**

स्वा॒वृक् । दे॒वस्य॑ । अ॒मृत॑म् । यदि॑ । गोः । अतः॑ । जा॒तासः॑ । धा॒रय॑न्ते । उ॒र्वी इति॑ ।
विश्वे॑ । दे॒वाः । अनु॑ । तत् । ते॒ । यजुः॑ । गुः॒ । दु॒हे । यत् । एनी॑ । दि॒व्यम् । घृ॒तम् । वारिति॑ वाः ॥ ३ ॥

**उद्गीथ०** यदि यद्यपि गोः पृथिव्याः अतः अस्याः सकाशात् जातासः जाता उत्पन्नाः, अस्यां पृथिव्यां भवाः, पृथिवीलोकनिवासिनो यजमाना इत्यर्थः, धारयन्ते हविषा स्थितिं कुर्वन्तो

---

१. आह्व.नसमानस्मदधर्माप्रियेता° मूको. २. °भूमि वि[२] अ[१]. ३. श्रुतिश्र वि[२]; श्रुति अ[१]; श्स्तुतिश्रु वि[१]. ४. °ष्या वि[२] अ[१]. ५-५. स्वबलाग° वि[१]. † नास्ति वि[२] अ[१]. ‡ °न्तीन् वि[२] अ[१]. ६-६. वाचि वा चिकि° वि[१]. ७. नास्ति मूको ८. °ज्ञानेन वि[२] अ[१]. ९. °न्धनः वि[२]; °न अ[१]. १०. त्रुटितम् वि[२] अ[१].

बिभ्रति उर्वी द्यावापृथिव्यौ। सकलजगतः स्थितिं कुर्वन्तीत्यर्थः। तथापि स्वावृक् स्वावर्जनं हविराधारत्वात् संस्कर्तृत्वाद् नेतृत्वाच्च स्व-दत्तिरेवेत्यर्थः। देवस्य तवाग्नेः अमृतम् देवानां[1] हविरित्यर्थः। हविषा त्वमेव जगत् पुष्णासि[2], [3]नान्यः कश्चिदित्यर्थः[3]।

सर्वे देवाः वृष्टिप्रदानद्वारेण[4] पुष्णन्तीति चेत्, न, यतः विश्वे देवाः अनु गुः अङ्गभावार्थम् अनुगच्छन्ति। तत् तदा ते तव[5] सम्बन्धि, त्वत्प्रदानकर्तृकमित्यर्थः। यजुः यज्ञम् दुहे दोग्धि प्रक्षरति। यत् यदा वा एनी एतवर्णा शुद्धस्वरूपा वा आहुतिः स्तुतिश्च त्वयि हुता कृता च सती दिव्यम् दिवि भवम् घृतम् 'घृ क्षरणदीप्त्योः'। क्षरत्[6] दीप्तं वा, आदित्यमण्डले भवमित्यर्थः[7], वाः वारि वृष्ट्युदकम्। अतस्त्वमेव संस्काराहुत्याधारादिद्वारेण जगतां स्थितिं करोषीत्यर्थः ॥ ३ ॥

**वेङ्कट०** स्वावर्जनम् अग्नेः उदकम्[8] यदि[9] तेजसा उत्पद्यते, अस्माद् उदकाद् जाता ओषधयो द्यावापृथिव्यौ धारयन्ति[10]। सर्वे[11] स्तोतारः तत् तव दानम्[12] अनु गायन्ति। दोग्धि यत् श्वेता दीप्तिः[13] दिवि भवम् क्षरद् उदकमिति ॥ ३ ॥

## अर्चा॑मि वां॒ वर्धा॒यापो॑ घृतस्नू॒ द्यावा॑भूमी शृणु॒तं रो॑दसी मे ।
## अहा॒ यद् द्यावोऽसु॑नीतिम॒यन् मध्वा॑ नो॒ अत्र॑ पि॒तरा॑ शिशीताम् ॥ ४ ॥

अर्चा॑मि। वा॒म्। वर्धा॑य। अपः॑। घृ॒त॒स्नू॒ इति॑ घृतऽस्नू। द्यावा॑भूमी इति॑। शृ॒णु॒तम्। रो॒द॒सी इति॑। मे॒। अहा॑। यत्। द्यावः॑। असु॑ऽनीतिम्। अय॑न्। मध्वा॑। नः॒। अत्र॑। पि॒तरा॑। शि॒शी॒ता॒म् ॥ ४ ॥

**उद्गीथ०** हे अग्ने! वर्धाय प्रज्वलय[14], प्रोत्सर्पयेत्यर्थः, अपः कर्म। अग्निना कर्मणि प्रोत्सर्पिते अग्निप्रसादेन चाभ्यनुज्ञाते च अर्चामि 'ऋच स्तुतौ'। स्तौमि[15] वाम् युवां हे घृतस्नू! वृष्ट्युदकस्य प्रस्रविण्यौ! द्यावाभूमी! द्यावापृथिव्यौ!। एतज्ज्ञात्वा मे मम, स्तुतीरिति[16] शेषः। शृणुतम् हे रोदसी! द्यावापृथिव्यौ!। कस्मादेवं ब्रवीमि। यत् यस्मात् अहा [17]अहरिति अत्र[17] सामर्थ्याद् अहोरात्रसाध्यं कर्मोच्यते। सप्तम्येकवचनस्य च आ आदेशः। अहनि अहोरात्रसाध्ये कर्मणि अग्निना प्रोत्सर्पिते सति द्यावः सामर्थ्यात् पृथिव्यश्च असुनीतिम् असुरिति प्रज्ञा। तया परिसमाप्तिं नीयत इत्यसुनीतिरत्र स्तुतिरुच्यते। तां श्रोतुम् अयन् गच्छन्ति, अत एवं ब्रवीमि। श्रुत्वा च स्तुतिम् अग्निसाध्ये कर्मणि तदनु ज्ञानेन मध्वा वृष्ट्युदकेन नः अस्माकम् अत्र लोके वा, वर्तमानम् इति शेषः, पितरा सर्वस्य मातापितृभूते द्यावापृथिव्यौ शिशीताम् 'शो तनूकरणे' इत्यस्यैतद्रूपम्। 'शिशीते शृङ्गे' (ऋ ५, २, ७) इति यथा। तनूकरणेन चात्र संस्कारो लक्ष्यते। स्नानपानाचमनसस्यनिष्पादनादिसंस्कारेण[18] संस्कुरुतामित्यर्थः ॥ ४ ॥

---

१. देवान्नं वि[1,3]. २. पुष्ण वि[1,2]; पूष्णा अ; पुष्णा वि[3]. ३-३. नान्याः का° अ वि[3]. ४-४. वृष्टिद्वारेण प्रदानद्वारेण वि[1,3]; वृष्टिद्वारेण अ. ५. के मूको. ६. °रति मूको. ७. परवामि° मूको. ८. °क वि[2] अ[1]. ९. ति वि[2] अ[1]. १०. °यति वि[2] अ[1]. ११. यर्मे वि[2] अ[1]. १२. गान° वि[2] अ[1]. १३. °सि वि[2] अ[1]. १४. प्रज्वल वि[1,3]. १५. स्तोम मूको. १६. स्तुतिरि° मूको १७-१७. अहरित्य अ वि[1,3]. १८. °मनस्यनिष्पा मूको.

वेङ्कट० [1]अर्चामि† वाम्[1]। स्तौमि युवयोः वृद्ध्यर्थम्[2] कर्म। हे घृतप्रस्ताविण्यौ[3] द्यावापृथिव्यौ![4] शृणुतम्[5] संरोधयित्र्यौ![6] प्रजानां मदीयं स्तोत्रम्। अहस्सु येषु[7] युवयोः स्तोतारः असुनीतिम्[8] गच्छन्ति म्रियन्ते, तेषु [9]इदानीं† मधुना अस्मान् द्यावापृथिव्यौ संस्कुरुताम्‡ इति साहचर्याद् अनयोः स्तुतिः[9] ॥ ४ ॥

किं स्वि॑न्नो॒ राजा॑ जगृहे॒ कद॒स्याति॑ व्र॒तं च॑कृ॒मा को वि वे॑द ।
मि॒त्रश्चि॒द्धि ष्मा॑ जुहुरा॒णो दे॒वाञ्छ्लोको॒ न या॒ताम॑पि॒ वाजो॒ अस्ति॑ ॥ ५ ॥

किम्। स्वि॒त्। नः॒। राजा॑। ज॒गृ॒हे॒। कत्। अ॒स्य॒। अति॑। व्र॒तम्। च॒कृ॒म॒। कः। वि। वे॒द।
मि॒त्रः। चि॒त्। हि। स्म॒। जु॒हु॒रा॒णः। दे॒वान्। श्लोकः॑। न। या॒ताम्। अपि॑। वाजः॑। अस्ति॑॥

उद्गीथ० किम् स्वित् स्विच्छब्दो वितर्कार्थे। किं वा नः अस्माकं स्वभूतानि हवींषि स्तुतीश्च राजा सर्वस्य स्वामी दीप्तो वाऽग्निः जगृहे परिगृह्णीयात्, परिचरणवैगुण्यात्। कत् किं वा अस्य अग्नेर्व्रतं कर्म परिचरणाख्यम् अति चकृम 'अति सु इत्यभिपूजितार्थे' (या १,३)। अभिपूजितम् ··· ··· ··· ॥ ५ ॥

वेङ्कट० [10]किम् स्वित् अस्माकम्† राजा गृह्णाति। किं वा वयम् अस्य प्रीणनं कर्म नाऽनुतिष्ठामः नित्यं नैमित्तिकं वा। कः एतत्‡ वेत्ति, न¶ कश्चिच्छक्तोऽद्य विद्यमानं ज्ञातुम्§। अस्माकम् मित्रः हि अग्निर्विद्यते, देवानां वा। अस्मदीया[10] स्तुतिश्च देवान् अभिगच्छतु[11]। अस्माकम् अस्ति अपि च हविश्च[12]। को व्रतविलोपप्रसङ्ग[13] इति ॥ ५ ॥

[14]इति सप्तमाष्टके षष्ठाध्याये एकादशो वर्गः[14] ॥

दु॒र्मन्त्वत्रा॒मृत॑स्य॒ नाम॒ सल॑क्ष्मा॒ यद्विषु॑रूपा॒ भवा॑ति ।
य॒मस्य॒ यो म॒नव॑ते सु॒मन्त्व॑ग्ने॒ तमृ॑ष्व पा॒ह्यप्र॑युच्छन् ॥ ६ ॥

दुः॒ऽमन्तु॑। अत्र॑। अ॒मृत॑स्य। नाम॑। सऽल॑क्ष्मा। यत्। विषु॑ऽरूपा। भवा॑ति।
य॒मस्य॑। यः। म॒नव॑ते। सु॒ऽमन्तु॑। अग्ने॑। तम्। ऋ॒ष्व॒। पा॒हि॒। अप्र॑ऽयुच्छन् ॥ ६ ॥

वेङ्कट० दुर्वचनम् अस्मिन् कर्मणि[15] कृते अमृतस्य यमस्य नामधेयं भवति, [16]यत् अस्मै[16] सलक्ष्मा विषुरूपा

१-१. नास्ति वि[1]. † यच्चामि वि[2] अ[1] २. °द्ध्यं वि[1]; वृद्ध अ[1]. ३. °प्रस्थाविण्यो वि[1]; धृतप्रस्थाविण्यो अ[1]. ४. नास्ति वि[1,2]. ५. शृणु वि[2] अ[1]; शृणुता वि[1]. ६. सयोध° वि[2] अ[1]; रोधयित्र्यौ वि[1]. ७. °षुविषयेषु अ[1]. ८. अधुनीनिम् वि[2]; अधुनीतिम् अ[1]; असुनीति वि[1]. ९. स्वहस्सु वि[1]; इत्यादिन वि[2] अ[1]. † दानीं वि[1]. ‡ संकुरुतम् वि[1]. १०-१०. नास्ति वि[2] अ[1]. † °कम् यरः वि[1]. ‡ एन् वि[1]. ¶ त वि[1]. § यः वि[1]. ११. °च्छत मूको. १२. हविश्च वि[2] अ[1]; °श्च तत्र वि[1]. १३. वृत विलोच° वि[2]; वितृ विलोव° अ[1]; व्रतलोप° वि[1]. १४-१४. नास्ति मूको. १५. नास्ति वि[2] अ[1]. १६-१६. तद्यस्मै वि[2] अ[1].

[1]स्वसा भार्य्या[1] भवेत्[2]। तत्तु न तथा इति यमस्य राज्ञः [3]यः स्तौति[3] सुवचनं नाम, अग्ने! तम् दर्शनीय! रक्ष अप्रमाद्यन् ॥ ६ ॥

यस्मिन् देवा विदथे मादयन्ते विवस्वतः सदने धारयन्ते ।
सूर्ये ज्योतिरदधुर्मास्य१क्तून् परि द्योतनिं चरतो अजस्रा ॥ ७ ॥

यस्मिन् । देवाः । विदथे । मादयन्ते । विवस्वतः । सदने । धारयन्ते ।
सूर्ये । ज्योतिः । अदधुः । मासि । अक्तून् । परि । द्योतनिम् । चरतः । अजस्रा ॥ ७ ॥

वेङ्कट० [4]यस्मिन् अग्नौ सति[4] देवाः यज्ञे माद्यन्ति[5], [6]यस्मिंश्च सति[6] मृता[7] मनुष्याः कर्मफलम् उपभुञ्जानाः[8] विवस्वतः [9]सदने वर्तन्ते[9] यथासुखम्, येन चाग्निना सूर्ये अहराख्यम् ज्योतिः अदधुः, चन्द्रमसि च[10] रात्रीः[11], तौ चन्द्रसूर्यौ तम् द्योतनिम्[12] द्योतमानम् अग्निं माध्यमिकम् परि चरतः सन्ततगमनौ[13] ॥ ७ ॥

यस्मिन् देवा मन्मनि संचरन्त्यपीच्ये३ न वयमस्य विद्म ।
मित्रो नो अत्रादितिरनागान्त्सविता देवो वरुणाय वोचत् ॥ ८ ॥

यस्मिन् । देवाः । मन्मनि । सम्ऽचरन्ति । अपीच्ये । न । वयम् । अस्य । विद्म ।
मित्रः । नः । अत्र । अदितिः । अनागान् । सविता । देवः । वरुणाय । वोचत् ॥ ८ ॥

वेङ्कट० यस्मिन् देवाः स्तोतव्ये वरुणे संचरन्ति[14], तम् अन्तर्हिते स्थाने स्थितम् अग्ने![15] न वयम् जानीमः। तस्मिन् स्थाने स्थिताय तस्मै वरुणाय[16] मित्रादयः[17] अस्मान् अपापान् ब्रुवन्तु ॥ ८ ॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥ ९ ॥

श्रुधि । नः । अग्ने । सदने । सधऽस्थे । युक्ष्व । रथम् । अमृतस्य । द्रवित्नुम् ।
आ । नः । वह । रोदसी इति । देवपुत्रे इति देवऽपुत्रे । माकिः । देवानाम् । अप । भूः । इह । स्याः ॥

---

१-१. साहायया वि[२]; सहाया अ[१]. २. अभवेत् वि[१]. ३-३. यास्तुतिः वि[२] अ[१]. ४-४. यस्मिन्नतनौ वि[२] अ[१]. ५. प्रमा॰ वि[१]. ६-६. °श्चास° वि[२] अ[१]. ७. मृत्वा वि[२] अ[१]. ८. °पयुञ्ज° वि[१]. ९. सनेदने वर्त वि[२] अ[१]. १०. प वि[२] अ[१]. ११. रात्रस् वि[२]; °त्रे अ[१]; °त्रिः वि[१]. १२. द्योतम् वि[२] अ[१]; नास्ति वि[१]. १३. सतत° वि[१]. १४. °रन्ती मूको. १५. अत्रे वि[२] अ[१]. १६. वरुणा वि[२] अ[१]. १७. दयः वि[२] अ[१].

वेङ्कट० नवममन्त्रः पूर्वसूक्ते ( १०,११,९ ) व्याख्यातः ॥ ९ ॥

[1]इति सप्तमाष्टके षष्ठाध्याये द्वादशो वर्गः[1] ॥

[ १३ ]

[1]आङ्गिर्हविर्धानः, विवस्वानादित्यो वा ऋषिः। हविर्धाने देवता। त्रिष्टुप् छन्दः, पञ्चमी जगती[1]।

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १ ॥

युजे । वाम् । ब्रह्म । पूर्व्यम् । नमःऽभिः । वि । श्लोकः । एतु । पथ्याऽइव । सूरेः ।
शृण्वन्तु । विश्वे । अमृतस्य । पुत्राः । आ । ये । धामानि । दिव्यानि । तस्थुः ॥ १ ॥

वेङ्कट० विवस्वानादित्यः[2]। हविर्धानदेवतम्। युवयोः वहनार्थम् प्रत्नम् ब्रह्म[3] युनज्मि नमस्कारैः। ब्रह्मणा वा। [4]"एते देवा[4] युञ्जते यद्धविर्धाने" इत्युक्तम्। युवयोः शब्दः वि एतु निर्गच्छतु अङ्कुरो[5] यथा, प्राज्ञस्य निर्गच्छति वाग् अपि वा यथा[6]। युद्धं सरतो वीरस्य मार्गेण यथा शब्द उत्तिष्ठति, तथा उत्तिष्ठतु। तं शब्दम् शृण्वन्तु सर्वे पुत्राः प्रजापतेः, आ तिष्ठन्ति ये दिव्यानि[7] स्थानानि ॥ १ ॥

यमे इव यतमाने यदैतं प्र वां भरन् मानुषा देवयन्तः ।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ २ ॥

यमे इवेति यमेऽइव । यतमाने इति । यत् । ऐतम् । प्र । वाम् । भरन् । मानुषाः । देवऽयन्तः । आ ।
सीदतम् । स्वम् । ऊँ इति । लोकम् । विदाने इति । स्वासस्थे इति सुऽआसस्थे । भवतम् । इन्दवे । नः ॥

उद्गीथ० यमे[8] इव सुसदृशे यतमाने गमनहविर्धारणादिस्वाधिकारकर्मणि[9] यत्नं कृतवती परस्परेण सङ्गच्छमाने वा यत् यदा ऐतम् गतवती स्थो युवां हविर्धानस्थानं प्रति, तदा वाम् युवाम् हविर्धानशकटे द्वे अपि प्र भरन् प्रभृतवन्तो[10], हविर्धानं प्रति आहृतवन्त इत्यर्थः, मनुष्या ऋत्विजश्च यजमानाः देवयन्तः देवान् यष्टुमिच्छन्तः सन्तः। एतद् ज्ञात्वा आ सीदतम् निषीदतं स्वस्वस्थाने तिष्ठतमित्यर्थः। उ-कारः पदपूरणः। स्वम् आत्मीयम् लोकम् स्थानं हविर्धान-गृहाख्यम् विदाने असाधारणत्वेन जानती आसाद्य च स्वासस्थे सुस्थाने स्वासने भवतम् इन्दवे नः अस्माकमिन्दोरर्थाय ॥ २ ॥

---

१-१. नास्ति मूको. २-२. °त्य वि[2] अ[1]; °स्वादित्यः वि[1]. ३. नास्ति वि[2] अ[1]. ४-४. एत-देव वि[2] अ[1]. ५. अकुरो मूको. ६. नास्ति वि[1]. ७. दे° वि[2] अ[1]. ८. नास्ति मूको. ९. गमन-एपधारणादिस्वाधिकारकमन्न मूको. १०. प्रभवन्तो मूको.

**वेङ्कट०** यमे[1] इव अपत्ये समानप्रज्ञे[2] व्याप्रियमाणे यत् युवां गच्छथः, तेन प्र भरन्ति[3] वाम् मनुष्याः देवकामाः। आ निषीदतम् स्वम् एव स्थानं जानती। शोभनाऽऽसने च भवतम् सोमाय अस्माकम्। 'यमे इव ह्येते यतमाने प्रबाहुगितः' (ऐब्रा १,२९) इत्युक्तम् ॥ २ ॥

पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन ।
अक्षरेण प्रति मिम एतामृतस्य नाभावधि सं पुनामि ॥ ३ ॥

पञ्च । पदानि । रुपः । अनु । अरोहम् । चतुःऽपदीम् । अनु । एमि । व्रतेन ।
अक्षरेण । प्रति । मिमे । एताम् । ऋतस्य । नाभौ । अधि । सम् । पुनामि ॥ ३ ॥

**उद्गीथ०** पञ्च पञ्चसङ्ख्याकानि पदानि पदितॄणि स्थितिहेतुत्वेन देवान् प्रति गन्तॄणि। कानि[4]। हवींषि धानासोमपशुपुरोडाशाज्याख्यानि[5]। रुपः यष्टॄणां स्वर्गमारोपयितुर्यज्ञस्याङ्गत्वेन सम्बन्धीनि अनु अरोहम् युवयोः स्वासनभवनानन्तरम्[6] आरोहामि, भवत्करणेन करोमीत्यर्थः। चतुष्पदीम् इति च्छन्दसामुपलक्षणम्। चतुर्भिः पादैर्युक्तानि त्रिष्टुबादिच्छन्दांसि चेत्यर्थः। अनु एमि अनुगच्छामि व्रतेन प्रयोगकर्मणा, यथाकालं प्रयुनज्मीत्यर्थः। अक्षरेण च प्रणवाख्येन प्रति मिमे प्रतिगरक्रियां[7] निर्मिमे[8] निर्वर्तयामि एताम्[9] प्रत्युपस्थिताम्। किञ्च ऋतस्य नाभौ अधि सम् पुनामि अधिशब्दश्रुतिसामर्थ्याद् नाभाविति षष्ठ्यर्थे सप्तम्येषा। ऋतस्य यज्ञस्य प्रधानाङ्गत्वेन हेतुना नाभिभूताया वेद्याः अधि उपरि सम्पुनामि संशोधयामि। दशापवित्रेण सोमञ्च संस्करोमीत्यर्थः ॥ ३ ॥

**वेङ्कट०** 'द्यावापृथिवी वै देवानाम् हविर्धाने भवतः' (तु. ऐ १,२९)। तत्रेयं पृथिव्याः स्तुतिर्वेदिभूतायाः[10]। पञ्च पदानि रोपयित्र्याः[11] पृथिव्याः[12] प्रवर्तमानाभ्यां हविर्धानाभ्याम् अहम् अनु रोहामि। तानि च[13] पञ्च पदानि 'साऽसि सुब्रह्मण्ये![14] तस्यास्ते पृथिवीपादः' (तैब्रा ३,७,७,१२-१३) इति वेदिविमाने दर्शितानि इति[15]। चतुष्पदीम् भूमिम् अनु गच्छामि व्रतेन अक्षरेण वेदैः[16] परिच्छिनद्मि[17]। एनां सत्यस्य नहने यज्ञे शोधयामि मन्त्रेण विमानसाधनेनेति[18] ॥ ३ ॥

देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत ।
बृहस्पतिं यज्ञमकृण्वत ऋषिं प्रियां यमस्तन्वं१ प्रारिरेचीत् ॥ ४ ॥

देवेभ्यः । कम् । अवृणीत । मृत्युम् । प्रऽजायै । कम् । अमृतम् । न । अवृणीत ।
बृहस्पतिम् । यज्ञम् । अकृण्वत । ऋषिम् । प्रियाम् । यमः । तन्वम् । प्र । अरिरेचीत् ॥ ४ ॥

---

१. य इमे वि[२]. २. समानं यज्ञे वि[२]. ३. हर° वि[२] अ[१]. ४. के मूको. ५. °पुरोळाशाख्यानि मूको. ६. स्वासनाभ° अ वि[२]. ७. °क्रिया वि[१,३]. ८. निमिमे मूको. ९. एकां अ वि[१,३]. १०. °तिभूतया वि[२] अ[१]; °भूताया वि[२]. ११. °त्र्य वि[२] अ[१]. १२. °व्यां वि[२] अ[१]. १३ नास्ति वि[२] अ[१]. १४. °ण्यै मूको. १५. दितिः वि[२] अ[१]; दिभिः वि[१]. १६. नास्ति वि[२] अ[१]; वेदे वि[१]. १७. °च्छिन्नं वि[२] अ[१]; °च्छिनमि वि[१]. १८. °ति अभिप्रायः अ[१].

**उद्गीथ०** किञ्च देवेभ्यः देवानाम् कम् स्वपुरुषम् मृत्युम् मारयितारं विनाशकम् अवृणीत वृणीते प्रार्थयते प्रयुङ्क्ते यमः। हविर्धारणक्रियायां[1] प्रवृत्तायां सत्यां देवानां स्थितेः अवश्यंभावित्वान्न कञ्चिदपि स्वपुरुषं देवानां विनाशकं निरूपयति यम इत्यर्थः। प्रजायै प्रजायाश्च मनुष्यादिकायाः देवव्यतिरिक्तायाः कम् वा अमृतम् स्वपुरुषम् अमृतम् अमारकम् अविनाशकम् न अवृणीत न वृणीते न प्रार्थयते, पूर्वोक्तेनैव प्रकारेण सर्वस्य स्थितेरवश्यंभावित्वात्। [2]किं च बृहस्पतिम् ऋषिम् ऋषिसदृशं[2] सर्वगुणोपेतमित्यर्थः। यज्ञम् अकृण्वत कुर्वन्ति ऋत्विग्यजमानाः। किञ्च प्रियाम् तन्वम् इष्टम् शरीरम् यमः प्र अरिरेचीत् अनेकार्थत्वाद् धातूनां रिचिरत्र परिहारार्थे द्रष्टव्यः। प्ररेचयति परिहरति, कर्मवैगुण्यजनितदोषाभावाद् अस्माकञ्जीवितं नापहरतीत्यर्थः ॥ ४ ॥

**वेङ्कट०** देवेभ्यः निवारितवान्[3] मृत्युम्। [4]मर्त्यांश्च अभयान् अकरोत्[4]। बृहस्पतिम् च यष्टव्यम् अकरोत् ऋषिम्[5]। प्रियाम् च तन्वम्[6] पृथिवीम् यमः[7] प्र अरिरेचीत्[8] अकरोद्[9] विस्तीर्णाम्। कमौ[10] पूरणौ ॥ ४ ॥

सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतम्।
उभे इदस्योभयस्य राजत उभे यतेते उभयस्य पुष्यतः ॥ ५ ॥

सप्त। क्षरन्ति। शिशवे। मरुत्वते। पित्रे। पुत्रासः। अपि। अवीवतन्। ऋतम्।
उभे इति। इत्। अस्य। उभयस्य। राजतः। उभे इति। यतेते इति। उभयस्य। पुष्यतः ॥५॥

**उद्गीथ०** सप्त छन्दांसि क्षरन्ति, स्तुतिमिति शेषः, शिशवे शिशोः शंसनीयस्य सोमस्य हविर्धानशकटयोः[11] सुखासनीभूतस्य मरुत्वते मरुत्वतः मरुद्भिः ऋत्विग्भिः सप्तभिः स्तोतृभिश्च युक्तस्येत्यर्थः। पित्रे पितुः ऋत्विजां सर्वस्य वा जनकत्वात् पितृभूतस्येत्यर्थः। पुत्रासः अपि सोमस्य पुत्राः[12] अपि सोमस्य पुत्रभूता[13] ऋत्विजोऽपि अवीवतन् गमयन्ति ऋतम् सत्यं स्तुतिरूपम्, सद्गुणग्राहिणीं स्तुतिं[14] कुर्वन्तीत्यर्थः। उत्तरोऽर्धर्चः परोक्षत्वाद् भिन्नं वाक्यम्। किं बहुनोक्तेन। उभे इत् इच्छब्द एवार्थे। उभे एव हविर्धाने नान्यत् अस्य उभयस्य देवजातस्य मर्त्यजातस्य राजतः ईशाते। तदधीनत्वाद्धविर्धारणस्य हविरधीनत्वाच्चोभयस्य स्थितेः उभे एव हविर्धाने यतेते कर्मानुष्ठाने प्रयत्नञ्च कुरुतः। तदधीनत्वाद्धविर्धारणस्य हविःप्रधानत्वाच्च कर्मानुष्ठानस्य उभयस्य देवजातस्य मर्त्यजातस्य च पुष्यतः हविर्धारणद्वारा पुष्टिं च कुरुत इत्यर्थः ॥ ५ ॥

---

१. हविर्धादेवव्यतिरिक्तया हवि° मूको. २-२. कं वा स्वबृहत्यृषिसदृशं अ वि[1]; कं वा स्वबृहत्यृ(°त्य [त्यतिं] वि[3].) ऋषिसदृशं वि[1,3]. ३. °रित द्वाः वि[2]; °रित द्वा अ[1]; °रितवा वि[3]. ४-४. मर्त्यांश्चोभया° वि[2] अ[1]; प्रजायैर्मनुष्येभ्यो मरणं निवारितवानकरोत् वि[3]. ५. नास्ति वि[2] अ[1]. ६. त्वम् वि[2] अ[1]; तत्त्वम् वि[3]. ७. °मं वि[2] अ[1]. ८. अरिरेवित् वि[2] अ[1]. ९. अकरो वि[2] अ[1]. १०. कामौ वि[2] अ[1]; क्रमौ वि[3]. ११. °र्धानस्य शक° मूको. १२. पुत्रासः मूको. १३. °भूत वा वि[1]; °भूता वा वि[2]; °भूत अ वि[3]. १४. नास्ति अ वि[3].

**वेङ्कट०** सप्त क्षरन्ति नद्यः शिशवे ते[1] वरुणाय [2]मरुद्भिर्युक्ताय 'यस्य ते[2] सप्तसिन्धवः' ( ऋ ८, ६९,१२ ) इत्युक्तम्। 'अपां शिशुर्मातृतमास्वन्तः' ( मा १०, ७ ) इति मन्त्रः। पित्रे दिवे पुत्रासः मनुष्याः ऋतम्[3] अपि गमयन्ति। 'अवतिर्गतिकर्मा[4]' इति यास्कः ( १०,२० )। उभे[5] द्यावापृथिव्यौ अस्य उभयस्य देवमनुष्यात्मकस्य राजतः। उभे[6] च प्रयत्नं कुरुतः देवमनुष्यार्थम्[7]। उभये[8] चान्नोदकैः[9] पुष्यतः इति। 'बृहस्पतिं यज्ञम् अकृण्वत' ( ऋ १०, १३, ४ ) इत्यादि प्रासङ्गिकम्[10] इति ॥ ५ ॥

[11]इति सप्तमाष्टके षष्ठाध्याये त्रयोदशो वर्गः[11] ॥

[ १४ ]

[11]वैवस्वतो यम ऋषिः। यमो देवता, ६ अङ्गिरःपित्रथर्वभृगुसोमाः, ७-९ लिङ्गोक्तदेवताः पितरो वा, १०-१२ श्वानौ। त्रिष्टुप् छन्दः, १३, १४, १६ अनुष्टुभः, १५ बृहती[11]।

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥

परेयिऽवांसम्। प्रऽवतः। महीः। अनु। बहुऽभ्यः। पन्थाम्। अनुऽपस्पशानम्। वैवस्वतम्। सम्ऽगमनम्। जनानाम्। यमम्। राजानम्। हविषा। दुवस्य ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् आरभ्यते[12]। परेयिवांसमिति षोडशर्चं यमदैवतं यमो वैवस्वतो ददर्श।

परेयिवांसम् उपसर्गव्यत्ययोऽत्र सामर्थ्यात् कार्यः। लिट् चात्र वर्तमाने। पर्यागच्छन्तम् लोकपालत्वात् [13]कृताकृतप्रत्यवेक्षणार्थम्। प्रवतः इत्येतन्मन्त्रपदं[13] द्वितीयाबहुवचनान्तम्। यास्कमहर्षिणा ( १०,२० ) अत्र [14]धात्वर्थसामान्याद् देवतिर्यग्जातिविशेषार्थम्[14] उद्वतो निवत इत्यध्याहार्यम्[15]। प्रवतः प्रगता धर्मादिसर्वपुरुषार्थसम्बन्धात् प्रकृष्टगा मनुष्यजातीरित्यर्थः[16]। उद्वतः उद्गताश्च देवजातीः सर्वतो [17]गतत्वाच्च निवतः तिर्यग्जातीः महीः अनु प्रति[17] इत्यर्थः। बहुभ्यः षष्ठ्यर्थे चतुर्थ्येषा। बहूनामपरिमितानामेतेषामेव प्राणिनाम् पन्थाम् पन्थानं मार्गं शुभाशुभकर्मप्रवृत्तिलक्षणं वा [18]अनुपस्पशानम् अनुर्निशब्दस्य स्थाने[18]। स्पशिर्बन्धनार्थः। निबध्नन्तम्[19], शुभाशुभकर्मप्रवृत्तिलक्षणमार्गं निरूपयन्तमित्यर्थः, जीवितलक्षणमार्गं[20] निरुन्धन्तमित्यर्थः[21]। वैवस्वतम् विवस्वतः पुत्रम् सङ्गमनम् स्वर्गं प्रति सम्यग्गमयितारम् जनानाम् यमम् राजानम् सर्वस्येश्वरम् हविषा दुवस्य[22] परिचर हे मदीयान्तरात्मन्! यजमान! वा ॥ १ ॥

---

१. वाम् मूको. २-२. °त्कोयमस्य वि[2] अ[1]; °यजस्य वि[3]. ३. नास्ति मूको. ४. पति मूको. ५. नास्ति वि[2] अ[1]. ६. उभयम् मूको. ७. °ध्यात्म राजतः वि[2]; ध्यात्म राजानः अ[1]. ८. यं च प्रयत्नं कुरुतो देवमनुष्यार्थम् उभयम् वि[2] अ[1]. ९. चानोदतैः वि[2] अ[1]. १० °कः मूको. ११-११. नास्ति मूको. १२ नास्ति वि[1,3]. १३-१३. °क्षणार्थं मेतन्मन्त्र° मूको. १४-१४. °र्थसामन्दे व मूको. १५. °त्थमध्याहृतम् मूको. १६. °जातिरित्य° अ वि[1,2]; °जातावित्य° वि[3]. १७-१७. °गतत्वा च बहुभ्योमिता अनुप्रमिति मूको. १८-१८. °स्पशानं स्पस्थाने वि[1,2]; °स्पशानस्य अ वि[3]. १९. बिबध्नन्तम् अ वि[1,2]; विबध्नन्तम् वि[3]. २०. जीविल° मूको. २१. निरुध्यन्त° मूको. २२. दुवस्व वि[1,3].

**वेङ्कट०** यमो वैवस्वतः। परागतं दूरगताः पृथिवीः[1] अनु दूरे स्थितम्। यास्कः (१०,२०) तु आह— 'पर्यागतवन्तम्' इति। बहुभ्यः मृतेभ्यः पन्थानं गमनमार्गम् अवगच्छन्तम्[2]। स्पृशतिर्ज्ञानकर्मा। वैवस्वतम् सङ्गमनम् जनानाम् यस्मिन् मृताः[3] सङ्गच्छन्ते तम् यमम् राजानम्[4] हविषा परिचर। 'दुवस्यतिराप्नोतिकर्मा' इति यास्कः ( १०,२० ) ॥ १ ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उं ।
यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्याउ अनु स्वाः ॥ २ ॥

यमः । नः । गातुम् । प्रथमः । विवेद । न । एषा । गव्यूतिः । अपऽभर्तवै । ऊँ इति ।
यत्र । नः । पूर्वे । पितरः । पराऽईयुः । एना । जज्ञानाः । पथ्याः । अनु । स्वाः ॥ २ ॥

**उद्गीथ०** नः अस्माकं प्रजानाम् गातुम् शुभाशुभकर्मनिमित्तां सुगतिं दुर्गतिं च प्रथमः अन्यस्मात् सर्वस्मात् ज्ञातुः[5] पूर्वम् विवेद जानाति। एषा गव्यूतिः [6]एषा या[6] शुभाशुभकर्मजनितसुगति-दुर्गतिश्च न अपभर्तवै अतिशयज्ञानयोगाद् यमस्य न केनचिदपहर्तुमपनेतुं स्वविज्ञानेनाभिभवितुं शक्यत इत्यर्थः। किञ्च यत्र यस्मिन् स्वर्गे नः अस्माकम् पूर्वे पितरः पितामहादयः परेयुः आप्तकामत्वात् स्वपुत्रदारानवेक्षमाणाः पराङ्मुखा गताः एना अनेन यज्ञेन हेतुना जज्ञानाः संस्कारद्वारेण [7]पुनर्जायमानाः पथ्याः संकीर्णमुखाः[7] आहुतीः स्तुतीश्च स्वाः स्वभूताः अनु आहुतिसंस्कारानन्तरं संस्कृताः सन्त इत्यर्थः। तदप्यस्मत्पितृगतिस्थानं यम एव तत्त्वतो जानाति नान्य इति पूर्वोक्तं[8] सर्वम्[9] ॥ २ ॥

**वेङ्कट०** यमः अस्माकं मृतानाम् अग्रे स्थितो मार्गम् जानातु। न एष मार्गः परिहर्तुं शक्यः अवश्यं मृतेन गन्तव्यः, यत्र अस्माकम् पूर्वे पितरः परेताः अनेन मार्गेण गच्छन्तो जाताः[10]। सर्वे स्वाः[11] पथ्याः [12]भूमीः अनु गच्छन्ति[12], प्रातिस्विकैः कर्मफलैः यासु निवसन्ति ॥ २ ॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
याँश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥ ३ ॥

मातली । कव्यैः । यमः । अङ्गिरःऽभिः । बृहस्पतिः । ऋक्वऽभिः । ववृधानः ।
यान् । च । देवाः । ववृधुः । ये । च । देवान् । स्वाहा । अन्ये । स्वधया । अन्ये । मदन्ति ॥३॥

**उद्गीथ०** मातली सारथिरिन्द्रस्य कव्यैः कव्यनामभिः पितृभिः सह वावृधानः सर्वप्रधानया वृद्ध्या वर्धमानः आस्ते, यमप्रसादादिति वाक्यशेषः। यमः च अङ्गिरोभिः सह सदा वर्धमान आस्ते। बृहस्पतिः ऋक्वभिः ऋक्वानो देवविशेषाः। ऋक्वभिर्मध्यमस्थानैर्देवगणैः सह सदा वावृधानो

---

१. °वीम् वि॰ अ॰. २. अनुग॰ वि॰ अ॰. ३. दृताः वि॰; दृता वि॰ अ॰. ४. राजानरम् वि॰ अ॰. ५. गातुः अ वि॰. ६-६. एष यः अ वि॰. ७-७. °मानाः स्संस्क्रिरिमदुखाः मूको. ८. पूर्वात्तं? वि॰. ९. सर्वे अ. १०. नास्ति वि॰. ११. स्वा मूको. १२-१२. भूमी नुगच्छति वि॰ अ॰.

वर्धमान आस्ते यमप्रसादात्। किञ्च यान् च पितॄन् देवाः ववृधुः वर्धयन्ति स्वेनोपकारेण, ये च पितरः देवान् स्वेनोपकारेण वर्धयन्ति । यच्छब्दसंबन्धात् तच्छब्दोऽध्याहार्यः । तेषां पितॄणां मध्ये एके पितरः स्वाहा मदन्ति स्वाहाकारप्रदानेन हविषा तृप्यन्ति यमेन सह। स्वधया अन्ये मदन्ति स्वधाकारप्रदानेन हविषैके तृप्यन्ति यमेन सह ॥ ३ ॥

**वेङ्कट०** मातलीप्रभृतयः पितॄणां नेतारः कव्यप्रभृतिः[1] सह वर्धन्ते गणशः। तत्र यान् इमान् देवाः [2]पितृयज्ञेन अवर्धयन्[2], ये [3]च अमी[3] यज्ञेन देवान्, तेषु देवाः[4] स्वाहाकारेण माद्यन्ति, स्वधाकारेण पितरः ॥ ३ ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥ ४ ॥

इमम् । यम । प्रऽस्तरम् । आ । हि । सीद । अङ्गिरःऽभिः । पितृऽभिः । सम्ऽविदानः ।
आ । त्वा । मन्त्राः । कविऽशस्ताः । वहन्तु । एना । राजन् । हविषा । मादयस्व ॥ ४ ॥

**उद्गीथ०** इमम् हे यम! प्रस्तरम् अस्मदीयवेदिस्तरणदर्भासनं[5] प्रति आ हि सीद हीति पदपूरणः। उपवेष्टुमागच्छ। किं कुर्वन्। उच्यते — अङ्गिरोभिः अङ्गिरोनामभिः पितृभिः [6]सह संविदानः[6] पथि विनोदनार्थं विचित्राः कथाः कुर्वन्नित्यर्थः। आगच्छन्तं च सन्तं त्वां स्तुतिमन्त्राः कविशस्ताः मेधाविभिः ऋत्विग्भिः प्रयुक्ताः[7] आ वहन्तु श्रोतव्यत्वेन निमित्तभूताः प्रापयन्तु। आगत्य च अस्मद्यज्ञे [8]एना एतेन हविषा राजन्! मादयस्व[8] तर्पयाऽऽत्मानं तृप्य वा ॥ ४ ॥

**वेङ्कट०** इमम् हे यम! प्रस्तरम् आ हि[9] सीद अङ्गिरोभिः पितृभिः सङ्गतः[10] तस्मिन् त्वाम् [11]आ वहन्तु[11] मन्त्राः[12] कविभिः शस्ताः। अनेन राजन्! हविषा माद्य[13] ॥ ४ ॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ॥ ५ ॥

अङ्गिरःऽभिः । आ । गहि । यज्ञियेभिः । यम । वैरूपैः । इह । मादयस्व ।
विवस्वन्तम् । हुवे । यः । पिता । ते । अस्मिन् । यज्ञे । बर्हिषि । आ । निऽसद्य ॥ ५ ॥

**उद्गीथ०** अङ्गिरोभिः सह आ गच्छ यज्ञियेभिः यज्ञार्हैः यज्ञसम्पादिभिर्वा यम्! वैरूपैः[7] विरूपा एव वैरूपाः। बहुरूपैरित्यर्थः। आगत्य च इह अस्मद्यज्ञे मादयस्व[7] तर्पयाऽऽत्मानं तृप्य वा। ते तव

---

१. माक° वि[2] अ[1]. २-२. °ज्ञेदावयन् वि[1]; °ज्ञे धावयद अ[1]. ३-३. चामि वि[2]; चात्मी अ[1]. ४. °व वि[2] अ[1]. ५. °णगर्भासनं मूको. ६-६. सहन् अ वि[1,2]; सह [स]न् वि[3]. ७. नास्ति मूको. ८-८. नास्ति मूको. ९. नास्ति वि[1]. १०. संशत वि[2] अ[1]. ११-११. आपन्तु वि[2] अ[1]. १२. °न्त्रा वि[2] अ[1]. १३. मादि वि[2] अ[1].

[1]यः पिता[1]। तमित्यध्याहार्यं यदिति सामर्थ्यात्। [1]तम् विवस्वन्तम् हुवे आह्वयामि[1]। तेन चाऽऽहूतेन सह अस्मिन् यज्ञे बर्हिषि वेदिस्तरणे आ निषद्य मर्यादयोपविश्य हविषा मादयस्वेत्यर्थः ॥ ५ ॥

वेङ्कट० अङ्गिरोभिः आ गच्छ यज्ञार्हैः[2] विरूपकुलजातैः। अस्मिन्[3] यज्ञे[4] मादयस्व। विवस्वन्तम्[5] च हुवे। यः पिता ते अस्मिन् यज्ञे बर्हिषि निषद्य माद्यति इति[6] ॥ ५ ॥

[1]इति सप्तमाष्टके षष्ठाध्याये चतुर्दशो वर्गः[1] ॥

अङ्गि॑रसो नः पि॒तरो॒ नव॑ग्वा॒ अथ॑र्वाणो॒ भृग॑वः सो॒म्यासः॑ ।
तेषां॑ व॒यं सु॑म॒तौ य॒ज्ञिया॑ना॒मपि॑ भ॒द्रे सौ॑मन॒से स्या॑म ॥ ६ ॥

आङ्गि॑रसः । नः॒ । पि॒तरः॑ । नव॑ऽग्वाः । अथ॑र्वाणः । भृग॑वः । सो॒म्यासः॑ ।
तेषा॑म् । व॒यम् । सु॒ऽम॒तौ । य॒ज्ञिया॑नाम् । अपि॑ । भ॒द्रे । सौ॒म॒न॒से । स्या॒म॒ ॥ ६ ॥

उद्गीथ० अङ्गिरसः ये वा पितरः नः अस्माकम्। पितरः कीदृशाः। नवग्वाः मासे पितृयज्ञे पतिते नवा गतिः, नवा मनसो गतिरभिलाषः येषाम्। भृगवः च सोम्यासः सोमसम्पादिनः[7]। तेषाम् सर्वेषामेव वयम् सुमतौ शोभनायाम् अनुग्राह्यबुद्धौ यज्ञियानाम् यज्ञार्हाणां यज्ञसम्पादिनां वा अपि भद्रे भन्दनीये भाजनवति वा सौमनसे सौमनस्ये प्रीतावित्यर्थः, स्याम भवेमेत्याशास्महे यमप्रसादादिति योज्यम् तद्देवतत्वाऽविघाताय मन्त्रस्य[8] ॥ ६ ॥

वेङ्कट० अङ्गिरसः अस्माकम् पितरः नवग्वाः। ये नवसु[9] मा:सु सत्रादुदतिष्ठन्[10] ते नवग्वाः[11]। यास्कः ( ११,१९ ) तु आह—'नवगतयो[12] नवनीतगतयो[13] वा[14]' इति। अथर्वाणः भृगवः च सोमसम्पादिनः[15], तेषाम् वयम् कल्याण्यां[16] मतौ यज्ञियानाम् अपि चैषाम् भद्रे भन्दनीये स्तुत्ये भजनीये च कल्याणे मनसि स्याम[17] ॥ ६ ॥

प्रेहि॒ प्रेहि॑ प॒थिभिः॑ पू॒र्व्येभि॒र्यत्रा॑ नः॒ पूर्वे॑ पि॒तरः॑ परे॒युः ।
उ॒भा राजा॑ना स्व॒धया॒ मद॑न्ता य॒मं प॑श्यासि॒ वरु॑णं च दे॒वम् ॥ ७ ॥

प्र । इ॒हि॒ । प्र । इ॒हि॒ । प॒थिऽभिः॑ । पू॒र्व्येभिः॑ । यत्र॑ । नः॒ । पूर्वे॑ । पि॒तरः॑ । प॒रा॒ऽई॒युः ।
उ॒भा । राजा॑ना । स्व॒धया॑ । मद॑न्ता । य॒मम् । प॒श्या॒सि॒ । वरु॑णम् । च॒ । दे॒वम् ॥ ७ ॥

---

१-१. नास्ति मूको. २. °र्हैः हे वि[2] अ[1]; ज्ञार्हे वि[1]. ३. विन् वि[2]; निन् अ[1]. ४. °ज्ञे वा अ[1]. ५. °स्वनः वि[2] अ[1]; °स्वन्तः वि[1]. ६. नास्ति वि[1,2]. ७. °संपादिनः वि[2] अ[1]. ८. इतः परं ग्रन्थपातः 'प्रेहि प्रेहि' इति सप्तममन्त्रस्य प्रतीकमपहाय। ९. नसु वि[2] अ[1]. १० दत्रा दुनिषु (ष्ट अ[1]) वि[2] अ[1]. ११. नवत्रा वि[2] अ[1]; नवग्र वि[1]. १२. वनग° वि[2] अ[1]. १३. नपतिग° वि[2] अ[1]. १४. इच वि[2] अ[1]. १५. °नः च वि[2] अ[1]. १६. °णा वि[2] अ[1]. १७ नास्ति वि[2] अ[1]; स्यामः वि[1].

**वेङ्कट०** प्र गच्छ प्र गच्छ मार्गैः प्रत्नैः यत्र[1] अस्माकम् पूर्वे पितरः परेताः। उभौ राजानौ स्वधया[2] माद्यन्तौ यमम् पश्य वरुणम् च तत्र देवम् ॥ ७ ॥

संं गच्छस्व पितृभिः संं यमेनेष्टापूर्तेन परमे व्योमन् ।
हित्वायावद्यं पुनरस्तमेहि संं गच्छस्व तन्वा सुवर्चाः ॥ ८ ॥

सम् । गच्छस्व । पितृऽभिः । सम् । यमेन । इष्टाऽपूर्तेन । परमे । विऽओमन् ।
हित्वाय । अवद्यम् । पुनः । अस्तम् । आ । इहि । सम् । गच्छस्व । तन्वा । सुऽवर्चाः ॥ ८ ॥

**वेङ्कट०** सम् गच्छस्व पितृभिः मृतैः, सम् च यमेन, तथा अर्जितेन[3] इष्टापूर्तेन च, परमे स्थाने। त्यक्त्वा पापम् पुनः [4]च अस्तम्[4] शरीरम् आ गच्छ। सम् गच्छस्व अङ्गैः सुदीप्तिः ॥ ८ ॥

अपेत वीत वि च सर्पतातोऽस्मा एतं पितरो लोकमक्रन् ।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥

अप । इत । वि । इत । वि । च । सर्पत । अतः । अस्मै । एतम् । पितरः । लोकम् । अक्रन् ।
अहःऽभिः । अत्ऽभिः । अक्तुऽभिः । विऽअक्तम् । यमः । ददाति । अवऽसानम् । अस्मै ॥९॥

**वेङ्कट०** अप गच्छत वि गच्छत वि च सर्पत[5] अस्माद्देशात्। रक्षांसि [6]पिशाचाश्च अस्मै[6] एतत् पितरः स्थानम्[7] अकुर्वन् अहोरात्रैः उदकैश्च विशेषेणाऽक्तं विभक्ताऽहोरात्रम् उदकवत्। प्रयच्छति[8] अवसानम् अस्मै यमः, न [9]त्वेनम् अनुदके[9] अन्धकारे प्रक्षिपतु ॥ ९ ॥

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा ।
अथा पितॄन्त्सुविदत्राँ उपेहि यमेन ये सधमादं मदन्ति ॥ १० ॥

अति । द्रव । सारमेयौ । श्वानौ । चतुःऽअक्षौ । शबलौ । साधुना । पथा ।
अथ । पितॄन् । सुऽविदत्रान् । उप । इहि । यमेन । ये । सधऽमादम् । मदन्ति ॥ १० ॥

**वेङ्कट०** [10]अति गच्छ[10] सरमायाः[11] पुत्रौ श्वानौ चतुरक्षौ शबलवर्णौ साधुना मार्गेण। अथ पितॄन् सुधनान् उप गच्छ, यमेन ये[12] पितरः सहमादम् मदन्ति[13] ॥ १० ॥

[14]इति सप्तमाष्टके षष्ठाध्याये पञ्चदशो वर्गः[14] ॥

---

१. इति वि[2] अ[1]. २. सुधया वि[2] अ[1]. ३. जितेन मूको. ४. चात्येश° मूको. ५. सर्वतः अ[1]. ६-६. °शाचास्मै वि[2] अ[1]. ७. स्मानम् वि[2] अ[1]. ८. °च्छ वि[2] अ[1]; °च्छस्व वि[1]. ९-९. त्वेन···नु° वि[2] अ[1]. १०-१०. अपिग° वि[2]; अपिगच्छतु अ[1]. ११. °या वि[2] अ[1]. १२. नास्ति वि[2] अ[1]. १३. मादन्ति वि[1]. १४-१४. नास्ति मूको.

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ ।
ताभ्यामेनं परि देहि राजन्त्स्वस्ति चास्मा अनमीवं च धेहि ॥ ११ ॥

यौ । ते । श्वानौ । यम । रक्षितारौ । चतुःऽअक्षौ । पथिरक्षी इति पथिऽरक्षी । नृऽचक्षसौ ।
ताभ्याम् । एनम् । परि । देहि । राजन् । स्वस्ति । च । अस्मै । अनमीवम् । च । धेहि ॥ ११ ॥

वेङ्कट० यौ ते श्वानौ यम! गोपायितारौ[1] चतुरक्षौ[2] पुरस्य मार्गस्य रक्षकौ नृणां द्रष्टारौ, ताभ्याम् एनम् परि धेहि राजन्!, अविनाशम् च अस्मै कुरु, तथा अमीवारहितं स्थानम् च इति ॥ ११ ॥

उरूणसावसुतृपा उदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह भद्रम् ॥ १२ ॥

उरुऽनसौ । असुऽतृपौ । उदुम्बलौ । यमस्य । दूतौ । चरतः । जनान् । अनु ।
तौ । अस्मभ्यम् । दृशये । सूर्याय । पुनः । दाताम् । असुम् । अद्य । इह । भद्रम् ॥ १२ ॥

वेङ्कट० विस्तीर्णनासिकौ प्राणिनाम् असुभिः तृप्तौ विस्तीर्णबलौ यमस्य दूतौ जनान् अनु चरतः । तौ अस्मभ्यम् दर्शनाय सूर्यस्य अद्य[3] शरीरम् आस्थितेभ्यः पुनः अपि असुम् दत्ताम्[4] अस्मिञ्छरीरे[5] भजनीयम् ॥ १२ ॥

यमाय सोमं सुनुत यमाय जुहुता हविः ।
यमं ह यज्ञो गच्छत्यग्निदूतो अरंकृतः ॥ १३ ॥

यमाय । सोमम् । सुनुत । यमाय । जुहुत । हविः ।
यमम् । ह । यज्ञः । गच्छति । अग्निऽदूतः । अरम्ऽकृतः ॥ १३ ॥

वेङ्कट० निगदसिद्धा ॥ १३ ॥

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद्दीर्घमायुः प्र जीवसे ॥ १४ ॥

यमाय । घृतऽवत् । हविः । जुहोत । प्र । च । तिष्ठत ।
सः । नः । देवेषु । आ । यमत् । दीर्घम् । आयुः । प्र । जीवसे ॥ १४ ॥

---

१. गोपा…वि[२] अ[१]. २. °क्षौ रक्षस्य वि[२] अ[१]. ३. अद्यम् वि[२] अ[१]; अन्यम् वि[१]. ४. त्ताम् वि अ[१]; दत्त वि[१]. ५. अस्मच्छ° वि[२] अ[१].

वेङ्कट० यमाय [1]घृतयुक्तम् हविः जुहुत[1]। प्र तिष्ठत च हविर्धानात्। सः अस्माकम् देवानां मध्ये आ यच्छति[2] दीर्घम् अन्नम् प्र-जीवनाय ॥ १४ ॥

यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ १५ ॥

यमाय । मधुमत्ऽतमम् । राज्ञे । हव्यम् । जुहोतन ।
इदम् । नमः । ऋषिऽभ्यः । पूर्वऽजेभ्यः । पूर्वेभ्यः । पथिकृत्ऽभ्यः ॥ १५ ॥

वेङ्कट० यमाय राज्ञे मधुमत्तमम्[3] हव्यम् जुहुत। इदम्[4] नमः[5] ऋषिभ्यः तदनुचरेभ्यः पूर्वजेभ्यः पथिकृद्भ्यः च मृतानाम् ॥ १५ ॥

त्रिकद्रुकेभिः पतति षळुर्वीरेकमिद् बृहत् ।
त्रिष्टुब् गायत्री छन्दांसि सर्वा ता यम आहिता ॥ १६ ॥

त्रिऽकद्रुकेभिः । पतति । षट् । उर्वीः । एकम् । इत् । बृहत् ।
त्रिऽस्तुप् । गायत्री । छन्दांसि । सर्वा । ता । यमे । आऽहिता ॥ १६ ॥

वेङ्कट० अभिप्लवष्यहं पूर्वैः [6]त्रिभिः ज्योतिर्गौरायुर्भिः त्रिकद्रुकम्। तान् त्रिकद्रुकान् उद्दिश्य[6] पतति [7]षट् उर्वीः एकम्[7] बृहत् इति यममाह। 'द्यौश्च पृथिवी [8]चाहश्च रात्रिश्चापश्चौषधयश्च'[8] (आश्रौ १,२,१) इति षडुर्व्यः। त्रैष्टुभादीनि छन्दांसि सर्वाणि तस्मिंस्त्रैष्टुभे यमे आहितानि। सूक्तमिदं यमेन मनुष्यार्थं दृष्टम्, यथा सूर्यया मनुष्याणां विवाहमन्त्रा दृष्टाः। आत्मदेवता तस्मिन् षष्ठी, लिङ्गोक्तदेवताः परास्तिस्रः, तिस्रश्च अभ्याम् अन्या याम्य इति ॥ १६ ॥

[9]इति सप्तमाष्टके षष्ठाध्याये षोडशो वर्गः[9] ॥

[ १५ ]

[9]शङ्खो यामायन ऋषिः। पितरो देवता। त्रिष्टुप् छन्दः, एकादशी जगती[9]।

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥[10]

---

१-१. घृत…वि[1] अ[1]. २. गच्छति मूको. ३. °त्तम् वि[1] अ[1]. ४. उदम् वि[1] अ[1]. ५. नमम् वि[2] अ[1]. ६-६. पूर्वैत्रिभि…त्रिकद्रुका…मूको. ७-७. षन्मिन्दुर्षिरेकं वि[2]; षन्दुर्विः वि[2] अ[1]. ८-८. °श्च रात्रिश्चाव श्चौष° वि[1]; चाहश्चावश्चौष° वि[2] अ[1]. ९-९. नास्ति मूको. १०. या. ( ११, १८ ) व्याख्यातचरा द्र.

उत् । ईरताम् । अवरे । उत् । परासः । उत् । मध्यमाः । पितरः । सोम्यासः ।
असुम् । ये । ईयुः । अवृकाः । ऋतऽज्ञाः । ते । नः । अवन्तु । पितरः । हवेषु ॥ १ ॥

**वेङ्कट०** यामायनः[1] शङ्खः । उत् तिष्ठन्तु अवरे[2] [3]उत्तिष्ठन्तु । पराः[3] तिष्ठन्तु[4] मध्यमाः पितरः सोमसम्पादिनः[5] । प्राणम् ये [6]गच्छन्तम् अनु ईयुः[6] अनमित्राः सत्यज्ञाः । ते अस्मान् रक्षन्तु पितरः ह्वानेषु[7] ॥ १ ॥

इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ २ ॥

इदम् । पितृऽभ्यः । नमः । अस्तु । अद्य । ये । पूर्वासः । ये । उपरासः । ईयुः ।
ये । पार्थिवे । रजसि । आ । निऽसत्ताः । ये । वा । नूनम् । सुऽवृजनासु । विक्षु ॥ २ ॥

**वेङ्कट०** अयम् पितृभ्यः नमस्कारः अस्तु अद्य, ये पूर्वासः मृताः, ये चोत्तमा[8] गताः, ये च[9] [10]पार्थिवे लोके†[10] निषण्णाः, ये वा पुरस्तात् सुबलासु विक्षु युद्धे हताः ॥ २ ॥

आहं पितॄन्त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ ३ ॥

आ । अहम् । पितॄन् । सुऽविदत्रान् । अवित्सि । नपातम् । च । विऽक्रमणम् । च । विष्णोः ।
बर्हिऽसदः । ये । स्वधया । सुतस्य । भजन्त । पित्वः । ते । इह । आऽगमिष्ठाः ॥ ३ ॥

**वेङ्कट०** आ जानामि अहम् पितॄन्[11] सुधनान्[12] अपि च विष्णोः नपातम् यमम्[13], तस्य विक्रमणम् च । बर्हिषदः [14]यज्वानः ये अन्नेन[14] सहाभिषुतं सोमम् अभजन्त । इह आभिमुख्येनाऽतिशयेन गन्तारो भवन्तु ॥ ३ ॥

बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नः शं योररपो दधात ॥ ४ ॥

---

१. यमा° मूको. २. अपरे वि[२] अ[१] ३-३. °ष्ठन्तु पारा वि[३] अ[१]; नास्ति वि[१]. ४. तिष्ठ° मूको. ५. सोमा समवातिन वि[२] अ[१]. ६-६. मपियुत्तरमम° वि अ[१]; °न्नियुनरनमि° वि[१]. ७. स्नानेषु वि[२] अ[१]. ८. °मौ वि अ[१]. ९. नास्ति वि[१]. १०-१०. पार्थिवलोके वि[१]. † स्वोदके वि[२] अ[१]. ११. पितृणाम् वि[१]. १२. धनान् वि[२]; धनानि अ[१]. १३. यम् वि[२] अ[१]. १४-१४. °न्नेन वि[२] अ[१]; यज्वानो यन्नेन वि[१].

बर्हिऽसदः । पितरः । ऊती । अर्वाक् । इमा । वः । हव्या । चकृम । जुषध्वम् ।
ते । आ । गत । अवसा । शम्ऽतमेन । अथ । नः । शम् । योः । अरपः । दधात ॥ ४ ॥

**वेङ्कट०** हे[1] बर्हिषदः! पितरः! रक्षणाय अभिमुखम् आगच्छत । इमानि वः हव्यानि[2] चकृम । तानि यूयं सेवध्वम्[3] । ते आ गच्छत[4] रक्षणेन सुखतमेन सह । अथ अस्मभ्यम् शम् च योः च पापरहितं[5] प्रयच्छत ॥ ४ ॥

उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥

उपऽहूताः । पितरः । सोम्यासः । बर्हिष्येषु । निऽधिषु । प्रियेषु ।
ते । आ । गमन्तु । ते । इह । श्रुवन्तु । अधि । ब्रुवन्तु । ते । अवन्तु । अस्मान् ॥ ५ ॥

**वेङ्कट०** उपहूताः पितरः सोमार्हाः बर्हिष्येषु [6]प्रियेषु स्थानेषु[6] । ते[7] आ गच्छन्तु, [7]ते इह शृण्वन्तु[7], ते अस्मान् अधि ब्रुवन्तु, रक्षन्तु चेति ॥ ५ ॥

[8]इति सप्तमाष्टके षष्ठाध्याये सप्तदशो वर्गः[8] ॥

आच्या जानु दक्षिणतो निषद्येमं यज्ञमभि गृणीत विश्वे ।
मा हिंसिष्ट पितरः केन चिन्नो यद्व आगः पुरुषता कराम ॥ ६ ॥

आऽअच्य । जानु । दक्षिणतः । निऽसद्य । इमम् । यज्ञम् । अभि । गृणीत । विश्वे ।
मा । हिंसिष्ट । पितरः । केन । चित् । नः । यत् । वः । आगः । पुरुषता । कराम ॥ ६ ॥

**वेङ्कट०** आत्मीयम् जानु आच्य दक्षिणतः उपविश्य अस्मदीयम् यज्ञम् अभि-ष्टुत सर्वे । पितरः! मा हिंसिष्ट च[9] अस्मान् केन चित् आगसा[9], [10]यत् वः वयम् आगः कुर्मः[10] मनुष्यत्वेन मोहिताः[11] ॥ ६ ॥

आसीनासो अरुणीनामुपस्थे रयिं धत्त दाशुषे मर्त्याय ।
पुत्रेभ्यः पितरस्तस्य वस्वः प्र यच्छत त इहोर्जं दधात ॥ ७ ॥

---

१. नास्ति वि[2] अ[1]. २. भव्या वि[2] अ[1]. ३. सेव्यम् वि[2] अ[1]. ४. गत वि[2] अ[1]. ५. वाप° वि[2] अ[1]; °परा° वि[1]. ६-६. स्थानेषु प्रियेषु वि[1]. ७-७. नास्ति वि[2] अ[1]. ८-८. नास्ति मूको. ९. आत्यामा वि[2] अ[1]. १०-१०. यद्वोपमागत्यः वि[2]. ११. °ताम् वि[2] अ[1].

आसीनासः । अरुणीनाम् । उपऽस्थे । रयिम् । धत्त । दाशुषे । मर्त्याय ।
पुत्रेभ्यः । पितरः । तस्य । वस्वः । प्र । यच्छत । ते । इह । ऊर्जम् । दधात ॥ ७ ॥

**वेङ्कट०** आसीनाः अरुणवर्णानां[1] मातृणाम् उपस्थे रयिम् धत्त दाशुषे मर्त्याय। पुत्रेभ्यः हे पितरः! तद् वसु प्र यच्छत। ते यूयम्[2] अस्मिन् लोके अन्नम् धत्त ॥ ७ ॥

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठाः ।
तेभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ८ ॥

ये । नः । पूर्वे । पितरः । सोम्यासः । अनुऽऊहिरे । सोमऽपीथम् । वसिष्ठाः ।
तेभिः । यमः । सम्ऽरराणः । हवींषि । उशन् । उशत्ऽभिः । प्रतिऽकामम् । अत्तु ॥ ८ ॥

**वेङ्कट०** ये अस्माकम् पूर्वे पितरः सोमार्हाः आत्मानं[3] प्रापयन्[4] सोमपीथम् [5]वसीयांसः, तैः[5] [6]यमः संरममाणः[6] हवींषि कामयमानः कामयमानैः कामेकामे अत्तु[7] ॥ ८ ॥

ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।
आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥ ९ ॥

ये । ततृषुः । देवऽत्रा । जेहमानाः । होत्राऽविदः । स्तोमऽतष्टासः । अर्कैः ।
आ । अग्ने । याहि । सुऽविदत्रेभिः । अर्वाङ् । सत्यैः । कव्यैः । पितृऽभिः । घर्मसत्ऽभिः ॥९॥

**वेङ्कट०** ये तृष्यन्ति देवेषु गच्छन्तः यज्ञविदः[8] स्तोतृभिः संस्कृताः[9] स्तुतिभिः, अग्ने! तैः सुधनैः अभिमुखम्[10] आ गच्छ सत्यकर्मभिः कव्यैः नाम पितृभिः यज्ञसद्भिः ॥ ९ ॥

ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः ।
आग्ने याहि सहस्रं देववन्दैः परैः पूर्वैः पितृभिर्घर्मसद्भिः ॥ १० ॥

ये । सत्यासः । हविःऽअदः । हविःऽपाः । इन्द्रेण । देवैः । सऽरथम् । दधानाः ।
आ । अग्ने । याहि । सहस्रम् । देवऽवन्दैः । परैः । पूर्वैः । पितृऽभिः । घर्मसत्ऽभिः ॥ १० ॥

**वेङ्कट०** ये सत्यकर्माणो हविषोऽत्तारः सोमपाः इन्द्रेण [11]देवैः च समानं[11] रथं धारयन्तः, तैः[12]

---

१. अनुणवर्णानां वि[1]; वणवर्णानां वि[2]; वणनर्णानां अ[1]. २. सूर्य° वि[2] अ[1]. ३. असानं वि[2]; अस्मान् अ[1]. ४. °यत् वि[2] अ[1] ५. °यांसस्तः वि[2] अ[1]. ६-६. यमयं रम° वि[2] अ[1]. ७. नास्ति वि[1]; ये तेषु वि[2] अ[1]. ८. °द वि[2] अ[1]. ९. °ता वि[2] अ[1]; स स्तुता वि[1]. १०. °ख वि[2] अ[1]. ११-११. देवेस्वन् मानं वि[2] अ[1]. १२. नास्ति वि[1].

आ याहि अग्ने! बहुभिः देवैरपि वन्दनीयैः[1] परैः परतरैश्च[2] पितृभिः प्रवर्ग्यसद्भिः ॥ १० ॥

[3]इति सप्तमाष्टके षष्ठाध्याये अष्टादशो वर्गः[3] ॥

अ॒ग्नि॒ष्वा॒त्ताः पि॒तर॒ एह ग॑च्छत॒ सदः॑सदः सदत सुप्रणीतयः ।
अ॒त्ता ह॒वींषि॒ प्रय॑तानि ब॒र्हिष्यथा॑ र॒यिं सर्व॑वीरं दधातन ॥ ११ ॥

अ॒ग्नि॒ऽस्वा॒त्ताः । पि॒तरः । आ । इ॒ह । ग॒च्छ॒त॒ । सदः॑ऽसदः । स॒द॒त॒ । सु॒ऽप्र॒नी॒त॒यः ।
अ॒त्त । ह॒वींषि॑ । प्रऽय॑तानि । ब॒र्हिषि॑ । अथ॑ । र॒यिम् । सर्व॑ऽवीरम् । द॒धा॒त॒न॒ ॥ ११ ॥

**उद्गीथ०** ··· ··· ···तैरस्माभिः संस्कृतानि शुचीनि बर्हिषि, आसादितानीति शेषः। अथ अनन्तरं च रयिम् धनम् सर्ववीरम् सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतम् दधातन दत्त अस्मभ्यम् ॥ ११ ॥

**वेङ्कट०** 'ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ताः' ( तैब्रा १,६,९,६ ) इति ब्राह्मणम्। अग्निष्वात्ताः! पितरः! इह आ गच्छत, [4]तत्र स्वंस्वं[4] स्थानं प्रत्युपविशत हे सुप्रणयनाः![5]। भक्षयत हवींषि शुद्धानि यज्ञे। अथ धनं प्रयच्छत। तस्य सन्ति सर्वे वीराः ॥ ११ ॥

त्वम॑ग्न ई॒ळि॒तो जा॑तवे॒दोऽवा॑ड्ढ॒व्यानि॑ सुर॒भीणि॑ कृ॒त्वी ।
प्रादाः॑ पि॒तृभ्यः॑ स्व॒धया॑ ते अ॑क्षन्न॒द्धि त्वं दे॑व॒ प्रय॑ता ह॒वींषि॑ ॥ १२ ॥

त्वम् । अ॒ग्ने॒ । ई॒ळि॒तः । जा॒त॒ऽवे॒दः॒ । अवा॑ट् । ह॒व्यानि॑ । सु॒र॒भीणि॑ । कृ॒त्वी ।
प्र । अ॒दाः॒ । पि॒तृऽभ्यः॑ । स्व॒धया॑ । ते । अ॒क्ष॒न् । अ॒द्धि । त्वम् । दे॒व॒ । प्रऽय॑ता । ह॒वींषि॑ ॥ १२ ॥

**उद्गीथ०** हे अग्ने! जातवेदः! उत्पन्नसर्वविषयवस्तुज्ञान! त्वम् अस्माभिः ईळितः स्तुतः अवाट् ऊढवानसि पितॄन् प्रति प्रापितवानसि हव्यानि हवींषि सुरभीणि सुगन्धीनि कृत्वी कृत्वा। प्र अदाः प्रत्तवांश्चासि पितृभ्यः। ते च पितरस्त्वया प्रत्तानि स्वधया अन्नेन हेतुना अन्नमेतदस्माकमित्यभिप्रायेण अक्षन् अशितवन्तः[6] भक्षितवन्तः। अथेदानीं कृतोपकारः सन् अद्धि भक्षय त्वम् हे देव! प्रयता प्रयतानि शुचीनि हवींषि ॥ १२ ॥

**वेङ्कट०** त्वम् अग्ने! स्तुतः जातवेदः! ऊढवानसि हव्यानि सुगन्धीनि कृत्वा[7]। प्र अदाः[8] पितृभ्यः तानि। ते च त्वया प्रत्तया[9] स्वधया अशनं कृतवन्तः। अथ त्वम् इदानीम् अद्धि देव! प्रयतानि हवींषि ॥ १२ ॥

ये चे॒ह पि॒तरो॒ ये च॒ नेह याँश्च॑ वि॒द्म याँ उ॑ च॒ न प्र॑वि॒द्म ।
त्वं वे॑त्थ॒ यति॒ ते जा॑तवेदः स्व॒धाभि॑र्य॒ज्ञं सुकृ॑तं जुषस्व ॥ १३ ॥

---

१. वद° वि[2] अ[1]. २. इतरै° वि[1]. ३-३. नास्ति मूको. ४-४. स स्वयं स्वं वि[2] अ[1]. ५. सुप्रवणयनाः वि[2]; सुप्रणयन वि[1]; सुप्रवणायनाः अ[1]. ६. अस्तवन्तो मूको. ७. तुवा वि[2] अ[1]. ८. °दा वि[2] अ[1]. ९. ऽत्नया मूको.

ये । च । इह । पितरः । ये । च । न । इह । यान् । च । विद्म । यान् । ऊँ इति । च । न । प्रऽविद्म ।
त्वम् । वेत्थ । यति । ते । जातऽवेदः । स्वधाभिः । यज्ञम् । सुऽकृतम् । जुषस्व ॥ १३ ॥

**उद्गीथ०** ये च पितरः इह अस्मत्समीपे वर्तन्ते, ये च इह न सन्ति, यान् च पितॄन् विद्म सन्निकृष्टत्वाद् जानीमो वयम्, यान् उ च न यानपि च न प्रविद्म विप्रकृष्टत्वाद् न विजानीमो वयम्, यति ते यत्सङ्ख्यायुताश्च ते पितरः तान् सर्वान् यथोक्तान् त्वम् वेत्थ त्वमेव जानासि हे जातवेदः! उत्पन्नसर्वविषयवस्तुज्ञान! । यत एवम् अतः तेषां यत्सङ्ख्यायुक्तानां पितॄणाम् स्वधाभिः अन्नैर्दातव्यत्वेन हेतुभूतैः इमम् यज्ञम् सुकृतम् साधुकृतमपि गुणवद्भिरनुष्ठितम् जुषस्व प्रीत्या परिगृहाण ॥ १३ ॥

**वेङ्कट०** ये च इह[1] पितरः वर्तन्ते, ये च न[2] [3]इह भवन्ति[3] अन्यत्र वर्तन्ते[4], यान् वयं जानीमः, यान् वा न प्रविद्म, तान् सर्वान् त्वम् जानासि, यावन्तः ते भवन्ति । जातप्रज्ञ![5] स त्वम् इदानीं हविर्भिः सुकृतम् यज्ञम् सेवस्व ॥ १३ ॥

ये अ॒ग्निद॒ग्धा ये अन॑ग्निदग्धा मध्ये॑ दि॒वः स्व॒धया॑ मा॒दय॑न्ते ।
तेभिः॑ स्व॒राळसु॑नीतिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयस्व ॥ १४ ॥

ये । अ॒ग्नि॒ऽद॒ग्धाः । ये । अन॑ग्निऽदग्धाः । मध्ये॑ । दि॒वः । स्व॒धया॑ । मा॒दय॑न्ते ।
तेभिः॑ । स्व॒ऽराट् । असु॑ऽनीतिम् । ए॒ताम् । य॒था॒ऽव॒शम् । त॒न्व॑म् । क॒ल्प॒य॒स्व॒ ॥ १४ ॥

**उद्गीथ०** ये पितरः अग्निदग्धाः अग्निना[6] दग्धाः अग्निना भस्मीकृताः श्मशानकर्म प्राप्ता इत्यर्थः, ये च अनग्निदग्धाः श्मशानकर्म न प्राप्ताः मध्ये दिवः स्वधया अन्नेन स्वकर्मफललक्षणेन मादयन्ते तृप्यन्ति, तेभिः तैः पितृभिः सह सम्भूय स्वराट् स्वकर्मफलोपभोगेन दीप्यमानः असुनीतिम् असूनां प्राणानां विषयेषु नेतारं स्वभोगोपनयाय प्रवर्तयितारम् अस्मत्पित्रन्तरात्मानम् एताम् तन्वम् एतद्देवताशरीरम् यथावशम् यथाकामं यथाभिलषितमित्यर्थः, कल्पयस्व समर्थयस्व ग्राहयस्वेत्यर्थः[7] । अग्निरेव पूर्वोक्तो वेदितव्यः [8]पूर्वमन्त्रे तस्य प्रकृतत्वात्[8] ॥ १४ ॥

**वेङ्कट०** ये अग्निना दग्धाः, ये[9] च अनग्निदग्धाः मध्ये अन्तरिक्षस्य स्थिताः स्वधया माद्यन्ति, तैः सह स्वराट् [10]त्वम् इमाम् असुनीतिम्[10] देवताम् यथाकामम् आत्मीयां च तनुम् कल्पयस्व ॥ १४ ॥

[11]इति सप्तमाष्टके षष्ठाध्याये एकोनविंशो वर्गः[11] ॥

---

१. °ह स वि[1]. २. नास्ति वि[2]. ३-३. हेवन्ति वि[2]; इ च भवन्ति वि[1]. ४. प्रत्र° वि[1].
५. जप्रज्ञः वि[1]; जातप्रज्ञः वि[1]. ६. नास्ति मूको. ७. गामयस्वे° मूको. ८-८. °मन्त्रन्तस्मेप्रकृ° वि[1,3]; °मन्त्रे तस्य म ( यम अ. ) प्रकृ° अ वि[2]. ९. नास्ति वि[1]. १०-१०. सुर्नीति वि[1] अ[1].
११-११. नास्ति मूको.

[ १६ ]

[1]दमनो यामायन ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः, अन्त्याश्चतस्रोऽनुष्टुभः[1]।

मैनमग्ने वि दहो माभि शोचो मास्य त्वचं चिक्षिपो मा शरीरम्।
यदा शृतं कृणवो जातवेदोऽथेमेनं प्र हिणुतात् पितृभ्यः ॥ १ ॥

मा। एनम्। अग्ने। वि। दहः। मा। अभि। शोचः। मा। अस्य। त्वचम्। चिक्षिपः। मा। शरीरम्।
यदा। शृतम्। कृणवः। जातऽवेदः। अथ। ईम्। एनम्। प्र। हिणुतात्। पितृऽभ्यः ॥ १ ॥

उद्गीथ० 'मैनमग्ने' इति सूक्तम् चतुर्दशर्चम् अग्निदेवतम् श्मशानकर्मणि विनियुक्तम्। यामायनो[2] दमनो ददर्श।

पुत्रो ब्रवीति ऋत्विग् वा। एनम् अस्मत्पितरम् अस्मद्याज्यं वा प्रेतसंस्कारार्थं त्वय्याहितं हे अग्ने! मा वि दहः विविधदग्धं मा कार्षीः, अनन्तरम् मा अभि शोचः माऽभिसन्तपः[3], अभिसन्तप्तं मन्ददग्धं च मा कार्षीरित्यर्थः। [1]मा अस्य त्वचम् चिक्षिपः विक्षिप[1]। मा शरीरम् अस्य शरीरम् च मा विक्षिप। किन्तर्हि करवाणि। उच्यते—यदा यस्मिन् काले शृतम् पक्वं सुदग्धम् कृणवः करिष्यसि हे जातवेदः!, अथ ईम् तदैव एनम् प्र हिणुतात् प्रगमय पितृभ्यः पितॄणां सकाशं पितृलोकमित्यर्थः ॥ १ ॥

वेङ्कट० यामायनो दमनः[4]। मा एनम् अग्ने! वि दहः मा च अभि शोचः। मा अस्य त्वचम्[5] चिक्षिपः, मा च शरीरम्। यदा[6] एनम्[7] शृतम्[8] करोषि[9] जातवेदः!, अथ एनम् प्र ईरय पितृभ्यः ॥ १ ॥

शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात् पितृभ्यः।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥ २ ॥

शृतम्। यदा। करसि। जातऽवेदः। अथ। ईम्। एनम्। परि। दत्तात्। पितृऽभ्यः।
यदा। गच्छाति। असुऽनीतिम्। एताम्। अथ। देवानाम्। वशऽनीः। भवाति ॥ २ ॥

उद्गीथ० शृतम् पक्वम् यदा करसि करिष्यसि हे जातवेदः!, अथ ईम् एनम् परि दत्तात्[10] परि[11] देहि समर्पय पितृभ्यः पितृलोकं प्रापयेत्यर्थः। कस्मादेवमुच्यसे। यतः यदा गच्छाति प्राप्नोति असुनीतिम् असूनां प्राणानां देहान्तरं नेतारं पितृपतिं यमम् एताम् च पितृताम्, अथ अनन्तरम् देवानाम् वशनीः वशानां कामानाम् आत्मानं प्रति नेता भवाति भविष्यति, देवभोगानां भोक्ता सम्पत्स्यत इत्यर्थः ॥ २ ॥

---

१-१. नास्ति मूको. २. मा सन्ति तपः मूको. ३. °सन्तप्त° वि[१,३]. ४. मदन वि[२] अ[१]; मदनः वि[१]. ५. च वि[२] अ[१]. ६. यत् मूको. ७. अनेनम् वि[२]. ८. श्रुणुतम् मूको. ९. करोमि वि[२] अ[१]. १०. नास्ति मूको. ११. नास्ति अ वि[२].

**वेङ्कट०** शृतम् यदा[1] करोषि जातप्रज्ञ!, अथ एनम् प्रयच्छ पितृभ्यः। यदा अयम् गच्छति असुनीतिम्[2] [2]देवताम् इमाम्, अथासौ[3] देवानाम् आत्मीयानाम् इन्द्रियाणाम् वशनीः[4] भवतु। यो वशं नयति स वशनीः ॥ २ ॥

सूर्यं चक्षुर्गच्छतु वार्तमात्मा द्यां च गच्छ पृथिवीं च धर्मणा।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥ ३ ॥

सूर्यम्। चक्षुः। गच्छतु। वार्तम्। आत्मा। द्याम्। च। गच्छ। पृथिवीम्। च। धर्मणा।
अपः। वा। गच्छ। यदि। तत्र। ते। हितम्। ओषधीषु। प्रति। तिष्ठ। शरीरैः ॥ ३ ॥

**उद्गीथ०** सूर्यम् स्वकारणम् चक्षुः तव सम्बन्धि गच्छतु प्राप्नोतु। वातम् गच्छतु आत्मा तव शरीरान्तर्गतो वायुः। अन्यानि च वागादीनीन्द्रियाण्यग्न्यादिदेवेषु स्वकारणेषु लीयन्ताम् प्रदर्शनार्थत्वात् सूर्यचक्षुर्वातात्मग्रहणस्य। द्याम् च चशब्दोऽत्र विकल्पार्थे। दिवं वा गच्छ प्राप्नुहि देवशरीरे स्वकर्मानुरूपं फलमुपभोक्तुम्। पृथिवीम् च पृथिवीं वा गच्छ धर्मणा स्वकर्मणा। अपः वा गच्छ 'आपः' ( निघ १,३ ) इत्यन्तरिक्षनाम। अन्तरिक्षं वा प्राप्नुहि। तत्र अन्तरिक्षे ते तव कर्मफलम् हितम् सुस्थापितम्[5]। ओषधीषु प्रति तिष्ठ शरीरैः बहुवचनसामर्थ्यात् शरीरावयवैरित्यर्थः। अथवा 'ओषधीर्लोमानि[6] वनस्पतीन्[7] केशा.' ( बृउ ३,२,१३ ) इति वचनात् ओषधिवनस्पतिषु शरीरजलोमकेशात्मना[8] प्रतितिष्ठेत्यर्थः। अन्यदपि श्रुत्यन्तरे यद् दृष्टम् 'अप्सु लोहितं च रेतश्च' ( बृउ ३,२,१३ ) इत्यादि, तत्सर्वमत्र द्रष्टव्यम् ॥ ३ ॥

**वेङ्कट०** अस्य चक्षुः सूर्यम् गच्छतु, वातम् प्राणः[9]। द्याम् पृष्ठेन गच्छ, पृथिवीम् च धारकेण शरीरेण। अन्तरिक्षम् वा गच्छ, यदि तत्र ते निहितं कर्म। अथ ओषधीषु गच्छ अङ्गैः[10] ॥ ३ ॥

अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः।
यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ४ ॥

अजः। भागः। तपसा। तम्। तपस्व। तम्। ते। शोचिः। तपतु। तम्। ते। अर्चिः।
याः। ते। शिवाः। तन्वः। जातऽवेदः। ताभिः। वह। एनम्। सुऽकृताम्। ऊं इति। लोकम् ॥

**उद्गीथ०** यस्य यजमानस्य यः[11] अजः अनुत्पत्तिधर्मकः नित्यः अन्तरपुरुषलक्षणः[12] भागः शरीरेन्द्रियादिभागस्य व्यतिरिक्तः तम् भागम् तपसा सन्तापेनाऽङ्गारगतेन तपस्व सन्तापय

---

१. यथा मूको. २-२. असुनीति वि[2] अ[1]. ३. °मिमाथमथा° वि[2] अ[1]; °मिममथा° वि[1]. ४. वशुनी वि[2] अ[1]; विशनीः वि[1]. ५. स्वस्थापितम् मूको. ६. °धी लोमानि मूको. ७. वनस्पतिं मूको. ८. 'केशात्मेन वि[1]; 'केशत्वेन अ वि[2]. ९. प्रणः वि[1,2]. १०. °ग्रैः वि[2] अ[1]. ११. नास्ति अ वि[1]. १२. अनन्तपु° अ वि[2].

संस्कुर्वित्यर्थः। तम् एव भागम् ते तव शोचिः तम् ते अर्चिः अपि ज्वालालक्षणः तपतु संस्करोतु। संस्कृत्य च याः ते तव शिवाः सुखाः प्रह्लादिन्यः तन्वः मूर्तयः हे जातवेदः!, ताभिः तनुभिः वह प्रापय एनम् यजमानम् सुकृताम् शोभनकर्मकारिणां पितॄणाम् लोकम् स्थानम्। उ इति एवार्थे सुकृताम् एव लोकम्॥ ४॥

**वेङ्कट०** [1]अयम् अजः[1] तव भागः तम् तपसा तपस्व[2]। तम् एव ते शोचिः तपतु, तम् एव ते अर्चिः[3]। याः ते शिवाः तनवः[4] अग्ने! 'विराट् च स्वराट् च' (तैब्रा १, १, ७, २) इत्यध्वर्युभिराम्नाताः, ताभिः वह[5] एनम् सुकृताम् एव लोकम्॥ ४॥

अव॑ सृज॒ पुन॑रग्ने पि॒तृभ्यो॒ यस्त॒ आहु॑त॒श्चर॑ति स्व॒धाभिः॑।
आयु॒र्वसा॑न॒ उप॑ वेतु॒ शेषः॒ सं ग॑च्छतां त॒न्वा॑ जातवेदः॥ ५॥

अव॑। सृ॒ज॒। पुनः॑। अ॒ग्ने॒। पि॒तृऽभ्यः॑। यः। ते॒। आऽहु॑तः। चर॑ति। स्व॒धाभिः॑।
आयुः॑। वसा॑नः। उप॑। वे॒तु॒। शेषः॑। सम्। ग॒च्छ॒ता॒म्। त॒न्वा॑। जा॒तऽवे॑दः॥ ५॥

**उद्गीथ०** पुनः हे अग्ने! अव सृज [6]देहि प्रेतं[6] पितृभ्यः। युष्माभिः सह स्थानाधिकारभोगादिभिः समानोऽयमिति समर्पयेत्यर्थः[7]। कमवसृजामि। यः ते तुभ्यम् आहुतः 'हु 'दानादनयोः'। संस्कारार्थे[8] मर्यादया दत्तः [9]सन् चरति[9] गच्छति पितॄन् प्रति। केन हेतुना। उच्यते — स्वधाभिः अन्नैः कर्मफललक्षणैर्भोक्तव्यत्वेन हेतुभूतैः। सुकृतफलोपभोगार्थमित्यर्थः। तम् अवसृज। किञ्च [10]आयुः जीवनम्[10] वसानः आच्छादयन्, [11]सर्वगतेन जीवनेनाऽभिछितः[11] सन्नित्यर्थः। उप वेतु कर्मशेषसमापनाय उपगच्छतु यज्ञम् शेषः अस्थिलक्षणः शरीरशेषः। उपगम्य च तव प्रसादात्। सम् गच्छताम् संयुज्यताम् तन्वा यज्ञशरीरेण हे जातवेदः!॥ ५॥

**वेङ्कट०** अव सृज एनम् अग्ने! पुनः पितृभ्यः, यः त्वयि आहुतः चरति स्वधाभिः अस्माभिर्दत्ताभिः। स पुत्राय आयुः आच्छादयन्[12] उप गच्छतु[13]। पुत्रः[14] सम् गच्छताम् च आत्मीयेन शरीरेण जातवेदः![15]॥ ५॥

[16]इति सप्तमाष्टके षष्ठाध्याये विंशो वर्गः[16]॥

यत् ते॑ कृ॒ष्णः श॑कु॒न आ॑तु॒तोद॑ पिपी॒लः स॒र्प उ॒त वा॒ श्वाप॑दः।
अ॒ग्निष्टद्वि॒श्वाद॑ग॒दं कृ॑णोतु॒ सोम॑श्च॒ यो ब्रा॑ह्म॒णाँ आ॑वि॒वेश॑॥ ६॥

---

१-१. अयजः वि[२] अ[१]. २. पवस्त वि[१]. ३. अर्चिभिः वि[२] अ[१]. ४. तरवः वि[१] अ[१]. ५. यथाह वि[२] अ[१]. ६-६. देहप्र अ वि[१,२]; देह प्र वि[३]. ७. °त्यर्थः। उप वेतु मूको. ८. दानास्कार (°रा अ वि[३].) र्थे मूको. ९. संचरति मूको. १०-१० आयुरहं अ वि[३]; आयुः हं वि[२,३]. ११-११. °तेनाजीवेना° मूको. १२. °यन्तु वि[२] अ[१]. १३. °च्छ वि[२] अ[१]. १४. °त्र वि[२] अ[१]. १५. ज्ञातवेद वि[२]; जातवेद अ[१]. १६-१६. नास्ति मूको.

यत् । ते । कृष्णः । शकुनः । आऽतुतोदं । पिपीलः । सर्पः । उत । वा । श्वापदः ।
अग्निः । तत् । विश्वऽअत् । अगदम् । कृणोतु । सोमः । च । यः । ब्राह्मणान् । आऽविवेशं ॥ ६ ॥

उद्गीथ० यत् अङ्गम् ते तव यजमानस्य सम्बन्धि कृष्णः शकुनः काकाख्यः आतुतोद ईषद् मर्यादया आभिमुख्येन वा तुन्नवान् व्यथितवान्, पिपीलः पिपीलिका वा सर्पः वा, उत वा अपि वा श्वापदः श्वसृगालकः, तत् अङ्गम् अग्निः विश्वात् विश्वस्यात्ता ··· ··· ··· ॥ ६ ॥

वेङ्कट० यत् अङ्गं तव काकादिः[1] आतुतोद[2], तत् अङ्गं स सर्वस्यात्ता[3] अग्निः अगदम्[4] करोतु, सोमः च पीतः, यः ब्राह्मणान्[5] आविवेश[6] ॥ ६ ॥

अग्नेर्वर्म परि गोभिर्व्ययस्व सं प्रोर्णुष्व पीवसा मेदसा च ।
नेत् त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन् पर्यङ्खयाते ॥ ७ ॥

अग्नेः । वर्म । परि । गोभिः । व्ययस्व । सम् । प्र । ऊर्णुष्व । पीवसा । मेदसा । च ।
न । इत् । त्वा । धृष्णुः । हरसा । जर्हृषाणः । दधृक् । विऽधक्ष्यन् । परिऽअङ्खयाते ॥ ७ ॥

वेङ्कट० [7]"वपामुत्खिद्य शिरोमुखम् प्रच्छादयेद् अग्नेर्वर्म" ( आगृ ४,३,१९ ) इति अग्नेः वर्म वारकं तेजः परि व्ययस्व अङ्गैराच्छादय । सम् प्र छादय† मांसेन मेदसा च । न एव त्वां धर्षणशीलोऽग्निः‡ तेजसा¶ हृष्यन्$ धारकः विधक्ष्यन्§ पर्यङ्खयातेφ । पर्यङ्खतिर्विस्तारकर्मेति†[7] ॥ ७ ॥

इममग्ने चमसं मा वि जिह्वरः प्रियो देवानामुत सोम्यानाम् ।
एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ते ॥ ८ ॥

इमम् । अग्ने । चमसम् । मा । वि । जिह्वरः । प्रियः । देवानाम् । उत । सोम्यानाम् ।
एषः । यः । चमसः । देवऽपानः । तस्मिन् । देवाः । अमृताः । मादयन्ते ॥ ८ ॥

वेङ्कट० [8]इमम् अग्ने! चमसम् प्रणीताप्रणयनम्† मा वि जिह्वरः[8] दहनेन मा विश्लथय[9], यः प्रियः देवानाम् अपि च पितृणाम् । एषः यः चमसः देवानां सोमपानसाधनम्, तस्मिन् एतस्मिन्[10] देवाः अमृताः माद्यन्ति[11] ॥ ८ ॥

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ९ ॥

---

१. कारादिः वि[2] अ[1]. २ आतुदः वि[2]. ३. °स्यातो वि[2] अ[1]. ४. अङ्गदम् वि[2] अ[1]. ५. °णानां वि[2] अ[1]. ६. विवेश वि[2] अ[1]. ७-७. नास्ति वि[1]. † °यत वि[2] अ[1]. ‡ धर्षणस्तेजश्शीलो° वि[2] अ[1]. ¶ °सां वि[2] अ[1]. $ धृष्यं वि[2] अ[1]. § °क्षन् वि[2] अ[1]. φ पर्यंयाते वि[2] अ[1]. † पर्य···वि[2] अ[1]. ८-८. नास्ति वि[1]. † °न वि[2] अ[1]. ९. विशिय वि[2] अ[1]; विश्लथयः वि[1]. १०. नास्ति वि[2] अ[1]. ११. °न्तु मूको.

क्रव्यऽअदम् । अग्निम् । प्र । हिणोमि । दूरम् । यमऽराज्ञः । गच्छतु । रिप्रऽवाहः ।
इह । एव । अयम् । इतरः । जातऽवेदाः । देवेभ्यः । हव्यम् । वहतु । प्रऽजानन् ॥ ९ ॥

**उद्गीथ०** [1]क्रव्यादम् क्रव्यम् आमिषं तस्याऽत्तारम्[1] अग्निम् प्र हिणोमि 'हि गतौ'। प्रगमयामि दूरम् विप्रकृष्टदेशं नीत्वा, दक्षिणस्यां दिशि चतुष्पथादौ निरस्यामीत्यर्थः। निरस्तश्च सन्नितः यमराज्ञः षष्ठीश्रुतेः सकाशमिति शेषः। प्राणानां प्राणपतेः स्वान्तरपुरुषस्य शरीरात् वियोगकरणसामान्यात् तत्कर्मत्वात्[2] यमराजस्य सकाशम्[3] गच्छतु। समानशीलव्यसनेषु सख्यम्। यतः रिप्रवाहः रिप्रं पापं तत्सदृशस्य मृतशरीरस्य वोढा भस्मतां प्रापयितेत्यर्थः। इह एव अस्मद्गृहे एवायं क्रव्यादात् इतरः अन्यो हव्यवाहनः जातवेदाः शान्तिकर्मार्थम् उपात्तः देवेभ्यः देवान् प्रति हव्यम् अस्मत्प्रत्तम् वहतु प्रापयतु प्रजानन् देशकालकर्माणि स्वाधिकारम्[4] अस्मद्भक्ततां वा विजानन् ॥ ९ ॥

**वेङ्कट०** आहिताग्निमरणे[5] विनियुक्तेयम्, औपासनोद्वासने[6] द्वे[7]। 'अथैनम्[8] क्रव्याद्[9] यः पुरुषं दहति'[10] ( काश २,१,४,३ ) इति ब्राह्मणम्, तं गमयामि दूरम् यमराजकानन्यान्[11] देशान् इतः सङ्गच्छतु[12] पापस्य[13] वोढा। इह एव अयम् तस्मात्[14] इतरः जातवेदाः देवानामग्निः[15] देवेभ्यः हव्यम् वहतु[16] प्रजानन् विजानानः[17] ॥ ९ ॥

यो अग्निः क्रव्यात् प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसम् ।
तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात् परमे सधस्थे ॥ १० ॥

यः । अग्निः । क्रव्यऽअत् । प्रऽविवेश । वः । गृहम् । इमम् । पश्यन् । इतरम् । जातऽवेदसम् ।
तम् । हरामि । पितृऽयज्ञाय । देवम् । सः । घर्मम् । इन्वात् । परमे । सधऽस्थे ॥ १० ॥

**उद्गीथ०** यः अग्निः क्रव्यात् मांसादः प्रविवेश प्रविष्टवान् वः युष्माकम् गृहिणाम् गृहम्, तम् क्रव्यादम् देवम् हरामि बहिर्निष्कालयामीत्यर्थः। किमर्थम्। पितृयज्ञाय श्मशानकर्मार्थमित्यर्थः। किं पश्यन् हरसीति चेत्। इमम् इतरम् जातवेदसम् हव्यवाहम् पश्यन् पर्यालोचयन्। केनाभिप्रायेण पश्यन्। घर्मम् यज्ञं शान्तिलक्षणम् इन्वात् 'इन्वतिर्व्याप्तौ' ( तु. निघ २,१८ )। व्याप्नुयात् निर्वर्तयेत् परमे प्रकृष्टे सधस्थे सहस्थाने अस्मद्गृहे इत्यनेनाऽभिप्रायेण तं हरामीति सम्बन्धः कार्यः ॥ १० ॥

---

१-१. नास्ति मूको. २. तम्मेत्वात् वि[1,3]; कर्मत्वात् अ वि[2]. ३. सकाशं स अ वि[2]. ४. स्वत्रोधि° मूको. ५. मरणे वि[2] अ[1]. ६. °सनौ वि[2]; औपासनेद्वासनौ अ[1]; वसनोद्वासने वि[3]. ७. नास्ति वि[3]. ८. थैष वि[2]; थौष अ[1]. ९. °द वि[2] अ[1]. १०. °न्ति वि[2] अ[1]. ११. °न्यं वि[2]. १२. °न्तु वि[2] अ[1]. १३. पोवस्य वि[2] अ[1]. १४. तर्मात् वि[2] अ[1]; तस्मित् वि[3]. १५. °ग्नि वि[2] अ[1]. १६. भवतु वि[2] अ[1]. १७. विजायमानः मूको.

वेङ्कट० यः अग्निः क्रव्यात् प्रविवेश युष्माकम् गृहम्, तम् अहम् हरामि [1]पितृयज्ञाय देवम् इमम्[1] जातवेदसम् अग्निम् हव्यवाहनम् इतरम्[2] पश्यन्। तथा सति सः क्रव्यात् प्रवर्ग्यम्[3] प्राप्नोतु परमे स्थाने पितृभिः घर्मपैः सह ॥ १० ॥

[4]इति सप्तमाष्टके षष्ठाध्याये एकविंशो वर्गः[4] ॥

यो अ॒ग्निः क्र॑व्य॒वाह॑नः पि॒तॄन् यक्ष॑दृता॒वृधः॑ ।
प्रेदु॑ ह॒व्यानि॑ वोचति दे॒वेभ्य॑श्च पि॒तृभ्य॒ आ ॥ ११ ॥

यः । अ॒ग्निः । क्र॒व्य॒ऽवाह॑नः । पि॒तॄन् । यक्ष॑त् । ऋ॒त॒ऽवृधः॑ ।
प्र । इत् । ऊँ इति॑ । ह॒व्यानि॑ । वो॒च॒ति॒ । दे॒वेभ्यः॑ । च॒ । पि॒तृऽभ्यः॑ । आ ॥ ११ ॥

उद्गीथ० यः अग्निः क्रव्यवाहनः क्रव्यस्य पित्र्यस्य हविषो वोढा पितॄन् प्रति प्रापयिता पितॄन् यक्षत् यजति ऋतावृधः ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितॄन्, सः हव्यानि हवींषि इमानि युष्मदर्थं मयाऽऽनीतानीति प्र कथयतु देवेभ्यः च पितृभ्यः च। आ-कारः समुच्चयार्थे (तु. या १,४)। [5]इत् उ[5] च पादपूरणौ ॥ ११ ॥

वेङ्कट० यः अग्निः क्रव्यस्य वोढा पितॄन् यजति[6] सत्येन वृद्धान्, स तेभ्यः[7] प्र ब्रवीतु हवींषि पितृयज्ञे देवेभ्यः च [8]पितृभ्यः च[8] ॥ ११ ॥

उ॒शन्त॑स्त्वा॒ नि धी॑मह्यु॒शन्तः॒ समि॑धीमहि ।
उ॒शन्नु॑श॒त आ व॑ह पि॒तॄन् ह॒विषे॒ अत्त॑वे ॥ १२ ॥

उ॒शन्तः॑ । त्वा॒ । नि । धी॒म॒हि॒ । उ॒शन्तः॑ । सम् । इ॒धी॒म॒हि॒ ।
उ॒शन् । उ॒श॒तः । आ । व॒ह॒ । पि॒तॄन् । ह॒विषे॑ । अत्त॑वे ॥ १२ ॥

उद्गीथ० [9]उशन्तः त्वा त्वामग्निम् नि धीमहि[9] निहितवन्तो वयं कर्मार्थं स्थापितवन्तः। कामयमानाः [9]सम् इधीमहि[9] सन्दीपितवन्तश्च वयं कर्मार्थम्। यतः एवम् अतः [10]उशन् पित्रागमनं[10] कामयमानः [9]उशतः आगन्तुकामान् पितॄन्[9] आ वह अन्तिकं प्रापय। किमर्थम्। हविषे अस्मत्प्रत्तस्य हविषः अत्तवे अदनाय ॥ १२ ॥

वेङ्कट० कामयमानाः त्वाम् नि धीमहि, कामयमानाश्च सम् दीपयामः[11]। त्वं च उशन् उशतः[12] पितॄन् [13]आ वह[13] हविः अत्तुम्[14] ॥ १२ ॥

---

१-१. नास्ति वि[1]. २. °रत् वि[2] अ[1]. ३. °र्गं वि[2] अ[1]. ४-४. नास्ति मूको. ५-५. इदू वि[1]. ६. जयति वि[2] अ[1] ७. त्ये° वि[2] अ[1]. ८-८. उशन्तमग्निर्निधो° मूको. ९-९. मि( नि अ.) धी (थी वि[2] ) महि वि[1] अ वि[2]. १०-१०. उशन्तं पिता ग' वि[1]; उशन् कंपिता ग° अ वि[1] वि[3]. ११. सदीवयाम वि[2] अ[1]; संदीपयाम वि[1]. १२. सुगत वि[2] अ[1]; उशत वि[1]. १३-१३. आह पितॄन् वि[2] अ[1]. १४. असुम् वि[2] अ[1]; अस्तुः वि[1].

यं त्वम॑ग्ने स॒मद॑ह॒स्तमु॒ निर्वा॑पया॒ पुन॑: ।
कि॒याम्ब्वत्र॑ रोहतु पाकदू॒र्वा व्य॑ल्कशा ॥ १३ ॥

यम् । त्वम् । अ॒ग्ने॒ । स॒म्ऽअद॑हः । तम् । ऊँ इति॑ । निः । वा॒प॒य॒ । पु॒न॒रिति॑ ।
[1]कि॒याम्बु॑ । अत्र॑ । रो॒ह॒तु॒ । पा॒क॒ऽदू॒र्वा । वि॒ऽअ॒ल्क॒शा[1] ॥ १३ ॥

**उद्गीथ०** अस्थीन्यभ्युक्ष्य ग्रहणकालेऽग्निरुच्यते । यम् अस्मत्पितरम् हे अग्ने ! समदहः सम्यग् दग्धवानसि, तम् उ तमेवास्मत्पितरम् निः वापय उपशमय प्रह्लादय पुनः पश्चात् अस्थिग्रहणार्थमभ्युक्षणकाले । किञ्च तव प्रसादात् प्रह्लादकद्रव्यम् कियाम्बु अत्र रोहतु कियदप्यम्ब्वत्रास्तीति[2] किमपि युतं मिश्रितमम्बुनेति वा[3] कियाम्बु शैवालम्[4] । अत्रास्मिन् मत्पितृसंस्कारस्थाने रोहतु उत्पद्यताम्, पाकदूर्वा परिपक्वा वृद्धा दूर्वा चोत्पद्यताम् व्यल्कशा विविधस्तबका ॥ १३ ॥

**वेङ्कट०** यम् त्वम् अग्ने ! पुरा समदहः, तम् एव[5] पुनः निः वापय देशम् । तस्मिन् देशे कियाम्बु रोहतु । कियत्प्रमाणमुदकमिति येन बुद्धिर्भवति तं नलादिकं [6]कियाम्बु आहुः[6] । दग्धेऽरण्ये या दूर्वा जायते सा चात्र रोहतु विविधशाखा[7] ॥ १३ ॥

शीति॑के॒ शीति॑कावति॒ ह्लादि॑के॒ ह्लादि॑कावति ।
म॒ण्डू॒क्या॒३॒॑ सु सं ग॑म इ॒मं स्व१॒॑ग्निं ह॑र्षय ॥ १४ ॥

शीति॑के । शीति॑काऽवति । ह्लादि॑के । ह्लादि॑काऽवति ।
म॒ण्डू॒क्या॑ । सु । सम् । ग॒म॒: । इ॒मम् । सु । अ॒ग्निम् । ह॒र्ष॒य॒ ॥ १४ ॥

**उद्गीथ०** अग्निप्रसादात् त्वमपि हे शीतिके ! बहून्यानि(?) सन्ततपृष्ठे ! शीतिकावति ! शीतवति ! ह्लादिके ! प्रह्लादयित्रि ![8] ह्लादिकावति ! प्रह्लादनवति ! मण्डूक्या अतिवृष्टिप्रियया[9] सु सम् गमः सुष्ठु सङ्गच्छस्व । सङ्गम्य च इमम् अग्निम् अत्रत्यम् सु हर्षय सुष्ठु ह्लादय स्वसंयोगेन ॥ १४ ॥

**वेङ्कट०** शीतिके ! [10]पृथिवि ! शीतकैः[10] क्षीरैः[11] तद्वति ! ह्लादिके ! ह्लादिकावति ![12] त्वम् मण्डूक्या सु सम् गच्छस्व । अथ तया सहिता इमम् अग्निम् सुष्ठु हर्षय इति ॥ १४ ॥

[13]इति सप्तमाष्टके षष्ठाध्याये द्वाविंशो वर्गः[13] ॥

---

१-१. तु. ऋ १०,१४२,८; शौ ६,१०६,१. २. °दप्यंबत्रा° वि[1]; °म्बत्रा° अ[1]; °दप्यम्बत्रा° वि[2]. ३. नास्ति मूको. ४. शैवालः वि[1,3]. ५. नास्ति वि[2] अ[1]. ६-६. वचोस्साहुः वि[2] अ[1]; कियाम्ब्वाहुः वि[1]. ७. °धवशा° वि[2] अ[1]. ८. प्रह्लाद मूको. ९. °प्रिया मूको. १०-१०. °थिवीशीतिके वि[2] अ[1]; °शीतिकैः वि[1]. ११. क्षीरे वि[2]अ[1]; क्षीर वि[1]. १२. ह्लादिकोवादि वि[2] अ[1]; ह्लादका° वि[1]. १३-१३. नास्ति मूको.

# [ १७ ]

[1]देवश्रवा यामायन ऋषिः। १-२ सरण्यूः देवता, ३-६ पूषा, ७-९ सरस्वती, १०,१४ आपः, ११-१३ आपः सोमो वा। त्रिष्टुप् छन्दः, त्रयोदशीचतुर्दश्यौ अनुष्टुभौ, त्रयोदशी पुरस्ताद्बृहती वा[1]।

त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति।
य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥ १ ॥

त्वष्टा॑। दु॒हि॒त्रे। व॒ह॒तुम्। कृ॒णो॒ति॒। इति॑। इ॒दम्। विश्व॑म्। भुव॑नम्। सम्। ए॒ति॒।
य॒मस्य॑। मा॒ता। प॒रि॒ऽउ॒ह्यमा॑ना। म॒हः। जा॒या। विव॑स्वतः। न॒ना॒श॒ ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं 'त्वष्टा दुहित्रे' इति चतुर्दशर्चं यामायनो देवश्रवा ददर्श। अस्याद्ये ऋचौ सरण्यूदेवते[2]। ततः पराश्चतस्रः पौष्ण्यः। तत उत्तरं तृचं सारस्वतम्। अब्देवताश्चावशिष्टाः[3]। त्वष्टा[4] विश्वकर्मेति पुराणे प्रसिद्धः। दुहित्रे षष्ठ्यर्थे चतुर्थी। स्वस्या दुहितुः सरण्यूनाम्न्याः[5] वहतुम् वहनं विवाहं करोति इति एतेन हेतुना सपरिवारार्थमिदम् विश्वम् सर्वम् भुवनम् भूतजातम् सम् एति भूते लट्। समागमत्। सा च पर्युह्यमाना परीत्येष उदित्यस्य स्थाने, भूते लट्, उदूढा सती यमस्य यम्याश्च माता जननी सरण्यूः महः महतः विवस्वतः जाया भार्या तस्माद्विवस्वतो यमं च यमीं च जनयित्वा त्यक्त्वा च ननाश सवर्णामन्यां प्रतिनिधाय आश्वं रूपं कृत्वा उत्तरान् कुरून् प्रवि नष्टा ॥ १ ॥

**वेङ्कट०** यामायनो देवश्रवाः। 'द्वे सरण्यूदेवते, पौष्ण्यश्चतस्रः सारस्वत्यस्तिस्रः, पञ्चाऽऽप्यः, द्रप्सस्तिस्रः सौम्यो वा' ( ऋअ २,१०,१७ ) इत्युक्तम्। अत्र बृहद्देवता—

'अभवद् मिथुनं [6]त्वष्टुः सरण्यूस्त्रिशिराः[6] सह[7]।
स[8] वै सरण्यूं प्रायच्छत्[9] स्वयमेव विवस्वते ॥

ततः सरण्य्वां[10] जज्ञाते यमयम्यौ विवस्वतः।
तौ[11] चाप्युभौ[12] यमावेव ज्यायांस्ताभ्यां तु वै[13] यमः[14] ॥

सृष्ट्वा[15] भर्तुः परोक्षं तु सरण्यूः[16] सदृशीं[17] स्त्रियम्।
निक्षिप्य मिथुनं तस्याम् अश्वा भूत्वाऽपचक्रमे ॥

अविज्ञानाद्[18] विवस्वांस्तु[19] तस्याम् अजनयन्मनुम्[20]।
राजर्षिरभवत् सोऽपि विवस्वानिव तेजसा ॥

१-१. नास्ति मूको. २. सरण्यौ दे° वि[2] अ[1]. ३. अब्देवता इयत स्रोऽवशि° मूको. ४. नास्ति मूको. ५. °नाम्नः मूको. ६-६. °ष्टस्तथरण्यू° वि[2] अ[1]; त्वष्टुः स° वि[1]. ७. चह वि[2] अ[1]; स वि[1]. ८. इत्योसे वि[2] अ[1]. ९. °च्छन् वि[2] अ[1]. १०. सरण्या वि[2] अ[1]. ११. ततौ वि[2] अ[1]. १२ चोभौ वि[2] अ[1]. १३. स्वै वि[1]. १४. यम वि[2]; व म् अ[1]. १५. दृष्ट्वा वि[2] अ[1]. १६. °ण्युः वि[1,2]; °ण्यू अ[1]. १७. °दृशं वि[1]; °दृशां अ[1]. १८. °ना वि[2] अ[1]. १९. °स्तु शुक्लस्तदन्व··· तद्भुवि उपजि वि[2]. २०. जन° वि[2].

स विज्ञाय त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं[1] प्रति जगामाऽऽशु वाजी[2] भूत्वा सलक्षणः[3] ॥

सरण्यूश्च विवस्वन्तं विदित्वा हयरूपिणम् ।
मैथुनायोपचक्राम तां [4]च तत्राऽऽरुरोह[4] सः ॥

ततस्तयोस्तु वेगेन[5] शुक्रं[6] तदपतद् भुवि ।
उपाजिघ्रच्च[7] सा त्वश्वा तच्छुक्रं[8] गर्भकाम्यया ॥

आघ्रातमात्राच्छुक्रात्तु[9] कुमारौ सम्बभूवतुः ।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनाविति[10] ॥' (बृदे ६,१६२-७,६) इति ।

त्वष्टा दुहितुः विवाहं करोति इति इदम् सर्वभूतजातम् सम् आगच्छति । यमस्य माता पर्युह्यमाना महतः विवस्वतः जाया ननाश ॥ १ ॥

**अपा॑गूहन्न॒मृतां॒ मर्त्ये॑भ्यः कृ॒त्वी सव॑र्णामदद्ु॒र्विव॑स्वते ।**
**उ॒ताश्विना॑वभर॒द्यत् तदासी॒दज॑हादु॒ द्वा मि॑थु॒ना स॑र॒ण्यूः ॥ २ ॥**

अप॑ । अ॒गू॒ह॒न् । अ॒मृता॑म् । मर्त्ये॑भ्यः । कृ॒त्वी । स॒ऽव॑र्णाम् । अ॒द॒दुः॒ । विव॑स्वते ।
उ॒त । अ॒श्विनौ॑ । अ॒भ॒र॒त् । यत् । तत् । आसी॑त् । अज॑हात् । ऊँ इति॑ । द्वा । मि॒थु॒ना । स॒र॒ण्यूः ॥२॥

**उद्गीथ॰** अमृताम् अमृतधर्माणं [11]तां त्वष्टुर्दुहितरं[11] सरण्यूम् मर्त्येभ्यः मनुष्येभ्यः अप अगूहन् अपगूहितवन्तः संवृतां कृतवन्तः अपनीतवन्तो देवाः । आश्वं रूपं कृतवतीमुत्तरेषु कुरुषु नाशितवन्त इत्यर्थः । कृत्वी कृत्वा चान्याम् सवर्णाम् तत्सवर्णाम् अददुः दत्तवन्तः विवस्वते । सा च तेन सम्भक्ता सती उत अपि च अश्विनौ अभरत् गर्भभूतौ स्वोदरे धारितवती, जनितवतीत्यर्थः । यत् तत् आश्वं रूपमस्याः आसीत् अभूत् तेन रूपेण अजहात् । उ-कारः समुच्चये । त्यक्तवती[12] च विवस्वत एव सकाशे द्वौ मिथुनौ दुहितृपुत्रौ यमीयमौ सरण्यूः ॥ २ ॥

**वेङ्कट॰** अप अगूहन् देवाः [13]अमृताम् सरण्यूम् अपनीतवन्तो[13] मनुष्येभ्य उत्तरान्[14] कुरुन् प्रति । कृत्वा च सवर्णाम्[15] अददुः[16] विवस्वते । अपि च अश्विनौ सा अश्वा बभार । [17]विवस्वता त्यक्तम्[17] यत् रेतः

१. त्वात्प्रीं वि[2]; त्वष्ट्रा वि[1]; त्वाप्रीं अ[1]. २. वाजि वि[1,2]. ३ °श्वलक्षणम् वि[2] अ[1]; °श्चलक्षणः वि[1]. ४-४. चाश्वामारुरोह मूको. ५ स्वोगेन मूको. ६. शुक्लः वि[2]; °क्लं वि[1] अ[1]. ७. °घ्रति मूको. ८. तः शुक्लं वि[1] अ[1]; तच्छुक्लं वि[1]. ९. °द्धान्तु वि[2] अ[1]; °क्ला तु वि[1]. १०. कृना° वि[2] अ[1]. ११. तं दुहि° वि[1]; तां दुहि° अ वि[2,3]. १२. इत्युक्त° वि[2]. १३-१३. °तासराण्युमवनो° वि[2] अ[1]. १४. °रास वि[2] अ[1]; °रान् वि[1]. १५. स चत्वार्तां वि[2] अ[1]. १६. मम्दुः वि[2] अ[1]. १७-१७. विवस्वन्यम् वि[2] अ[1].

आसीत्, ततो रेतसः सरण्यूः च द्वौ[1] मिथुनौ अजहात्। मध्यमं चाग्निं[2] माध्यमिकां च वाचम् इति नैरुक्ताः[3]। [4]यमं† च यमीं चेत्यैतिहासिकाः[4] ( तु. या १२,१० ) ॥ २ ॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः।
स त्वैतेभ्यः परि ददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ३ ॥

पूषा। त्वा। इतः। च्यवयतु। प्र। विद्वान्। अनष्टऽपशुः। भुवनस्य। गोपाः।
सः। त्वा। एतेभ्यः। परि। ददत्। पितृऽभ्यः। अग्निः। देवेभ्यः। सुऽविदत्रियेभ्यः ॥ ३ ॥

**उद्गीथ०** [5]पूषा त्वा त्वाम् इतः अस्मात् लोकात् प्र च्यावयतु प्रकर्षेणोत्तमं लोकं गमयतु। कीदृशः। विद्वान् अस्मद्भक्ततां जानानः[5] अनष्टपशुः भुवनस्य भूतजातस्य गोपाः गोप्ता रक्षिता। प्रच्याव्य[6] च सः एव पूषा त्वाम् एतेभ्यः पितृलोकस्थेभ्यः परि ददत् परिददातु पितृभ्यः। अथवा स इत्युपरिष्टान्निर्देक्ष्यमाणोऽग्निरुच्यते। प्रच्यावितः पूष्णा सः अग्निः त्वाम् एतेभ्यः परि ददातु पितृभ्यः देवेभ्यः च सुविदत्रियेभ्यः[7] सुधनेभ्यः ॥ ३ ॥

**वेङ्कट०** पूषा [8]त्वा इतः[8] प्र च्यावयतु विद्वान् यस्मिन् सति न नश्यन्ति पशवः, सर्वेषां भूतानां गोपायिता[9]। सः[10] त्वाम् एतेभ्यः पितृभ्यः[11] परि ददातु। अग्निः च देवेभ्यः सुधनेभ्यः। निरुक्तं ( या ७,९ ) द्रष्टव्यम् ॥ ३ ॥

आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्।
यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥ ४ ॥

आयुः। विश्वऽआयुः। परि। पासति। त्वा। पूषा। त्वा। पातु। प्रऽपथे। पुरस्तात्।
यत्र। आसते। सुऽकृतः। यत्र। ते। ययुः। तत्र। त्वा। देवः। सविता। दधातु ॥ ४ ॥

**उद्गीथ०** आयुः वायुः वकारलोपेन, पर्यायान्तरं वा। कीदृशो वायुः। उच्यते— विश्वायुः सर्वगतः परि पासति परि पातु सर्वतो रक्षतु पूषाऽनुज्ञया त्वा त्वाम् प्रमीतयजमानम्। पूषा स्वयमेव त्वा पातु रक्षतु प्रपथे प्रकृष्टे पथि स्वर्गमार्गे पुरस्तात्, स्थित इति शेषः। यत्र आसते तिष्ठन्ति सुकृतः पुण्यकर्माणः, यत्र वा ते सुकृतः ययुः गताः, तत्र स्थाने त्वाम् देवः सविता पूषाऽनुज्ञया दधातु स्थापयतु ॥ ४ ॥

**वेङ्कट०** आयुः विश्वायुः[12] सर्वस्य गन्ता परि रक्षतु त्वाम् [13]पूषा च त्वाम्[13] पातु प्रपथे[14]। पुरस्तात् स्थितः उपक्रमणवेलायाम् एव अग्रतो मार्गस्य स्थितः। सविता च त्वां सुकृतां लोके दधातु[15] इति[16] ॥ ४ ॥

---

१. लो वि[2] अ[1]. २. °ग्नि वि[2] अ[1]. ३. °क्तम् वि[2] अ[1]. ४. अयं च यमित्यें चत्यैहासिका इति अ[1]. † यममन्नं वि[1]. ५-५. पूषा त्वेतत् अ वि[1] वि[3]; त्रुटितम् वि[2]. ६. प्रच्यात्रच वि[3]. ७. °दत्रितयभ्यः अ वि[3]; °दत्रितबेभ्यः वि[1] वि[3]. ८-८. त्वेतु वि[2] त्वतु अ[1]. ९. गोपयित्वा वि[2] अ[1]. १०. सः त्वा स वि[2] अ[1]. ११. नास्ति वि[2] अ[1]. १२. वायुः मूको. १३-१३. नास्ति वि[2] अ[1]. १४. प्रपते वि[2] अ[1]. १५. दधाति वि[2] अ[1]. १६. नास्ति वि[2] अ[1].

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रजानन् ॥ ५ ॥

पूषा । इमाः । आशाः । अनु । वेद । सर्वाः । सः । अस्मान् । अभयऽतमेन । नेषत् ।
स्वस्तिऽदाः । आघृणिः । सर्वऽवीरः । अप्रऽयुच्छन् । पुरः । एतु । प्रऽजानन् ॥ ५ ॥

उद्गीथ० पूषा इमाः प्राच्याद्याः आशाः दिशः अनु वेद आनुपूर्व्येण जानाति सर्वाः क्षेम्यपथोपेता अक्षेम्यपथोपेताश्च[१]। एवं सति पूषा अस्मान् प्रमीतो[२] यजमानो[३] ब्रवीति पुत्रमुखेन ऋत्विङ्मुखेन वा अभयतमेन अतिशयेन भयवर्जितेन पथा नेषतु नयतु। कथम्। स्वस्तिदाः अविनाशस्य दाता सन्। आघृणिः आगतदीप्तिः सर्ववीरः सर्वैः परिवारकवीरैरुपेतः अप्रयुच्छन् अप्रमाद्यन् पुरः एतु अस्माकं पुरस्ताद् गच्छतु प्रजानन् अस्मद्भक्ततां विजानन् ॥ ५ ॥

वेङ्कट० पूषा इमाः[४] दिशः सर्वाः अनु वेत्ति। सः इदानीम् अस्मान् अभयतमेन[५] मार्गेण [६]नयतु। अविनाशस्य[६] दाता आगतदीप्तिः सर्वैः वीरैर्युक्तः, अप्रमाद्यन्[७] पुरः एतु [८]मार्गम् प्रजानन्[८] ॥ ५ ॥

[९]इति सप्तमाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[९] ॥

प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥ ६ ॥

प्रऽपथे । पथाम् । अजनिष्ट । पूषा । प्रऽपथे । दिवः । प्रऽपथे । पृथिव्याः । उभे इति ।
अभि । प्रियतमे इति प्रियऽतमे । सधस्थे इति सधऽस्थे । आ । च । परा । च । चरति । प्रऽजानन् ॥ ६ ॥

उद्गीथ० अन्तरिक्षगमनसाधनभूतानाम्[१०] पथाम् मध्ये यः प्रकृष्टः पन्थाः तत्र प्रपथे अजनिष्ट जातः, सुकृतिनां सुगतिप्रापणार्थम् अवस्थित इत्यर्थः, पूषा देवः। दिवः च पथां मध्ये यः प्रकृष्टः पन्थाः तस्मिन् प्रपथे प्रकृष्टे पथि सुकृतिनां सुगतिप्रापणार्थम् अजनिष्ट। एवम् प्रपथे पृथिव्याः चाऽजनिष्ट पूषा। यत ईदृशोऽसावतः उभे द्यावापृथिव्यौ प्रियतमे सर्वस्येष्टतमे[११] सधस्थे सर्वस्य सहावस्थानभूते अभि प्रति आ चरति च परा चरति च। सुकृतिनाम् अस्मदादीनां सुकृतफलोपभोगाधिष्ठानप्रदर्शनार्थम् आगच्छति च पृथिवीं प्रति, परा गच्छति दिवं प्रति। अनेनेदं कर्म कृतम् अस्य कर्मणः इदम् फलम् इति प्रजानन्। य ईदृशः सोऽस्मान्[१२] प्रकृष्टेन पथा नयतु सुकृतफलोपभोगायेत्याशीर्योज्या ॥ ६ ॥

वेङ्कट० मार्गाणाम् मुखे प्रादुर्भवतु[१३] पूषा, एवं[१४] द्यावापृथिव्योश्च प्रवेशद्वारे। सोऽयम्[१५] पूषा उभे द्यावापृथिव्यौ[१६] आ चरति परा चरति[१७] च दिवः पृथिव्यां चरति पृथिव्याः दिवम् प्रजानन् ॥ ६ ॥

---

१. नास्ति अ. २. प्रमिते वि[१,३]. ३. यजमाने अ वि[१,२]. ४. नास्ति वि[२] अ[१]. ५. उभय मूको. ६-६. °यत्यविशनाशस्य वि[२] अ[१]. ७. °द्यत् मूको. ८. °र्गमप्र° वि[२] अ[१]. ९-९. नास्ति मूको. १० °रिक्षे गम° वि[३]. ११. °स्येषतमै मूको. १२ °स्मान् प्रति मूको. १३. °वन् वि[२] अ[१]. १४. इव वि[१] अ[१]; एव वि[१]. १५. वोयम् वि[२] अ[१]. १६. °व्या वि[२] अ[१]. १७. नास्ति वि[१].

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥

सरस्वतीम् । देवऽयन्तः । हवन्ते । सरस्वतीम् । अध्वरे । तायमाने ।
सरस्वतीम् । सुऽकृतः । अह्वयन्त । सरस्वती । दाशुषे । वार्यम् । दात् ॥ ७ ॥

**उद्गीथ०** सरस्वतीम् **मध्यमस्थानां देवताम्**[1] देवयन्तः **देवान् यष्टुं स्तोतुं चेच्छन्तः** हवन्ते **आह्वयन्ति कर्माङ्गभावाय**। सरस्वतीम् अध्वरे **यज्ञे** तायमाने **निर्वर्त्यमाने ह्वयन्ति कर्माङ्गभावार्थम्**। सरस्वतीम् सुकृतः **पुण्यकर्माणः**[2] **पुण्यफलप्रदानाय** अह्वयन्त **आह्वयन्ति। यत एवम् अतः** सरस्वती दाशुषे **हवींषि दत्तवते यजमानाय मह्यम्** वार्यम् **वरणीयं कर्मफलम्** दात् **ददातु** ॥ ७ ॥

**वेङ्कट०** सरस्वतीम् देवकामाः हवन्ते, सरस्वतीम् **वितन्यमाने**[3] **यज्ञे**। सरस्वतीम् **सुकर्माणः**[4] **ह्वयन्ते**। सरस्वती **यजमानाय धनम् प्रयच्छति** ॥ ७ ॥

सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती ।
आसद्यास्मिन् बर्हिषि मादयस्वाऽनमीवा इष आ धेह्यस्मे ॥ ८ ॥

सरस्वति । या । सऽरथम् । ययाथ । स्वधाभिः । देवि । पितृऽभिः । मदन्ती ।
आऽसद्य । अस्मिन् । बर्हिषि । मादयस्व । अनमीवाः । इषः । आ । धेहि । अस्मे इति ॥ ८ ॥

**उद्गीथ०** हे सरस्वति! देवि! या **त्वम्** सरथम् **क्रियाविशेषणमेतत्**। पितृभिः **सह समानेन रथेन** ययाथ **गच्छसि** स्वधाभिः **अन्नैर्हविर्लक्षणैः** मदन्ती **तृप्यन्ती। सा त्वाम्** आसद्य **निषद्योपविश्य** अस्मिन् बर्हिषि **वेदिस्तरणे** मादयस्व **तर्पयात्मानं तृप्य वा। हविर्भिः तृप्ता च सती प्रत्युपकारार्थम्** अनमीवाः **अरोगाः आरोग्यजननीः** इषः **अन्नानि** आ धेहि **मर्यादया यावदर्थं देहि** अस्मे **अस्मभ्यम्** ॥ ८ ॥

**वेङ्कट०** या **त्वम् एकरथम् यासि** स्वधाभिः देवि! सरस्वति! पितृभिः **सह माद्यन्ती**[5], **सा त्वम्** आसद्य अस्मिन् **यज्ञे** मादयस्व, **रक्षोवर्जितानि च अन्नानि** आ धेहि **अस्मभ्यम्**[6] ॥ ८ ॥

सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ९ ॥

सरस्वतीम् । याम् । पितरः । हवन्ते । दक्षिणा । यज्ञम् । अभिऽनक्षमाणाः ।
सहस्रऽअर्घम् । इळः । अत्र । भागम् । रायः । पोषम् । यजमानेषु । धेहि ॥ ९ ॥

---

१. नास्ति वि[१,२,३]. २. नास्ति वि[३]. ३. पितरमाने वि[३] अ[१]. ४. सुक्रकर्माणो वि[३] अ[१]
५. °न्ति वि[३] अ[१]. ६. °भ्यम् इति अ[१].

**उद्गीथ०** सरस्वतीम्[1] याम्[2] त्वाम् पितरः हवन्ते **आह्वयन्ति** दक्षिणा हविरादिदानानि यज्ञम् **वा अङ्गभावाय** अभिनक्षमाणाः **अभिगच्छन्तो व्याप्नुवन्तो वा। सा त्वम्** सहस्रार्घम् **बहुपूजनीयं बहुत्वाद् मृष्टत्वाच्च बहुभिः प्रशंसनीयम् उपयोज्यं वेत्यर्थः,** इळः **अन्नस्य** भागम् **अङ्गम् अंशम्** रायः **धनस्य** पोषम् **पुष्टिञ्च, बहुधनं चेत्यर्थः,** अत्र **इह अस्मिन् लोके कर्मणि वा वर्तमाने** यजमानेषु **अस्मासु** धेहि **धारय वा ॥ ९ ॥**

**वेङ्कट०** सरस्वतीम्[1] याम्[2] पितरः **आह्वयन्ति दक्षिणतः आगत्य** यज्ञम् **अभिव्याप्नुवानाः, सा त्वम् बहूनां पूजनीयम् अन्नस्य** अत्र भागम् **धनस्य च** पोषम् यजमानेषु **स्थापय ॥ ९ ॥**

आपो॑ अ॒स्मान् मा॒तरः॑ शुन्धयन्तु घृ॒तेन॑ नो घृत॒प्वः॑ पुनन्तु ।
विश्वं॒ हि रि॒प्रं प्र॒वह॑न्ति दे॒वीरुदिदा॑भ्यः॒ शुचि॒रा पू॒त ए॑मि ॥ १० ॥

आपः॑ । अ॒स्मान् । मा॒तरः॑ । शु॒न्धय॑न्तु । घृ॒तेन॑ । नः॒ । घृ॒त॒ऽप्वः॑ । पु॒नन्तु॑ ।
विश्व॑म् । हि । रि॒प्रम् । प्र॒ऽवह॑न्ति । दे॒वीः । उत् । इत् । आ॒भ्यः॒ । शुचिः॑ । आ । पू॒तः । ए॒मि॒ ॥

**उद्गीथ०** **सत्रेषु दशमेऽहन्यनया शुद्ध्यर्थं प्रोक्षणं क्रियते।** आपः **सर्वस्य** मातरः **मातृवदनुग्राहिकाः** अस्मान् शुन्धयन्तु **प्रोक्षणेन शोधयन्तु। केनेव। उच्यते**—घृतेन **लुप्तोपममेतत् पदम्। घृतेनेव। घृतं सर्वस्य पावनं शुद्ध्यर्थं प्राशनोपदेशात्।** 'तच्चाम्भोऽजायत' **इति एवमुच्यते। यथा घृतेन सर्वं पुनन्ति। आपो घृतवच्च घृतेन सर्वस्य** पावयित्र्यः **एवम्** नः **अस्मान् पापापनोदादेव शोधयन्तु। कस्मादेवं ब्रूमः।** हि **यस्मात्** विश्वम् **सर्वम्** रिप्रम् **पापम्** प्रवहन्ति **अपनयन्ति** देवीः **देव्यः आपः, अत एवं ब्रूमः। अनन्तरं च** आभ्यः **अपादानभूताभ्यः** उत् **स्वर्गं प्रत्यूर्ध्वं गच्छामि** शुचिः **सन्** आ पूतः **मर्यादया पूतः ॥ १० ॥**

**वेङ्कट०** आपः अस्मान् **मातृस्थानीयाः[3] जगतः** शुन्धयन्तु[4] घृतेन **प्रत्यक्षेणोदकेन, अस्मान् घृतेन च** पुनन्तु। **या घृतेन अन्यान् पुनन्ति** ताः घृतप्वः। **यद्वा गव्यमेव घृतम्। अत्र ब्राह्मणम्**—"'घृतेन नो घृतप्वः[5] पुनन्तु' इति। तद्धि सुपूतं यद् घृतेन पूयते" (काश ४,१,२,७) इति। **सर्वम्** हि **पापं पुरुषात्** प्रवहन्ति **देव्यः अपनयन्ति। '**तासु **अहं[6] स्नातः[7] आभिमुख्येन** उत् **गच्छामि निर्मलाङ्गश्च** पूतः **च ॥ १० ॥**

[8]**इति सप्तमाष्टके षष्ठाध्याये चतुर्विंशो वर्गः**[8] ॥

द्र॒प्सश्च॑स्कन्द प्रथ॒माँ अनु॒ द्यूनि॒मं च॒ योनि॒मनु॒ यश्च॒ पूर्वः॑ ।
स॒मा॒नं योनि॒मनु॑ सं॒चर॑न्तं द्र॒प्सं जु॑हो॒म्यनु॑ स॒प्त होत्राः॑ ॥ ११ ॥

द्र॒प्सः । च॒स्क॒न्द॒ । प्र॒थ॒मान् । अनु॑ । द्यून् । इ॒मम् । च॒ । योनि॑म् । अनु॑ । यः । च॒ । पूर्वः॑ ।
स॒मा॒नम् । योनि॑म् । अनु॑ । स॒म्ऽचर॑न्तम् । द्र॒प्सम् । जु॒हो॒मि॒ । अनु॑ । स॒प्त । होत्राः॑ ॥ ११ ॥

---

१. °न्ती मूको. २. याम मूको. ३. 'य वि[2] अ[1]. ४. शुद्ध' वि[1] अ[1]; शुन्धतु वि[1]. ५. घृतं घ मूको. ६-६. तास्वषं वि[1]; तास्वयं अ[1]. ७. स्नानमाचरन् अ[1]. ८-८. नास्ति मूको.

**उद्गीथ०** अनयोत्तरया च सोमविप्रुषो जुहोति। अभिषूयमाणस्य सोमस्य द्रप्सः रसः चस्कन्द स्कन्नवान् गतवान् अन्यतोऽधिषवणचर्मणः प्रथमान् अनु द्यून् प्रधानान् यागदिवसांश्च प्रति, इमम् च अपरं सोमाभिषवग्रावलक्षणम् योनिम् सोमस्य स्थानं कारणं वा अनु प्रति स्कन्नवान्। तं सर्वप्रकारमपि समानम् साधारणम् योनिम् स्थानलक्षणं स्थानमुक्तलक्षणं वा सञ्चरन्तम् प्रतिगतमित्यर्थः। द्रप्सम् सोमरसं विप्रुड्लक्षणम् जुहोमि वचनव्यत्ययः कार्यः। जुहुमः। कथम्। अनु अनुपूर्वमित्यर्थः। कियन्तो जुहुमः। सप्त[1] सप्तसङ्ख्याकाः विप्रुड्ढोमस्य[2] कर्तारः यजमानादयः अध्वर्युपुरोगाः। अथवाऽन्यथा योजना क्रियते। हुत्वा च अनूपसर्गश्रुतिसंयोगात् तथाप्रवृत्तिदर्शनात् च आहवनीयप्रदेशाद् आतीर्थदेशम् अनुलग्नाः सर्पाम इति वाक्यशेषः। कियन्तो वयम् अनुलग्नाः सर्पामः। सप्त वयम् होत्राः विप्रुड्ढोमस्य[2] कर्तारः यजमानादयः अध्वर्युपुरोगाः ॥ ११ ॥

**वेङ्कट०** सोमे स्थितस्योदकस्य सोमस्येव वा अत्र स्तुतिः। सोमे स्थितः द्रप्सः प्रथमान् पार्थिवान् द्यून् दिवश्च अनुलक्षीकृत्य[3] चस्कन्द। तदेवोक्तम्[4]—इमम् च इति। अत्र[5] वाजसनेयकम्—"असौ वा आदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दत्यमूमिति 'इमं च योनिमनु यश्च पूर्वः' 'इतीमं च लोकममुं चेत्येतद्[6] [7]अथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति[7] 'समानं योनिमनु सञ्चरन्तम्' इति समानं ह्येष एतं योनिमनु सञ्चरति 'द्रप्सं जुहोम्यनु सप्त होत्राः' इति, असौ वा आदित्यो द्रप्सो दिशः[8] सप्त होत्रा अमुं तदादित्यं दिक्षु प्रतिष्ठापयति" ( माश ७,४,१,२० ) इति ॥ ११ ॥

यस्ते॑ द्र॒प्सः स्कन्द॑ति॒ यस्ते॑ अं॒शुर्बा॒हुच्यु॑तो धि॒षणा॑या उ॒पस्था॑त् ।
अ॒ध्व॒र्योर्वा॒ परि॑ वा॒ यः प॒वित्रा॒त् तं ते॑ जुहो॒मि॒ मन॑सा॒ वष॑ट्कृतम् ॥ १२ ॥

यः । ते॒ । द्र॒प्सः । स्कन्द॑ति । यः । ते॒ । अं॒शुः । बा॒हुऽच्यु॑तः । धि॒षणा॑याः । उ॒पऽस्था॑त् ।
अ॒ध्व॒र्योः । वा॒ । परि॑ । वा॒ । यः । प॒वित्रा॑त् । तम् । ते॒ । जु॒हो॒मि॒ । मन॑सा । वष॑ट्ऽकृतम् ॥१२॥

**उद्गीथ०** यः ते तवाभिषूयमाणस्य सोमस्य द्रप्सः रसः स्कन्दति अधिषवणचर्मणः अन्यत्र गच्छति। यः च ते अंशुः रसादितरः सोमः स्कन्दति। अध्वर्युपाठात् 'ग्रावच्युतः' इत्यध्याहार्यम्। बाहुच्युतः इत्यस्य वा अध्वर्योर्वा, इत्यनेन सम्बन्धः कार्यः। ग्रावच्युतः अभिषवप्रवृत्तात् ग्राव्णः प्रच्युतः। कुतोऽन्यत्र स्कन्दति। धिषणायाः उपस्थात्[9] धिषणेति अकारवकारलोपेन लिङ्गवचनव्यत्ययेन च अधिषवणफलके उच्येते। धिषणयोरित्यधिषवणयोः[10] उपस्थात् उपगम्य यत्र तिष्ठति सोमः स [11]तयोरुपस्थः, तस्मात्[11]। अधिषवणयोः अवयवभूतात् सोमाऽवस्थानप्रदेशाद् अन्यतो गच्छतीत्यर्थः। अध्वर्योः बाहुच्युतः [12]असावध्वर्युबाहुसम्बद्धाभ्यां[12] पाणिभ्यां प्रच्युतः सन् अन्यतो गच्छति। परि वा यः पवित्रात्। यः सोमः पूयमानो दशापवित्राद् वा सर्वतः स्कन्दति, तम् सोमम् ते तव

---

१. नास्ति मूको. २. विप्रुहो॰ वि[1,3]. ३. ॰नुपल॰ वि[2] अ[1]. ४ तदेनद्धोक्तम् वि[2] अ[1]. ५. तत्र वि[1]. ६-६. इति ··· वि[2] अ[2]. ७-७. नास्ति मूको ८. दिवः वि[2] अ[1]. ९. ॰स्थात उपगम्य यत्र तिष्ठति सोमः मूको. १०. ॰णयोरित्यध्वर्युपाठादधिष॰ मूको. ११-११. ॰पस्थात्। उपगम्य यत्र तिष्ठति सोमः। स तयोरुपस्थात् ततः मूको. १२-१२. ॰वध्वर्युस्सन् बाहु॰ मूको.

सोमस्याऽवयवभूतम् जुहोमि अग्नौ प्रक्षिपामि। कथम्। मनसा सङ्कल्पमात्रेण। आज्यहोमे सोमविप्रुड्होमं मनसा सन्धायेत्यर्थः[१]। वषट्कृतम् स्वाहाकारप्रदानेन प्रयोज्यहोमे सोमहोमसम्पादनाय मनसाऽभिसन्धानमात्रेण कृतवषट्कारश्चेत्यर्थः[२] ॥ १२ ॥

**वेङ्कट०** यः ते सोम! द्रप्सः स्कन्दति, यः च ते अंशुः बाहुभ्यां प्रच्युतः[३] अभिषवणफलकयोः उपस्थात् स्कन्दति, अध्वर्योः पवित्रात् वा यः द्रप्सः स्कन्दति, तम् ते जुहोमि मनसा वषट्कृतम्। स न वृथा[४] स्कन्दति इति ॥ १२ ॥

यस्ते॑ द्र॒प्सः स्क॒न्नो यस्ते॑ अं॒शुर॒वश्च॒ यः प॒रः स्रु॒चा ।
अ॒यं दे॒वो बृह॒स्पति॒ः सं तं सि॑ञ्चतु॒ राध॑से ॥ १३ ॥

यः । ते॒ । द्र॒प्सः । स्क॒न्नः । यः । ते॒ । अं॒शुः । अ॒वः । च॒ । यः । प॒रः । स्रु॒चा ।
अ॒यम् । दे॒वः । बृ॒ह॒स्पति॑ः । सम् । तम् । सि॒ञ्च॒तु॒ । राध॑से ॥ १३ ॥

**उद्गीथ०** यः ते तव अभिषूयमाणस्य द्रप्सः रसः स्कन्नः गतोऽन्यत्राधिषवणचर्मणः, यः च ते तव अंशुः रसाद् इतरः लतावयवः, अवः च यः अवमश्च यः, स्वल्पश्च य इत्यर्थः। परः च यः, प्रभूतश्च य इत्यर्थः। तम् उभयप्रकारम् अपि अयम् देवः बृहस्पतिः स्रुचा होमपात्रेण सम् सिञ्चतु सम्यक् क्षारयतु अग्नौ प्रक्षिपतु। किमर्थम्। राधसे धनाय अस्माकं दृष्टाऽदृष्टफलाऽऽत्मय इत्यर्थः ॥ १३ ॥

**वेङ्कट०** यः ते द्रप्सः स्कन्नः यः च अंशुः स्रुचा गृहीतः अवस्तात्[५] स्कन्दते [६]परस्ताद् वा[६] अतिरिक्तः, तम् अयम् बृहस्पतिः[७] स्कन्नम् सम् सिञ्चतु धनार्थम्[८] अस्माकम्। [९]स्कन्ने हि[९] सोमे प्रजापश्वादिकमपि स्कन्नम् भवति, [१०]तन्मा भूदिति[१०] ॥ १३ ॥

पय॑स्वती॒रोष॑धय॒ः पय॑स्वन्मामु॒कं वच॑ः ।
अ॒पां पय॑स्व॒दित् पय॒स्तेन॑ मा स॒ह शु॑न्धत ॥ १४ ॥

पय॑स्वतीः । ओष॑धयः । पय॑स्वत् । मा॒म॒कम् । वच॑ः ।
अ॒पाम् । पय॑स्वत् । इत् । पय॑ः । तेन॑ । मा॒ । स॒ह । शु॒न्ध॒त ॥ १४ ॥

**उद्गीथ०** प्रत्यक्षकृतेयम् ऋक्। शुन्धतेति मध्यमपुरुषबहुवचनेन अपाम् अभिधानाद् अपः[११] सम्बोध्य कुरुतेत्येतत् पदमध्याह्रियते। हे आपः! पयस्वतीः ओषधयः पय [१२]उदकम् वृष्टिलक्षणं[१२] युष्माकम् अवयवभूतं तेन तद्वतीः वृष्टियुक्ता ओषधीः, कुरुत इति शेषः। किञ्च पयस्वत् वृष्ट्याद्युदकवत् प्राप्तप्रार्थितवृष्ट्याद्युदकमित्यर्थः[१३]। मामकम् मदीयम् वचः वृष्टिप्रार्थनवचनं वा कुरुत। अपाम्

---

१. सन्धरियत्य° मूको. २. कृतं वषट्कारश्चेत्य° मूको. ३. प्रतच्यु° वि[२] अ[१]. ४. वृधा वि[२] अ[१]. ५. °वस्तात् वि[२] अ[१]. ६-६. परश्चत्वा ··· वि[२] अ[१]. ७. °ति मूको. ८. उद्गाना° वि[२] अ[१]. ९-९. स्कुन्देभि वि[२] अ[१]. १०-१०. नास्ति अ[१]. ११. अतः मूको. १२-१२. उदयं वृद्धिल वि[१३]. १३. प्राप्यार्थि° त वि[२].

वृष्टिलक्षणानां सम्बन्धि पयः उदकं भूमिष्ठम् पयस्वत् वृष्ट्युदकसंयुक्तं यथाकालं कुरुत । तेन च उदकेन सह मा माम् शुन्धत शोधयत संस्कुरुत ॥ १४ ॥

वेङ्कट० पयस्वत्यः ओषधयः[1], पयस्वत् मामकम्[2] च वचनम्[3] । किं बहुना–यच्चेह किञ्चिद् अपाम् पयसः रसः, तत्सर्वम् पयस्वत् एव संसृष्टम् उदकेन । तेन सारेण सह माम् अवशुन्धतेति[4] । 'आपो अद्यान्वचारिषं रसेन समगस्महि'[5] ( ऋ १,२३,२३ ) इत्युक्तमिति ॥ १४ ॥

[6]इति सप्तमाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[6] ॥

## [ १८ ]

[6]संकुसुको यामायन ऋषिः । १-४ मृत्युर्देवता, ५ धाता, ६ त्वष्टा, ७-१४ पितृमेधः, १४प्रजापतिः वा । त्रिष्टुप् छन्दः, ११ प्रस्तारपङ्क्तिः, १३ जगती, १४ अनुष्टुप्[6] ।

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ १ ॥

परम् । मृत्यो इति । अनु । परा । इहि । पन्थाम् । यः । ते । स्वः । इतरः । देवऽयानात् ।
चक्षुष्मते । शृण्वते । ते । ब्रवीमि । मा । नः । प्रऽजाम् । रिरिषः । मा । उत । वीरान् ॥ १ ॥

उद्गीथ० उत्तरं[7] सूक्तं 'परं मृत्यो' इति चतुर्दशर्चम् यामायनः संकुसुको ददर्श । तत्राद्याश्चतस्रो मृत्युदेवताः । पञ्चमी धातृदेवता । शेषाः पितृमेधकर्मणि पठिताः । तासां देवताः प्रयोगवशात् ज्ञेयाः । तत्रतत्र यथाकथञ्चित् शौनकेनालस्येनाशक्त्या वाऽनिरूपितत्वाद् अहमत्र येन मन्त्रेण यद् द्रव्यम् अभिधीयते प्राधान्येन तद् द्रव्यं तस्य मन्त्रस्य देवतेत्यनेन न्यायेनाऽन्येन वा यथाप्राप्तं देवतामभिव्यञ्जयिष्यामि । 'हे मृत्यो! परम् अन्यम् पन्थाम् पन्थानम् अनु परा इहि परागच्छ, यः पन्थाः ते तव स्वः स्वकीयः इतरः अन्यः देवयानान्[8] देवान् प्रति गमनमार्गात् । पितृयाणे पथि स्थितं[8] जहि । अहं तु देवयाने पथि स्थितः, अतो मा माम् जिघांसीरित्यभिप्रायः । न च केवलं माम् । किं तर्हि । चक्षुष्मते पश्यते शृण्वते च सर्वम् । अप्रतिहतसर्वेन्द्रियविज्ञानायेत्यर्थः[9] । ते तुभ्यं मृत्यवे ब्रवीमि कथयामि त्वाम् अभ्यर्थयामीत्यर्थः । किमुच्यते । नः अस्माकम् प्रजाम् दुहितृदौहित्रादिकाम् मा रीरिषः मा हिंसीः । मा उत मा च वीरान् पुत्रपौत्रादीन् पुंसो हिंसीः ॥ १ ॥[10]

वेङ्कट० संकुसुको यामायनः । परम् मृत्यो! अनु प्रगच्छ पन्थानम्, यः ते स्वभूतः पन्थाः देवयानात् अन्यः । न[8] [11]यजमानात् परागच्छेत्यर्थः[11] । चक्षुष्मते इति स्पष्टम् ॥ १ ॥[10]

---

१. ओषपय वि[2]; ओषधय वि[1] अ[1]. २. मारकम् मूको. ३. नास्ति वि[1]. ४ आवशुन्धतनि मूको. ५. समशीष्महि वि[2]; समशिष्महि अ[1]; समशसहि वि[3]. ६-६. नास्ति मूको. ७. परमित्यादि सूक्तमारभ्यते उत्तरं अ वि[2]. ८. नास्ति मूको. ९. °यप्रज्ञाना° अ वि[2]. १०. या. ( ११,७ ) द्र. ११-११. °नान् प्रगच्छतेच्छत्यर्थः वि[2] अ[1]; °नान् प्रतिग° वि[3].

मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ २ ॥

मृत्योः । पदम् । योपयन्तः । यत् । ऐत । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ।
आऽप्यायमानाः । प्रऽजया । धनेन । शुद्धाः । पूताः । भवत । यज्ञियासः ॥ २ ॥

**उद्गीथ०** मृत्योः [1]स्वभूतम् पदम्[1] पद्यतेऽस्मिन्निति पदं पितृयाणं तत्[2] योपयन्तः विमोहयन्तः, परिवर्जयन्त इत्यर्थः । यत् यस्मात् ऐत[3] गतवन्तो यूयं देवयानेन पथा । यस्मान्मृत्योः स्वभूतं पितृयाणप्रापकं कर्म परित्यज्य देवयानप्रापककर्मणि प्रवृत्ताः दीर्घतरं प्रकृष्टतरं च व्याध्यादिरहितम् आयुः जीवितम् दधानाः धारयन्तः, प्राप्नुवन्त इत्यर्थः । आप्यायमानाः प्रवर्धमानाश्च प्रजया पुत्रपौत्रादिकया[4] धनेन च[5] गवाश्वहिरण्यादिकेन[6] जन्मान्तरसञ्चितदुरितक्षयात् शुद्धा भवत । वर्तमानजन्मार्जितदुरितक्षयात्[7] च पूता भवत यूयम् हे यज्ञियासः! यज्ञसम्पादिनो यजमानाः! ॥ २ ॥

**वेङ्कट०** मृत्योः गच्छतः पदम्[8] अपुनरागमनार्थम् योपयन्तः[9] यत् गच्छथ मृतस्य बन्धवः! दीर्घतरम् आयुः आत्मनि प्रतरम् निदधानाः । तेन प्रजया धनेन च आप्यायमानाः शुद्धाः पूताः च भवत अत उत्तरं कामं[10] यज्ञार्हाः ॥ २ ॥

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥ ३ ॥

इमे । जीवाः । वि । मृतैः । आ । अववृत्रन् । अभूत् । भद्रा । देवऽहूतिः । नः । अद्य ।
प्राञ्चः । अगाम । नृतये । हसाय । द्राघीयः । आयुः । प्रऽतरम् । दधानाः ॥ ३ ॥

**उद्गीथ०** श्मशानकर्म कृत्वानन्तरम् 'इमे जीवाः वि मृतैराववृत्रन्' इत्येतां पठन्तः सव्यं बाहुं[11] प्रत्यावर्तमानाः प्रत्यग् अनवेक्षमाणाः[12] व्रजन्ति[13] । इमे मृतस्य सम्बन्धिनः जीवाः वयं पुत्रपौत्रादयः वि आ अववृत्रन् प्रसव्यं व्यावृत्ताः, [14]संस्कृत्य क्षेमेण[14] पराङ्मुखीभूता इत्यर्थः । मृतैः पञ्चम्यर्थे तृतीया । इमे[15] मृतेभ्यः पितृभ्यः व्यावृत्ताश्च[16] । अभूत् भूता सुवृत्ता भद्रा कल्याणी क्षेमकारी देवहूतिः देवस्य यमस्य हूतिराह्वानं यत्र सा देवहूतिः श्मशानक्रिया पितृमेधाख्या । इदानीम् प्राञ्चः प्राञ्चितारः[17] प्रकृष्टया गत्या गन्तारो[18] भूत्वा अगाम गृहान् प्रति गच्छामो वयम् । किमर्थम् । नृतये 'नृती गात्रविक्षेपे' । स्वकर्मणि गात्रविक्षेपार्थम्, स्वकर्मानुष्ठानायेत्यर्थः । हसाय हसनाय

---

१-१. स्वभूतपदं अ वि[२]. २. त मूको. ३. एत वि[१,३]. ४. पुत्रलोलिकया मूको. ५. वा मूको. ६. गवा च हिर० वि[१,३]. ७. °न्मोपरितदुरि° मूको. ८. शप° वि[२] अ[२]. ९. योवयन्तः वि[२] अ[१]; योवयन्ते वि[१]. १०. नास्ति वि[१]. ११. बाहुः अ वि[२]. १२. प्रन्यनपेक्षमाणः मूको. १३. नास्ति मूको. १४-१४. संस्कुर्मः त्यक्षेमेण वि[१,३]; संस्कुर्मः ⋯ क्षेमेण अ वि[२]. १५. इमा वि[१,३]; इमां अ वि[२]. १६. सुतश्च मूको. १७. प्राञ्चिकारः वि[१,३]. १८. गन्तारा वि[१,३].

च। हसनेन चात्र तत्पूर्वक्रीडा लक्ष्यते। पुत्रपौत्रादिभिः सह क्रीडनाय चेत्यर्थः। द्राघीयः दीर्घतरं प्रकृष्टतरं च व्याध्यादिरहितम् आयुः जीवितम् दधानाः आत्मनि धारयन्तः प्राप्नुवन्त इत्यर्थः ॥ ३ ॥

वेङ्कट० इमे जीवन्तः मृतैः व्यावृत्ताः[1]। भवतु च अस्माकम् अद्य भद्रः यज्ञः इतः पूर्वम् आशौचे विसृष्टे[2]। अत उत्तरं वयम् प्राञ्चः गच्छेम न प्रत्यञ्चो नृत्तहसनयोर्यथापूर्वं दर्शनाय द्राघीयः आयुः प्रतरम् दधानाः ॥ ३ ॥

इ॒मं जी॒वेभ्य॑: परि॒धिं द॑धामि॒ मैषां॒ नु गा॒दप॑रो॒ अर्थ॑मे॒तम्।
श॒तं जी॑वन्तु श॒रद॑: पुरू॒चीर॒न्तर्मृ॒त्युं द॑धतां॒ पर्व॑तेन ॥ ४ ॥

इ॒मम्। जी॒वेभ्य॑:। प॒रि॒ऽधिम्। द॒धा॒मि॒। मा। ए॒षा॒म्। नु। गा॒त्। अप॑रः। अर्थ॑म्। ए॒तम्।
श॒तम्। जी॒व॒न्तु॒। श॒रद॑:। पु॒रू॒चीः। अ॒न्तः। मृ॒त्युम्। द॒ध॒ता॒म्। पर्व॑तेन ॥ ४ ॥

उद्गीथ० त्रिभिः[3] पादैः मध्यमं परिधिं परिदधाति शान्तिकर्मणि चतुर्थेन पादेनाऽश्मानम्[4] उत्तरतोऽग्नेः कृत्वा (तु. आगृ ४, ६, ९-१०)। इमम् मध्यमम् परिधिम् जीवेभ्यः षष्ठ्यर्थे चतुर्थी। मृत्योर्मध्ये इत्यध्याहार्यम्। पुत्रपौत्रादिजीवानां मृत्योश्च मध्ये तिरस्करणार्थम् दधामि स्थापयामि। किमर्थम्। एषाम् मृतानां पितॄणाम् अर्थम् एतम् अर्तेरर्थः गतिरिहोच्यते। गतिमेतां मरणाख्याम् अपरः अन्योऽपि पुत्रादिजीवः क्षिप्रम् अप्राप्ते काले मा गात् मा प्रापत् इत्यनेन प्रयोजनेन। सर्वथा पुत्रादिजीवाः जीवन्तु[5]। कियन्तं कालम्। शतम् शरदः। कीदृशाः। पुरूचीः बह्वञ्चनाः स्वकार्यैरार्तवैश्शीतोष्णवर्षादिभिः अनुगता[6] बहुभिः प्राणिभिः अनुगता वा अन्तः दधताम् अन्तर्दधतु[7] च अन्तर्हितं च कुर्वन्तु मृत्युम्। केन। पर्वतेन पाषाणेन ॥ ४ ॥

वेङ्कट० इमम् जीवेभ्यः रक्षार्थं[8] मृत्योः परिधानम्[9] दधामि। मा एषाम् जीवताम्[10]। अत[11] उत्तरम् अन्यः इमम् अध्वानम् गात्। शतम् शरदः जीवन्तु बह्वागमनाः। मृत्युम् अन्तः दधताम् शिलोच्चयेन[12] ॥ ४ ॥

यथाहा॑न्यनुपू॒र्वं भव॑न्ति॒ यथ॑ ऋ॒तव॑ ऋ॒तुभि॒र्यन्ति॑ सा॒धु।
यथा॒ न पूर्व॒मप॑रो॒ जहा॑त्ये॒वा धा॑त॒रायूं॑षि कल्पयै॒षाम् ॥ ५ ॥

यथा॑। अहा॑नि। अ॒नु॒ऽपू॒र्वम्। भव॑न्ति। यथा॑। ऋ॒तव॑:। ऋ॒तुऽभि॑:। यन्ति॑। सा॒धु।
यथा॑। न। पूर्व॑म्। अप॑रः। जहा॑ति। ए॒व। धा॒त॒रिति॑। आयूं॑षि। क॒ल्प॒य॒। ए॒षा॒म् ॥ ५ ॥

उद्गीथ० यथा येन प्रकारेण अहानि अहोरात्राणि अनुपूर्वम् अनुक्रमेण भवन्ति परिवर्तन्ते, यथा च ऋतवः शरदादयः ऋतुभिः सह यन्ति गच्छन्ति साधु शोभनम् अविपर्यासेन, एवम् यथा

१. °ता वि[२] अ[१]. २. °ष्टः मूको. ३. स्तुतिः मूको. ४ °देवात्मान° मूको. ५. नास्ति मूको. ६. नागतेतो मूको. ७. °दंधातु मूको. ८. रक्षणार्थं वि[१]. ९. उपरि° अ[१]. १०. जीवतां मता वि[२] अ[१]. ११. नास्ति वि[१]. १२. °च्चयस्तेनम् वि[२] अ[१].

[1]पूर्वम् पूर्वकालीनम्[1] अपरः [2]अर्वाक्कालीनः अस्मत्कुलीनः[2] न जहाति न परित्यजति पूर्वमरणेन, एवम् अनेनोक्तेन प्रकारेण हे धातः! आयूंषि जीवितानि कल्पय समर्थय कुरु एषाम् अस्मत्कुलीनानाम् ॥ ५ ॥

**वेङ्कट०** यथा अहानि अनुक्रमेण भवन्ति, यथा वा ऋतवः पूर्वैः ऋतुभिः अनुपूर्वम् यन्ति साधु न वसन्तात् प्राग् ग्रीष्मः, तथैषाम् आयुः कल्पय देव! अभयाय। यथा न पूर्वम् पितरम् अपरः पुत्रः जहाति, एवं विधातः! एषाम् कल्पय आयूंषि ॥ ५ ॥

[3]इति सप्तमाष्टके षष्ठाध्याये षड्विंशो वर्गः[3] ॥

आ रो॑हता॒यु॑र्ज॒रसं॑ वृणा॒ना अ॑नुपू॒र्वं यत॑माना॒ यति॑ ष्ठ ।
इ॒ह त्वष्टा॑ सु॒जनि॑मा स॒जोषा॑ दी॒र्घमायु॑ः करति जी॒वसे॑ वः ॥ ६ ॥

आ । रो॒ह॒त॒ । आयु॑ः । ज॒रस॑म् । वृ॒णा॒नाः । अ॒नु॒ऽपू॒र्वम् । यत॑मानाः । यति॑ । स्थ ।
इ॒ह । त्वष्टा॑ । सु॒ऽजनि॑मा । स॒ऽजोषा॑ः । दी॒र्घम् । आयु॑ः । क॒र॒ति॒ । जी॒वसे॑ । व॒ः ॥ ६ ॥

**उद्गीथ०** त्वष्टृदेवतेयम्[4]। त्वष्टेत्यग्निवाय्वादित्यास्त्रयोऽप्युच्यन्ते। अत्र पुनः श्मशानकर्मसम्बन्धाद् अग्निरुच्यते। अनयाऽऽनडुहे चर्मण्यमात्यान् आरोहयति शान्तिकर्मणि ( तु. आगृ ४,६,८ )। अमात्यशब्देन स्वजन उच्यते। हे मृतस्य स्वजनाः! पुत्रपौत्रादयः! आनडुहे चर्मणि आ रोहत आयुः जीवितम् जरसम् वृणानाः शान्तिकर्माङ्गभूतम् अग्निम् प्रार्थयमानाः। एवञ्चारोहत — अनुपूर्वम् ज्येष्ठक्रमेण वर्णानुक्रमेण वेत्यर्थः। यतमानाः प्रयतमानाः संयतमानाः सम्पतमाना[5] वा परस्परेण सङ्गच्छमाना वेत्यर्थः। यति स्थ यावन्तो भवथ यूयं तावन्तः सर्व एवेत्यर्थः। इह चर्मणि कर्मणि वा आरूढानां च सताम्[6] त्वष्टा अग्निः सुजनिमा शोभनजन्मा सजोषाः समानप्रीतिः समानसेवनो[7] वा दीर्घम् आयुः जीवितम् करति करोतु जीवसे चिरजीवनाय वः युष्माकम् ॥ ६ ॥

**वेङ्कट०** आ रोहत आयुः जराम् वृणानाः[8] [9]यथाज्येष्ठं गच्छन्तः[9] यावन्तः[10] भवथ। इह त्वष्टा शोभनजननः भवद्भिः सङ्गतः दीर्घम् आयुः करोतु जीवनाय युष्माकम् ॥ ६ ॥

इ॒मा नारी॑रविध॒वाः सु॒पत्नी॒राञ्ज॑नेन स॒र्पिषा॒ सं वि॑शन्तु ।
अ॒न॒श्रवो॑ऽनमी॒वाः सु॒रत्ना॒ आ रो॑हन्तु॒ जन॑यो॒ योनि॒मग्रे॑ ॥ ७ ॥

इ॒माः । नारी॑ः । अ॒वि॒ध॒वाः । सु॒ऽपत्नी॑ः । आ॒ऽअञ्ज॑नेन । स॒र्पिषा॑ । सम् । वि॒श॒न्तु॒ ।
अ॒न॒श्रव॑ः । अ॒न॒मी॒वाः । सु॒ऽरत्ना॑ः । आ । रो॒ह॒न्तु॒ । जन॑यः । योनि॑म् । अग्रे॑ ॥ ७ ॥

---

१-१. पूर्वकालीनम् अ वि[१,२]; पूर्वे कालीनम् वि[३]. २-२. अर्वाक्कुलीनोऽस्मत्कु° वि[१,२,३]; अर्वाक्कुलीनः अ. ३-३. नास्ति मूको. ४. देवते चेयम् अ वि[३]. ५. सम्पत् माना वि[३]. ६. सकां मूको. ७. समामेवेनो मूको. ८. °नाम् वि[२] अ[१]; वृणा वि[१]. ९-९. ज्येष्ठ गच्छथो वि[२] अ[१]. १०. नास्ति वि[१].

**उद्गीथ०** अनयर्चा सर्पिषा अक्षिणी अञ्जाना नारीः ईक्षते श्मशानकर्मानन्तरम् ( तु. आगृ ४,६,१२ )। इमाः मृतस्य सम्बन्धिन्यः नारीः नार्यः अविधवाः जीवद्भर्तृकाः[1] सुपत्नीः [2]शोभना भार्याः[2] असतीत्वादिदोषरहिताः आञ्जनेन[3] आङ् ईषदर्थे। ताः ईषदञ्जनेन सर्पिषा घृतात्मकेनाऽक्षिणी स्वेस्वे, अङ्क्त्वेति[4] शेषः, सम् विशन्तु संवेशनमत्र सामर्थ्याद् गमनम्। श्मशानात् गृहान् प्रति गच्छन्त्वित्यर्थः। अनश्रवः अश्रुवर्जिताः अरुदत्य इत्यर्थः। अनमीवाः अरोगाः मानसदुःखवर्जिता इत्यर्थः। सुरत्नाः 'रत्नम्' ( निघ २,१२ ) इति धननाम। शोभनपरिधानादिधनाः, सुवेषा इत्यर्थः। आ रोहन्तु प्रविशन्त्वित्यर्थः। जनयः जनयन्त्यपत्यमिति जनयो नार्यः योनिम् स्वगृहम् अग्रे प्रथमं पुंभ्यः ॥ ७ ॥

**वेङ्कट०** इमाः नारीः अविधवाः शोभनपतिकाः आञ्जनेन अक्तनेत्राः[5] सर्पिषा मृष्टमुखाः सम् विशन्तु[6] अश्रुवर्जिताः अनमीवाः सुरत्नाः[7] आ रोहन्तु जायाः गृहम् अग्रतः ॥ ७ ॥

उदी॑र्ष्व ना॒र्य॒भि जी॑वलो॒कं ग॒तासु॑मे॒तमुप॑ शेष॒ एहि॑ ।
ह॒स्त॒ग्रा॒भस्य॑ दिधि॒षोस्तवे॒दं पत्यु॑र्जनि॒त्वम॒भि सं ब॑भूथ ॥ ८ ॥

उत् । ई॒र्ष्व॒ । ना॒रि॒ । अ॒भि । जी॒व॒ऽलो॒कम् । ग॒तऽअ॑सुम् । ए॒तम् । उप॑ । शे॒षे॒ । आ । इ॒हि॒ ।
ह॒स्त॒ऽग्रा॒भस्य॑ । दि॒धि॒षोः । तव॑ । इ॒दम् । पत्युः॑ । ज॒नि॒ऽत्वम् । अ॒भि । सम् । ब॒भू॒थ॒ ॥ ८ ॥

**उद्गीथ०** अनयर्चा चितितो मृतस्य पत्नीमुत्थापयति देवरः वयस्यो वा जरद्गृहदासो वा ( तु. आगृ ४,२,१८ )। उत् ईर्ष्व ईर्तिर्गत्यर्थः। उद्गच्छ उत्तिष्ठ चितित इत्यर्थः। हे नारि! मृतस्य पत्नि!। उत्थाय च या[8] त्वम् गतासुम् उत्क्रान्तप्राणम् एतम् पतिम् उप शेषे उपस्वपिषि एतस्य मृतस्य पत्युः[9] समीपे पार्श्वे निषद्य शेषे[10] इत्यर्थः। सा त्वम् जीवलोकम् अभि आ इहि जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहं प्रति आगच्छ। कस्मादेवमुच्यसे। यस्मात् हस्तग्राभस्य पाणिग्रहीतुः दिधिषोः गर्भाधातुः सम्बन्धि इदम् जनित्वम् जन्म, इमां देहेषूत्पत्तिं गतमित्यर्थः, अभि सम् बभूथ अभिसम्भूतासि त्वम् अध्यवसायमात्रेणैव। यस्मात्त्वं पतिलोकं प्राप्तवती तस्मादेवं ब्रवीमीत्यर्थः ॥ ॥ ८ ॥

**वेङ्कट०** उपरि निपातितायाः[11] पत्न्या उत्थापने विनियुक्तैषा ( तु. आगृ ४,२,१८)। उत् तिष्ठ नारि![12]। जीवलोकम् प्रति गतासुम् एतम् पतिं विश्वं[13] पुराणमनुपालयन्ती[14] [15]उप शेषे[15]। हस्तग्राहस्य तव अस्य धारकस्य पत्युः गृहम् इदम् त्वं जायात्वम् अभि सम् बभूथ अनुसरणनिश्चयम् अकृथा इति ॥ ८ ॥

---

१. जीवभृताः अ वि[1,3]. २-२. शोभनभार्याः वि[1]. ३. अञ्जने अ वि[1,3]. ४. अङ्क्त्वेति वि[1,3]; अङ्क्तेति अ वि[2]. ५. °नेत्रा वि[2] अ[1]; °नोत्राः वि[1]. ६. °न्ति वि[2] अ[1]. ७. °रत्कदाः वि[2] अ[1]. ८. नास्ति मूको. ९. पतेः अ वि[1,3]. १०. स मूको. ११. उपरि परिपातितायाः वि[2] अ[1]. १२. °री वि[2] अ[1]; नरी वि[1]. १३. नास्ति वि[1]. १४. °न्ति वि[2] अ[1]; °न्य वि[1]. १५-१५. नास्ति वि[1,2].

धनुर्हस्तांदाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥ ९ ॥

धनुः । हस्तात् । आऽददानः । मृतस्य । अस्मे इति । क्षत्राय । वर्चसे । बलाय ।
अत्र । एव । त्वम् । इह । वयम् । सुऽवीराः । विश्वाः । स्पृधः । अभिऽमातीः । जयेम ॥ ९ ॥

**उद्गीथ०** [1]'अनयर्चा धनुरुत्थापयति'[1] क्षत्रियश्चेद्यजमानः ( तु. आगृ ४, २, २० ) । चितिस्थस्य मृतस्य हस्तात् धनुः आददानः । किमर्थम् । अस्मे अस्माकम् क्षत्राय क्षत्रत्वाय प्रजापालनलक्षण-क्षत्रियत्वाय[2] । वर्चसे ऐश्वर्यलक्षणदीप्तये च बलाय शारीराय[3] च सेनालक्षणाय च । आददान इति लक्षणार्थे शानजन्तप्रयोगात् साकाङ्क्षत्वात् ब्रवीमीति शेषः । किं ब्रवीमि । उच्यते । अत्र एव राष्ट्रे श्मशाने वा । सप्तमीनिर्देशात् स्थित्वेति शेषः । त्वम् च यजमानः इह एव राष्ट्रे श्मशाने वा स्थित्वा वयम् सुवीराः शोभनपुत्राश्च त्वदीयाः एते सर्वे वयम्[4] समुदिताः सन्तः अनेन धनुषा विश्वाः सर्वाः स्पृधः समितीः अभिमातीः जयेम अभिभवेमेत्याशास्महे ॥ ९ ॥

**वेङ्कट०** मृतस्य हस्तात् [5]धनुः आददानः[5] अहं भवामि अस्माकं क्षत्राद्यर्थम् । कथम् तानि त्वया नावक्रामेयुरिति । अत्र एव त्वम् भव । इह वयम् च सुपुत्राः भवन्तो [6]विश्वान् शत्रून् अभिमन्यमानान्[6] जयेम ॥ ९ ॥

उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥ १० ॥

उप । सर्प । मातरम् । भूमिम् । एताम् । उरुऽव्यचसम् । पृथिवीम् । सुऽशेवाम् ।
ऊर्णऽम्रदाः । युवतिः । दक्षिणाऽवते । एषा । त्वा । पातु । निःऽऋतेः । उपऽस्थात् ॥ १० ॥

**उद्गीथ०** अत उत्तराश्चतस्रः पृथिवीदेवताः । अस्थिकुम्भम् अनया भूमौ निदधाति (तु. आगृ ४,५,५) । हे अस्थिकुम्भ ! अस्माभिर्भूमौ निधीयमानस्त्वम् उप सर्प उपगच्छ अनुप्रविश मातरम् सर्वस्य मातृभूताम् भूमिम् एताम् उरुव्यचसम् पृथिवीम् सुशेवाम् विविधमञ्चनं पूजनं गमनं वा व्यचः तदुरु विस्तीर्णं यस्या असावुरुव्यचाः, ताम् उरुव्यचसं विस्तीर्णविविधपूजनगमनाञ्चेत्यर्थः । पृथिवीम् विस्तीर्णाम् । सुशेवाम् सुसुखाम् । उपसर्पन्तं[7] च सन्तम् ऊर्णम्रदाः ऊर्णेव मृद्वी सुकुमारा युवतिः यौवनान्विता दक्षिणावते द्वितीयार्थे चतुर्थ्येषा । दक्षिणावन्तं दत्तदक्षिणम् [8]त्वा अस्थिकुम्भरूपवन्तं त्वाम्[8] यजमानम् एषा पृथिवी पातु रक्षतु । कुतः । निर्ऋतेः मृत्युदेवतायाः उपस्थात् समीपस्थानात् ॥ १० ॥

---

१-१. चत्मरुपस्था वि[१,३]; ...रूत्थापयति अ वि[२]. २. °पालनक्षत्रिय° मूको. ३. पा ( प वि[२] अ[१]. ) रीराय मूको. ४. एवं वि[१,३]. ५-५. °धानः वि[२] अ[१]; °नुदादानः वि[१]. ६-६. विश्वां चित्र इह हि मन्यमानान् वि[२] (°श्व°) अ[१]; विश्वाच्छत्रूनभिमान्यमाना वि[१]. ७. °र्पयन्तः अ वि[२]; °र्पयन्त वि[१,३]. ८-८. अस्थिकुम्भरूपवन्तत्वां ( °पवन्त्वा वि[१,३] ) मूको.

वेङ्कट० कर्तेऽनया[1] कुम्भमवदध्युः ( तु. आगृ ४,५,५ )। उप सर्प मातृभूताम्[2] भूमिम् एताम्[3] उरुव्यासिकाम् विस्तीर्णाम् सुसुखाम्। ऊर्णेव मृद्वीयम् युवतिः दानवते भवति। सा एषा त्वाम् रक्षतु निर्ऋतेः[4] सकाशात् ॥ १० ॥

[5]इति सप्तमाष्टके षष्ठाध्याये सप्तविंशो वर्गः[5] ॥

उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ११ ॥

उत् । श्वञ्चस्व । पृथिवि । मा । नि । बाधथाः । सुऽउपायना । अस्मै । भव । सुऽउपवञ्चना ।
माता । पुत्रम् । यथा । सिचा । अभि । एनम् । भूमे । ऊर्णुहि ॥ ११ ॥

उद्गीथ० हे पृथिवि! [8]उत् श्वञ्चस्व ऊर्ध्वंगतमेनं कुरु[8], मा नि बाधथाः मा सम्पीडयेत्यर्थः। किञ्च सूपायना सूपगमना सूपसर्पेत्यर्थः। अस्मै अस्यास्थिकुम्भस्यार्थाय भव त्वम् सूपवञ्चना 'वञ्चु प्रलम्भने'। प्रलम्भनं प्रतारणम्। तेन चात्र तत्पूर्वकं प्रतिष्ठापनं लक्ष्यते। सूपप्रलम्भना सुप्रतिष्ठा चेत्यर्थः। किञ्च यथा माता पुत्रम् बालकं वस्त्रान्तेनाच्छादयति, एवम् एनम् अस्थिकुम्भं हे भूमे! अभि ऊर्णुहि आभिमुख्येनाच्छादय ॥ ११ ॥

वेङ्कट० कर्ते पांसूनवकिरति ( तु. आगृ ४,५,६ )। उप्तं बीजमिव एनम् उत् श्वञ्चस्व, मा अधस्तात् कृथाः[6]। सूपचरा अस्मै भव सूपप्रलम्भा च। माता पुत्रम् यथा वस्त्रान्तेनाऽऽच्छादयति तथैव एनम् अभि-च्छादय भूमे![7] ॥ ११ ॥

उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥ १२ ॥

उत्ऽश्वञ्चमाना । पृथिवी । सु । तिष्ठतु । सहस्रम् । मितः । उप । हि । श्रयन्ताम् ।
ते । गृहासः । घृतऽश्चुतः । भवन्तु । विश्वाहा । अस्मै । शरणाः । सन्तु । अत्र ॥ १२ ॥

उद्गीथ० पांसुभिः प्रच्छाद्योत्तरां[8] पठति ( तु. आगृ ४, ५, ७ )। उत्-श्वञ्चमाना ऊर्ध्वं गच्छन्ती अस्थिकुम्भमवष्टभ्यापीडयन्तीत्यर्थः। पृथिवी सु तिष्ठतु सुप्रतिष्ठिता भवतु। किञ्च पार्थिवाः पांसवः सहस्रम् मितः सहस्रमिति तृतीयार्थे प्रथमा। मित इति च बहुवचनस्य स्थाने एकवचनम्। सहस्रेण सम्मिताः बहुसङ्ख्यायुक्ता अनन्ता इत्यर्थः। उप हि श्रयन्ताम्। हि-निपातः पादपूरणोऽत्र। उपश्रयन्ताम् अस्थिकुम्भमाश्रयन्तु सम्परिवार्य तिष्ठन्तु इत्यर्थः। किञ्च ते पांसवः गृहासः अस्थिकुम्भस्य गृहभूताः घृतश्चुतः घृतस्योदकस्य सर्पिषो वा क्षारयितारः[9] भवन्तु[10] अस्थिकुम्भस्योपरि स्रवितारः भवन्त्वित्यर्थः[11]। किञ्च विश्वाहा सर्वदा अस्मै अस्यास्थिभूतस्य शरणाः सन्तु आश्रयभूता भवन्तु अत्र अस्मिँल्लोके ॥ १२ ॥

---

१. कर्त्रे° वि[2] अ[1]. २. मातृनाम् वि[2] अ[1]. ३. एवाम् वि[2] अ[1]. ४. निऋतेः मूको. ५-५. नास्ति मूको. ६. कृपा वि[2] अ[1]. ७. भूमेः मूको. ८. °तरामेनां वि[2]. ९. क्षरिता° वि[2]. १०. नास्ति मूको. ११. भवन्तु भव° मूको.

**वेङ्कट०** उत्थापयन्ती[1] पृथिवी[2] सु तिष्ठतु सहस्रम् बीजानि उप श्रयन्ताम् एनम्[3]। ते चास्मै गृहा भवन्तः मधुश्च्युतः सर्वदा अस्मै आश्रयभूताः भवन्तु अत्र ॥ १२ ॥

उत् ते॑ स्तभ्नामि पृथि॒वीं त्वत् परी॒मं लो॒गं नि॒दध॒न्मो अ॒हं रि॑षम् ।
ए॒तां स्थूणां॑ पि॒तरो॑ धारयन्तु॒ तेऽत्रा॑ य॒मः साद॑ना ते मिनोतु ॥ १३ ॥

उत् । ते॒ । स्त॒भ्ना॒मि॒ । पृ॒थि॒वीम् । त्वत् । परि॑ । इ॒मम् । लो॒गम् । नि॒ऽदध॑त् । मो इति॑ । अ॒हम् । रि॒षम् ।
ए॒ताम् । स्थूणा॑म् । पि॒तरः॑ । धा॒र॒य॒न्तु॒ । ते॒ । अत्र॑ । य॒मः । सद॑ना । ते॒ । मि॒नो॒तु॒ ॥ १३ ॥

**उद्गीथ०** अनयाऽस्थिकुम्भं कपालेनाऽपिदधाति ( तु. आगृ ४, ५, ८ )। ते तवास्थिकुम्भस्यापिधानत्वेन सम्बन्धिनीम् पृथिवीम् कपाललक्षणाम् उत् स्तभ्नामि "[4]ष्टभि स्कभि[4] प्रतिबन्धे"। प्रतिबध्नामि त्वत् परि षष्ठ्यर्थेऽत्र पञ्चमी। उपरिशब्दस्य च उकारलोपः। तवास्थिकुम्भस्य तवोपरि तव सम्बन्धिना कपालेन त्वामपिदधामीत्यर्थः। किञ्च इमम् लोगम्[5] लोष्टकपाललक्षणम्[6] निदधत् अस्थिकुम्भस्योपरि स्थापयन्[7] 'अहम् मो रिषम् मा हिंसि[8] केनचित्। किञ्च एताम् मया निहिताम् स्थूणाम् कपाललक्षणाम् पितरः प्रेता इतरे वा धारयन्तु निश्चलां कुर्वन्तु ते तवास्थिकुम्भस्य सम्बन्धिनीम्। किञ्च अत्र अस्यां भूमौ यमः पितृपतिः सदना द्वितीयैकवचनस्यायं छान्दस आकारः। सदनं स्थानं ते तवास्थिकुम्भस्य मिनोतु परिच्छिनत्तु अनुजानात्वित्यर्थः ॥ १३ ॥

**वेङ्कट०** कुम्भं कपालेनाऽपिदधाति[9] ( तु. आगृ ४,५,८ )। उपरि [10]स्तभ्नामि अधःस्थितस्य[10] तव कपालेन पृथिवीम्। [11]तवोपरि पृथिवीम्[11] तवोपरि इमम् लोगम्[12] लोष्टम्[13] निदधत्[14] मो अहम् रिषम्। एताम् पृथिव्या आस्तीर्णाम्[15] स्थूणाम्[16] पृथिव्या धारयित्रीम् पितरः धारयन्तु इति कपालाभिप्रायम्। अस्मिन् स्थाने तव [17]यमः स्थानानि[17] करोतु ॥ १३ ॥

प्र॒ती॒चीने॒ मामह॒नीष्वाः॑ प॒र्णमि॒वा द॑धुः ।
प्र॒तीचीं॑ जग्र॒भा वा॒चमश्वं॑ र॒शनया॑ यथा ॥ १४ ॥

प्र॒ती॒चीने॑ । माम् । अह॑नि । इष्वाः॑ । प॒र्णम्ऽइ॑व । आ । द॒धुः॒ ।
प्र॒तीची॑म् । ज॒ग्र॒भ॒ । वाच॑म् । अश्व॑म् । र॒शनया॑ । य॒था ॥ १४ ॥

**उद्गीथ०** प्रतीचीने प्रतिगते सम्प्राप्ते अहनि अस्थिसञ्चयनदिवसे माम् अस्थिकुम्भरूपं यजमानम् आ दधुः त्वयि भूमावाहितवन्तः पुत्रपौत्रादयोऽधिकृताः[18]। [19]किमिव आहितवन्तः[19]। इष्वाः

---

१. 'यन्निव वि[२] अ[१]. २. पृथ्वी वि[२] अ[१]. ३. एनाम् मूको. ४-४. स्तभि स्कभि वि[१,२]; स्कभि स्कुभि अ वि[१]. ५. लोहं मूको. ६. लोष्टकेपा° वि[१]. ७. स्थापयते मूको. ८-८. हिंसीमम मूको. ९. °नातिदधाति वि[२] अ[१]. १०-१०. ···तस्य वि[२] अ[१]. ११-११. तपो पृथिवीम् वि[२] अ[१]; नास्ति वि[१]. १२. लोहम् वि[२] अ[१]; नास्ति वि[१]. १३. लोष्ठम् मूको. १४. निषत् मूको. १५. °स्तूर्णाम् वि[१,२]; °व्यातीर्णाम् अ[१]. १६. नास्ति वि[२] अ[१]; स्थूणा वि[१]. १७-१७. यमस्थानानि वि[१]; यमन्थनानि वि[२] अ[१]. १८. °दयोधिताः मूको. १९-१९. किमिहामिहि° मूको.

पर्णम् इव यथा केचिदिषुकाराः इष्वाः सम्बन्धि पर्णं वाजाख्यं सुश्लिष्टम् इषावादधति[1], एवम्। एतज्ज्ञात्वा प्रतीचीम् त्वां प्रतिगतां प्रार्थनाद्वारेण त्वत्कर्णपथं प्राप्ताम् वाचम् प्रार्थनारूपाम् 'एषा त्वा पातु निर्ऋतेरुपस्थात्' (ऋ १०,१८,१०), 'उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना' (ऋ १०,१८,११) इत्यादिकाम् अधिकृतसत्काराम्[2] जग्रभ गृहाण। किमिव। अश्वम् रशनया रज्ज्वा यथा कश्चिद् गृह्णीयात् कर्तव्यत्वेन, मनसि कुर्वित्यर्थः।

अथवा मृतस्य पुत्रो ब्रवीति। प्रतीचीने प्रतिगते अद्याहनि मां मृतस्य पुत्रम् आदधुः श्मशानकर्मणि कर्तव्ये महताऽऽदरेण श्लिष्टमाहितवन्तः अधिकृतवन्तः[3] ऋत्विगादयः स्मृतिकारा[4] वा। किमिव आ दधुः। इष्वाः सम्बन्धि पर्णं वाजाख्यं यथा केचिदिषुकाराः पर्णं सुश्लिष्टम् इषावादधति[5], एवम्। एतज्ज्ञात्वा हे पृथिवि![6] प्रतीचीनम् प्रार्थनाद्वारेण त्वत्कर्णपथं प्राप्तां वाचम् प्रार्थनारूपाम् 'एषा त्वा पातु निर्ऋतेरुपस्थात्', 'उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः' इत्यादिकाम् जग्रभ गृहाण कर्तव्यत्वेन। किमिव। अश्वम् रशनया यथा कश्चिद् गृह्णाति, एवम्॥ १४॥

वेङ्कट० 'सञ्चयनमूर्ध्वं दशम्याः कृष्णपक्षस्य' (आगृ ४,५,१) इत्युक्तम्। अपचीयमानचन्द्रके[7] माम् अहनि समस्यन्तः[8] ते इष्वाः पर्णमिव आ दधुः। वाचम् च मदभिमुखीमिमां[9] जग्राह। मन्त्रेण संस्कृतो यथा समादाय स्वर्गं गच्छति, नत्ववधूय अवक्राम्यति अश्वम् रशनया यथा इति। 'छन्दांस्येनं मृत्युकाले त्यजन्ति[10] [11]नीडं शकुन्ता इव जातपक्षाः[11]' (वाध ६,१) इति स्मृतिः॥ १४॥

[12]इति सप्तमाष्टके षष्ठाध्याये अष्टाविंशो वर्गः[12]॥

व्याकरोत् षष्ठमध्यायं सप्तमस्याष्टकस्य सः[13]।
दुहिता भवगोलस्य सुन्दरी यमजीजनत्॥

इति वेङ्कटाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके षष्ठोऽध्यायः॥

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके षष्ठोऽध्यायः॥



---

१ °दधाति अ वि[1,2]. २. अधिकृत° मूको. ३. अधिगतवन्तः वि[1]. ४. स्तुतिकारा अ वि[3]. ५. °दधाति अ वि[3]. ६ पृथिवी मूको. ७. °कै मूको. ८. मायस्यान्त वि[2] अ[1]; मसस्यन्त वि[1]. ९. °खीमदं वि[2] अ[1]; °खीमहं वि[1]. १०. °न्ते मूको. ११-११. नीळं…तपक्षा वि[2] अ[1]. १२-१२. नास्ति मूको. १३. वद वि[2]; यः अ[1].

अथ सप्तमोऽध्यायः ।

वेङ्कट०

'नि वर्तध्वं मानु गात' व्याचिख्यासति माधवः ।
[1]वस्वादिषु प्रवक्तव्यम्[1] आदितः सम्प्रदर्शयन् ॥ १ ॥

वसवो रुद्रा आदित्याः शाट्यायनकदर्शिताः[2] ।
[3]पृच्छते याज्ञवल्क्येन[3] शाकल्याय महर्षये ॥ २ ॥

अत्र शाट्यायनकम्--'कतमे[4] वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः। एतेषु हीदं सर्वं वसु हितमिति। तस्माद्वसव इति। कतमे रुद्रा इति। दश पुरुषे प्राणा इति होवाच। आत्मैकादशः ते यदोत्क्रामन्तो यन्ति अथ रोदयन्ति। तस्माद् रुद्रा इति। कतम आदित्या इति। द्वादश मासाः संवत्सर इति होवाच' (जैब्रा २,७७ [तु. माश ११, ६, ३, ६-८ प्रभृ.]) इति।

प्रोवाच बृहदारण्ये शाकल्यायैव पृच्छते ।
वसून् अयं याज्ञवल्क्यस्तदथ ब्राह्मणं शृणु ॥ ३ ॥

'कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चाऽन्तरिक्षं चाऽऽदित्यश्च [5]द्यौश्च चन्द्रमाश्च[5] नक्षत्राणि चैते[6] वसवः' (माश ११,६,३,६) इत्यादिकं वाजसनेयिभ्यः श्रोतव्यमिति।

अरुणैर्नाम ऋषिभिर्वसवोऽन्ये[7] प्रदर्शिताः[8] ।
अग्निश्च जातवेदाश्च पठिता नामभिश्च ते ॥ ४ ॥

रुद्रानपि पठन्त्यन्यान्[9] अरुणा गणशः स्थितान् ।
ज्ञेयास्ते प्रभ्राजमाना[10] अरुणप्रक्रमक्रमात् ॥ ५ ॥

ये वा केचन सन्त्येते[11] क एतेषां समन्वयः ।
क्रमेण सवनेषूक्तो [12]विविधैर्ब्राह्मणैः सह[12] ॥ ६ ॥

ग्रहैरिन्द्रादयोऽस्माभिरिज्यन्ते गृहदेवताः ।
अन्येषु चेज्यमानेषु कथं वस्वादयो गताः ॥ ७ ॥

वसुरुद्रादितिसुता इन्द्रेण सह सङ्गताः ।
देवता तद्विशिष्टेन्द्रः सवनानां प्रदर्शितः ॥ ८ ॥

वस्वादयश्च बहुभिरन्यैर्देवैः समन्विताः ।
अग्निवाय्वादयस्तेषु प्रधाना इति निर्णयः ॥ ९ ॥

---

१-१. पस्वादिषु वक्त वि[2]; पवस्वादिषु वक्त° अ[1]; वस्वादिष्विह वक्त° वेंकअ. २. °ता वि[2] अ[1]. ३-३. पृच्छते···वि[2] अ[1]. ४. °मे ते वि[1]. ५-५. °द्यौश्चन्द्रमा मूको. ६. नास्ति वि[1]. ७ महर्षिभिर्वसवोतन्य वि[2] अ[1]. ८. °ता वि[2] अ[1]. ९. °न्याद वि[2] अ[1]. १०. भ्राज° वि[2] अ[1]. ११. सञ्वेते वि[2] अ[1]; सन्त्वेते वि[1]. १२-१२. °णैरिह वेंकअ.

'त्रीणि शता त्री सहस्राणि'[1] बहवो हि प्रदर्शिताः ।
इन्द्रद्वारेण सर्वे च ते यज्ञेषु समन्विताः ॥ १० ॥

प्रतिलोकं स्थितान् ब्रूते 'ये देवासो दिवी (वि[2] इ)त्यृषिः ।
तेषु कः प्रथमो वर्गो मध्यमः[3] कः क[4] उत्तमः[5] ॥ ११ ॥

एवंविधेषु मन्त्रेषु क्रियाकारकबोधनम् ।
शक्यतेऽनृषिभिः कर्तुं न विविच्य प्रदर्शनम् ॥ १२ ॥

बहूनामिह मन्त्राणां क्रियाकारकदर्शनात् ।
भवत्यर्थोऽपि विस्पष्टः प्रयोक्तुरिव सन्निधौ ॥ १३ ॥

अथ सङ्ख्यासमुद्देशे भूयान् भवति संशयः ।
ब्राह्मणानि प्रमाणानि [6]तदर्थेष्विति निर्णयः[6] ॥ १४ ॥

[7]एवं च कथितेऽप्यर्थे नानादिग्भ्यः समागताः ।
पठन्ति चेद् ब्राह्मणानि तत एव विनिर्णयः[7] ॥ १५ ॥

पठिता देवताध्याये त्रिषु स्थानेषु देवताः ।
विद्यन्ते[8] स्तुतयो यासां ता एता यास्कदर्शिताः ॥ १६ ॥

केचिद् वस्वादयस्तेषु ये प्राग्ब्राह्मणदर्शिताः ।
प्रजापतिश्चाश्विनौ च[9] बहिर्भूता इति स्थितिः ॥ १७ ॥

'अष्टौ वसवः' इत्युक्त्वा यदेतावत्त्वकीर्तनम् ।
तत्तु [10]वस्वादिबाहुल्याद् उपेक्ष्यान्यत्[†][10] कृतं विदुः ॥ १८ ॥

'अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या एतावन्तो वै देवाः' ( तु. माश ४, ५, ७, २ )
॥
इति क्र. .मेति ॥

[ १९ ]

[11]मथितो यामायनः, भृगुर्वारुणिर्वा, भार्गवश्च्यवनो वा ऋषिः । आपो गावो वा देवता, प्रथमाया उत्तरार्धस्य अग्नीषोमौ । अनुष्टुप् छन्दः, षष्ठी गायत्री[11] ।

नि व॑र्तध्वं॒ मानु॑ गाता॒ऽस्मान्त्सि॑षक्त रेवतीः ।
अग्नी॑षोमा पुनर्वसू अ॒स्मे धा॑रयतं र॒यिम् ॥ १ ॥

---

१. ऋ ३,९,९. २. ऋ १,१३९,११. ३. °म वि[२] अ[१]. ४. द्र वि[२]; न्द्र अ[१]. ५. उच्यते अ[१]. ६-६. तत एव विनि° वि[२] अ[१]. ७-७. नास्ति वि[२] अ[१]. ८. भिद्य° वि[१]. ९. नास्ति वि[२]. १०-१०. °ल्यस्योपेक्षार्थं वेंकम. † °क्ष्यन्यात् वि[२] अ[१]. ११-११. नास्ति मूको.

नि । वर्तध्वम् । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः ।
अग्नीषोमा । पुनर्वसू इति पुनःऽवसू । अस्मे इति । धारयतम् । रयिम् ॥ १ ॥

**उद्गीथ०** 'उत्तरं सूक्तम्[1] 'नि वर्तध्वम्' इत्यष्टर्चं गोदेवतम् अब्देवतं वा भृगुर्वारुणिर्भार्गवश्च्यवनो वा यामायनो वा मथितो ददर्श ।

हे गावः! आपः! वा यूयम् अन्यतो गच्छन्त्यः नि वर्तध्वम् अस्मान् प्रति। मा अनु गात अस्मत्तोऽन्यं[2] पुरुषम्। एतन्मयोक्तं श्रुत्वा अस्मान् एव सिषक्त वाहनदोहनस्नानपानादिद्वारेण सेवत हे रेवतीः! व्रीह्यादिधनेन धनवत्यः!। व्रीह्यादिधनसहिताः सेवध्वमित्यर्थः। हे अग्नीषोमा! पुनर्वसू! पुनःपुनर्वस्तारौ! स्तोतॄणां यष्टॄणाञ्च आच्छादयितारौ! युवामपि अस्मे अस्मासु धारयतम् स्थापयतम् रयिम् धनं गोलक्षणम् अब्लक्षणं वा। व्रीह्यादिधनसहितमिति सामर्थ्यात् पूर्ववद्योज्यम्। एवम् अत्रार्धर्चे बृहद्देवताकाराभिप्रायेण अग्नीषोमयोः गुणभावः प्रधानभावो वा कल्प्यः (तु. बृदे ७,२०) ॥ १ ॥

**वेङ्कट०** यामायनो मथितः। तम् आशौचात्[3] परित्यक्तनित्यनैमित्तिकं परित्यज्याऽऽपः[4] पशवो वाऽक्रामन्[5]। स एतेन[6] सूक्तेन पुनराह्वयति[7]। नि वर्तध्वम् मा अनुक्रमेण गच्छत, अस्मान् सेवध्वम् पशुमत्यः![8] धनवत्यः! वा। हे अग्नीषोमौ![9] पुनर्वसू! यौ अपक्रान्तं वसु पुनः पुरुषाय नियच्छथः, [10]तौ अस्मासु[10] धारयतम् रयिम् ॥ १ ॥

पुनरेना नि वर्तय पुनरेना न्या कुरु । इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु ॥२॥

पुनः । एनाः । नि । वर्तय । पुनः । एनाः । नि । आ । कुरु ।
इन्द्रः । एनाः । नि । यच्छतु । अग्निः । एनाः । उपऽआजतु ॥ २ ॥

**उद्गीथ०** आत्मनैवात्मानं सम्प्रेषयति। हे मदीयान्तरात्मन्! अन्यतो गच्छन्तीः एनाः गाः अपो वा वृष्टिलक्षणाः पुनः नि वर्तय मदभिमुखीः कुरु। निवर्त्य च पुनः एनाः नि आ कुरु नियताः कुरु आत्मायत्ताः कुरु। इन्द्रः च तव सहायभूतः एनाः नि यच्छतु त्वदायत्ताः करोतु। अग्निः च एनाः उपाजतु उपगमयतु उपक्षिपतु[11] वा, उपयोग्याः करोत्वित्यर्थः ॥ २ ॥

**वेङ्कट०** एनाः[12] अपक्रमिताः[13] पुनः एव[14] नि वर्तय इन्द्र!। पुनः एनाः[15] त्वं च अग्ने! अस्मासु

---

१-१. नास्ति अ[1]. २. स्वते नान्यं मूको. ३. अशौचात् वि[1]. ४. °त्यजाव वि[2] अ[1]; °त्यजापः वि[3]. ५. °क्रमत वि[2] अ[1]; °क्रामत् वि[3]. ६. ते वि[2] अ[1]. ७. °यन्ति वि[2] अ[1]. ८. पशुमन्यो मूको. ९. यावत् वि[1]. १०-१०. तावद् वि[1]; °ता…व° वि[2]…व° अ[1]. ११. उपक्षिपयतु वि[1,2]. १२. पुनः एनाः मूको. १३. अवक्रान्ता वि[2] अ[1]; अपक्रमिता वि[3]. १४. एना वि[1]. १५. नास्ति वि[2] अ[1]

'त्रीणि शता त्री सहस्रा०'[1] बहवो हि प्रदर्शिताः ।
इन्द्रद्वारेण सर्वे च ते यज्ञेषु समन्विताः ॥ १० ॥

प्रतिलोकं स्थितान् ब्रूते 'ये देवासो दिवी (वि[2] इ) त्यृषिः ।
तेषु कः प्रथमो वर्गो मध्यमः[3] कः क[4] उत्तमः[5] ॥ ११ ॥

एवंविधेषु मन्त्रेषु क्रियाकारकबोधनम् ।
शक्यतेऽनृषिभिः कर्तुं न विविच्य प्रदर्शनम् ॥ १२ ॥

बहूनामिह मन्त्राणां क्रियाकारकदर्शनात् ।
भवत्यर्थोऽपि विस्पष्टः प्रयोक्तुरिव सन्निधौ ॥ १३ ॥

अथ सङ्ख्यासमुद्देशे भूयान् भवति संशयः ।
ब्राह्मणानि प्रमाणानि [6]तदर्थेष्विति निर्णयः[6] ॥ १४ ॥

[7]एवं च कथितेऽप्यर्थे नानादिग्भ्यः समागताः ।
पठन्ति चेद् ब्राह्मणानि तत एव विनिर्णयः[7] ॥ १५ ॥

पठिता देवताध्याये त्रिषु स्थानेषु देवताः ।
विद्यन्ते[8] स्तुतयो यासां ता एता यास्कदर्शिताः ॥ १६ ॥

केचिद् वस्वादयस्तेषु ये प्राग्ब्राह्मणदर्शिताः ।
प्रजापतिश्चाश्विनौ च[9] बहिर्भूता इति स्थितिः ॥ १७ ॥

'अष्टौ वसवः' इत्युक्त्वा यदेतावत्त्वकीर्तनम् ।
तत्तु [10]वस्वादिबाहुल्याद् उपेक्ष्यान्यत्[10]† कृतं विदुः ॥ १८ ॥

'अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या एतावन्तो वै देवाः' ( तु. माश ४, ५, ७, २ )

॥

इति कृ . मेति ॥

[ १९ ]

[11]मथितो यामायनः, भृगुर्वारुणिर्वा, भार्गवश्च्यवनो वा ऋषिः । आपो गावो वा देवता, प्रथमाया उत्तरार्धस्य अग्नीषोमौ । अनुष्टुप् छन्दः, षष्ठी गायत्री[11] ।

नि व॑र्तध्वं॒ मानु॑ गाता॒ऽस्मान्त्सि॑षक्त रेवतीः ।
अग्नी॑षोमा पुनर्वसू अ॒स्मे धा॑रयतं र॒यिम् ॥ १ ॥

---

१. ऋ ३,९,९. २. ऋ १,१३९,११. ३. °म वि[2] अ[1]. ४. द्र वि[2]; न्द्र अ[1]. ५. उच्यते अ[1]. ६-६. तत एव विनि° वि[2] अ[1]. ७-७. नास्ति वि[2] अ[1]. ८. मिद्य° वि[1]. ९. नास्ति वि[2]. १०-१०. °ल्यस्योपेक्षार्थं वेंऋअ. † °क्ष्यन्यात् वि[2] अ[1]. ११-११. नास्ति मूको.

नि । वर्तध्वम् । मा । अनु । गात । अस्मान् । सिसक्त । रेवतीः ।
अग्नीषोमा । पुनर्वसू इति पुनःऽवसू । अस्मे इति । धारयतम् । रयिम् ॥ १ ॥

**उद्गीथ०** 'उत्तरं सूक्तम्'[1] 'नि वर्तध्वम्' इत्यष्टर्चं गोदेवतम् अब्देवतं वा भृगुर्वारुणिर्भार्गवश्च्यवनो वा यामायनो वा मथितो ददर्श।

हे गावः! आपः! वा यूयम् अन्यतो गच्छन्त्यः नि वर्तध्वम् अस्मान् प्रति। मा अनु गात अस्मत्तोऽन्यं[2] पुरुषम्। एतन्मयोक्तं श्रुत्वा अस्मान् एव सिषक्त वाहनदोहनस्नानपानादिद्वारेण सेवत हे रेवतीः! व्रीह्यादिधनेन धनवत्यः!। व्रीह्यादिधनसहिताः सेवध्वमित्यर्थः। हे अग्नीषोमा! पुनर्वसू! पुनःपुनर्वस्तारौ! स्तोतॄणां यष्टॄणाञ्च आच्छादयितारौ! युवामपि अस्मे अस्मासु धारयतम् स्थापयतम् रयिम् धनं गोलक्षणम् अब्लक्षणं वा। व्रीह्यादिधनसहितमिति सामर्थ्यात् पूर्ववद्योज्यम्। एवम् अत्रार्धर्चे बृहद्देवताकाराभिप्रायेण अग्नीषोमयोः गुणभावः प्रधानभावो वा कल्प्यः (तु. बृदे ७,२०) ॥ १ ॥

**वेङ्कट०** यामायनो मथितः। तम् आशौचात्[3] परित्यक्तनित्यनैमित्तिकं परित्यज्याऽऽपः[4] पशवो वाऽक्रामन्[5]। स एतेन[6] सूक्तेन पुनराह्वयति[7]। नि वर्तध्वम् मा अनुक्रमेण गच्छत, अस्मान् सेवध्वम् पशुमत्यः![8] धनवत्यः! वा। हे अग्नीषोमौ![9] पुनर्वसू! यौ अपक्रान्तं वसु पुनः पुरुषाय नियच्छथः, [10]तौ अस्मासु[10] धारयतम् रयिम् ॥ १ ॥

पुनरेना नि वर्तय पुनरेना न्या कुरु। इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु ॥२॥

पुनः। एनाः। नि। वर्तय। पुनः। एनाः। नि। आ। कुरु।
इन्द्रः। एनाः। नि। यच्छतु। अग्निः। एनाः। उपऽआजतु ॥ २ ॥

**उद्गीथ०** आत्मनैवात्मानं सम्प्रेषयति। हे मदीयान्तरात्मन्! अन्यतो गच्छन्तीः एनाः गाः अपो वा वृष्टिलक्षणाः पुनः नि वर्तय मदभिमुखीः कुरु। निवर्त्य च पुनः एनाः नि आ कुरु नियताः कुरु आत्मायत्ताः कुरु। इन्द्रः च तव सहायभूतः एनाः नि यच्छतु त्वदायत्ताः करोतु। अग्निः च एनाः उपाजतु उपगमयतु उपक्षिपतु[11] वा, उपयोग्याः करोत्वित्यर्थः ॥ २ ॥

**वेङ्कट०** एनाः[12] अपक्रमिताः[13] पुनः एव[14] नि वर्तय इन्द्र!। पुनः एनाः[15] त्वं च अग्ने! अस्मासु

---

१-१. नास्ति अ[१]. २. स्वते नान्यं मूको. ३. अशौचात् वि[१]. ४. °त्यजाव वि[२] अ[३]; °त्यजापः वि[१]. ५. °क्रमत् वि[२] अ[१]; °क्रामत् वि[१]. ६. ते वि[२] अ[१]. ७. °यन्ति वि[२] अ[१]. ८. पशुमन्यो मूको. ९. यावत् वि[१]. १०-१०. तावद् वि[१]; °ता…व° वि[२]…व° अ[१]. ११. उपक्षिपयतु वि[१,२]. १२ पुनः एनाः मूको. १३. अवक्रान्ता वि[२] अ[१]; अपक्रमिता वि[१]. १४. एना वि[१]. १५. नास्ति वि[२] अ[१]

[1]नि आ कुरु[1]। अथ परोक्षमाह— इन्द्रः एनाः अस्मासु नि यच्छतु। तदर्थम् अग्निः एनाः गच्छन्तीः दण्डादिना उपाजतु ॥ २ ॥

पुन॑रे॒ता नि व॑र्त॒न्ताम॒स्मिन् पु॑ष्यन्तु॒ गोप॑तौ ।
इ॒हैवाग्ने॒ नि धा॑रये॒ह ति॑ष्ठतु॒ या र॒यिः ॥ ३ ॥

पुनः॑ । ए॒ताः । नि । व॒र्त॒न्ता॒म् । अ॒स्मिन् । पु॒ष्य॒न्तु॒ । गोऽप॑तौ ।
इ॒ह । ए॒व । अ॒ग्ने॒ । नि । धा॒र॒य॒ । इ॒ह । ति॒ष्ठ॒तु॒ । या । र॒यिः ॥ ३ ॥

**उद्गीथ०** पुनः एताः **मां प्रति** नि वर्तन्ताम्, **मम भवन्त्वित्यर्थः। भूत्वा च** अस्मिन् **मयि** गोपतौ **गवां साज्ञादिमतीनाम् अपां वा वृष्टिलक्षणानां स्वामिनि स्वत्वेन स्थित्वा नित्यम्** पुष्यन्तु **पुष्टा भवन्तु। पुष्टाश्च सतीः** इह एव **अस्मिन्नेव मयि गोपतौ** हे अग्ने! नि धारय **नियमेन स्थापय।** इह एव **मयि गोपतौ** या रयिः **यदपि धनं व्रीह्यादिकं चापि[2] गोसहितं** तिष्ठतु ॥ ३ ॥

**वेङ्कट०** पुनः एताः नि वर्तन्ताम्, **निवृत्ताः च** अस्मिन् गोपतौ **भवन्तु पुष्टाः।** इह एव **अग्ने! रयिम्[3]** नि धारय। इह तिष्ठतु या रयिः ॥ ३ ॥

यन्नि॒यानं॒ न्यय॑नं सं॒ज्ञानं॒ यत् प॒राय॑णम् ।
आ॒वर्त॑नं नि॒वर्त॑नं॒ यो गो॒पा अपि॒ तं हु॑वे ॥ ४ ॥

यत् । नि॒ऽयान॑म् । नि॒ऽअय॑नम् । स॒म्ऽज्ञान॑म् । यत् । प॒रा॒ऽअय॑नम् ।
आ॒ऽव॒र्त॑नम् । नि॒ऽव॒र्त॑नम् । यः । गो॒पाः । अपि॑ । तम् । हु॒वे॒ ॥ ४ ॥

**उद्गीथ०** [4]यत् नियानम्[4] **गवां** नियानं **नियमेन यान्त्यत्रेति** नियानं **स्थानं गोष्ठाख्यम्। यच्छब्दयोगात् तच्छब्दोऽध्याहार्यः। हुव इति च क्रियापदं सर्वतोऽनुषक्तव्यम्।** तदपि हुवे **आह्वयामि। आह्वानमभिमुखीकरणम्[5]। तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते। गोसहितं प्रार्थय इत्यर्थः।** न्ययनम् **यदपि गवां चरित्रे गतानां नियमेन गृहप्राप्तिलक्षणं** तदपि **प्रार्थये। यदपि गवाम्** [6]संज्ञानम् **सम्यग् ज्ञायतेऽनेनेति संज्ञानम् शबलादिचिह्नं नाम वा** तदपि **प्रार्थये।** यत् **अपि गवाम्** परायणम् **परागमनं चरित्रे वनं प्रति गमनं** तदपि **प्रार्थये। यदपि गवाम्** आवर्तनम् **वनं चरितुम् इतश्चेतश्च प्रवर्तनं** तदपि **प्रार्थये। यदपि गवां[6] चरित्वा** गृहान् **प्रति** निवर्तनम् **तदपि प्रार्थये।** यः **अपि** गोपाः **गोपालकः,** तम् **अपि** हुवे **प्रार्थये। सर्वगुणोपेता गाः प्रार्थय इत्यर्थः** ॥ ४ ॥

---

१-१. न्यक्कुरु वि[1] अ[1]; न्यकुरु वि[3]. २. चवि वि[2,3]. ३. नास्ति वि[1]. ४-४. नास्ति वि[2,3]. ५. °मुखकर° वि[2,3]. ६-६. नास्ति अ[1].

वेङ्कट० यत्र नियान्ति[1] तत्[2] नियानम् पन्थाः[3]। यत्र नियन्ति तत्[4] न्ययनम्[5] अरण्यम्। तस्मिन् यत्र सङ्गच्छन्ते इतरेतरं जानन्तः तत् संज्ञानम्। अथ ततः चरणार्थं यत्र पराचीना यन्ति तत् परायणम्। चरित्वा यत आवर्तन्ते तत् आवर्तनम्। आवृत्ता यस्मिन् गोपा अभिगच्छन्ति तत् निवर्तनम्। एवंविधेभ्यो बहुभ्यः स्थानेभ्यः गा आ हुवे। यः चाऽऽसां गवाम् गोपाः तम् अपि[6] ह्वयामि इति ॥ ४ ॥

य उदानड् व्ययनं य उदानट् परायणम्।
आवर्तनं निवर्तनमपि गोपा नि वर्तताम् ॥ ५ ॥

यः। उत्ऽआनट्। विऽअयनम्। यः। उत्ऽआनट्। पराऽअयनम्।
आऽवर्तनम्। निऽवर्तनम्। अपि। गोपाः। नि। वर्तताम् ॥ ५ ॥

उद्गीथ० यः गोपाः उदानट् व्याप्नोति व्ययनम् विविधगमनम्[7] गवां नष्टानाम् अन्वेषणार्थम् इतश्चेतश्च भ्रमणमित्यर्थः। यः च गोपालः उदानट् व्याप्नोति अनुभवति। किम्। परायणम् परागमनम् गोभिः सहाटवीं[8] प्रति चारणाय गमनमित्यर्थः। यश्च गोपालः आवर्तनम् अनुभवति गोभिश्चरन्तीभिश्चेतश्चेतश्च[9] भ्रमणमित्यर्थः। यश्चाटवीतो[10] गोभिः सहितो[11] गृहान् प्रति निवर्तनम् अनुभवति, सः अपि गोपाः गोपालो गोभिः सहितो[12] गृहान् प्रति नि वर्तताम् क्षेमेणाऽऽगच्छत्वित्यर्थः ॥ ५ ॥

वेङ्कट० यतो विविधं गच्छन्ति तत् व्ययनम्[13]। यः[14] गोपा एतानि स्थानानि उद्व्याप्नोति[15], सः गोपाः गोभिः सह अपि[16] नि वर्तताम् ॥ ५ ॥

आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि। जीवाभिर्भुनजामहै ॥ ६ ॥

आ। निऽवर्त। नि। वर्तय। पुनः। नः। इन्द्र। गाः। देहि। जीवाभिः। भुनजामहै ॥ ६ ॥

उद्गीथ० आ निवर्त आ[17] इति अर्वागित्यर्थे। अर्वाग् अस्मदभिमुखं निवर्तस्व(?)[18] त्वं हे इन्द्र!, अस्मदभिमुखो भवेत्यर्थः। भूत्वा चान्यतो गच्छन्तीः नि वर्तय अस्मदभिमुखीः कुरु। कृत्वा च पुनः पश्चात् नः अस्मभ्यम् हे इन्द्र! गाः देहि त्वम्। दत्ताभिश्च गोभिः जीवाभिः चिरञ्जीविनीभिः[19] सर्वञ्जीवयन्तीभिर्वा[20] भुनजामहै देवपितृमनुष्यान् अस्मांश्च सम्भोजयेम। सम्पुष्णीमेत्याशास्महे ॥ ६ ॥

---

१. °याति वि[१]. २. तं वि[१] अ[१]. ३. पन्थानम् वि[१] अ[१]. ४. तस्य वि[१] अ[१]. ५. °यम् वि[१] अ[१]. ६. आ वि[१]. ७. विविध…न मूको. ८. °हार्मत्री मूको. ९. °भिरिनश्चे वि[१,२]. १०. °श्चार्भवी° मूको. ११. सह अ वि[१]; सहतो वि[१,२]. १२. सहतो मूको. १३. ह्य° मूको. १४. नास्ति वि[२]. १५. यद्व्या° वि[१] अ[१]. १६. अवि मूको. १७. नास्ति मूको. १८. क्रिप. इति चिन्त्यम् (तु वैप १,१८३१ p). १९. °ञ्जीविभिः वि[१,२,३]; °ञ्जीवाभिः अ. २०. °यन्तीर्वा वि[१,२].

**वेङ्कट०** यो निवर्तयति स [1]निवर्तः। आ[1] नि वर्तय हे निवर्त! अपगच्छन्तीः गाः[2]। पुनः अस्मभ्यम्[3] इन्द्र! गाः देहि। जीवाभिः गोभिः इन्द्र! भुनजामहै ॥ ६ ॥

परि॑ वो वि॒श्वतो॑ दध ऊ॒र्जा घृ॒तेन॒ पय॑सा ।
ये दे॒वाः के च॑ य॒ज्ञिया॒स्ते र॒य्या सं सृ॑जन्तु नः ॥ ७ ॥

परि॑ । वः॒ । वि॒श्वतः॑ । द॒धे॒ । ऊ॒र्जा । घृ॒तेन॑ । पय॑सा ।
ये । दे॒वाः । के । च॒ । य॒ज्ञियाः॑ । ते । र॒य्या । सम् । सृ॒ज॒न्तु॒ । न॒ः ॥ ७ ॥

**उद्गीथ०** वः युष्माकं गवां सम्बन्धिना ऊर्जा अन्नेन हविर्लक्षणेन घृतेन च[4] पयसा च क्षीरेण च विश्वतः विश्वान् सर्वान् देवपितृमनुष्यान्[5] परि दधे सन्धारयामि पुष्णामि, नात्मानमेव केवलम्। एतज्ज्ञात्वा ये के च देवाः यज्ञियाः यज्ञसंवाहाः[6], ते रय्या धनेन गोलक्षणेन सम् सृजन्तु संयोजयन्तु नः अस्मान्। अनुग्रहबुद्ध्या स्वयमुपनमन्तीषु गोषु व्याघातं मा कार्षुरित्यर्थः ॥ ७ ॥

**वेङ्कट०** हे[7] देवाः! युष्मान् अहम् विश्वतः परि दधे दध्ना घृतेन पयसा च[8]। ये के-चन भवन्ति यज्ञार्हाः देवाः, ते अस्मान् रय्या सम् सृजन्तु ॥ ७ ॥

आ नि॑वर्तन वर्तय॒ नि नि॑वर्तन वर्तय ।
भूम्या॒श्चत॑स्रः प्र॒दिश॒स्ताभ्य॑ ए॒ना नि व॑र्तय ॥ ८ ॥

आ । नि॒ऽव॒र्त॒न॒ । व॒र्त॒य॒ । नि । नि॒ऽव॒र्त॒न॒ । व॒र्त॒य॒ ।
भूम्याः॑ । चत॑स्रः । प्र॒ऽदिशः॑ । ताभ्यः॑ । ए॒नाः । नि । व॒र्त॒य॒ ॥ ८ ॥

**उद्गीथ०** आ-कारो वर्तयेत्यनेनाख्यातेन सम्बन्धयितव्यः। हे [9]मदीयकर्मात्मन्! अभिमुखम्[9] आ वर्तय गाः स्तुत्या यागेन च प्रसाद्योपनामयेत्यर्थः। यूयमपि हे गावः! प्रसाद्यमानाः निवर्तन[10] निवर्तध्वम्(?) प्रसद्योपनमतेत्यर्थः[11]। किं च उपगम्य पश्चात् गोपाऽऽलम्भनकर्मक्षयाद् अपगच्छन्तीर्गाः पुनरपि स्तुत्या यागेन च प्रसाद्य निवर्तय। अनिवर्तमानाश्च यूयमपि हे गावः! निवर्तन निवर्तध्वम्(?) पुनरपि प्रसद्योपनमतेत्यर्थः[11]। कुतो निवर्तयामि निवर्तामहे चेति पृष्टे उच्यते—भूम्याः पृथिव्याः सम्बन्धिन्यो याः चतस्रः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः ताभ्यः दिग्भ्यः एनाः गाः सर्वदिक्काः नि वर्तय। निवर्तध्वं[12] यूयमिति सामर्थ्यादध्याहार्यम्[13]। अब्देवतापक्षेऽपि सूक्तार्थो यथा घटते, तथा योजना कर्तव्या ॥ ८ ॥

---

१-१. नास्ति वि[2] अ[1]. २. त्रुटितम् वि[2] अ[1]; नास्ति वि[1]. ३. °भ्य वि[2] अ[1]. ४. नास्ति अ. ५. देवमनुष्यपितॄन् अ वि[1]. ६. संर्हाः वि[1]; संपर्हाः वि[3]. ७. नास्ति वि[2] अ[1]. ८. नास्ति वि[1]. ९-९. °कर्मात्माभिमु° मूको. १०. निवर्तनं निवर्तनं अ वि[1]; निवर्तनं वि[2,3]. ११. प्रसाद्यो° मूको. १२. निवर्तयध्वं अ वि[1,3]. १३. सामान्यादध्याहार्यम् अ वि[2].

**वेङ्कट०** सा एषा निगदव्याख्याता। इन्द्रो निवर्तन इति ॥ ८ ॥

[1]इति सप्तमाष्टके सप्तमाध्याये प्रथमो वर्गः[1] ॥

[ २० ]

[1]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद् वा ऋषिः। अग्निर्देवता। गायत्री छन्दः, प्रथमा एकपदा विराट्, द्वितीया अनुष्टुप्, नवमी विराट्, दशमी त्रिष्टुप्[1]।

**भद्रं नो अपि वातय मनः ॥ १ ॥**

भद्रम्। नः। अपि। वातय। मनः ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'भद्रं नः' इति दशाक्षरमेकपादयुक्तं शान्त्यर्थं मनोदेवतम्। शान्तिकर्म देवः, प्रजापतिर्वा[2]। ऐन्द्रः प्राजापत्यो वा विमदो ददर्श। अनेन सूक्तेन शान्त्यर्थं यत्कर्म क्रियते जपलक्षणं होमलक्षणं वा तदुच्यते। हे शान्तिकर्म! प्रजापते! वा भद्रम् कल्याणम् अनर्थशान्तिलक्षणं धर्मार्थकामादिलक्षणं च नः अस्माकं सम्बन्धि मनः मनसाऽत्र मनआदिसर्वकरणानाम् अधिष्ठाता भोक्तृपुरुषो लक्ष्यते तस्य सुखदुःखफलसम्बन्धात्। मनआदिसर्वकरणानाम् अधिष्ठातारं सुखदुःखफलस्य भोक्तारं पुरुषमित्यर्थः। अपि वातय अपिरत्र धात्वर्थानुवादी। गमय प्रापयेत्यर्थः ॥ १ ॥

इति वनवासीविनिर्गताचार्यस्य उद्गीथस्य कृता ऋग्वेदभाष्ये चतुष्पञ्चाशोऽध्यायः समाप्तः ॥

सूक्तं समाप्तम्[3] ॥

**वेङ्कट०** विमद ऐन्द्रः। भद्रम् अस्माकम् आगमय[4] मनः। अग्निं तुष्टूवुः[5] प्रार्थयते। आग्नेयम् इदं[6] सूक्तमिति ॥ १ ॥

**अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुम्।**
**यस्य धर्मन्त्स्वरेनीः सपर्यन्ति मातुरूधः ॥ २ ॥**

अग्निम्। ईळे। भुजाम्। यविष्ठम्। शासा। मित्रम्। दुःऽधरीतुम्।
यस्य। धर्मन्। स्वः। एनीः। सपर्यन्ति। मातुः। ऊधः ॥ २ ॥

**उद्गीथ०** उत्तरं[7] सूक्तमाग्नेयम् ऐन्द्रः प्राजापत्यो वा विमदो ददर्श। अग्निम् अहम् ईळे 'ईड स्तुतौ'। स्तौमि। कीदृशम्। भुजाम् हविर्भुजां देवानां मध्ये यविष्ठम् युवतमम्, अग्निहोत्रादिकर्मार्थम् अहन्यहनि जायमानत्वाद् अतिशयेन युवानमित्यर्थः। अथवा भुजां भोक्तव्यानामाहुतीनां मिश्रयितृतमम्, इतरेषां देवानां तन्मुखत्वाद् अतिशयेनाऽत्तारमित्यर्थः[8]। शासा अनुशासनेन हेतुना मित्रम् यस्मात् इदं कर्तव्यमिदं न कर्तव्यमिति सर्वमनुशास्ति तस्मात् सर्वस्य स्निग्धभूतश्चेत्यर्थः। दुर्धरीतुम् दुर्धरं च दुर्निवारं शत्रुभिर्युद्धकाले। अथवा ग्रामदाहे वनदाहे च। किञ्च यस्य अग्नेः सम्बन्धिनि धर्मन् कर्मणि अग्निहोत्रादिके स्वः सर्वदेवजातं

---

१-१. नास्ति मूको. २. °र्वा। अपि वातयेति मूको. ३. इतोऽग्रे उद्गीथाचार्याभिमता सूक्तसंख्या एकाधिका द्र. ४. °यति वि[2] अ[1]. ५. तुष्टुवुः वि[1,2]; तुष्टुवुः अ[1]. ६. नास्ति वि[1,2]. ७. आग्नेयमैन्द्रमिति सूक्तम् उत्त° अ ८. तं दुःखत्वाद° मूको.

दिवम् आदित्यं वा एनीः देवान् प्रतिगच्छन्त्य आहुतयः सपर्यन्ति स्थितिकरणद्वारेण परिचरन्ति सेवन्ते। अथवा स्वः सपर्यन्तीत्यनयोः[1] सामानाधिकरण्यम्। स्वरिति चायमत्र सर्वपर्यायो निपातः। स्वः सर्वे देवाः एनीः आत्मानं प्रतिगरणाय गन्त्रीराहुतीः[2] स्तुतीश्च सपर्यन्ति परिचरन्ति सेवन्ते, उपजीवन्तीत्यर्थः। किमिव। मातुः ऊधः लुप्तोपममेतत्। यथा मातुर्गोः ऊधः क्षीरोपसंहारस्थानं वत्सा उपजीवन्ति। एवं तमग्निमीळे इति सम्बन्धः कार्यः॥ १॥

**वेङ्कट०** अग्निम् स्तौमि रक्षकाणां देवानां मध्ये युवतमम् शासितारम् असताम् अनुशासितारं वा मित्रम् दुर्धरम्। यस्य व्रते सर्वाः प्रजाः गमनशीलाः पृथिव्याः ऊधः परिचरन्ति। वर्षत्यग्निः इति कर्षणादिकम् कुर्वन्ति॥ २॥

यमासा कृपनीळं भासाकेतुं वर्धयन्ति। भ्राजते श्रेणिदन्॥ ३॥

यम्। आसा। कृपऽनीळम्। भासाऽकेतुम्। वर्धयन्ति। भ्राजते। श्रेणिऽदन्॥ ३॥

**उद्गीथ०** यम् अग्निम् आसा उपासनेन स्तुतिभिर्हविर्भिश्च सेवनेन कृपनीळम् कर्मस्थानम् सर्वकर्माधारमित्यर्थः। भासाकेतुम् ज्वालालक्षणम् एतं दीप्तिपताकम् दीप्तेः कर्तारं वा। वर्धयन्ति[3] शरीरेण वीर्येण च स्तोतारो यष्टारश्च। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सोऽग्निः भ्राजते दीप्यते[4] सर्वत्र कर्मार्थम्। कीदृशः। श्रेणिदन् ज्वालाप्रदः[5]॥ ३॥

**वेङ्कट०** यम् आस्येन कल्पितस्थानं दीप्तिरश्मिम्[6] वर्धयन्ति। सः भ्राजते श्रयणशीलदन्तः[7]॥ ३॥

अर्यो विशां गातुरेति प्र यदानड् दिवो अन्तान्। कविरभ्रं दीद्यानः॥ ४॥

अर्यः। विशाम्। गातुः। एति। प्र। यत्। आनट्। दिवः। अन्तान्। कविः। अभ्रम्। दीद्यानः॥

**उद्गीथ०** अर्यः स्वामी सर्वस्याग्निः विशाम् यजमानमनुष्याणां च गातुः विशिष्टगतिरग्निः। किञ्च यत् यदा दीद्यानः दीप्यमानः एति ऊर्ध्वं गच्छति, तदा प्र आनट् प्रकर्षेण व्याप्नोति तेजसा। किम्। दिवः द्युलोकस्य अन्तान् पर्यन्तान्। कविः मेधावी अभ्रम् अभ्रान्तरिक्षोपलक्षणम्। अभ्रोपलक्षितम् अन्तरिक्षञ्च[8] व्याप्नोतीत्यर्थः॥ ३॥

**वेङ्कट०** स्वामी मनुष्याणाम् स्तोतव्यः तदानीम् एति, प्राप्नोति यदा अन्तरिक्षस्य पर्यन्तान्[9] कविः अभ्रम् दीपयन्॥ ४॥

जुषद्धव्या मानुषस्योर्ध्वस्तस्थावृभ्वा यज्ञे। मिन्वन्त्सद्म पुर एति॥ ५॥

जुषत्। हव्या। मानुषस्य। ऊर्ध्वः। तस्थौ। ऋभ्वा। यज्ञे। मिन्वन्। सद्म। पुरः। एति॥ ५॥

---

१. स्वयन्तीत्यर्थः न योः वि[1]; °एवयोः वि[3]; °अनयोः वि[2] अ[1]. २. गुन्तीरा° मूको.
३. नास्ति मूको. ४. दीप्तये वि[3]. ५. ज्वाला ··· मूको. ६. दीप्तिरश्मम् वि[2] अ[1]; दीप्तरश्मिम् वि[3].
७. °शीलं तदः वि[2] अ[1]. ८. अभ्रोपल° मूको. ९. पर्यन्तात् वि[2] अ[1]; °न्तात् वि[3].

उद्गीथ० जुषत् सेवमानः, भक्षयन्नित्यर्थः। हव्या हवींषि मानुषस्य यजमानमनुष्यस्य स्वभूते यज्ञे ऊर्ध्वः तस्थौ तिष्ठति ऊर्ध्वं ज्वलतीत्यर्थः।[1] ··· ··· ··· ॥ ४ ॥

वेङ्कट० सेवमानः[2] हवींषि मनुष्यस्य उत्तिष्ठति दीप्तेन तेजसा सह यज्ञे। परिच्छिन्दन् यज्ञगृहं तस्य[3] पुरस्तात् उत्तरवेद्याम् एति ॥ ५ ॥

स हि क्षेमो॑ ह॒विर्य॒ज्ञः श्रु॒ष्टीद॑स्य गा॒तुरे॑ति । अ॒ग्निं दे॒वा वाशी॑मन्तम् ॥ ६ ॥

सः । हि । क्षेमः॑ । ह॒विः । य॒ज्ञः । श्रु॒ष्टी । इत् । अ॒स्य । गा॒तुः । ए॒ति । अ॒ग्निम् । दे॒वाः । वाशी॑ऽमन्तम् ॥

वेङ्कट० सः एव रक्षकः हविषः यज्ञः, तस्यैव गातुः क्षिप्रं देवान् एति स्तुतिशब्दः, यस्मिन् यज्ञे अग्निम् स्तोतारः स्तुतिमन्तम्[4] कुर्वन्ति ॥ ६ ॥

[5]इति सप्तमाष्टके सप्तमाध्याये द्वितीयो वर्गः[5] ॥

य॒ज्ञा॒सा॒हं दुव॑ इषे॒ऽग्निं पूर्व॑स्य॒ शेव॑स्य । अद्रेः॑ सू॒नुमा॒युमा॑हुः ॥ ७ ॥

य॒ज्ञ॒ऽसह॑म् । दुवः॑ । इ॒षे॒ । अ॒ग्निम् । पूर्व॑स्य । शेव॑स्य । अद्रेः॑ । सू॒नुम् । आ॒युम् । आ॒हुः॒ ॥ ७ ॥

वेङ्कट० महत्तया यज्ञस्य अभिभवितृ[6] धनम्[7] इच्छामि। अग्निम् पूरकस्य सुखस्य अश्मनः[8] जातम् गन्तव्यम् आहुः। अग्निः सुखार्थम् उपगन्तव्य[9] इति ॥ ७ ॥

नरो॒ ये के चा॒स्मदा विश्वेत् ते वा॒म आ स्युः । अ॒ग्निं ह॒विषा॒ वर्ध॑न्तः ॥ ८ ॥

नरः॑ । ये । के । च॒ । अ॒स्मत् । आ । विश्वा॑ । इत् । ते । वा॒मे । आ । स्यु॒रिति॑ स्युः । अ॒ग्निम् । ह॒विषा॑ । वर्ध॑न्तः ॥

वेङ्कट० ये केचन मनुष्याः अस्मत्तः आ[10] जाताः, सर्वे [11]एव ते[11] धने आ भवेयुः[12] अग्निम् हविषा वर्धन्तः[13] ॥ ८ ॥

कृ॒ष्णः श्वे॒तो॑ऽरु॒षो यामो॑ अस्य ब्र॒ध्न ऋ॒ज्र उ॒त शोणो॒ यश॑स्वान् ।
हिर॑ण्यरूपं॒ जनि॑ता जजान ॥ ९ ॥

कृ॒ष्णः । श्वे॒तः । अ॒रु॒षः । याम॑ः । अ॒स्य॒ । ब्र॒ध्नः । ऋ॒ज्रः । उ॒त । शोण॑ः । यश॑स्वान् ।
हिर॑ण्यऽरूपम् । जनि॑ता । ज॒जा॒न॒ ॥ ९ ॥

वेङ्कट० अस्य रश्मिः बहुवर्णः। अयं महान् अन्नवान्[14] ऋजुगामी। तम् इमं हिरण्यवर्णं जनयिता जनयामास अग्निम् ॥ ९ ॥

---

१. इतः परम् २०तमसूक्तस्यावशिष्टभागः २१तमसूक्तञ्च लुप्तं द्र. २. भासे° वि[2] अ[1]. ३. नास्ति वि[1]. ४. स्तुमन्तं वि[2] अ[1]. ५-५. नास्ति मूको. ६. अभिमत वि[2] अ[1]. ७. सनम् वि[2] अ[1]. ८. आत्मनः वि[1]. ९. °व्यम् वि[2] अ[1]. १०. नास्ति वि[2] अ[1]. ११-११. एते मूको. १२ हवे° वि[2] अ[1]. १३. वर्धयन्तु वि[2] अ[1]. १४. अन्नवाम् मूको.

एवा ते॑ अग्ने वि॒मदो॑ मनी॒षामूर्जो॑ नपाद॒मृते॑भिः स॒जोषाः॑ ।
गिर॒ आ व॑क्षत् सुम॒तीरि॑या॒न इष॒मूर्जं॑ सुक्षि॒तिं विश्व॒माभाः॑ ॥ १० ॥

ए॒व । ते॒ । अ॒ग्ने॒ । वि॒ऽम॒दः । म॒नी॒षाम् । ऊर्जः॑ । न॒पा॒त् । अ॒मृते॑भिः । स॒ऽजोषाः॑ ।
गिरः॑ । आ । व॒क्ष॒त् । सु॒ऽम॒तीः । इ॒या॒नः । इष॑म् । ऊर्ज॑म् । सु॒ऽक्षि॒तिम् । विश्व॑म् । आ । अ॒भा॒रित्य॑भाः ॥१०॥

वेङ्कट० एवम् ते अग्ने! विमदः स्तुतिम् हे अन्नस्य[1] पुत्र! हविर्भिः सङ्गतः करोति। तदेवाऽऽह— स्तुतीः[2] आ वहति त्वदीयाः सुमतीः अभिगच्छन्। तथा सति त्वम्[3] अन्नम् रसम् शोभन-निवासम् च गृहम् सर्वम् च [4]अन्यदपि आ हर[4] ॥ १० ॥

[5]इति सप्तमाष्टके सप्तमाध्याये तृतीयो वर्गः[5] ॥

## [ २१ ]

[6]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद् वा ऋषिः। अग्निर्देवता। आस्तारपङ्क्तिश्छन्दः[6]।

आ॒ग्निं न स्ववृ॑क्तिभि॒र्होता॑रं त्वा वृणीमहे ।
य॒ज्ञाय॑ स्ती॒र्णब॑र्हिषे॒ वि वो॒ मदे॑ शी॒रं पा॑व॒कशो॑चिषं॒ विव॑क्षसे ॥ १ ॥

आ । अ॒ग्निम् । न । स्ववृ॑क्तिऽभिः । होता॑रम् । त्वा॒ । वृ॒णी॒म॒हे॒ ।
य॒ज्ञाय॑ । स्ती॒र्णऽब॑र्हिषे । वि । वः॒ । मदे॑ । शी॒रम् । पा॒व॒कऽशो॑चिषम । विव॑क्षसे ॥ १ ॥

वेङ्कट० तत्र[1] स्वभूते विमदे मयि स्तुतिरियं[7] प्रवृत्ता इति सर्वथा[8] भिन्नम् इदं वाक्यम् 'वि वः मदे' इति। यद्वा युष्माकं विशेषेण[9] मदार्थम् अग्निं स्तौमि इति समीपस्थानाह। सर्वथा भिन्नं[10] वाक्यम् एव इति बोद्धव्यम्। [11]आ वृणीमहे[11] अग्निम् वयं सम्प्रति स्तुतिभिः होतारम् त्वाम् यज्ञाय स्तीर्णबर्हिषे अनुशायिनम् पावकदीप्तिम्। विवक्षसे इति च भिन्नं वाक्यम्। वहसि वोढव्यं त्वमिति। महन्नामधेयेषु[12] यास्कः पठति 'विवक्षसे' ( निघ ३,३ ) इति[13] ॥ १ ॥

त्वामु॑ ते स्वा॒भुवः॑ शु॒म्भन्त्यश्व॑राधसः ।
वेति॒ त्वामु॑प॒सेच॑नी॒ वि वो॒ मद॒ ऋजी॑तिरग्न॒ आहु॑ति॒र्विव॑क्षसे ॥ २ ॥

त्वाम् । ऊँ इति॑ । ते । सु॒ऽआ॒भुवः॑ । शु॒म्भन्ति॑ । अश्व॑ऽराधसः ।
वेति॑ । त्वाम् । उ॒प॒ऽसेच॑नी । वि । वः॒ । मदे॑ । ऋजी॑तिः । अ॒ग्ने॒ । आऽहु॑तिः । विव॑क्षसे ॥ २ ॥

---

१. मन्दस्य वि[2] अ[1] २. °तिः वि[2] अ[1]. ३. त्वाम् वि[1]. ४-४. दव्याहरद वि[2] अ[1]. ५-५. नास्ति मूको. ६. नास्ति वि[2] अ[1]. ७. स्तुतितिर्यत् वि[2] अ[1]. ८. सर्वांसु वि[1]. ९. °षे वि[2] अ[1]. १०. °न्न मूको. ११. आवृदग्नीमेनेद वि[2]; आवृदग्निमेनेद अ[1]; आवृणीमहि वि[1]. १२. महनाम° मूको.

वेङ्कट० त्वाम् उ एव ते शोभनाऽऽभवनाः[1] [2]शोधयन्ति व्याप्तधनाः[2] । गच्छति उपसेचनी[3] ऋजुगमना[4] अग्ने! आहुतिः ॥ २ ॥

त्वे धर्माण आसते जुहूभिः सिञ्चतीरिव ।
कृष्णा रूपाण्यर्जुना वि वो मदे विश्वा अधि श्रियो धिषे विवक्षसे ॥ ३ ॥

त्वे इति । धर्माणः । आसते । जुहूभिः । सिञ्चतीःऽइव ।
कृष्णा । रूपाणि । अर्जुना । वि । वः । मदे । विश्वाः । अधि । श्रियः । धिषे । विवक्षसे ॥३॥

वेङ्कट० त्वयि धारका रश्मयः निवसन्ति । जुहूभिः सिच्यमानाः इव आहुतयः कृष्णानि अर्जुनानि च तव रूपाणि तथा विश्वाः श्रियः स्वशिरसि धारयसि ॥ ३ ॥

यमग्ने मन्यसे रयिं सहसावन्नमर्त्य ।
तमा नो वाजसातये वि वो मदे यज्ञेषु चित्रमा भरा विवक्षसे ॥ ४ ॥

यम् । अग्ने । मन्यसे । रयिम् । सहसाऽवन् । अमर्त्य ।
तम् । आ । नः । वाजऽसातये । वि । वः । मदे । यज्ञेषु । चित्रम् । आ । भर । विवक्षसे ॥४॥

वेङ्कट० यम् अग्ने! मन्यसे श्रद्दधासि रयिम् [5]बलवन्! अमर्त्य!, तम्[5] आ हर अस्मभ्यम् सङ्ग्रामाय यज्ञेषु क्रियमाणेषु चित्रम् ॥ ४ ॥

अग्निर्जातो अथर्वणा विदद्विश्वानि काव्या ।
भुवद् दूतो विवस्वतो वि वो मदे प्रियो यमस्य काम्यो विवक्षसे ॥ ५ ॥

अग्निः । जातः । अथर्वणा । विदत् । विश्वानि । काव्या ।
भुवत् । दूतः । विवस्वतः । वि । वः । मदे । प्रियः । यमस्य । काम्यः । विवक्षसे ॥ ५ ॥

वेङ्कट० अग्निः जनितः अथर्वणा वेत्ति विश्वानि कविकर्माणि, [6]भवति च दूतः[6] यजमानस्य प्रियः नियन्तुः हविषां कमनीयः ॥ ५ ॥

[7]इति सप्तमाष्टके सप्तमाध्याये चतुर्थो वर्गः[7] ॥

---

१. शोमना वि[2]; शोभनाः अ[1]. २-२. नास्ति वि[2] अ[1]. ३. अवसेचनी वि[2] अ[1]. ४. उर्गमन। वि[2] अ[1]; उजगमना वि[1]. ५-५. °वन्तमत्तमतम् वि[2]; °वन्नमत्तमतम् अ[1]; °वन्नमत्यतम् वि[1]. ६-६. भवति दू° वि[2] अ[1]. ७-७. नास्ति मूको.

त्वां यज्ञेष्वीळतेऽग्ने प्रयत्यध्वरे ।
त्वं वसूनि काम्या वि वो मदे विश्वा दधासि दाशुषे विवक्षसे ॥ ६ ॥

त्वाम् । यज्ञेषु । ईळते । अग्ने । प्रऽयति । अध्वरे ।
त्वम् । वसूनि । काम्या । वि । वः । मदे । विश्वा । दधासि । दाशुषे । विवक्षसे ॥ ६ ॥

**वेङ्कट०** त्वाम् आसन्नेषु हविष्षु निष्टुवन्ति[1] अग्ने! वर्तमाने[2] अध्वरे। त्वम् वसूनि कमनीयानि विश्वानि दधासि[3] यजमानाय ॥ ६ ॥

त्वां यज्ञेष्वृत्विजं चारुमग्ने नि षेदिरे ।
घृतप्रतीकं मनुषो वि वो मदे शुक्रं चेतिष्ठमक्षभिर्विवक्षसे ॥ ७ ॥

त्वाम् । यज्ञेषु । ऋत्विजम् । चारुम् । अग्ने । नि । सेदिरे ।
घृतऽप्रतीकम् । मनुषः । वि । वः । मदे । शुक्रम् । चेतिष्ठम् । अक्षऽभिः । विवक्षसे ॥ ७ ॥

**वेङ्कट०** त्वाम् यज्ञेषु काले[4] यष्टारम् चारुम् अग्ने! स्थापयन्ति उपविशन्ति वा घृतपूर्णम् मनुष्याः ज्वलन्तम् अतिशयेन ज्ञातारं व्याप्तैः तेजोभिः ॥ ७ ॥

अग्ने शुक्रेण शोचिषोरु प्रथयसे बृहत् ।
अभिक्रन्दन् वृषायसे वि वो मदे गर्भं दधासि जामिषु विवक्षसे ॥ ८ ॥

अग्ने । शुक्रेण । शोचिषा । उरु । प्रथयसे । बृहत् ।
अभिऽक्रन्दन् । वृषऽयसे । वि । वः । मदे । गर्भम् । दधासि । जामिषु । विवक्षसे ॥ ८ ॥

**वेङ्कट०** अग्ने! [5]ज्वलता तेजसा[5] अत्यन्तम् विस्तीर्णो भवसि महान्। आभिमुख्येन शब्दं कुर्वन् वृष इवाऽऽचरसि। गर्भम् च दधासि ओषधीषु माध्यमिकः[6] ॥ ८ ॥

[7]इति सप्तमाष्टके सप्तमाध्याये पञ्चमो वर्गः[7] ॥

## [ २२ ]

[7]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद्वा ऋषिः। इन्द्रो देवता। पुरस्ताद्बृहती छन्दः, पञ्चमीसप्तमीनवम्योऽनुष्टुभः, पञ्चदशी त्रिष्टुप्[7]।

कुह श्रुत इन्द्रः कस्मिन्नद्य जने मित्रो न श्रूयते ।
ऋषीणां वा यः क्षये गुहा वा चर्कृषे गिरा ॥ १ ॥

---

१. निस्तुव° मूको. २. °नः वि[2] अ[1]. ३. दधि वि[2] अ[1]. ४. कालेषु वि[1]. ५-५. तेजसः ज्वलता वि[2] अ[1]. ६. °क वि[2] अ[1]. ७-७. नास्ति मूको.

कुह । श्रुतः । इन्द्रः । कस्मिन् । अद्य । जने । मित्रः । न । श्रूयते ।
ऋषीणाम् । वा । यः । क्षये । गुहा । वा । चर्कृषे । गिरा ॥ १ ॥

**उद्गीथ०** चर्कृषे **प्रथमस्य स्थानेऽयं मध्यमः । करोतेः क्रियासामान्यवचनत्वात् करोतिश्चात्र स्तुतिक्रियायां वर्तते, अत्यर्थं स्तूयत इत्यर्थः,** गिरा **स्तुतिलक्षणया वाचा सः इन्द्रः** श्रुतः **विख्यातः ।** कुह **क स्थाने स्थितः** अद्य श्रूयते । कस्मिन् **वा यजमानजने इज्यत्वेन स्तुत्यत्वेन स्थितोऽद्य श्रूयते । किमिव ।** मित्रः न **मित्र इव आदित्य इव, स्निग्ध इव वेत्यर्थः ॥ १ ॥**

**वेङ्कट०** कुह श्रुतः इन्द्रः[1] । **एतदेवाऽऽह**[2] — कस्मिन् अद्य जने [3]**सखा इव**[3] श्रूयते । **यः** ऋषीणाम् वा **निवासे गुहायाम् वा अरण्ये वा आकृष्यते स्तुत्या ॥ १ ॥**

**इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः ।**
**मित्रो न यो जनेष्वा यशश्चक्रे असाम्या ॥ २ ॥**

इह । श्रुतः । इन्द्रः । अस्मे इति । अद्य । [4]स्तवे । वज्री । ऋचीषमः[4] ।
मित्रः । न । यः । जनेषु । आ । यशः । चक्रे । असामि । आ ॥ २ ॥

**उद्गीथ० अत्रापि पूर्वोक्तेन न्यायेनोत्तरोऽर्धर्चः पूर्वं व्याख्येयः ।** यः **इन्द्रः** मित्रः न **आदित्य इव स्निग्ध इव वा यजमानजनेषु वा स्निग्धजनेषु** [5]**यशः अन्नं**[5] **कीर्तिं** वा आ चक्रे **आभिमुख्येन करोति । कीदृशं यशः ।** असामि आ **मर्यादया असमाप्तम् अनन्तमित्यर्थः, सः** इह **अस्मद्यज्ञे** श्रुतः **विख्यातः** इन्द्रः अस्मे **अस्माभिः** स्तवे **अद्य स्तूयते** वज्री **वज्रायुधः** ऋचीषमः **'ऋच स्तुतौ' । ऋचा स्तुत्या समः ।** 'यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी' ( ऋ ८, ७०, ५ ) **इत्यादिकया स्तुत्यापि**[6] **समानगुण इत्यर्थः ॥ २ ॥**

**वेङ्कट०** इह अद्य **अस्मासु श्रूयते इन्द्रः, स्तूयते च वज्री**[7] **स्तुत्या समः**[8]**, सखा इव** यः **स्तोतृषु अन्नम् करोति असाधारणम् ॥ २ ॥**

**महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतुजिः ।**
**भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियम् ॥ ३ ॥**

महः । यः । पतिः । शवसः । असामि । आ । महः । नृम्णस्य । तूतुजिः ।
भर्ता । वज्रस्य । धृष्णोः । पिता । पुत्रम्ऽइव । प्रियम् ॥ ३ ॥

---

१. °न्द्र मूको. २ देवाह वि[2] अ[1]. ३-३. सखे वि[2] अ[1]. ४-४. या (६,२३) व्याख्यानमपि द्र. ५-५. यः मूको. ६. अतिस्तुत्या मूको. ७. °ज्रि मूको. ८. सम मूको.

उद्गीथ० यः इन्द्रः महः महतः शवसः बलस्य सेनाख्यस्य पतिः स्वामी। कीदृशः। असामि आ मर्यादया असमासः अनन्तगुण इत्यर्थः, महः महतः नृम्णस्य शारीरस्य च बलस्य[1] ॥ ३ ॥

वेङ्कट० महतः यः बलस्य पतिः असाधारण्येन भवति महतः च धनस्य[2] प्रेरकः भर्ता वज्रस्य धर्षकस्य, सोऽस्मान् रक्षतु पिता पुत्रम् इव प्रियम् ॥ ३ ॥

युजानो अश्वा वातस्य धुनी देवो देवस्य वज्रिवः ।
स्यन्ता पथा विरुक्मता सृजानः स्तोष्यध्वनः ॥ ४ ॥

युजानः । अश्वा । वातस्य । धुनी इति । देवः । देवस्य । वज्रिऽवः ।
स्यन्ता । पथा । विरुक्मता । सृजानः । स्तोषि । अध्वनः ॥ ४ ॥

उद्गीथ० हे वज्रिवः! वज्रिन्! इन्द्र! यस्त्वम् देवः, स त्वम् युजानः स्वरथे युञ्जन्[3] अश्वा अश्वौ। कीदृशौ। वातस्य देवस्य धुनी बलेन[4] जवेन वा कम्पयितारौ अभिभवितारौ, वातादपि शीघ्रतरौ बलवत्तरौ वेत्यर्थः। स्यन्ता गच्छन्तौ पथा स्वर्गमार्गेण। कीदृशेन। विरुक्मता विरोचनवता विविधदीप्तियुक्तेन। सृजानः अध्वनः उत्पादयन् स्वरथनेम्या[5] रथमार्गान्। स्तोषि स्तूयसे सततं श्रेयोऽर्थिभिः ॥ ४ ॥

वेङ्कट० नियुञ्जन् अश्वौ रथे [6]वेगेन वातस्य[6] प्रेरकौ देवः दीप्तस्य वज्रिन्! गच्छन्तौ मार्गेण विरोचनवता स्तूयसे युद्धे गमनमार्गान् उत्पादयन् ॥ ४ ॥

त्वं त्या चिद्वातस्याश्वागा ऋज्रा त्मना वहध्यै ।
ययोर्देवो न मर्त्यो यन्ता नकिर्विदाय्यः ॥ ५ ॥

त्वम् । त्या । चित् । वातस्य । अश्वा । आ । अगाः । ऋज्रा । त्मना । वहध्यै ।
ययोः । देवः । न । मर्त्यः । यन्ता । नकिः । विदाय्यः ॥ ५ ॥

उद्गीथ० [7]यच्छब्दसम्बन्धादुत्तरोऽर्धर्चः पूर्वं व्याख्यायते[7]। [8]ययोः अश्वयोः[8] यन्ता गन्तुं प्रवृत्तयोर्नियन्ता निवारयिता न देवः न अपि मर्त्यः मनुष्यः नकिः न कश्चित् विदाय्यः वेत्ता, बलस्य [9]जवस्य वेति[9] शेषः। त्वम् हे इन्द्र! त्या चित् तावपि तादृशावपीत्यर्थः, वातस्य[10], बलेन जवेन च युक्ताविति शेषः, अश्वा आत्मीयावश्वौ ऋज्रा ऋजुगामिनौ आ अगाः आ गच्छसि त्मना सारथिनिरपेक्ष इत्यर्थः। किमर्थम् आगच्छामि। उच्यते—वहध्यै वहनाय अभिप्रेतदेश-प्रापणाय नियमनाय वेत्यर्थः ॥ ५ ॥

---

१. इतः परं भाष्यं लुप्तम्. २. °स्य धारकः अ[1]. ३. अयुञ्जन् मूको. ४. जलेन मूको. ५. °नेमा मूको. ६-६. वेगवातस्य वि[1]; वेगवातस्य वि[2]; वेगवत्तस्य अ[1]. ७-७ नास्ति वि[1]. ८-८ ययोरर्थयोः वि[1] अ[1]; ययोरण्वयोः वि[2]. ९-९. जवन्तमिति मूको. १०. तस्य मूको.

**वेङ्कट०** त्वम् तौ वातस्य सम्बन्धिनौ अश्वौ अभिगच्छसि[१] ऋजुगामिनौ आत्मनैवात्मनो[२] वहनार्थम्। ययोः त्वत्तः अन्यः देवः मनुष्यः वा सारथिः ज्ञातुम् अशक्यः। एतदेवोक्तम्—यन्ता न कश्चिद् विज्ञेय[३] इति ॥ ५ ॥

[४]इति सप्तमाष्टके सप्तमाध्याये षष्ठो वर्गः[४] ॥

अध॒ ग्मन्तो॒शना॑ पृच्छते वां॒ कद॑र्था न॒ आ गृ॒हम्।
आ ज॑ग्मथुः परा॒काद् दि॒वश्च॒ ग्मश्च॒ मर्त्य॑म् ॥ ६ ॥

अध॑। ग्मन्ता॑। उ॒शना॑। पृ॒च्छ॒ते॒। वा॒म्। कत्ऽअ॑र्था। न॒ः। आ। गृ॒हम्।
आ। ज॒ग्म॒थुः॒। प॒रा॒कात्। दि॒वः। च॒। ग्मः। च॒। मर्त्य॑म् ॥ ६ ॥

**उद्गीथ०** यज्ञे निवृत्ते[५] अध अनन्तरम् ग्मन्ता स्वस्थानं प्रति गच्छन्तौ उशना द्वितीयार्थे प्रथमैषा, उशनसञ्च त्वत्सखं त्वां चेन्द्रम् वाम् युवां संवृत्तौ सन्तौ पृच्छते कृतार्थमात्मानं मन्यमानः परितोषात् पृच्छति सर्वो यजमानः—अनेनोच्यमानप्रकारेण[६] कदर्था किमर्थौ केनार्थेनार्थिनौ सन्तौ नः अस्माकं स्वभूतम् आ गृहम् आङत्र प्रतीत्यस्यार्थे, गृहं प्रति मर्त्यम् मर्त्यलोकं प्रति आ जग्मथुः आगतवन्तौ स्थः पराकात् दूरात्[७]। कुतो दूरात्। दिवः च ग्मः च द्युतश्च पृथिवीतश्चेत्यर्थः। युवयोः कृतार्थत्वाद् इहागमनम् अस्मदनुग्रहार्थमेव न स्वार्थमिति ब्रुवन् पृच्छतीत्यर्थः ॥ ६ ॥

**वेङ्कट०** अथ गच्छन्तौ उशना वाम् पृच्छते स्म—किंप्रयोजनाय अस्माकम् गृहम् आ जग्मथुः दूरात् त्वम् च अग्निः च। तदेवोक्तम्—द्यावापृथिव्योः सकाशात् किंप्रयोजनौ मर्त्यम् माम् आगमताम्[८] इति ॥ ६ ॥

आ न॑ इन्द्र पृक्षसे॒ऽस्माकं॒ ब्रह्मोद्य॑तम्।
तत् त्वा॑ याचाम॒हेऽवः॒ शुष्णं॒ यद्धन्नमा॑नुषम् ॥ ७ ॥

आ। न॒ः। इ॒न्द्र॒। पृ॒क्ष॒से॒। अ॒स्माक॑म्। ब्रह्म॑। उत्ऽय॑तम्।
तत्। त्वा॒। या॒चा॒म॒हे॒। अवः॑। शुष्ण॑म्। यत्। हन्। अमा॑नुषम् ॥ ७ ॥

**उद्गीथ०** हे इन्द्र! आ पृक्षसे आङत्र मर्यादायाम्। मर्यादया[९], आ तृप्तेरित्यर्थः, सम्पर्चयाऽऽत्मना, भक्षयेत्यर्थः[१०]। अस्माकम् स्वभूतम् ब्रह्म अन्नं हविराख्यम् नः[११] तृतीयार्थे षष्ठी चतुर्थी द्वितीया[१२] वैषा। अस्माभिस्तुभ्यं दातुम् उद्यतम्[१३] उत्क्षिप्तं दत्तमित्यर्थः। भक्षितवन्तं च सन्तं त्वाम् तत् याचामहे प्रार्थयामहे। अवः अन्नं रक्षणं वा, यदुत्कृष्टमिति शेषः, शुष्णम् बलञ्च

१. °च्छ वि[१]. २. °नैवमनो वि[२] अ[१]. ३. विषय वि[१] अ[१]. ४-४ नास्ति मूको. ५. निर्वृत्ते वि[३]. ६. °च्यमानेन प्र° वि[१२] अ. ७. नास्ति वि[१२] अ. ८. आगताम् मूको. ९. °दाया वि[११] अ. १०. पक्षेये° वि[१] अ. ११. नः उद्यतम् वि[१]. १२. °तीयां वि[३१]. १३. नास्ति वि[१].

याचामहे, यत् हन् हन्ति अमानुषम् मानुषादन्यं राक्षसादिकम्। बलञ्चोत्कृष्टं प्रार्थयामहे इत्यर्थः। अथवा नः इत्येतद् अवः इत्यनेन[1] सम्बध्यते। एवं च योजना कर्तव्या—तत् त्वा याचामहे नः अस्माकम् अवः पालनम्। कीदृशम्। उच्यते—शुष्णम् शुष्णनामानम् यत् हन् हतवान् अमानुषम् मानुषादितरम् असुरमित्यर्थः। शुष्णमसुरं हत्वा येन पालनेन त्रैलोक्यं पालितवानसि, तत् पालनमस्माकं त्वां याचामह इति वाक्यशेषः॥ ७॥

**वेङ्कट०** आ पृच्छस्व अस्मान् इन्द्र!। अस्माकम् हविः उद्यतम्। तत् त्वाम् वयम् रक्षणार्थम् याचामहे, शुष्णम् असुरं यस्मात् त्वम् हतवानसि॥ ७॥

अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः।
त्वं तस्यामित्रहन् वधर्दासस्य दम्भय॥ ८॥

अकर्मा। दस्युः। अभि। नः। अमन्तुः। अन्यऽव्रतः। अमानुषः।
त्वम्। तस्य। अमित्रऽहन्। वधः। दासस्य। दम्भय॥ ८॥

**उद्गीथ०** अकर्मा अविद्यमानकर्मा, निष्क्रिय इत्यर्थः, दस्युः नः अस्माकम् अभि अमन्तुः आभिमुख्येन स्वरूपतः अज्ञाता। अथवा अवोपसर्गस्य वकारलोपोऽत्र द्रष्टव्यः। अवमन्तुः अवमन्ता परिभविता अन्यव्रतः श्रुतिस्मृतिविहितकर्मणोऽन्यकर्मा प्रतिषिद्धकर्मा अमानुषः मानुषादन्यो मनुष्यसंव्यवहाराद् बाह्यः, राक्षसवृत्तिरित्यर्थः। यः ईदृशः, तस्य दासस्य उपक्षपयितव्यस्य त्वम् हे अमित्रहन्! भक्तजनस्य शत्रूणां हन्तः! वधः हन्ता सन् दम्भय हिन्धि[2], तमिति शेषः। अथवा 'वधः' (निघ २,२०) इति वज्रनाम। तस्य वज्रं दम्भय गमय, तं वज्रेण जहीत्यर्थः॥ ८॥

**वेङ्कट०** निष्क्रियः उपक्षपयिता[3] अभि[4] भवति अस्मान् अस्तुतिः [5]विजातीयकर्मा असुरः[5]। त्वम् तस्य दासस्य अमित्राणां हन्तः! आयुधम् [6]दम्भय। दम्भनं[6] स्तम्भनम्[7]॥ ८॥

त्वं न इन्द्र शूर शूरैरुत त्वोतासो बर्हणा।
पुरुत्रा ते वि पूर्तयो नवन्त क्षोणयो यथा॥ ९॥

त्वम्। नः। इन्द्र। शूर। शूरैः। उत। त्वाऽऊतासः। बर्हणा।
पुरुऽत्रा। ते। वि। पूर्तयः। नवन्त। क्षोणयः। यथा॥ ९॥

**उद्गीथ०** त्वम् नः अस्मान् हे इन्द्र! शूर! शूरैः मरुद्भिः सह, सामर्थ्यात् पालयेति शेषः। उत अपि च त्वोतासः त्वया ऊता रक्षिताः सन्तो वयम् बर्हणा परिवृद्धेन ईप्सितार्थप्रदानेन

१. इत्येतेन वि[1,2] अ. २. भिन्धि वि[1,2] अ. ३. इवक्ष[0] मूको. ४. अहि वि[1,2]. ५-५. बिजानीकर्म सुरः वि[2] अ[1]; विजातीयकर्मासु वि[1]. ६-६. दंहय दंहनं वि[2] अ[1]; भयदमनं वि[1]. ७. नास्ति वि[1].

त्वदीयेन तव [1]प्रसादेन, युक्ताः[1] स्यामेति शेषः। कस्मादेवं ब्रूमः। यस्मात् पुरुत्रा पुरुभ्यो बहुभ्यः स्तोतृभ्यो यष्टृभ्यश्च दत्ताः सत्यः ते तव स्वभूताः पूर्तयः ईप्सितार्थप्रदानानि वि नवन्त विविधं स्तुवन्ति त्वां हेतुकर्तृत्वेन। किमिव[2]। क्षोणयः यथा क्षोणिशब्दोऽत्र मनुष्यवचनः। ऋत्विग्यजमानादिमनुष्याः यथा त्वां [3]स्तुवन्ति, एवम्[3]। एतदुक्तं भवति — त्वत्तो लब्धधनाः सन्तो वयं त्वया रक्ष्यमाणास्त्वां यज्ञेषु स्तुमः, तस्मादस्मभ्यं धनं देहि रक्ष[4] वाऽस्मानिति ॥ ९ ॥

**वेङ्कट०** त्वम् अस्मान् इन्द्र शूर! शूरैः मरुद्भिः सह आगच्छ। अपि च त्वया रक्षिताः शत्रूणां परिबर्हणायां भवेम समर्थाः[5]। तव दानानि बहून् स्तोतॄन् विविधम् आप्नुवन्ति, यथा भूमयः विविधान् मनुष्यान् रक्षन्त्यो व्याप्नुवन्ति ॥ ९ ॥

त्वं तान् वृ॑त्र॒हत्ये॑ चोदयो॒ नॄन् का॑र्पा॒णे शू॑र वज्रिवः।
गुहा॒ यदी॑ कवी॒नां वि॒शां नक्ष॑त्रशवसाम् ॥ १० ॥

त्वम्। तान्। वृ॒त्र॒ऽहत्ये॑। चो॒द॒यः॒। नॄन्। का॒र्पा॒णे। शू॒र॒। व॒ज्रि॒ऽवः॒।
गुहा॑। यदि॑। क॒वी॒नाम्। वि॒शाम्। नक्ष॑त्रऽशवसाम् ॥ १० ॥

**उद्गीथ०** हे इन्द्र! त्वम् तान् नराकारान्[6] मरुदादिदेवान् मरुतो वा केवलान् चोदयः चोदयसि प्रेरयसि सङ्ग्रामे[7]। किमर्थम्। वृत्रहत्ये वृत्रहननाय असुरवधाय[8] शत्रुवधायेत्यर्थः। कीदृशे सङ्ग्रामे। असिः कृपाणः, तेन निर्वृत्तः सङ्ग्रामः कार्पाणः, तस्मिन् कार्पाणे सङ्ग्रामे। हे शूर! वज्रिवः! वज्रिन्! । कदा चोदयसि[9]। उच्यते — गुहा गूढानि गुणैः संवृतानि स्तोत्राणि यदि यदा, शृणोषि इति शेषः, कवीनाम् मेधाविनाम् विशाम् शान्तर्ष्यादिमनुष्याणाम्[10] नक्षत्रशवसाम् गुणग्रहणद्वारेण देवान् प्रति गन्तृस्तुतिबलानां स्वभूतानि स्तोत्राणि। नक्षत्रम् नक्षतेर्गतिकर्मणः (तु० या ३,२०)। 'शवः' (निघ २,९) इति बलनाम ॥ १० ॥

**वेङ्कट०** त्वम् तान् अमित्रान् सङ्ग्रामे चोदयसि तव कृपाणस्य आस्ये शूर! वज्रिन्!, गुहायाम् आवासस्थाने यदि[11] गच्छन्ति[12] स्तोतॄणां मनुष्याणाम् आत्मनोऽरक्षकबलानाम्। यद् बलं [13]न क्षतात् त्रायते[13] तत् नक्षत्रम् इति ॥ १० ॥

[14]इति सप्तमाष्टके सप्तमाध्याये सप्तमो वर्गः[14] ॥

म॒क्षू ता त॑ इन्द्र दा॒नाप्न॑स आक्षा॒णे शू॑र वज्रिवः।
यद्ध॒ शुष्ण॑स्य द॒म्भयो॑ जा॒तं विश्वं॑ स॒याव॑भिः ॥ ११ ॥

---

१-१. °सादयु° वि'[3]. २. किमिति मूको. ३-३. °वन्ति…वि[2] अ; °वन्त्ये वि[1]. ४. रक्षित मूको. ५. समाः वि[2] अ[1]; समर्थः वि[1]. ६. नरान् वि[1]; नकारान् वि[2] अ. ७ नास्ति मूको. ८. असुराब मूको. ९. दयस वि[1]; दयसि वि[2] अ. १०. सान्तर्ष्या° मूको. ११. नास्ति वि[1]. १२. नास्ति वि[2] अ[1]. १३-१३. नक्षत्रायते वि[2] अ[1]. १४-१४. नास्ति मूको.

मक्षु । ता । ते । इन्द्र । दानऽअप्नसः । आक्षाणे[1] । शूर । वज्रिऽवः ।
यत् । ह । शुष्णस्य । दम्भयः । जातम् । विश्वम् । सयावऽभिः ॥ ११ ॥

**उद्गीथ०** हे इन्द्र ! शूर ! वज्रिवः ! आक्षाणे योद्धॄन् व्याप्नुवति[2] तैर्व्याप्यमाने वा त्वयि असाधारणत्वेनाऽवस्थितानि मक्षु क्षिप्राणि अविलम्बितानि क्षिप्रकरणे युक्तानीत्यर्थ, ता तानि[3] सामर्थ्यात् कर्माणि ते तव स्वभूतानि। कीदृशस्य। दानाप्नसः दानकर्मणः स्तोतृभ्यो यष्टृभ्यश्च सततम् अभीप्सितार्थप्रदातुरित्यर्थः। कानि तानि। उच्यते—यत् ह हेति पदपूरणः। शुष्णस्य असुरस्य जातम् अपत्यम् विश्वम् सर्वम् दम्भयः हिंसितवानसि क्षणेन सयावभिः सहयातृभिः सह। यान्येवमादीनि तव कर्माणि, तानि[3] सर्वाण्येव क्षिप्रकरणे युक्तानि इत्यर्थः ॥ ११ ॥

**वेङ्कट०** शीघ्रम्[4] तानि कर्माणि तव इन्द्र! दानकर्मणः युद्धे कथयन्ति शूर! वज्रिन्!—यत् खलु त्वम् शुष्णस्य दम्भितवानसि[5] प्रादुर्भूतं सर्वम् अपत्यम् मरुद्भिः[6] [7]सह। अपि वा शुष्णस्य दम्भितवानसि[7] सहायैः सह इति ॥ ११ ॥

माकुध्र्यगिन्द्र शूर वस्वीरस्मे भूवन्नभिष्टयः ।
वयंवयं त आसां सुम्ने स्याम वज्रिवः ॥ १२ ॥

मा । अकुध्र्यक् । इन्द्र । शूर । वस्वीः । अस्मे इति । भुवन् । अभिष्टयः ।
वयम्ऽवयम् । ते । आसाम् । सुम्ने । स्याम । वज्रिऽवः ॥ १२ ॥

**उद्गीथ०** हे इन्द्र ! शूर ! अस्मे अस्माकं स्वभूताः अभिष्टयः आभिमुख्येनेष्टयः इज्याः अथवा अभीच्छा ईप्सितार्थप्रार्थनाः वस्वीः महत्यः अकुध्र्यक्[8] सामर्थ्यात् कुत्सिताः, विफला इत्यर्थः, मा भूवन्। किं तर्हि। वयम्-वयम् द्विर्वचनमिह त्वराप्रदर्शनार्थम्। ते तव प्रसादात् आसाम् इज्यानां प्रार्थनानां वा जन्यत्वेन सम्बन्धिनि सुम्ने सुखेऽवस्थिताः शीघ्रं वयम् स्याम। अभिष्टिजन्येन[9] दृष्टादृष्टसुखेन संयुक्ताः शीघ्रं वयं भवेमेत्याशास्महे इत्यर्थः, हे वज्रिवः! ॥ १२ ॥

**वेङ्कट०** [10]मा कुत्सिताञ्चना[10] इन्द्र! शूर! प्रशस्ता अस्माकम् भवतु अभीज्या। वयमेव सर्वदा[11] तव स्वभूतानाम् आसाम् अभीष्टीनां सुखे स्याम वज्रिन्! ॥ १२ ॥

अस्मे ता त इन्द्र सन्तु सत्याहिंसन्तीरुपस्पृशः ।
विद्याम यासां भुजो धेनूनां न वज्रिवः ॥ १३ ॥

---

१. वैप १,६१८ i द्र. २. व्याप्नुवन्ति वि[2] अ. ३. तानि तानि मूको. ४. इति शीघ्रं वि[1] अ[1]. ५. अभित° वि[2]; अभिहित° अ[1]. ६. मनुष्यैः अ[1]. ७-७. नास्ति वि[2] अ[1]. ८. वैप १,८C द्र; अकुध्र्यत् वि[2] अ; कुध्र्यक् सा. ९. जन्ये मूको. १०-१०. कुध्यतमा कुत्सिता वना वि[2] अ[1]; मा कुत्सिताञ्चनो वि[1]. ११. नास्ति वि[1].

अस्मे इति । ता । ते । इन्द्र । सन्तु । सत्या । अहिंसन्तीः । उपऽस्पृशः ।
विद्याम । यासाम् । भुजः । धेनूनाम् । न । वज्रिऽवः ॥ १३ ॥

**उद्गीथ०** ता सत्या इत्युभयत्रापि प्रथमाबहुवचनस्य छान्दस आकारादेशः सन्त्वितिनिर्देशविशेषणत्वात्[1] । अस्मे अस्माकं स्वभूताः ताः उपस्पृशः उपगम्य स्पृशन्ति गृह्णन्ति देवतागुणान् इत्युपस्पृशः स्तुतयः । ते तव प्रसादात् हे इन्द्र! सन्तु सत्या तव सद्गुणग्राहिण्य इत्यर्थः । अहिंसन्तीः त्वाम् अहिंसन्त्यश्च भवन्तु । अतिस्तुतित्वाद्[2] अनुद्वेजयन्त्यश्च भवन्त्वित्यर्थः । विद्याम लप्स्यामहे[3] वयम् यासाम् स्तुतीनां जन्यत्वेन सम्बन्धिनः भुजः भोगान् दृष्टाऽदृष्टान् । किमिव । धेनूनाम् न गवां सम्बन्धिनः क्षीरादिभोगान् कश्चित् गोपतिर्यथा लभेत, एवम्, हे वज्रिवः! ॥ १३ ॥

**वेङ्कट०** अस्मासु तानि तव इन्द्र! सन्तु सत्यानि कर्माणि, तथा अस्मान् अहिंसन्त्यः उपस्पृशः च त्वदीयाः सन्तु । लभेमहि यासाम् भोगान् धेनूनाम् इव वज्रिन्! ॥ १३ ॥

**अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम् ।**
**शुष्णं परि प्रदक्षिणिद् विश्वायवे नि शिश्नथः ॥ १४ ॥**

अहस्ता । यत् । अपदी । वर्धत । क्षाः । शचीभिः । वेद्यानाम् ।
शुष्णम् । परि । प्रऽदक्षिणित् । विश्वऽआयवे । नि । शिश्नथः ॥ १४ ॥

**उद्गीथ०** अहस्ता हस्तवर्जिता अपदी पादवर्जिता अपुरुषविधा कर्मात्मलक्षणेत्यर्थः, क्षाः पृथिवी यत् यदा वर्धत धनधान्यप्रजादिवृद्ध्या वृद्धा शचीभिः कर्मभिर्वृष्ट्यादिभिः वेद्यानाम् वेदितव्यानां मध्यमस्थानदेवतानां[4] त्वत्प्रभृतीनां सम्बन्धिभिः, तदा शुष्णम् शुष्णनामानम् असुरम् परि प्रदक्षिणित् परिवेष्ट्य[5] प्रदक्षिणम् विश्वायवे तादर्थ्ये चतुर्थ्येषा, सर्वत्राऽप्रतिहतगामिनः चक्रवर्तिनः और्वशेयस्य[6] राज्ञोऽर्थाय नि शिश्नथः निगृह्य ताडितवानसि त्वं हे इन्द्र! ॥ १४ ॥

**वेङ्कट०** यत् शुष्णस्य छादनार्थं हस्तपादवर्जिता काचित् पृथिवी कर्मभिः असुराणां वेदितव्यानां मायारूपैः[7] शुष्णम् असुरं परिप्रदक्षिणं यदा वर्धत, तदानीं तां पृथिवीं मायया उत्पादिताम् विश्वायवे मरुद्गणाय तत्र प्रवेशार्थम् नि शिश्नथः ॥ १४ ॥

**पिबापिबेदिन्द्र शूर सोमं मा रिषण्यो वसवान वसुः सन् ।**
**उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥ १५ ॥**

पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मा । रिषण्यः । वसवान । वसुः । सन् ।
उत । त्रायस्व । गृणतः । मघोनः । महः । च । रायः । रेवतः । कृधि । नः ॥ १५ ॥

---

१. स्तुतिनिर्देशविशेषत्वात् मूको. २. सत्स्तु° वि° शोधः ३. लेभिष्यामहे मूको. ४. मध्यम मगस्थान वि° अ. ५. परिवेद्य वि° अ. ६. ऊर्वशे° मूको. ७. °पे वि° अ°.

उद्गीथ० पिब-पिब [1]यागकालाऽतिपातभयादतित्वरितस्य[1] द्विर्वचनमेतत् । इत् इति पदपूरणः । हे इन्द्र! शूर! त्वद्यागकालातिपातो यावन्न भवति तावच्छीघ्रं पिब सोमम् इत्यर्थः । मा रिषण्यः यागकालमतिपातयन् तज्जनितदोषेण मा हिंसीः अस्मान् हे वसवान्! वसुना धनेन वसुभिर्वा देवैस्तद्वन्! वसुः सन् । प्रशस्तस्य [2]तव सतः[2] कर्मवैगुण्यकरणेन हिंसितुमयुक्तमित्यर्थः । उत त्रायस्व अपि च प्रमादजनितकर्मवैगुण्यदोषात् पालयास्मान्[3], गृणतः स्तुवतः मघोनः हविर्धनेन धनवतः कृधि कुरु नः अस्मान् ॥ १५ ॥

वेङ्कट० पिब एव इन्द्र! शूर! सोमम् । मा हिंसीः हे वसूनाम् आनेतः! वासयिता सन् । अपि च त्रायस्व स्तुवतः[4] हविष्मतः[5] । महान्ति च धनानि पशुमन्ति कुरु अस्माकम् इति ॥ १५ ॥

[6]इति सप्तमाष्टके सप्तमाध्याये अष्टमो वर्गः[6] ॥

## [ २३ ]

[7]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद्वा ऋषिः । इन्द्रो देवता ।
जगती छन्दः, प्रथमासप्तम्यौ त्रिष्टुभौ, पञ्चमी अभिसारिणी[7] ।

**यजा॑मह॒ इन्द्रं॒ वज्र॑दक्षिणं॒ हरी॑णां र॒थ्यं१॒ विव्र॑तानाम् ।**
**प्र श्मश्रु॒ दोधु॑वदू॒र्ध्वथा॑ भूद् वि सेना॑भि॒र्दय॑मानो॒ वि राध॑सा ॥ १ ॥**

यजा॑महे । इन्द्र॑म् । वज्र॑ऽदक्षिणम् । हरी॑णाम् । र॒थ्य॑म् । विऽव्र॑तानाम् ।
प्र । श्मश्रु॑ । दोधु॑वत् । ऊ॒र्ध्वऽथा॑ । भु॒त् । वि । सेना॑भिः । दय॑मानः । वि । राध॑सा ॥ १ ॥

उद्गीथ० यजामहे इत्यैन्द्रं सप्तर्चं विमद एव ददर्श । यजामहे वयम् इन्द्रम् । कीदृशम् । वज्रदक्षिणम् सततं शत्रुवधाय वज्रो दक्षिणे हस्ते यस्य तं वज्रेणोत्साहिनं वा । हरीणाम्[*] हरिसंज्ञानाम् विव्रतानाम् रथवहनमेघहननादिविविधकर्मणां[8], स्वामिनमिति शेषः । रथ्यम् रथस्य[9] नेतारमित्यर्थः । अथवा हरीणां विव्रतानां रथ्यं रंहयितारम् यत्रेष्टं तत्र गमयितारमित्यर्थः । य इन्द्रः श्मश्रु[10] प्र दोधुवत् प्रकम्पयति अत्यन्ताभिरुच्या सोमं पिबन् प्रचालयतीत्यर्थः । य इन्द्रः ऊर्ध्वथा भूत् ऊर्ध्वथेति थाऽत्र प्रकारवचनाभावात् स्वार्थे उपमार्थे वा । 'तम् प्रत्नथा' ( ऋ ५,४४,१ ) इति यथा । तत्प्रत्यवेक्षणार्थम्[11] ऊर्ध्वश्च भवति, अथवा यथा राजा कश्चिद् युद्धकाले योद्धृप्रत्यवेक्षणार्थम् ऊर्ध्वो भवति । कदा । सेनाभिः मरुदादिस्वसेनाभिः शत्रून् वि दयमानः विविधं हिंसन् । वि राधसा व्युपसर्गश्रुतिसामर्थ्याद् दयमान इति क्रियापदम् अनुवर्त्यम् । राधसेति द्वितीयार्थे तृतीया । राधो धनं च स्तोतृभ्यो यष्टृभ्यश्च विदयमानो ददत् आदरेणोर्ध्वो भवति य इन्द्रः, तं यजामह इति सम्बन्धः कार्यः ॥ १ ॥

---

१-१. यागकालोऽतिपातः भयादपि मूको. २-२. वसन्तः मूको. ३. पालनयास्मान् वि[२] अ; पालयस्व वि[३]. ४. °न्तो वि[२] अ[२]. ५. °न्तः वि[२] अ[२]. ६-६. नास्ति मूको. ७. नास्ति मूको. ८. रथहन° वि[१,३]; रथहनन° वि[२] अ. ९. रथस्य च वि[१,३]. १०. श्मश्रुषु वि[१,२] अ; श्मश्रुष्ठ वि[३]. ११. तं प्रत्यवे° मूको.

**वेङ्कट०** यजामहे इन्द्रम् वज्रयुक्तदक्षिणहस्तम्[1] अश्वानाम् नानाकर्मणाम् नेतारम्। सोऽयम् आत्मीयम् श्मश्रु धून्वानः प्रादुरभवद्[2] ऊर्ध्वं विविधं हिंसन् सेनाभिः[3] धनेन च[4] शत्रून् ॥ १ ॥

हरी न्व॑स्य या वने॑ वि॒दे वस्विन्द्रो॑ म॒घैर्म॒घवा॑ वृत्र॒हा भु॑वत् ।
ऋ॒भुर्वाज॑ ऋ॒भु॒क्षाः प॑त्यते॒ शवोऽव॑ क्ष्णौमि॒ दास॑स्य॒ नाम॑ चित् ॥ २ ॥

हरी इति॑ । नु । अ॒स्य॒ । या । वने॑ । वि॒दे । वसु॑ । इन्द्रः॑ । म॒घैः । म॒घऽवा॑ । वृ॒त्र॒ऽहा । भु॒व॒त् ।
ऋ॒भुः । वाजः॑ । ऋ॒भु॒क्षाः । प॒त्य॒ते॒ । शवः॑ । अव॑ । क्ष्णौमि॒ । दास॑स्य । नाम॑ । चि॒त् ॥ २ ॥

**उद्गीथ०** अस्य इन्द्रस्य तौ यौ हरी अश्वौ नु क्षिप्रम् विदे [5]विन्देते लभेते[5] वसु धनम् ऋजीषलक्षणम्। क्व लभेते[6]। वने वन्यते सम्भज्यते उपजीव्यते सर्वेणेति वनं यज्ञः अटवी वा, तत्र। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। ताभ्यां तादृशाभ्यां हरिभ्यां वृत्रहननसाधनभूताभ्याम् इन्द्रः मघैः धनैः मघवा धनवान् वृत्रहा वृत्रस्यासुरस्य मेघस्य वा हन्ता भुवत् भवति सदा। किञ्च ऋभुः इन्द्रः उरु भाति उरु भवति वा। 'रूपं रूपं प्रतिरूपो बभूव' ( ऋ ६,४७,१८ ) इति वचनाद् इदं व्याख्यातम्। ऋतेन वोदकेन भवति विद्युद्रूपः, ऋतेन सह भवति वा। वाजः च इन्द्रः। कथम्। वाजेनान्नेन बलेन वा तद्वान्। वाजशब्दश्चान्तर्णीतमत्वर्थः। अथवा 'ऋभुमन्तं वाजवन्तम्' ( ऋ ३,५२,६ ) इति वचनाद् ऋभुमान् वाजवांश्चेत्यर्थः। ऋभुर्वाज इति सौधन्वनावुच्येते[7] (तु. या ११,१६)। ऋभुक्षाः महांश्चेन्द्रः[8] अथवा उरुक्षयणः[9] उरावन्तरिक्षे क्षियति[10] निवसतीति। किञ्च पत्यते शवः ईष्टे[11] चेन्द्रो महतो बलस्य। दासस्य शत्रोः नाम चित् नमत्यनेनेति नाम शिरः तदपि अव क्ष्णौमि निर्णाशयामि, किमुतान्यदङ्गम्[12]। अथवा नामापि निर्णाशयामि इति किमुत शत्रुम्। अथवा अव क्ष्णौमि इत्यत्र पुरुषव्यत्ययः कार्यः। य ईदृश इन्द्रः, सोऽवक्ष्णौति दासस्य नामापीति पूर्ववद्योज्यम् ॥ २ ॥

**वेङ्कट०** अश्वौ यौ अस्य सम्भजनाय भवतो वसुनो लाभाय, ताभ्यां हरिभ्याम् मघैः मघवा इन्द्रः वृत्रहा भवतु। दीप्तः बलवान् महान् इन्द्रः शत्रूणां बलं प्रति पतति[13]। तत्राहम् तेन सहायेन [14]अव हन्मि[14] शत्रोः शरीरम् अपि इति ॥ २ ॥

य॒दा वज्रं॒ हिर॑ण्य॒मिदथा॒ रथं॒ हरी॒ यम॑स्य॒ वह॑तो॒ वि सू॒रिभिः॑ ।
आ ति॑ष्ठति म॒घवा॒ सन॑श्रुत॒ इन्द्रो॒ वाज॑स्य दी॒र्घश्र॑वस॒स्पतिः॑ ॥ ३ ॥

य॒दा । वज्र॑म् । हिर॑ण्यम् । इत् । अथ॑ । रथ॑म् । हरी इति॑ । यम् । अ॒स्य॒ । वह॑तः । वि । सू॒रिऽभिः॑ ।
आ । ति॒ष्ठ॒ति॒ । म॒घऽवा॑ । सन॑ऽश्रुतः । इन्द्रः॑ । वाज॑स्य । दी॒र्घऽश्र॑वसः । पतिः॑ ॥ ३ ॥

---

१. °कंद° वि[2] अ[1]. २. प्रादुर्भ° मूको. ३. °भिः व वि[2]. ४. नास्ति वि[1]. ५-५. विन्दते लभते वि[2] अ. ६. लभते वि[2] अ. ७. °धन्वनामुच्ये° (च्य° वि[2] अ.) मूको. ८. मह° वि[1,2]; महं° वि[2] अ. ९. °क्षयं नः वि[2] अ. १०. क्षयति वि[1]. ११. ईक्षे वि[1,2] अ. १२. °मुदात अन्यद्° वि[1]. १३. चकति वि[2] अ[1]. १४-१४. आहन्मि वि[2] अ[1]; वहमि वि[1].

उद्गीथ० यदा यस्मिन् काले वज्रम् हिरण्यम् हिरण्मयं[1] हिरण्यमण्डितं वेत्यर्थः, शत्रुप्राणानां हर्तारं वा, शत्रुवधाय गृह्णाति इति शेषः। इत् इति पदपूरणः। अथ तदा रथम्। कीदृशम्। हरी अश्वौ यम् रथम् अस्य इन्द्रस्य स्वभूतम् वि वहतः यत्रेष्टं गन्तुं तत्र विशेषेण[2] प्रापयतः, तं रथम् सूरिभिः स्तोतृभिः कुत्सादिभिः सह आ तिष्ठति आरोहति मघवान् धनवान् सनश्रुतः चिरप्रख्यातः, निसर्गत एव जगति विदित इत्यर्थः, इन्द्रः वाजस्य अन्नस्य बलस्य सौधन्वनस्य वा दीर्घश्रवसः महाकीर्तेः पतिः पतिः[3] स्वामी[4] वा ॥ ३ ॥

वेङ्कट० यदा आयुधम् हिरण्मयम् अपि च रथम् इच्छन्ति स्तोतारः शत्रुभिरभिभूताः, यम्[5] रथम् अस्य स्वभूतम्[6] अश्वौ वि वहतः स्तोतॄन् उद्दिश्य, तदा वज्रमादाय तं रथम् आ तिष्ठति मघवा सनातनश्रुतः इन्द्रः अन्नस्य दीर्घश्रवणस्य[7] स्वामी ॥ ३ ॥

सो चि॒न्नु वृ॒ष्टिर्यू॒थ्या॒३॒ स्वा सचाँ॒ इन्द्रः॒ श्मश्रू॑णि॒ हरि॑ता॒भि प्रु॑ष्णुते ।
अव॑ वेति सु॒क्षयं॑ सु॒ते मधू॒दिद् धू॑नोति॒ वातो॒ यथा॒ वन॑म् ॥ ४ ॥

सो इति॑ । चि॒त् । नु । वृ॒ष्टिः । यू॒थ्या॑ । स्वा । सचा॑ । इन्द्रः॑ । श्मश्रू॑णि । हरि॑ता । अ॒भि । प्रु॒ष्णु॒ते ।
अव॑ । वे॒ति॒ । सु॒ऽक्षय॑म् । सु॒ते । मधु॑ । उत् । इत् । धू॒नो॒ति॒ । वात॑ः । यथा॑ । वन॑म् ॥ ४ ॥

उद्गीथ० सो-शब्दः साशब्दपर्यायः। 'चित् इत्युपमार्थे। नु इति क्षिप्रार्थे। तच्छब्दश्रुतेर्योग्यार्थयुक्तो यच्छब्दोऽध्याहार्यः[8]। या महावृष्टिः सा यथा क्षिप्रं सर्वं युगपत् सिञ्चति, एवम् यूथ्या यूथानि वृन्दानि मरुदादिदेवगणलक्षणानि स्वा स्वानि सचा सह इन्द्रः श्मश्रूणि च स्वानि हरिता हरितवर्णेन सोमेन अभि प्रुष्णुते आभिमुख्येन स्थित्वा क्षिप्रं सिञ्चति। सोमं पाययति पिबति चेत्यर्थः[9]। किञ्च अव वेति अभिगच्छति सुक्षयम् शोभनं यज्ञगृहम्। गत्वा च सुते अभिषुते सति सोमे मधु सोमलक्षणं, पीत्वा मत्तः सन्निति शेषः। उत् इत् उत् धूनोति उत्कम्पयति। किम्। सामर्थ्याच्छरीरम्। किमिव। वातः यथा वनम् वृक्षसङ्घातम् ॥ ४ ॥

वेङ्कट० सा वृष्टिः सोमस्य यज्ञभागस्य स्वभूता सहायभूता इन्द्रस्य भवति। सोमवृष्टिः सखा अस्य भवति। इन्द्रः श्मश्रूणि हरितवर्णानि अभि कम्पयति। अव[10] गच्छति सुनिवासम् सुते सति सोममयम् मधु, अथ तत्पीत्वा श्मश्रूणि उत् कम्पयति यथा वातः वनम् ॥ ४ ॥

यो वा॒चा विवा॑चो मृ॒ध्रवा॑चः पु॒रू स॒हस्राशि॑वा ज॒घान॑ ।
तत्त॒दिद॑स्य॒ पौंस्यं॑ गृणीमसि पि॒तेव॒ यस्तवि॑षीं वावृ॒धे शव॑ः ॥ ५ ॥

यः । वा॒चा । विऽवा॑चः । मृ॒ध्रऽवा॑चः । पु॒रु । स॒हस्रा॑ । अशि॑वा । ज॒घान॑ ।
तत्ऽत॑त् । इत् । अ॒स्य॒ । पौंस्य॑म् । गृ॒णी॒म॒सि॒ । पि॒ताऽइ॑व । यः । तवि॑षीम् । व॒वृ॒धे । शव॑ः ॥ ५ ॥

---

१. हिरण्मयम् वि[1]. २. °षेण तत्र वि[2] अ. ३. वा मूको. ४. तस्वा° वि[2] अ ५. य मूको. ६. स्वभूतः वि[1]; स्वभूत अ[1]. ७. दिवश्रुतस्य वि[2] अ[1]. ८. अयं भागो द्विः पठितः वि[1] अ. ९. वे° मूको. १०. अपि वि[1]; अप वि[2] अ[1].

**उद्गीथ०** यः इन्द्रः वाचा वाङ्मात्रेण हुङ्कारमात्रेणेत्यर्थः, विवाचः प्रनष्टवाचः, कृत्वेति शेषः, मृध्रवाचः मृदुवाचश्च शत्रून्, कृत्वेति शेषः, पुरू बहूनि सहस्रा सहस्राणि अशिवा असुखानि सर्वस्याऽसुखकराणीत्यर्थः, जघान हन्ति। यः चेन्द्रः पिता इव। उत्तरः पादः पूर्वं व्याख्यायते। यथा पिता पुत्रस्य तविषीम् बलं वर्धयति अन्नपानप्रदानेन, एवं वृष्टिप्रदानद्वारेण सर्वस्य जगतः शवः बलम् वावृधे वर्धयति। तस्य अस्य इन्द्रस्य स्वभूतम् तत्तन् पौंस्यम् बलम्, येनयेन बलेन शत्रून् हन्ति तत्तत् बलमित्यर्थः, गृणीमसि स्तुमो वयम् ॥ ५ ॥

**वेङ्कट०** यः वाचा एव विविधवाचः हिंसकवाचः च शत्रून् पुरूणि सहस्राणि अशिवानि हन्ति। पिता इव यः तविषीम् सेनाम् आत्मीयां वर्धयति बलेन[1]। तत्तत् इद् अस्य पौंस्यम् वयं स्तुमः ॥ ५ ॥

स्तोमं॑ त इन्द्र विम॒दा अ॑जीजन॒न्नपू॑र्व्यं पुरु॒तमं॑ सु॒दान॑वे ।
वि॒द्मा ह्य॑स्य॒ भोज॑नमि॒नस्य॒ यदा प॒शुं न गो॒पाः क॑रामहे ॥ ६ ॥

स्तोम॑म् । ते॒ । इ॒न्द्र॒ । वि॒ऽम॒दाः । अ॒जी॒ज॒न॒न् । अपू॑र्व्यम् । पु॒रु॒ऽतम॑म् । सु॒ऽदान॑वे ।
वि॒द्म । हि । अ॒स्य॒ । भोज॑नम् । इ॒नस्य॑ । यत् । आ । प॒शुम् । न । गो॒पाः । क॒रा॒म॒हे॒ ॥ ६ ॥

**उद्गीथ०** स्तोमम् स्तुतिविशेषम्। कीदृशम्। अपूर्व्यम् अपूर्वम् अन्यैरकृतपूर्वम् उत्कृष्टमित्यर्थः, पुरुतमम् बहुतमम् अतिशयेन बहुप्रकारयुक्तञ्चेत्यर्थः। हे इन्द्र! ते तुभ्यम् सुदानवे शोभनदानार्थाय विमदाः अजीजनन्। पूर्वोत्तरवाक्ययोरेकवाक्यतायै पुरुषव्यत्ययोऽत्र कर्तव्यः। विमदनामानो[2] वयं जनितवन्तः कृतवन्त इत्यर्थः। कस्मात्[3] [4]कृतवन्तः। उच्यते—विद्म हि हि यस्मात् हे इन्द्र! इनस्य ईश्वरस्य अस्य तव यत् भोजनम् धनम् अस्ति, तद् वयम् विद्म जानीमः। तस्मात् त्वदीयं तद् धनं प्रार्थयमाना वयम् त्वाम् आ करामहे अस्मदभिमुखं कुर्मः। इन्द्रं धनं प्रार्थयमाना अस्मदभिमुखं कुर्म[4] इत्यर्थः। [5]कथं कुर्मः[5]। पशुम् न गोपाः यथा पशुं सामर्थ्याद् गोधेनुं गोपाः गोपालो दोहार्थम् आह्वयन् अभिमुखं करोति, एवम् ॥ ६ ॥

**वेङ्कट०** स्तोमम् ते इन्द्र! अमी विमदाः अजीजनन् अपूर्व्यम् नूतनम् बहुतमम् च सुदानाय। जानीमः हि यत्[6] वयम्[7] अस्य तव ईश्वरस्य महद्धनम्, तद् वयं धनम् अस्मदभिमुखं कुर्मः पशुम् इव गोपालः ॥ ६ ॥

माकि॑र्न ए॒ना स॒ख्या वि यौ॑षु॒स्तव॑ चेन्द्र विम॒दस्य॑ च॒ ऋषेः॑ ।
वि॒द्मा हि ते॒ प्रम॑तिं देव जामि॒वद॒स्मे ते॑ सन्तु स॒ख्या शि॒वानि॑ ॥ ७ ॥

माकिः॑ । नः॒ । ए॒ना । स॒ख्या । वि । यौ॒षुः॒ । तव॑ । च॒ । इ॒न्द्र॒ । वि॒ऽम॒दस्य॑ । च॒ । ऋषेः॑ ।
वि॒द्म । हि । ते॒ । प्रऽम॑तिम् । दे॒व॒ । जा॒मि॒ऽवत् । अ॒स्मे इति॑ । ते॒ । सन्तु॒ । स॒ख्या । शि॒वानि॑ ॥

१. नास्ति वि[1]. २. विमदमाना अ; विबदमाना वि; विमद्मानो वि[1,3]. ३. तस्मात् वि[1,3]. ४-४. °वन्तं हिर्मः इन्द्रं धनं प्रार्थ तुर्मः मूको; पूर्तिः सायणानुसारिणी द्र. ५-५. नास्ति वि[1] अ. ६. नास्ति वि[1] अ[1]. ७. स्वयम् वि[1] अ[1].

उद्गीथ० माकिः मा केचिदीर्ष्यालवः नः अस्माकम्। 'अस्मदो[1] द्वयोश्च' (पा १,२,५९) इति अत्र द्वयोर्बहुवचनम्। हे इन्द्र! तव मम च विमदस्य ऋषेः आवयोः [2]एना एनानि[2] सख्या सख्यानि स्तुत्यत्वस्तोतृत्वेज्यत्वयष्टृत्वलक्षणानि वि यौषुः विमिश्रयेयुः वियोजयेयुः। तव च मम च भेदं[3] कुर्वन्तः सन्तो धनदानव्याघातकारणद्वारेण सख्यानि माऽपनयन्त्वित्यर्थः। हि यस्मात् विद्म जानीमो वयम् ते तव प्रमतिम् प्रकृष्टां मतिम् अनुग्राहिकां बुद्धिम्। किमिव। जामिवत् 'जाम्यतिरेकनाम। बालिशस्य वा। समानजातीयस्य वा' (या ४,२०) इति वचनादत्र जामिशब्देन समानजातीय उच्यते। यथा समानाद् एकस्माज्जातस्य भ्रातुर्भगिन्यामिव प्रकृष्टां बुद्धिं स्नेहयुक्तां जानाति[4] कश्चित्, एवम्। कस्मात्। यस्माद् हे देव! अस्मे अस्माकं च ते तव च सन्तु भवन्तु सख्यानि शिवानि सुखानि अनपायानीत्यर्थः ॥ ७ ॥

वेङ्कट० मा केचित् अस्माकम् एतानि सख्यानि[5] विश्लिष्टानि कुर्वन्तु तव च इन्द्र! विमदस्य च ऋषेः मम। जानीमः हि तव प्रमतिम् हे देव! पित्रादेरिव। तथा सति अस्मे ते सन्तु सख्यानि शिवानि इति ॥ ७ ॥

[6]इति सप्तमाष्टके सप्तमाध्याये नवमो वर्गः[6] ॥

## [ २४ ]

[6]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद् वा ऋषिः। इन्द्रो देवता, अन्त्यानां तिसृणामश्विनौ। आस्तारपङ्क्तिश्छन्दः, अन्त्यास्तिस्रोऽनुष्टुभः[6]।

**इन्द्र॒ सोम॑मि॒मं पि॑ब॒ मधु॑मन्तं च॒मू सु॒तम्।**
**अ॒स्मे र॒यिं नि धा॑रय॒ वि वो॒ मदे॑ सह॒स्रिणं॑ पुरूवसो॒ विव॑क्षसे ॥ १ ॥**

इन्द्र॑। सोम॑म्। इ॒मम्। पि॒ब॒। मधु॑ऽमन्तम्। च॒मू इति॑। सु॒तम्।
अ॒स्मे इति॑। र॒यिम्। नि। धा॒र॒य॒। वि। व॒ः। मदे॑। स॒ह॒स्रिण॑म्। पु॒रु॒व॒सो॒ इति॑ पुरुऽवसो। विव॑क्षसे ॥१॥

उद्गीथ० उत्तराणि च त्रीणि विमद एव ददर्श। अस्याद्यस्तृच ऐन्द्रः, उत्तर आश्विनः। हे इन्द्र! सोमम् इमम् अस्मत्प्रत्तम् पिब मधुमन्तम् मधुस्वादोपेतम् चमू सप्तमीद्विवचनस्य लुगत्र द्रष्टव्यः। चम्वोः चमनसाधनयोरधिषवणफलकयोरित्यर्थः, सुतम् अभिषुतम्। पीत्वा च सोमम् अस्मे अस्मासु रयिम् धनविशेषम्। कीदृशम्। सहस्रिणम् सहस्रसङ्ख्यायुक्तम्, प्रभूतमित्यर्थः, नि धारय नियमेन स्थापय। किं निमित्तम्। वि वः मदे युष्माकं सर्वेषामेव देवानां विविधे सोमजन्यमदे निमित्ते। त्वद्दत्तेन धनेन यस्माद् वयं युष्मदर्थं सोमयागं पुनरपि कुर्मः, तस्माद् अस्मभ्यम् अनन्तं धनं देहीत्यर्थः। हे पुरूवसो! बहुधन!। कस्मादेवमुच्यसे[7]। यस्माद् विवक्षसे महान् भवसि त्वम् ॥ १ ॥

---

१. नास्ति मूको. २-२. एना एनानि मूको. ३. भद्रं वि[१]. ४. अन्यानि वि[१]. ५. नास्ति वि[१] अ[२]. ६-६. नास्ति मूको. ७. °च्यते वि[१] अ.

**वेङ्कट०** इन्द्र! सोमम् इमम् पिब मधुरसम् अधिषवणफलकयोः सुतम्। अस्मासु रयिम् स्थापय[1] बहुसङ्ख्यम्[2]। विशेषेण युष्माकं मादके विमदे स्तुतिरियं प्रवृत्ता इति ॥ १ ॥

त्वां य॒ज्ञेभि॑रु॒क्थैरुप॑ ह॒व्येभि॑रीमहे ।
शची॑पते शची॒नां॒ वि वो॒ मदे॒ श्रेष्ठं॑ नो धेहि॒ वार्यं॒ विव॑क्षसे ॥ २ ॥

त्वाम् । य॒ज्ञेभिः॑ । उ॒क्थैः । उप॑ । ह॒व्येभिः॑ । ई॒म॒हे॒ ।
शची॑ऽपते । श॒ची॒नाम् । वि । व॒ः । मदे॑ । श्रेष्ठ॑म् । न॒ः । धे॒हि॒ । वार्य॑म् । विव॑क्षसे ॥ २ ॥

**उद्गीथ०** त्वाम् इन्द्रम् यज्ञेभिः सोमयागैः[3] उक्थैः शस्त्रादिभिः[4] स्तुतिभिश्चेत्यर्थः, हव्येभिः हविर्यज्ञैश्चेत्यर्थः, उप ईमहे तृतीयाश्रुतेरुपोपसर्गश्रुतेश्च उपाराध्य धनं याचामह इत्यर्थः। याचितश्च सन् त्वं हे शचीपते! शचीनाम् यागकर्मणां वाचां वा स्तुतिलक्षणानां फलत्वेन[5] सम्बन्धिनम्[6] श्रेष्ठम् अतिशयेन प्रशस्तं गोहिरण्यादिकं दृष्टम् वार्यम् वरणीयं स्वर्गापवर्गादिकम् अदृष्टञ्च नः अस्मभ्यम् धेहि देहि। कदा ददानि। उच्यते— वि वः मदे युष्माकं सर्वेषामेव देवानां विविधे विशिष्टे वा सोमजन्यमदे सति। कस्मादेवमुच्यसे[7]। यस्माद् विवक्षसे महान् भवसि त्वम् ॥ २ ॥

**वेङ्कट०** त्वाम् यज्ञैः[8] स्तुतिभिः च उप याचामहे अभिलषितं हविर्भिश्च। हे शचीनाम् शचीपते! श्रेष्ठम् अस्मभ्यम् धेहि धनम् ॥ २ ॥

यस्पति॒र्वार्या॑णा॒मसि॑ र॒ध्रस्य॑ चोदि॒ता ।
इन्द्र॑ स्तोतॄ॒णाम॑वि॒ता वि वो॒ मदे॑ द्वि॒षो नः॑ पा॒ह्यंह॑सो॒ विव॑क्षसे ॥ ३ ॥

यः । पति॑ः । वार्या॑णाम् । असि॑ । र॒ध्रस्य॑ । चो॒दि॒ता ।
इन्द्र॑ । स्तो॒तॄ॒णाम् । अ॒वि॒ता । वि । व॒ः । मदे॑ । द्वि॒षः । न॒ः । पा॒हि॒ । अंह॑सः । विव॑क्षसे ॥ ३॥

**उद्गीथ०** हे इन्द्र! यः त्वम् पतिः स्वामी वार्याणाम् वरणीयानां धनानाम् असि भवसि, रध्रस्य संसिद्धस्य सम्यक्कारिणो यजमानस्य कर्मसु चोदिता चोदयिता धनदानेन नियोक्ता भवसि, स्तोतॄणाम् च अविता सर्वतो रक्षिता भवसि, स त्वम् वि वः मदे युष्माकं सर्वेषामेव देवानां विविधे विशिष्टे वा सोमजन्यमदे सति द्विषः द्वेष्टुः सकाशात् नः अस्मान् पाहि रक्ष, अंहसः पापाच्च पाहि। कस्मादेवमुच्यसे। यस्मात् विवक्षसे महान् भवसि त्वम् ॥ ३ ॥

**वेङ्कट०** यः त्वं धनानाम् पतिः स्वामी भवसि, राधकस्य चोदिता इन्द्र!, स्तोतॄणाम् रक्षकः, सोऽस्मान् शत्रोः आहन्तुः परिरक्ष[9] ॥ ३ ॥

---

१. स्थापक वि[2] अ[1]. २. °सख्यम् मूको. ३. °यागांशैः वि[3] अ. ४. °दि वि[1].
५. विफल° मूको. ६. संस्थितं सम्ब° वि[3] अ. ७. °च्यते वि[3] अ. ८. यज्ञेभिः वि[1]; °ज्ञे वि[2].
९. °रक्षतु वि[2] अ[1]; °रक्षत वि[3].

युवं शंक्रा मायाविना समीची निरंमन्थतम् ।
विमदेन यदीळिता नासत्या निरमन्थतम् ॥ ४ ॥

युवम् । शक्रा । मायाऽविना । समीची इति सम्ऽईची । निः । अमन्थतम् ।
विऽमदेन । यत् । ईळिता । नासत्या । निःऽअमन्थतम् ॥ ४ ॥

**उद्गीथ०** युवम् युवां हे शक्रा! शक्तौ! समर्थौ! शत्रुवधादिकर्मकरणाय मायाविना प्रज्ञावन्तौ च शत्रुवञ्चनकुशलौ वा समीची सङ्गते परस्परेण संयुक्ते अरणी निः अमन्थतम् निर्मथितवन्तौ। 'अश्विनावध्वर्यू' ( ऐब्रा १,१८ ) इति ब्राह्मणेनोक्तत्वात्। कदा निर्मथितवन्तौ युवाम्। उच्यते— विमदेन मया यत् यदा ईळिता स्तुतौ नासत्या! नासत्यनामानौ युवाम्, तदा[1] निरमन्थतम् निर्मथितवन्तौ स्थो युवाम् ॥ ४ ॥

**वेङ्कट०** तृच आश्विनोऽयम्। हे शक्तौ! प्रज्ञावन्तौ सङ्गते अरणी[2] निः अमन्थतम्। एतदेवोक्तम्— विमदेन मया यदा स्तुतौ नासत्यौ! ममाग्निम् निरमन्थतम्, तदानीं सङ्गतौ निरमन्थतम् इति ॥ ४ ॥

विश्वे देवा अंकृपन्त समीच्योर्निष्पतन्त्योः ।
नासत्यावब्रुवन् देवाः पुनरा वंहतादितिं ॥ ५ ॥

विश्वे । देवाः । अकृपन्त । सम्ऽईच्योः । निःऽपतन्त्योः ।
नासत्यौ । अब्रुवन् । देवाः । पुनः । आ । वहतात् । इति ॥ ५ ॥

**उद्गीथ०** विश्वे देवाः सर्वे देवा इन्द्रादयः अकृपन्त[3] युवामश्विनौ स्तुतवन्तः[4]। कदा। उच्यते— समीच्योः निष्पतन्त्योः 'यस्य च भावेन भावलक्षणम्' ( पा २,३,३७ ) इत्येषा सप्तमी। सङ्गतयोः अग्निनिर्मन्थनकाले परस्परेण संयुक्तयोररण्योः अग्निचूर्णरूपेण नीचैर्निष्पतन्त्योः[5] अरण्योः। निष्पतनक्रियया स्तुतिक्रिया लक्ष्यते। यदा युवाम् अरणीभ्याम् अग्निं निर्मथितवन्तौ, तदा विश्वे देवा युवां स्तुतवन्त इत्यर्थः। किञ्च नासत्यौ युवाम् अब्रुवन् उक्तवन्तः देवाः। किमिति। पुनः आ वहतात् इति पुनःपुनरीदृशानि कर्माणि जगत्स्थितिहेतुभूतकर्माणि आभिमुख्येन स्थित्वा वहतम् अन्तं प्रापयतं निर्वर्तयतं कुरुतमित्यर्थः ॥ ५ ॥

**वेङ्कट०** सर्वे देवाः अस्तुवन् सङ्गतयोः अरण्योः आभ्यां प्रेर्यमाणयोः निष्पतन्त्योः सत्योः। नासत्यौ अब्रुवन् देवाः— पुनः चायम् अग्निः आ वहतात् हव्यम् इति ॥ ५ ॥

मधुंमन्मे परायणं मधुंमत् पुनरायनम् ।
ता नों देवा देवतंया युवं मधुंमतस्कृतम् ॥ ६ ॥

---

१. नास्ति मूको. २. रणी मूको. ३. अकृतवन्त वि[1] अ. ४. स्तुवन्तः मूको. ५. °चैस्तीर्थैरनपतन्त्योः मूको.

मधुऽमत् । मे । पराऽअयनम् । मधुऽमत् । पुनः । आऽअयनम् ।
ता । नः । देवा । देवतया । युवम् । मधुऽमतः । कृतम् ॥ ६ ॥

**उद्गीथ०** मधुमत् मध्विति अत्र रसविशेष उच्यते तेन, चात्र तद्गता प्रीतिर्लक्ष्यते । युवयोः प्रसादान्मधुमद्, अस्त्विति शेषः । प्रीतियुक्तमस्त्वित्यर्थः । मे मम परायणम् परागमनम्, योगक्षेमाद्यर्थं गृहाद् बहिर्गमनमित्यर्थः । मधुमत् प्रीतियुक्तमेवास्तु पुनः आयनम् गृहान्[1] प्रति आगमनमपि । किञ्च ता तौ युवम् युवां सदा भक्तानामनुग्रहीतारौ हे देवा! देवौ! नः अस्मान् मधुमतः सदा प्रीतियुक्तान्[2] कृतम् कुरुतम् । केन । देवतया देवत्वेन, अणिमादि-देवतैश्वर्ययोगादित्यर्थः ॥ ६ ॥

**वेङ्कट०** मधुमत् मे यत्[3] परायणम् अस्तु । तथा मधुमत् पुनः आयनम् । यत्र गच्छामि यत्र चाऽऽगच्छामि तदुभयं मधुमद् भवतु । तौ अस्मान्[4] देवौ! देवत्वेन युवाम् मधुमतः कुरुतम् ॥ ६ ॥

[5]इति सप्तमाष्टके सप्तमाध्याये दशमो वर्गः[5] ॥

[ २५ ]

[5]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद् वा ऋषिः । सोमो देवता । आस्तारपङ्क्तिश्छन्दः[5] ।

**भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।**
**अधा ते सख्ये अन्धसो वि वो मदे रणन् गावो न यवसे विवक्षसे ॥ १ ॥**

भद्रम् । नः । अपि । वातय । मनः । दक्षम् । उत । क्रतुम् ।
अध । ते । सख्ये । अन्धसः । वि । वः । मदे । रणन् । गावः । न । यवसे । विवक्षसे ॥ १ ॥

**उद्गीथ०** उत्तरं सौम्यमेकादशर्चम् । हे सोम! भद्रम् कल्याणं शुभसंकल्पलक्षणम् नः अस्माकं संबन्धि मनः[6] वातय गमय[7] प्रापय, शुभसंकल्पमस्माकं मनः कुर्वित्यर्थः । अपि दक्षम् 'दक्ष वृद्धौ' अस्माकम् दक्षं वृद्धं सर्वव्यापिनमन्तरात्मानमपि भद्रं शुभकारित्वलक्षणं कुर्वित्यर्थः । उत क्रतुम् अस्माकं बुद्धिमपि भद्रं शुभाध्यवसायलक्षणं प्रापय, शुभाध्यवसायिनं कुर्वित्यर्थः । एतस्मिन् यथोक्तं सर्वस्मिन् कृते सति अथ ते तत्र सोमस्य सम्बन्धिनि सख्ये[8] सखिकर्मणि स्तुत्यस्तोतृत्वेज्ययष्टृत्वलक्षणे[9] रणन् रमामहे, प्रीतिं कुर्म इत्यर्थः । किमिव । गावः न यवसे यथा गावो यवसे घासे रमन्ते प्रीतिं कुर्वन्ति, एवम् । किमर्थम् । त्वद्यागलक्षणे सख्ये अन्धसः वि वः मदे सोमाख्यस्यान्नस्य जन्यत्वेन सम्बन्धिनि युष्माकं सर्वेषामेव

---

१. °हात् वि[2] अ. २. °युक्तं वि[2] अ. ३. नास्ति वि[1]; य वि[2]. ४. अस्मा वि[2] अ[1]; अस्माकं वि[1]. ५-५. नास्ति मूको. ६. नः मूको. ७. गमनाय मूको. ८. स मूको. ९. °ज्यत्वयष्टृ° मूको.

देवानां विविधे मदे निमित्ते। कस्मात् एवमुच्यसे[1]। यस्मात् विवक्षसे[2] महान् भवसि। महान्तश्चाऽभ्यर्थिताः शूरा भवन्ति ॥ १ ॥

**वेङ्कट०** भद्रम् अस्माकम् आगमय मनः प्राणम् च अन्नम् च, अपि वा बलं प्रज्ञानं च। अथ तव सख्ये अद्यमानस्य स्तोतारो रमन्ताम्[3] गावः इव यवसेषु[4] ॥ १ ॥

हृदिस्पृशस्त आसते विश्वेषु सोम धामसु ।
अधा कामा इमे मम वि वो मदे वि तिष्ठन्ते वसूयवो विवक्षसे ॥ २ ॥

हृदिऽस्पृशः । ते । आसते । विश्वेषु । सोम । धामऽसु ।
अध । कामाः । इमे । मम । वि । वः । मदे । वि । तिष्ठन्ते । वसुऽयवः । विवक्षसे ॥ २ ॥

**उद्गीथ०** हे सोम! ते तव हृदिस्पृशः हृदयस्य बुद्धेः स्तुतिभिः स्प्रष्टारः[5] सन्तः आसते तिष्ठन्ति ऋत्विजः विश्वेषु सर्वेषु धामसु स्वेषु स्थानेषु, स्तुवन्तस्तिष्ठन्ति इत्यर्थः। तेषु स्वस्थानेषु स्थित्वा त्वां स्तुवत्सु[6] अध अथ कामाः अभिलाषाः इमे मम, हृदयादिति शेषः, वि तिष्ठन्ते उत्तिष्ठन्ति। किंविशिष्टाः। वसूयवः वसुकामाः[7] धनमिच्छन्तः। किमर्थम्। वि वः मदे युष्माकं सर्वेषामेव देवानां सोमजन्यविविधमदे निमित्ते। सोमयागार्थमित्यर्थः। '[8]कस्मात् देवस्तुत्या[8] देवयागार्थं धनं प्रार्थ्यते। यस्मात् विवक्षसे महान् त्वं भवसि। महान्तश्च परेङ्गितज्ञा भवन्ति अभ्यर्थिताः शूराश्च ॥ २ ॥

**वेङ्कट०** हृदयस्पृशः तव तिष्ठन्ति रसाः विश्वेषु सोम! पात्रेषु। अथ कामाः इमे मदीयाः निर्गच्छन्ति धनकामा धनेभ्यः[9] देवेभ्यः सोमं हुत्वा इदं च लभेयेति ॥ २ ॥

उत व्रतानि सोम ते प्राहं मिनामि पाक्या ।
अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥ ३ ॥

उत । व्रतानि । सोम । ते । प्र । अहम् । मिनामि । पाक्या ।
अध । पिताऽइव । सूनवे । वि । वः । मदे । मृळ । नः । अभि । चित् । वधात् । विवक्षसे ॥३॥

**उद्गीथ०** उत अपि च व्रतानि यागादिकर्माणि हे सोम! ते त्वदर्थम् अहम् प्र मिनामि प्रहिनस्मि [10]प्रकर्षेण करोमि[10] सदा पाक्या परिपक्वया सर्वार्थदर्शिन्या प्रज्ञया। अथवा व्रतविशेषणमेतत्। पाक्यानि परिनिष्ठितानि। त्वमपि अध अथ त्वद्यागकरणानन्तरं परितुष्टः सन् मृळ सुखाय भव नः अस्माकम्। अभि चित् वधात् आभिमुख्येन स्थित्वा शालवादिवधाच्च, पालयास्मानिति शेषः। किमिव। पिता इव सूनवे यथा पिता पुत्रस्यार्थाय तैस्तैरुपायैः सुखी भवति पालयति च सर्वस्मात् पुत्रम्, एवम्। किमर्थं सुखयानि पालयानि[11] च त्वाम्। उच्यते— वि वः मदे युष्माकं

१. °च्यते वि[२] अ. २. विवक्षन्नेह वि[२] अ. ३. कमताम् वि[२]; मन्ताम् वि[१]; कामत्ताम् अ[१].
४. 'वसौ वि[२] अ[१]. ५. स्रष्टारः मूको. ६. स्तुवन् वि[२]; स्तुवन् सु वि[२] अ. ७. वसु[०] मूको.
८-८. कस्मादेव वेक्त्या वि[२] अ. ९. नास्ति वि[१२]. १०-१०. °र्षेण मि मूको. ११. °यामि मूको.

सर्वेषामेव देवानां विविधे सोमजन्यमदे पुनःपुनः कर्तव्यत्वेन निमित्तभूते, यस्मात्[1] त्वया सुसुख्यमानः सुपाल्यमानश्च पुनःपुनः सोमयागं युष्मदर्थं करोमि इति, तस्मात् कारणात् मां सुखय सर्वतः पालय चेत्यर्थः। कस्मादेवमुच्यसे[2]। यस्मात् विवक्षसे महान् भवसि त्वम्। महान्तश्च भक्तान् सुखयन्ति पालयन्ति च[3] ॥ ३ ॥

वेङ्कट० अपि च कर्माणि सोम! त्वदीयानि प्र हिनस्मि अहम् बालः[4] पक्तव्यप्रज्ञः। अथापि त्वं मह्यम् [5]पिता इव[5] सूनवे भव, [6]अपि च सुखय[6] अस्मान् शत्रोः ॥ ३ ॥

समु॒ प्र य॑न्ति धी॒तय॒ः सर्गा॑सोऽव॒ताँइ॑व ।
क्रतुं॑ नः सोम जी॒वसे॒ वि वो॒ मदे॑ धा॒रया॑ चम॒साँइ॑व॒ विव॑क्षसे ॥ ४ ॥

सम्। ऊँ इति॑। प्र। य॒न्ति॒। धी॒तय॑ः। सर्गा॑सः। अ॒व॒तान्ऽइ॑व।
क्रतु॑म्। नः॒। सो॒म॒। जी॒वसे॑। वि। वः॒। मदे॑। धा॒रय॑। च॒म॒सान्ऽइ॑व। विव॑क्षसे ॥ ४ ॥

उद्गीथ० उ-कारः पदपूरणः। सम् प्र यन्ति सम्भूय प्रकृष्टया गत्या गच्छन्ति त्वां प्रति धीतयः अस्मदीया स्तुतयः। देवतागुणान् धारयन्ति गृह्णन्तीति धीतयः स्तुतयः। किमिव सम्प्रयन्ति। [7]सर्गासः अवतान् इव[7] विसृज्यन्ते उदकपानार्थम् आदानार्थं वेति सर्गाः गोसङ्घा घटिकासङ्घा वा। 'अवतः' (निघ ३,२३) इति कूपनाम। यथा सर्गा गोसङ्घा घटिकासङ्घा वा उदकपानार्थम् आदानार्थं वा अवतान् कूपान् प्रति सम्भूय प्रकृष्टया गत्या गच्छन्ति, एवम्। एतज्ज्ञात्वा क्रतुम् यागकर्म प्रज्ञां[8] वा कर्तारं वा कर्मणाम् आन्तरपुरुषम्[9] नः अस्माकम् जीवसे चिरजीवनाय हे सोम! धारय महताऽऽदरेण स्थापय मयि। किमिव। वि वः मदे चमसान् इव यथा युष्माकं सर्वेषामेव देवानां विविधसोमजन्यमदे कर्तव्यत्वेन निमित्तभूते चमसानध्वर्युर्हविर्धाने महता यत्नेन[10] धारयति, एवम्। कस्मादेवमुच्यसे। यस्माद् विवक्षसे महान् भवसि त्वम् ॥ ४ ॥

वेङ्कट० सह एव प्र यन्ति अङ्गुलयः त्वां रज्जवः इव कूपान्[11]। स त्वं कर्म अस्माकम् जीवनाय धारय आपूरय चमसान् इव ॥ ४ ॥

तव॒ त्ये सो॑म॒ शक्ति॑भि॒र्निका॑मासो॒ व्यृ॑ण्विरे ।
गृत्स॑स्य॒ धीरा॑स्त॒वसो॒ वि वो॒ मदे॑ व्र॒जं गोम॑न्तम॒श्विनं॒ विव॑क्षसे ॥ ५ ॥

तव॑। त्ये। सो॒म॒। शक्ति॑ऽभिः। निऽका॑मासः। वि। ऋ॒ण्वि॒रे॒।
गृत्स॑स्य। धीरा॑ः। त॒वस॑ः। वि। वः॒। मदे॑। व्र॒जम्। गोऽम॑न्तम्। अ॒श्विन॑म्। विव॑क्षसे ॥ ५ ॥

---

१. तस्मात् वि[2] अ. २. °च्यते वि[2] अ. ३. नास्ति मूको. ४. बाल वि[2] अ[1]; बलः वि[1]. ५-५. अपि ते च वि[2] अ[2]; पिते च वि[1]. ६-६. अभिसुखय वि[1]. ७-७. °सो दसत इव मूको. ८. प्रज्ञां मूको. ९. °पुरुषः मूको. १०. हस्तेन वि[2] अ. ११. तुपात् वि[2] अ[1]; कूपात् वि[1].

**उद्गीथ०** हे सोम! तव गृत्सस्य **मेधाविनः** तवसः महतोऽर्थाय ये मम यजमानस्य स्वभूता ऋत्विजः निकामासः **दृष्टादृष्टफले नियतकामाः** धीराः मेधाविनः, **सम्यक्कारिण** इत्यर्थः, [1]त्ये ते[1] शक्तिभिः **यागकर्मभिः** सह वि ऋण्विरे विविधाः स्तुतीर्गमयन्ति प्रेरयन्ति कुर्वन्तीत्यर्थः। एतज्ज्ञात्वा व्रजम् व्रजन्त्यत्रेति व्रजो[2] [3]गोष्ठम्। मन्दुरा[3] चात्र सामर्थ्यादुच्यते, तम् गोमन्तम् गोसहितम् अश्विनम् अश्वसहितं च अस्मभ्यं देहि इति शेषः। किमर्थम्। वि वः मदे युष्माकं सर्वेषामेव देवानां विविधे सोमजन्यमदे[4] पुनः कर्तव्यत्वेन निमित्तभूते। कस्मादेवमुच्यसे। यस्मात् विवक्षसे महान् भवसि त्वम् ॥ ५ ॥

**वेङ्कट०** तव अमी सोम! अङ्गुलिभिः नितरां कमनीया रसाः प्रेर्यन्ते। मेधाविनः वृद्धस्य तव स्वभूतम् धीराः व्रजम् गोमन्तम् अश्ववन्तम् प्राप्नुवन्ति ॥ ५ ॥

[5]इति सप्तमाष्टके सप्तमाध्याये एकादशो वर्गः[5] ॥

## पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् ।
## समाकृणोषि जीवसे वि वो मदे विश्वा संपश्यन् भुवना विवक्षसे ॥ ६ ॥

पशुम् । नः । सोम । रक्षसि । पुरुऽत्रा । विऽस्थितम् । जगत् ।
सम्ऽआकृणोषि । जीवसे । वि । वः । मदे । विश्वा । सम्ऽपश्यन् । भुवना । विवक्षसे ॥ ६ ॥

**उद्गीथ०** हे सोम! पशुम् देवयागार्थमुपाकृतम् नः अस्माकं स्वभूतम् रक्षसि सर्वतः पालयसि त्वम्। न केवलं पशुम्। किं तर्हि। पुरुत्रा बहुधा सुरनरतिर्यग्योन्यादिभावेन विष्ठितम् अवस्थितम् जगत् च पालयसि सर्वतः। किञ्च समाकृणोषि समाकरोषि जगतो वृत्तिञ्च विदधासीत्यर्थः। किमर्थम्। जीवसे जीवनाय। कथं वृत्तिं विदधासि। उच्यते — विश्वा संपश्यन् भुवना सर्वाणि भूतानि समं पश्यन् यथार्हं विदधासीत्यर्थः। किमर्थमेतत् सर्वं यथोक्तं करोषि। उच्यते — वि वः मदे युष्माकं सर्वेषामेव देवानां विविधहविर्जन्यतृप्त्यर्थम्। उक्तञ्च — 'इतः-प्रदानं देवा उप जीवन्ति × × × अमुतःप्रदानं मनुष्याः' ( तै ३,२,९,७ ) इति। विवक्षसे महान् भवसि त्वम्। उचितञ्च महतामेतत् यथोक्तम् ॥ ६ ॥

**वेङ्कट०** पशुम् अस्माकम् सोम! रक्षसि बहुषु देशेषु स्थितम् अन्यच्च जङ्गमम्। स त्वम् आत्मनि समाकृणोषि जीवयितुं[6] विश्वानि भूतानि सह पश्यन् ॥ ६ ॥

## त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।
## सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥ ७ ॥

त्वम् । नः । सोम । विश्वतः । गोपाः । अदाभ्यः । भव ।
सेध । राजन् । अप । स्रिधः । वि । वः । मदे । मा । नः । दुःऽशंसः । ईशत । विवक्षसे ॥७॥

---

१-१. इत्येते मूको. २. व्रजं मूको. ३-३. °ष्ठमानिरा वि[2] अ'; °ष्ठ मन्दिरा वि[3]. ४. °जन्ये म° वि[2] अ. ५-५. नास्ति मूको. ६. जीवितुं वि[2] अ[1].

उद्गीथ० हे सोम! यः त्वम् अदाभ्यः केनचिदप्यहिंस्यः स त्वम् नः अस्माकम् विश्वतः सर्वतः गोपाः रक्षिता भव । किञ्च हे राजन्! सर्वस्य स्वामिन्! अप सेध अपगमय अस्मत्तः अपजहि वा स्रिधः सेधितॄन् अस्माकमपक्षपयितॄन् हन्तॄन् वा । मा च नः अस्माकम् दुःशंसः दुश्चरितानां विद्यमानानामविद्यमानानाञ्च शंसिता प्रख्यापयिता ईशत ईशिता भूत् । तव प्रसादादस्माकमपवक्ता मा भूत् कश्चिदित्यर्थः । किमर्थमेतत् सर्वं प्रार्थ्यसे । वि वः मदे युष्माकं सर्वेषामेव देवानां विविधसोमजन्यतृप्त्यर्थम् । विवक्षसे महांश्च भवसि त्वम् । महत्त्वाच्च सर्वमर्थ्यसे विविधैर्हविर्भिस्तर्प्यसे चेत्यर्थः ॥ ७ ॥

वेङ्कट० त्वम् अस्माकम् सोम! सर्वतः गोपायिता[1] भव । अहिंसितः अप सेध राजन्! उपक्षपयितॄन् । मा अस्माकम्[2] दुःशंसः[3] ईशिष्ट ॥ ७ ॥

त्वं नः॑ सोम सु॒क्रतु॑र्वयो॒धेया॑य जागृहि ।
क्षे॒त्र॒वित्त॑रो॒ मनु॑षो॒ वि वो॒ मदे॑ द्रु॒हो नः॑ पा॒ह्यंह॑सो॒ विव॑क्षसे ॥ ८ ॥

त्वम् । नः॒ । सो॒म॒ । सु॒ऽक्रतुः॑ । व॒यः॒ऽधेया॑य । जा॒गृ॒हि॒ ।
क्षे॒त्र॒वित्ऽत॑रः । मनु॑षः । वि । वः॒ । मदे॑ । द्रु॒हः । नः॒ । पा॒हि॒ । अंह॑सः । विव॑क्षसे ॥ ८ ॥

उद्गीथ० हे सोम! यः त्वम् सुक्रतुः सुप्रज्ञानः[4] सुकर्मा वा क्षेत्रवित्तरः 'क्षि निवासगत्योः' इत्यस्य क्षेत्रम् । क्षेत्रस्य स्थित्युत्पत्तिप्रलयकालेषु जगतो निवासभूतस्य वा कारणात्मनोऽतिशयेन वेत्ता च । स त्वम् नः अस्मभ्यम् वयोधेयाय अन्नधेयाय जागृहि यतस्वेत्यर्थः । किञ्च मनुषः मनुष्यात् । कीदृशात् । द्रुहः द्रोग्धुः सकाशात् नः अस्मान् पाहि रक्ष । अंहसः पापाच्च रक्ष । किमर्थमेवं प्रार्थ्यसे । वि वः मदे युष्माकं सर्वेषामेव देवानां विविधसोमादिहविर्जन्यतृप्त्यर्थमित्यर्थः । विवक्षसे महांश्च भवसि ॥ ८ ॥

वेङ्कट० त्वम् अस्माकम् सोम! सुप्रज्ञः अन्नस्य दानार्थम्[5] जागृहि अत्यन्तं क्षेत्रस्य लम्भकः[6] । मनुष्यस्य शत्रोः अस्मान् रक्ष आहन्तुः[7] ॥ ८ ॥

त्वं नो॑ वृत्रहन्त॒मेन्द्र॑स्येन्दो शि॒वः सखा॑ ।
यत् सीं॒ हव॑न्ते समि॒थे वि वो॒ मदे॑ युध्य॑माना॒स्तोक॑सातौ॒ विव॑क्षसे ॥ ९ ॥

त्वम् । नः॒ । वृ॒त्र॒ह॒न्ऽत॒म॒ । इन्द्र॑स्य । इ॒न्दो॒ इति॑ । शि॒वः । सखा॑ ।
यत् । सी॒म् । हव॑न्ते । स॒म्ऽइ॒थे । वि । वः॒ । मदे॑ । युध्य॑मानाः । तो॒क॒ऽसा॑तौ । विव॑क्षसे ॥ ९ ॥

उद्गीथ० हे इन्दो! सोम! वृत्रहन्तम! वृत्रस्य शत्रोरतिशयेन हन्तः! यः त्वम् इन्द्रस्य शिवः सुखकरः सखा, स त्वम् नः अस्माकम्, रक्षिता भवेति शेषः । कदा । यत् यदा सीम् सर्वतः हवन्ते आह्वयन्ति युद्धार्थमस्मान् शत्रवः युध्यमानाः सम्प्रहरन्तः सन्तः । क्व । समिथे सङ्ग्रामे

1. गोप॰ वि[२] अ[१]. 2. ॰स्मान् वि[१]. 3. दुर्शंसः मूको. 4. सुप्रजनः वि[२] अ; सुप्रजनः वि[३]. 5. ॰नार्थं मूको. 6. ॰म्भके वि[२] अ[१]; ॰म्भकोऽन्नस्य वि[१]. 7. ॰हन्तु मूको.

कीदृशे । तोकसातौ । 'तोकम्' (निघ २, २) इत्यपत्यनाम । 'षणु दाने' इत्यस्योत्तरम् । अपत्यमपि दीयते यत्र हितैरिति, तत्र, महतीत्यर्थः । तदा रक्षिता भव । कस्मिंश्चिन्निमित्ते । वि वः मदे युष्माकं सर्वेषामेव देवानां विविधहविर्जन्यहर्षलक्षणे[1] निमित्ते । रक्षिताः सन्तो[2] यस्माद् युष्माकं यागं करिष्यामः, तस्मात् कारणात् अस्मान् रक्षेत्यर्थः । विवक्षसे महांश्च भवसि त्वम् । महतां युक्तं रक्षणं कर्तुं भक्तानाम् ॥ ९ ॥

वेङ्कट० त्वम् अस्माकम् अतिशयेन वृत्रस्य हन्तः! इन्द्रस्य इन्दो! शिवः सखा यत् इन्द्रं सर्वतः ह्वयन्ते युद्धे युध्यमानाः पुत्रस्य भजनार्थं शत्रुगृहीतं पुत्रं रक्षितुम् ॥ ९ ॥

अयं घ स तुरो मद इन्द्रस्य वर्धत प्रियः ।
अयं कक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥ १० ॥

अयम् । घ । सः । तुरः । मदः । इन्द्रस्य । वर्धत । प्रियः ।
अयम् । कक्षीवतः । महः । वि । । वः । मदे । मतिम् । विप्रस्य । वर्धयत् । विवक्षसे ॥१०॥

उद्गीथ० अत्र तच्छब्दश्रुतेरेकवाक्यतायै यच्छब्दोऽध्याहार्यः । यः सोमः इन्द्रस्य अर्थाय वर्धत मूजवत्पर्वतादिप्रदेशे[3] वृद्धः प्रियः च इन्द्रस्य, अयम् घ सः [4]अयमेव स[4] सोमोऽस्माभिरभिषुत इन्द्रस्यार्थाय । कीदृशः । तुरः[5] सर्वकार्येषु त्वरणशीलः क्षिप्रकारीत्यर्थः, मदः मदकरश्चायं सोमः । कक्षीवतः ऋषेः । कीदृशस्य । महः महतः विप्रस्य मेधाविनः मतिम् प्रज्ञाम् वर्धयत् वर्धितवान् । कस्मिन् सति । वि वः मदे युष्माकं सर्वेषामेव देवानां विशिष्टे सोमजन्यमदे सति । य एवमतः अस्माकमपि मतिं वर्धयत्विति शेषः । उत्तरं प्रत्यक्षकृतत्वात् भिन्नं वाक्यम् । सोम! विवक्षसे महान् भवसि त्वम् ॥ १० ॥

वेङ्कट० अयम् खलु सः क्षिप्रः मदकरः इन्द्रस्य वृद्धोऽभवत् प्रियः । किं च अयम् कक्षीवतः महतः स्तुतिम् अवर्धयद्[6] मेधाविनः ॥ १० ॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः ।
अयं सप्तभ्य आ वरं वि वो मदे प्रान्धं श्रोणं च तारिषद्विवक्षसे ॥ ११ ॥

अयम् । विप्राय । दाशुषे । वाजान् । इयर्ति । गोऽमतः ।
अयम् । सप्तऽभ्यः । आ । वरम् । वि । वः । मदे । प्र । अन्धम् । श्रोणम् । च । तारिषत् । विवक्षसे ॥११॥

उद्गीथ० अयम् सोमः विप्राय मेधाविने दाशुषे हवींषि दत्तवते यजमानाय वाजान् गोमतः अन्नानि गोसहितानि इयर्ति गमयति ददातीत्यर्थः । किञ्च अयम् एव सोमः सप्तभ्यः[7]

---

१. °जन्यलक्ष° मूको. २. सतो मूको. ३. मूजपर्व° वि[1]; मुजवपर्व° वि[2] अ. ४-४. °मेव सतो अयमेव वि[1,3]. ५. नास्ति वि[2] अ. ६. अवर्धय वि[1] अ[1]; वर्धयन् वि[2]. ७. सप्त मूको.

ऋत्विग्भ्यः आ वरम् आङुपसर्गश्रुतेर्हरतीति क्रियापदमध्याहार्यम्। आहरति वरं यजमानस्यार्थाय। [1]वराऽऽहरणं दानम्, तस्य[1] च तद्धात्रे भावात्। किञ्च वि वः मदे युष्माकं सर्वेषामेव देवानां विशिष्टसोमजन्यमदे सति प्रीतः सन् अन्धम् चक्षुर्विकलमृषिं दीर्घतमसम् अन्यं वा श्रोणम् च बधिरञ्चेत्यर्थः, प्र तारिषत् सर्वप्रकारया वृद्ध्या प्रकर्षेण वर्धितवानित्यर्थः। प्रत्यक्षकृतत्वादेव पूर्ववदुत्तरं भिन्नं वाक्यम्। हे सोम! विवक्षसे महान् भवसि सर्वतस्त्वम् त्वदधीनत्वाज्जगत्स्थितेः[2] ॥ ११ ॥

**वेङ्कट०** अयम् मेधाविने यजमानाय अन्नानि प्रेरयति पशुमन्ति। अयम् सप्तभ्यः होत्राभ्यः आ प्रयच्छति धनम् प्र [3]अतारीच्च अन्धम्[3] पङ्गुम्[4] च परावृजम् ऋषिम् ॥ ११ ॥

[5]इति सप्तमाष्टके सप्तमाध्याये द्वादशो वर्गः[5] ॥

[ २६ ]

[6]ऐन्द्रः प्राजापत्यो वा विमदः, वासुक्रो वसुकृद् वा ऋषिः। पूषा देवता। अनुष्टुप् छन्दः, प्रथमाचतुर्थ्यावुष्णिहौ[6]।

प्र ह्यच्छा॑ म॒नी॒षाः स्पा॒र्हा यन्ति॑ नि॒युतः॑। प्र द॒स्रा नि॒युद्र॑थः पू॒षा अ॑वि॒ष्टु माहि॑नः ॥ १ ॥

प्र। हि। अच्छ॑। म॒नी॒षाः। स्पा॒र्हाः। यन्ति॑। नि॒ऽयुतः॑।
प्र। द॒स्रा। नि॒युत्ऽर॑थः। पू॒षा। अ॒वि॒ष्टु। माहि॑नः ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं नवर्चं पौष्णम् [6]ऐन्द्रो विमदो वासुक्रो वा वसुकृद्[6] ददर्श। हि यस्मात् प्र यन्ति गच्छन्ति। किमर्थम्। अच्छ गुणग्रहणद्वारेण पूषणमाप्तुम्। मनीषाः वाचः स्तुतिलक्षणाः। कीदृश्यः। स्पार्हाः सर्वगुणोपेतत्वात् स्पृहणीयाः। 'नियुतः नियमनाद्वा नियोजनाद्वा' ( या ५,२८ )। अस्माभिर्नियताः नियुक्ता वा, उच्चारिता इत्यर्थः। एतज्ज्ञात्वोपकारं प्रत्युपकारार्थम् दस्रा [7]'दसि दंशनदर्शनयोः'। दंसितारौ कर्मणामुपक्षपयितारौ समापयितारौ पत्नीयजमानौ प्र अविष्टु प्रयत्नेन रक्षतु सर्वतः पूषा। कीदृशः। नियुद्रथः गमनाय सदा नियतरथो युक्तरथो वा माहिनः महांश्च[7] ॥ १ ॥

**वेङ्कट०** वसुकृद् वासुक्रः[8]। प्र हि अभि-गच्छन्ति स्तुतयः पूष्णः स्पृहणीयाः अश्वाः। प्रकर्षेण अवतु दर्शनीयः अश्वयुक्तरथः[9] पूषा महान् अस्मान् इति ॥ १ ॥

यस्य॒ त्यन्म॑हि॒त्वं वा॒ताप्य॑म॒यं जनः॑। विप्र॒ आ वं॑सद्धी॒तिभि॒श्चिके॑त सुष्टु॒तीना॑म् ॥ २ ॥

यस्य॑। त्यत्। म॒हि॒ऽत्वम्। वा॒ताप्य॑म्। अ॒यम्। जनः॑।
विप्रः॑। आ। वं॒सत्। धी॒तिऽभिः॑। चिके॑त। सु॒ऽस्तु॒तीना॑म् ॥ २ ॥

---

१-१. वरहरणदानस्य मूको. २. तदधी जगत्स्थिते मूको. ३-३. तारिषत्यान्धम् वि[2]; अतरिषत्यान्धम् अ[1]. ४. पकम् वि[2] अ[1]; पक्कम् वि[1]. ५-५. नास्ति मूको. ६-६. °न्द्रं पौष्णं वासुक्रो वसु° मूको. ७-७. दसीदंसन ··· वि[2]. ८. °क्र वि[2] अ[1]. ९. °क्तं रथम् वि[2] अ[1].

उद्गीथ० [1]यस्य पूष्णः स्वभूतम् त्यत् यज्जगतां जीवननिमित्तं तत् महित्वम् स्वार्थेऽत्र† भावप्रत्ययः। महदित्यर्थः[1]। वाताप्यम् उदकं मण्डले वृष्ट्यर्थं संहृतं परिपक्वम् अयम् यजमानजनः। कीदृशः। विप्रः मेधावी। आ वंसत् मर्यादया सम्भजते उपजीवति। यस्य च पूष्णोऽर्थाय धीतिभिः यागकर्मभिः सह चिकेत जानाति सुष्टुतीनाम्, करणमिति शेषः। यागकर्माणि स्तुतीश्च सम्यक् करोतीत्यर्थः ॥ २ ॥

वेङ्कट० यस्य एतत् महित्वम्। किम् इत्याह—उदकम् अयम् जनः मेधावी आ भजते कर्मभिः[२]। स जानातु सुष्टुतीः ॥ २ ॥

स वे॑द सुष्टुती॒नामिन्दु॒र्न पू॒षा वृषा॑। अ॒भि प्सुरः॑ प्रुषायति व्र॒जं न॒ आ प्रु॑षायति ॥३॥

सः। वे॒द। सु॒ऽस्तु॒ती॒नाम्। इन्दुः॑। न। पू॒षा। वृषा॑।

अ॒भि। प्सुरः॑। प्रु॒षा॒य॒ति॒। व्र॒जम्। न॒ः। आ। प्रु॒षा॒य॒ति॒ ॥ ३ ॥

उद्गीथ० सः उक्तगुणः पूषा वेद जानाति सुष्टुतीनाम् शोभनस्तुतीनाम्, स्वरूपमिति शेषः। किञ्च इन्दुः न चन्द्र इव पूषा वृषा वर्षिता प्सुरः वृष्टिरूपम् अभि प्रुषायति मर्यादया सिञ्चति अभिक्षरति[३] वर्षतीत्यर्थः। कथम्। उच्यते—व्रजम् मेघम् नः अस्मदर्थम् आ प्रुषायति मर्यादया वृष्ट्युदकं सेचयति विद्युद्रूपेण स्थित्वा। अथवा व्रजं सामर्थ्याद् गोसहितं गोष्ठं वा प्रुषायति मर्यादया सिञ्चति ददातीत्यर्थः ॥ ३ ॥

वेङ्कट० सः जानाति सुष्टुतीः। अपि च अयम् इन्दुः इव पूषा वृषा भवति। स[२] पूषा रूपवान् गवाम् व्रजम् अस्माकम् आ गमयति ॥ ३ ॥

मं॒सी॒महि॑ त्वा व॒यम॒स्माकं॑ देव पूषन्। म॒ती॒नां च॒ साध॑नं॒ विप्रा॑णां चाध॒वम् ॥ ४ ॥

मं॒सी॒महि॑। त्वा॒। व॒यम्। अ॒स्माक॑म्। दे॒व॒। पू॒ष॒न्।

[४]म॒ती॒नाम्। च॒। साध॑नम्। विप्रा॑णाम्। च॒। आ॒ऽध॒वम्[४] ॥ ४ ॥

उद्गीथ० मंसीमहि मन्यतिरर्चतिकर्मा (तु. निघ १,४)। अत्र स्तुत्यर्थः। हे देव! पूषन्! त्वा वयम् मंसीमहि स्तविषीमहि[५] इत्याशास्महे। कीदृशम्। अस्माकम् मतीनाम् च प्रज्ञानाम् चशब्दादन्यस्य चेप्सितार्थस्य साधनम् साधयितारम्, दातारमित्यर्थः। विप्राणाम् च मेधाविनां तथान्येषामपि[६] आधवम् परिचर्यात्यादरेणाऽऽकम्पयितारम् ॥ ४ ॥

वेङ्कट० स्तुमः त्वाम्[७] वयम्[२] अस्माकम् देव! पूषन्! अभिलषितानां साधयितारम् अन्येषां च विप्राणाम् आधवम् प्रेरयितारम्[८] धनानाम् ॥ ४ ॥

---

१-१. नास्ति वि[१]. † स्वार्थेत वि[१,२] अ. २. नास्ति वि[१]. ३. °भिरक्षति मूको. ४-४. या. ( ६, २९ ) निगमः द्र. ५. स्तूयामहे मूको. ६. त्वा न्येवामपि मूको. ७. च वि[२] अ[१]; त्वम् वि[१]. ८. प्रार्थयिता वि[२] अ[१].

प्रत्यर्धिर्यज्ञानामश्वहयो रथानाम् । ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः ॥५॥

प्रतिऽअर्धिः । यज्ञानाम् । अश्वऽहयः । रथानाम् ।
ऋषिः । सः । यः । मनुःऽहितः । विप्रस्य । यवयत्ऽसखः ॥ ५ ॥

**उद्गीथ०** प्रत्यर्धिः 'ऋधु वृद्धौ' । प्रत्यर्धयिता धनदानेनार्धभागप्रतिपत्त्या[1] च संवर्धयिता यज्ञानाम्[2] । प्रत्यर्धोऽस्यास्तीति प्रत्यर्धिः । अश्वहयः हयतिर्गत्यर्थः । रथानाम् सम्बन्धिभिरश्वैर्गमनशीलः अश्वयुक्तेन रथेन सदा गन्तेत्यर्थः । ऋषिः द्रष्टा च सर्वस्य लोकपालत्वात् प्रत्यवेक्षिता चेत्यर्थः । सः पूषा, यः । कीदृशः । मनुर्हितः मनुष्यहितः विप्रस्य मेधाविनश्च होतुः यावयत्सखः यावयंश्चासौ[3] सखा चेति । यावयिता[4] चापनेता उपद्रवाणां सखिभूतश्चेत्यर्थः ॥ ५ ॥

**वेङ्कट०** अर्धभाक् यज्ञानाम् अश्वानां[5] प्रेरको भवति रथसम्बन्धिनां द्रष्टा सर्वस्य सः, यः मनुष्येभ्यो हितः[6] मेधाविनः स्तोतुः यवयत्सखः शत्रूणां पृथक्कर्ता सखा ॥ ५ ॥

[7]इति सप्तमाष्टके सप्तमाध्याये त्रयोदशो वर्गः[7] ॥

आधीषमाणायाः पतिः शुचायाश्च शुचस्य च । वासोवायोऽवीनामा वासांसि मर्मृजत् ॥६॥

आऽधीषमाणायाः । पतिः । शुचायाः । च । शुचस्य । च ।
वासःऽवायः । अवीनाम् । आ । वासांसि । मर्मृजत् ॥ ६ ॥

**उद्गीथ०** आधीषमाणायाः पतिः स्वात्मन्याधीयमानाया स्तुतेराहुतेर्वा पतिः स्वामी शुचायाः सर्वस्या दीप्तेः च शुचस्य च दीप्तस्य च सर्वस्य पतिः पूषा वासोवायः अवीनाम् उरणानां सम्बन्धिनां वाससां दशापवित्रादीनाञ्च वाता[8] च पूषा प्रकाशोष्णाभ्यामनुगृह्णन् वासांसि वस्त्राणि च रजकशोध्यानि आ मर्मृजत् मर्यादया शोधयति पूर्वोक्तेनैव न्यायेन ॥ ६ ॥

**वेङ्कट०** आत्मार्थम्[9] आधीषमाणायाः अजायाः[10] अजस्य च स्वामी । सोऽयम् अवीनाम् रोमभिर्देवानां सोमपवनार्थम् वासांसि वयति । अपि च तानि शोधयन् भवति मृदुकुशलहस्तः ॥ ६ ॥

इनो वाजानां पतिरिनः पुष्टीनां सखा ।
प्र श्मश्रु हर्यतो दूधोद् वि वृथा यो अदाभ्यः ॥ ७ ॥

इनः । वाजानाम् । पतिः । इनः । पुष्टीनाम् । सखा ।
प्र । श्मश्रु । हर्यतः । दूधोत् । वि । वृथा । यः । अदाभ्यः ॥ ७ ॥

---

१. °दानेनाहभावप्रति° मूको. २. °नाम् अथवा यज्ञानां संवर्धयितः मूको. ३. यवाश्चासौ मूको. ४. यापयिता मूको. ५. नास्ति वि[१]. ६. अमितो वि[२] अ[१]; अहितो वि[१]. ७-७. नास्ति मूको. ८. वता मूको. ९. आत्माध वि[२] अ[१]; आत्मरथन् वि[१]. १०. नास्ति वि[१].

**उद्गीथ०** यः **पूषा** अदाभ्यः **अहिंस्यः सः** इनः **ईश्वरः सर्वस्य** वाजानाम् **च** पतिः **स्वामी** इनः **ईश्वरः** पुष्टीनाम् **सर्वेषां प्राणिनां पोषणानां करणे** सखा **सखीभूतश्च सर्वस्योपकारित्वात्।** **किञ्च** हर्यतः **कामयमानस्य** [1]**भक्तत्वात् सुप्रतीकस्य यजमानस्य**[1]**. षष्ठीश्रुतेः, स्वभूतं सोमं पिबन्निति शेषः।** श्मश्रु वि वृथा [2]प्र दूधोत्[2] **अधूनोत् विविधं प्रकर्षेण अयत्नेन**[3] **कम्पयति ॥ ७ ॥**

**वेङ्कट०** स्वामी **अन्नानाम्** पतिः इनः **पुष्टीनाम् ओषधीनां** पुष्यमाणानाम् सखा **श्मश्रूणि** वि प्र **कम्पयति अनायासेन,** [4]यः **अहिंस्यः**† **परैः**[4] ॥ ७ ॥

**आ ते रथस्य पूषन्नजा धुरं ववृत्युः। विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥८॥**

आ। ते। रथस्य। पूषन्। अजाः। धुरम्। ववृत्युः।
विश्वस्य। अर्थिनः। सखा। सनःऽजाः। अनपऽच्युतः ॥ ८ ॥

**उद्गीथ०** हे[5] पूषन्! **यस्त्वम्** विश्वस्य अर्थिनः **याचकस्य** सखा **ईप्सितार्थप्रदातृत्वात् सखिभूतः** सनोजाः **चिरजातश्च** अनपच्युतः **स्वाधिकाराद् अनपगतश्च, तस्य** ते **तव स्वभूतस्य** **रथस्य** धुरम् **हे पूषन्! अजजातियुक्ता अश्वाः** आ ववृत्युः **आवर्तयन्ति वहन्तीत्यर्थः ॥ ८ ॥**

**वेङ्कट०** आ **वर्तयन्ति**[6] तव रथस्य धुरम् अजाः **पूषन्!। स त्वम्** विश्वस्य अर्थिनः सखा **पुराजातः** अनपच्युतः[7] इति[8] ॥ ८ ॥

**अस्माकमूर्जा रथं पूषा अविष्टु माहिनः। भुवद्वाजानां वृध इमं नः शृणवद्धवम् ॥९॥**

अस्माकम्। ऊर्जा। रथम्। पूषा। अविष्टु। माहिनः।
भुवत्। वाजानाम्। वृधः। इमम्। नः। शृणवत्। हवम् ॥ ९ ॥

**उद्गीथ०** अस्माकम् **स्वभूतम्** रथम् **रंहितारं देवान्**[9] **प्रति परिसमाप्तिं वा गन्तारं यज्ञम् हविर्धान-शकटयोः** ऊर्जा **स्वबलेनान्नेन रसेन वा हविराख्येन लब्धव्यत्वेन भोक्तव्यत्वेन**[10] **निमित्त-भूतेन** पूषा अविष्टु **भवतु रक्षतु** माहिनः **महान्।** भुवत् **भवतु च** वाजानाम् **अन्नानाम्** वृधः **वर्धयिता। तदर्थञ्च** इमम् नः **अस्माकम्** शृणवत् **शृणोतु** हवम् **आह्वानम् ॥ ९ ॥**

**वेङ्कट०** अस्माकम् **अन्ने** रथम् पूषा **रक्षतु महान्। भवतु अन्नानां वर्धकः**[11]**।** इमम् **अस्माकं** **शृणोतु** हवम् इति ॥ ९ ॥

[12]**इति सप्तमाष्टके सप्तमाध्याये चतुर्दशो वर्गः**[12] ॥

---

**१-१. नास्ति वि**[3]. **२-२. नास्ति वि**[2] **अ**[1]; प्र ··· धोत् **वि**[3]. **३.** यत्नेन **मूको. ४-४. नास्ति वि**[1]. † °स्य **वि**[2] **अ**[1]. **५.** आ ते रथस्य विश्वस्य हे **मूको. ६.** °ति **मूको. ७.** अनव° **वि**[2] **अ**[1]; अपच्युतः **वि**[1]. **८. नास्ति वि**[1,2]. **९.** देवाः **वि**[2] **अ. १०. नास्ति वि**[3]. **११.** °र्धनः **वि**[2] **अ**[1]. **१२-१२. नास्ति मूको.**

[ २७ ]

[1]ऐन्द्रो वसुक्र ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

असत् सु मे जरितः साभिवेगो यत् सुन्वते यजमानाय शिक्षम्।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम् ॥ १ ॥

असत्। सु। मे। जरितरिति। सः। अभिऽवेगः। यत्। सुन्वते। यजमानाय। शिक्षम्।
अनाशीःऽदाम्। अहम्। अस्मि। प्रऽहन्ता। सत्यऽध्वृतम्। वृजिनऽयन्तम्। आभुम् ॥ १ ॥

उद्गीथ० उत्तरं सूक्तम् 'असत् सु मे जरितः सः' इति चतुर्विंशत्यृचम् ऐन्द्रम् इन्द्रपुत्रो वसुक्रो ददर्श। वासुक्रेषु सूक्तेषु बाहुल्येनेन्द्रस्यास्ति[2] स्तुतिः। स्तोतुमभ्युद्यतं[3] स्वपुत्रमृषिं वसुक्रं सम्बोध्य स्वसामर्थ्यं कथयतीन्द्रः, विज्ञातदेवतास्वरूपो येन सुखं स्तोष्यतीति। अथवा कार्यकारणयोरेकत्वोपचारात् 'आत्मा वै पुत्रनामासि' (माश १४, ९, ४, २६) इति वचनाच्च इन्द्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति क्वचित्, क्वचिद् इन्द्रं भेदेन। हे जरितः! स्तोतः! असत् अस्ति विद्यते ममेन्द्रस्य सु शोभनः अर्चितः[4] सः अभिवेगः 'ओविजी भयचलनयोः'। अर्थिनं प्रति मनसोऽभिचलनम् अभिगमनं वृत्तिविशेषः। यत् येन वेगेन मनोवृत्त्या सुन्वते मदर्थं सोमाभिषवं कुर्वते यजमानाय यज्वने शिक्षम् ददामि प्रार्थितमर्थम्। किञ्च अनाशीर्दाम् आशीः प्रार्थनोच्यतेऽन्यत्र। इह तु सामर्थ्यात् प्रार्थितं हविरुच्यते। प्रार्थितहविर्मह्यमददतम् अधिकृतं पुरुषम्। अथवा आशीरिति सोमाभिश्रयणं[5] दध्युच्यते। तस्याऽदातारम् असोमयाजिनमित्यर्थः, अहम् अस्मि भवामि प्रहन्ता प्रकर्षेण हिंसिता। सत्यध्वृतम् ध्वरतिर्हिंसार्थः। सत्यस्य च हिंसितारम्, अनृतवादिनञ्चेत्यर्थः। वृजिनायन्तम् कुटिलं कर्तुमिच्छन्तम्, परवञ्चनपरञ्चेत्यर्थः, आभुम् महान्तमपि हिंसिताऽस्म्यहम् ॥ १ ॥

वेङ्कट० [6]वसुक्र ऐन्द्रः[6]। इन्द्रः। भवति [7]मे सुष्ठु हे[7] सर्वेषां भूतानां जरयितः! इन्द्र! सः अभिवेगः, येन[8] अभिवेगेन इन्द्रार्थम् सोमम्[9] सुन्वते यजमानाय धनं प्रयच्छामि। किं च अहम् तव आशिरस्याप्रदातारं सत्यस्य [10]हिंसकम् वृजिनम्[10] आचरन्तम् आभवन्तम्[11] प्रहन्ता अस्मि प्रहन्मि तम् इति ॥ १ ॥

यदीदहं युधये संनयान्यदेवयून् तन्वा३ शूशुजानान्।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पञ्चदशं नि षिञ्चम् ॥ २ ॥

यदि। इत्। अहम्। युधये। सम्ऽनयानि। अदेवऽयून्। तन्वा। शूशुजानान्।
अमा। ते। तुम्रम्। वृषभम्। पचानि। तीव्रम्। सुतम्। पञ्चऽदशम्। नि। सिञ्चम् ॥२॥

---

१-१. नास्ति मूको. २. °न्द्रस्याम वि[२] अ; °न्द्रस्य वि[३]. ३. स्तोतुमुद्यतं वि[२]. ४. अर्जितः मूको. ५. सोमाभिश्र° वि[२]. ६-६. °क्रमेणेन्द्र वि[२] अ[१]; °क्रमेणेन्द्रः ७-७. नास्ति वि[२] अ[१]. ८. नः वि[२] अ[१]. ९. नास्ति वि[१,२]; सोम अ[१]. १०-१०. °कव्रतम् वि[२] अ[१]. ११. माप्नु° वि[२]; प्राप्नु° अ[१].

**उद्गीथ०** इत् शब्द एवार्थः उत्तरार्धस्यादावहंशब्देन सह सम्बन्धयितव्यः। यदि यदा अहम् युधये युद्धार्थम् सम्-नयानि अदेवयून् देवान् यष्टुमनिच्छतो देवशत्रून् अयज्वनः तन्वा स्वशरीरेण शूशुजानान् शुचेश्चकारस्य जकारश्छान्दसः। शोशुचानान् आत्मम्भरित्वात् पुष्टया दीप्त्या च युक्तान् पुष्टानित्यर्थः। तदा अहम् एव अमा आत्मना हेतुकर्तृत्वेन यजमानं वा अधिष्ठाय ते तव यजमानस्य स्वभूतम् तुभ्रम् पीवानम् वृषभम्। 'धेनुर्वृषभः' इति श्रुतेः धेनुं गाम् पचानि मदर्थं [1]पचामि। तीव्रम् बहुरसम्[1] सुतम् अभिषुतम् पञ्चदशम् सोमम्। पूर्वपक्षापरपक्ष-सम्बन्धिपञ्चदशसङ्ख्यायुक्ततिथिसम्बन्धेन पर्णवृद्धिह्रासयोगात्[2] पञ्चदशः सोमः, तं च मदर्थमहं नि सिञ्चम् दशापवित्रे द्रोणकलशे [3]चमसपात्रे वा सिञ्चामि[3] प्रक्षिपामीत्यर्थः ॥ २ ॥

**वेङ्कट०** यदि एव अहम्[4] मया सह युद्धार्थम् सम्-नयानि[5] दूतैः सङ्गमयानि अदेवकामान् शरीरेण वा [6]साधून् बाधमानान्। शुजिः[6] हिंसाकर्मा। तदानीम् पुत्रादिभिः[7] [8]सहितः तुभ्यम् इन्द्र![8] प्रेरकं बलिनं पीवानम् वृषभम् पचानि तीव्ररसम् अभिषुतम् पञ्चदशम् कलशे सोमं च[9] नि-षिञ्चामि ॥ २ ॥

नाहं तं वे॑द॒ य इति॒ ब्रवी॒त्यदे॑वयून्त्स॒मर॑णे जघ॒न्वान् ।
य॒दावाख्य॑त् स॒मर॑ण॒मृघा॑व॒दादिद्ध॑ मे वृष॒भा प्र ब्रु॑वन्ति ॥ ३ ॥

न । अ॒हम् । तम् । वे॒द॒ । यः । इति॑ । ब्रवी॑ति । अदे॑वऽयून् । स॒म्ऽअर॑णे । ज॒घ॒न्वान् ।
य॒दा । अ॒व॒ऽअख्य॑त् । स॒म्ऽअर॑णम् । ऋघा॑वत् । आत् । इत् । ह॒ । मे॒ । वृ॒ष॒भा । प्र । ब्रु॒व॒न्ति॒ ॥ ३ ॥

**उद्गीथ०** मद्व्यतिरिक्तं पुरुषम् अहम् न वेद न जानामि, यः पुरुषः इति एवम् ब्रवीति वक्ति—अदेवयून् देवानकामयमानान् देवद्विषोऽसुरादीन् समरणे सङ्ग्रामे जघन्वान् हतवान् अहमिति। मत्तोऽन्यः सङ्ग्रामे शत्रूणां हन्ता नास्तीत्यर्थः। किञ्च यदा यस्मिन् काले अवाख्यत् उत्तमस्य स्थाने प्रथमः। यदा अवाख्यम्[10] अवाकृत्य न्यक्कृत्य[11] मृतवत् पश्यामि समरणम् सङ्ग्रामम्। कीदृशम्। ऋघावत्। द्वितीयाया लुगत्र द्रष्टव्यः। ऋघावन्तं हिंसावन्तं परस्परम् अतिक्रूरमित्यर्थः। आत् तदा। इत् ह इति पदपूरणौ। मे मम स्वभूतानि[12] वृषभा[13] वृषभकर्माणि दर्पितवृषभस्येव विक्रान्तानि शत्रुवधवन्ति निर्भयं चेष्टितानि प्र ब्रुवन्ति प्रकथयन्ति विद्वत्सङ्घाः वर्णयन्ति ॥ ३ ॥

**वेङ्कट०** न अहम् तम् इन्द्रं मम पितरम् वेद, यः इत्थम् ब्रवीति। एतदेवाऽऽह[5]—अदेवकामान् युद्धे जघन्वान्। कथं ब्रवीतीत्याह—अनन्तरमेव[14] तदीयौ ऋत्विजो मम वृषभौ अश्वौ प्र ब्रुवन्ति स्तुवन्ति इति ॥ ३ ॥

यदज्ञा॑तेषु वृ॒जने॒ष्वासं॒ विश्वे॑ स॒तो म॒घवा॑नो म आसन् ।
जि॒नामि॒ वेत् क्षेम॒ आ सन्त॑मा॒भुं प्र तं क्षि॑णां॒ पर्व॑ते पाद॒गृह्य॑ ॥ ४ ॥

---

१-१. 'चामीति प्रापट्ठ' मूको. २. वर्ण° मूको. ३-३. °त्रेणोपासि° वि[1,2] अ. ४. अयम् वि[1]. ५. नास्ति वि[1]. ६-६. ··· वि[2] अ[1]. ७. °भ्यः वि[2] अ[1]. ८-८. °तम् इन्द्रः वि[2] अ[1]. ९. नास्ति वि[2] अ[1]. १०. °ख्यत् मूको. ११ °कृत्य वि[1] अ. १२. °भूता मूको. १३. नास्ति मूको. १४. निर° वि[2] अ[1].

यत् । अज्ञातेषु । वृजनेषु । आसम् । विश्वे । सतः । मघऽवानः । मे । आसन् ।
जिनामि । वा । इत् । क्षेमे । आ । सन्तम् । आभुम् । प्र । तम् । क्षिणाम् । पर्वते । पादऽगृह्य ॥ ४ ॥

**उद्गीथ०** यत् यदा शरीरशस्त्रास्त्रबलतः[1] परिमाणतश्चाऽपरिज्ञातेषु वृजनेषु सङ्ग्रामेषु आसम् उपविशामि युद्धार्थमुपतिष्ठामीत्यर्थः, तदा विश्वे सर्वे मां प्रति प्राप्ताः मघवानः हविर्धनेन तपोधनेन च धनवन्तः ऋषयः सतः मे ममेन्द्रस्य समीपे आसन् उपविशन्ति वीर्यवृद्ध्यर्थं मां स्तुवन्तस्तिष्ठन्तीत्यर्थः । किञ्च जिनामि वा जयाम्येव[2], नात्र संशयः । इत्[3] इति पदपूरणः । क्षेमे जगत्पालननिमित्ते आ सन्तम् । आहन्त्राऽभीत्येतस्य[4] स्थाने । सर्वमभिभवन्तमित्यर्थः । आभुम् महान्तं शत्रुम् । यस्तु [5]मत्तो न्यूनः, तम्[5] प्र क्षिणाम् प्रहिनस्मि प्रक्षिपामि पर्वते गिरौ पादगृह्य पादे गृहीत्वा ॥ ४ ॥

**वेङ्कट०** यदा अहम् अज्ञातेषु झटिति उपस्थितेषु शत्रुबलेषु आसम्, तदानीम् सतः मम सर्वे धनवन्तः सहाया भवन्ति । हन्म्येव[6] तं मम पालनीये राष्ट्रे भवन्तम् आभुम् [7]शत्रुम् आहन्तारम्†[7], प्र हन्मि घटमिव तम् शिलायां पादे गृहीत्वा ॥ ४ ॥

## न वा उ मां वृजने वारयन्ते न पर्वतासो यदहं मनस्ये ।
## मम स्वनात् कृधुकर्णो भयात एवेदनु द्यून् किरणः समेजात् ॥ ५ ॥

न । वै । ऊँ इति । माम् । वृजने । वारयन्ते । न । पर्वतासः । यत् । अहम् । मनस्ये ।
मम । स्वनात् । कृधुऽकर्णः । भयाते । एव । इत् । अनु । द्यून् । किरणः । सम् । एजात् ॥ ५ ॥

**उद्गीथ०** न वै नैव माम् इन्द्रम् वृजने सङ्ग्रामे युद्धार्थमुपस्थितं सन्तम् वारयन्ते निवारयितुं[8] शक्नुवन्ति शत्रवः, न अपि पर्वतासः हिमवदादयो गिरयः अतिभारक्षमाः[9] । यत् कर्म अहम् मनस्ये मनसा कर्तुमिच्छामि, तत् कर्म मनसापि [10]उद्वोढुं चिन्तयितुं[10] न शक्नुवन्तीत्यर्थः । किञ्च मम इन्द्रस्य स्वनात् स्तनितात् शब्दात् सङ्ग्रामकाले हुङ्कारशब्दाद् वा कृधुकर्णः नामाऽसुरः अथवा कृधुकर्णो मन्दश्रवणेन्द्रियो बधिरः स्थावरपिपीलिकपुत्तिकादिरपि भयाते बिभेति । किञ्च एव इत् एवमेव कृधुकर्णवत् मम भयात् अनु द्यून् प्रतिदिनमित्यर्थः, किरणः अन्तर्णीतमत्वर्थम् एतत्पदम् । किरणवान् रश्मिवान् आदित्यः सम् एजात् सम्यक् कम्पते चलति [11]नियमेन प्रयातीत्यर्थः[11] ॥ ५ ॥

**वेङ्कट०** न खलु माम् युद्धे त्वदाश्रयं केचन वारयन्ते [12]गच्छन्तम्†, न अपि शिलोच्चया[12] गच्छन्तं वारयन्ति शत्रून् प्रति, यदा अहम् मन इव आचरामि शीघ्रं गच्छामि । किञ्च मम

---

१. °रशास्त्रारत्र° मूको. २. जानाम्येव वि[१]. ३. नास्ति मूको. ४. आङ्हन्ताऽभीत्ये° वि[२] अ[१]. ५-५. महतो न्यूनतां वि[२] अ[१]; महतो न्यूनं तं वि[१]. ६. हम्र्ये…वि[२] अ[१]; हन्त्येव वि[१]. ७-७. नास्ति वि[१]. † आहरंतारम् वि[२]. ८. निवारयन्त वि[२] अ; निवारयतु वि[१,३]. ९. °भाक्षमाः वि[३]. १०-१०. उद्वोढुंश्च° वि[२] अ; उद्वाढाश्चन्तयि° वि[३]. ११-११. नियतेन प्रय मीत्यर्थः वि[२] अ. १२-१२. नास्ति वि[१] अ[१]. † गच्छन् वि[१].

सिंहनादशब्दाद् ह्रस्वकर्णो मदीयः शत्रुः बिभेति। एवमेव अयं दीप्तान् शत्रून् प्रति किरणः [1]सम् कम्पते[1] इति आत्मानम् आह ॥ ५ ॥

[2]इति सप्तमाष्टके सप्तमाध्याये पञ्चदशो वर्गः[2] ॥

दर्श॒न्न्वत्र॑ शृत॒पाँ अ॑नि॒न्द्रान् बा॑हु॒क्षदः॒ शर॑वे॒ पत्य॑मानान् ।
घृषुं॒ वा॒ ये नि॑नि॒दुः सखा॑य॒मध्यू॒ न्वे॑षु प॒वयो॑ ववृत्युः ॥ ६ ॥

दर्श॑न् । नु । अत्र॑ । शृ॒त॒ऽपान् । अ॒नि॒न्द्रान् । बा॒हु॒ऽक्षद॑ः । शर॑वे । पत्य॑मानान् ।
घृषु॑म् । वा॒ । ये । नि॒नि॒दुः । सखा॑यम् । अधि॑ । ऊँ इति॑ । नु । ए॒षु॒ । प॒वय॑ः । व॒वृ॒त्युः॒ ॥ ६ ॥

**उद्गीथ०** दर्शन्[3] अपश्यमहं पुनः दृष्टवानसीत्यर्थः, अत्र अस्मिञ्जगति शृतपान् शृतस्य पक्वस्य सोमादिकस्य हविषः अपहृत्य पातॄन् अनिन्द्रान् इन्द्रेणेश्वरेण मया वर्जितान् अनीश्वरान् वा बाहुक्षदः महाबलत्वाद् आयुधेन विना बाहुभ्यामेव हिंसितॄन् शरवे शरुः शरः। तृतीयार्थे चतुर्थी। मदीयेन शरेण नु क्षिप्रम् पत्यमानान् पात्यमानान्[4] असुरान्। किञ्च घृषुम् वा समुच्चयार्थोऽत्र वाशब्दः। महान्तञ्च माम् ये [5]असुराः निनिदुः निन्दन्ति[5] सखायम् भक्तानां सखिवत् प्रियहितस्य कर्तारम्। अधि उ नु एषु अधीत्युपरिभावे। उ इति पदपूरणः। नु इति क्षिप्रार्थः ववृत्यः इत्यनेन सम्बन्धयितव्यः। अधि एषाम् निन्दितॄणामुपरि पवयः 'पविः' (निघ २,२१) इति वज्रनाम। बहुवचनसामार्थ्याद् वज्रादीन्यायुधानीत्यर्थः। नु क्षिप्रम् ववृत्युः वर्तन्ते पतन्तीत्यर्थः ॥ ६ ॥

**वेङ्कट०** पश्यामि अहम् इन्द्रम् अनीजानान् स्वयंश्रितं पयः पिबतः बाहुभिः साधून् शकलीकुर्वतः हिंसार्थम् अभिपततः। तेषु अधि क्षिप्रम् मदीयानि आयुधानि वर्तन्ते। किञ्च अवघर्षणशीलं शत्रूणाम्, ये वा निन्दन्ति सखायम् इन्द्रम्, तेषु च इति ॥ ६ ॥

अभू॒र्वौक्षी॒र्व्यु१॒ आयु॑रान॒ड् दर्ष॒न्नु पूर्वो॒ अप॑रो॒ नु द॑र्षत् ।
द्वे प॒वस्ते॒ परि॒ तं न भू॑तो॒ यो अ॒स्य पा॒रे रज॑सो वि॒वेष॑ ॥ ७ ॥

अभू॑ः । ऊँ इति॑ । औक्षी॑ः । वि । ऊँ इति॑ । आयु॑ः । आ॒न॒ट् । दर्ष॑त् । नु । पूर्व॑ः । अप॑रः ।
नु । द॒र्ष॒त् । द्वे इति॑ । प॒वस्ते॒ इति॑ । परि॑ । तम् । न । भू॒तः॒ । यः । अ॒स्य । पा॒रे । रज॑सः । वि॒वेष॑ ॥ ७ ॥

**उद्गीथ०** मध्यमपुरुषेण प्रथमपुरुषेण च इन्द्रस्योच्यमानत्वादनयेन्द्रं स्तौति वसुक्रः। अभूः उ औक्षीः[6]। उ इत्ययम् एवार्थे। औक्षीरित्युदात्तत्वान्नामपदमेतत्। हे इन्द्र! अभूः भवसि त्वमेव औक्षीः[7] उक्षिता सेक्ता वृष्टेः क्षरिता। वर्षिता त्वमेव भवसि, नान्य इत्यर्थः। किञ्च वि उ आयुः आनट् मध्यमपुरुषेण प्रक्रान्तत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः

---

१-१. सकम्पत मूको. २-२. नास्ति मूको. ३. वैतु. वैप १,१३६५ n. ४. पात्यम नात् वि[3]. ५-५. °रा निन्द° वि[1] अ; °रानि निन्द° वि[3]. ६. धाक्षिः वि[1] अ. ७. 'क्षिः मूको.

सर्वत्र आनडित्यादौ परोक्षनिर्देशे प्रत्यक्षीकरणार्थमेवाध्याहर्तव्यः। वि इति वैविध्ये। उ इति चार्थे। आयुरिति जीवितमुच्यते। 'आनट्' (निघ २, १८) इति व्याप्तिकर्मा। विविधञ्चायुर्भवानिन्द्रः प्राप्नोति, आ महाभूतसम्प्लवाच्च जीवतीत्यर्थः। दर्षत् नु 'दृ विदारणे'। 'सिब्बहुलं लेटि' (पा ३,१,३४)। नु इति क्षिप्रार्थे। शत्रुं वज्रेण विदारयति च क्षिप्रं भवानिन्द्रः। पूर्वः जगतः स्थितेरिन्द्राधीनत्वात् सर्वस्माज्जगतः पूर्वजातश्च भवानिन्द्र इत्यर्थः। अपरः नु दर्षत् अपरशब्दोऽन्यवचनः। नु इति प्रतिषेधे। अन्यो न विदारयिता भवन्तम् इन्द्रम्, भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः। किञ्च यः भवान् इन्द्र अस्य रजसः त्रैलोक्यस्य पारे परतः परमसूक्ष्मवायुरूपेण समष्टिव्यष्टिसृष्टिकारणात्मना, स्थित्वेति शेषः, विवेष व्याप्नोति सर्वतः, तम् भवन्तमिन्द्रम् न परि भूतः अभिभवितुं न शक्नुत इत्यर्थः। अपि द्वे। के। सामर्थ्याद् द्यावापृथिव्यौ। कीदृशौ। पवस्ते। 'पूङ् गतौ' इत्यस्य धातोरौणादिके असप्रत्यये परतः॥ ७॥

वेङ्कट० प्रादुर्भवसि एव, त्वं काले सिञ्चसि च उदकेन पृथिवीम्। तदनन्तरम् अन्नम् च व्याप्तं भवति। परोक्षः शेषः। [1]सोऽयम्[1] [2]इन्द्रः पूर्वः[2] मेघं विदारयति, तथा अपरः सर्वदा विदारयति। द्वे रजसी[3] तम् महान्तम् न परि भवतः, यः इन्द्रः अस्य रजसः पारे विवेष व्याप्तो भवति अन्तरिक्ष इति॥ ७॥

**गावो यवं प्रयुता अर्यो अक्षन् ता अपश्यं सहगोपाश्चरन्तीः।**
**हवा इदर्यो अभितः समायन् कियदासु स्वपतिश्छन्दयाते॥ ८॥**

गावः। यवम्। प्रऽयुताः। अर्यः। अक्षन्। ताः। अपश्यम्। सहऽगोपाः। चरन्तीः।
हवाः। इत्। अर्यः। अभितः। सम्। आयन्। कियत्। आसु। स्वऽपतिः। छन्दयाते॥ ८॥

उद्गीथ० 'पयसि हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न' (माश १४,४,३,५) इति वचनात् सर्वस्य जगतः स्थितिहेतुभूता याः गावः [4]प्रयुताः परस्परेण सहभूताः[4] अर्यः स्वाधिकारं प्रति गन्त्र्यः यवम् मद्वृष्टिजनितयवादिघासमित्यर्थः, अक्षन् अदन्ति भक्षयन्तीति, [4]एवम्भूताः ताः गाः सहगोपाः गोपालकेन सहिताः चरन्तीः घासं भक्षयन्तीः अहम् अपश्यम् पश्यामि[4] परया प्रीत्या। दृश्यमानाश्च ता गावः हवा वाहनदोहनार्थमाह्वानार्हाः। इत् इति पदपूरणः। [5]अर्यः स्वाधिकारं[5] प्रत्यागन्त्र्यः[6] अभितः सर्वतः सर्वाभ्यो दिग्भ्यः इत्यर्थः, सम् आयन् समित्येकीभावे। एकीभूय यूथशः आगच्छन्त्यहन्यहनि गृहान्[7] प्रति तृप्ताः सत्यः। आगतासु गोषु कियन् अपि क्षीरं यथास्वरूपम्[8] स्वपतिः स्वासांस्वासां गवां स्वामी छन्दयाते दोग्धुं कामयते मदर्थं दोग्धीत्यर्थः। 'इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु। यत् सीमुपह्वरे विदत्' (ऋ ८,६९,६) इति वचनात्।

[9]अथवा या गावः[9] स्वाधिकारं प्रति गन्त्र्यः प्रजाः ब्राह्मणाद्याः यवं मद्वृष्टिजनितं यवाद्यन्नम् प्रयुताः प्रमिश्रिताः परस्परेण सहभूताः अक्षन् अदन्ति, ताः गवाख्याः अहम्

---

१-१. यम् वि[२] अ[१]. २-२. इन्द्र° वि[२] अ[१]. ३. रजनी मूको ४-४. नास्ति मूको.; पूर्तिः सायणानुसारिणी. ५-५. आर्यस्साधि° मूको. ६. प्रत्यगन्त्यः वि[२] अ[१]; प्रत्यगन्त्यः वि[३]. ७. ग्रहान् वि[३]. ८. यथासु° मूको. ९-९. अथवा या वि[२] अ[१]; अथवा वि[३].

अर्यः सर्वस्य स्वामी अपश्यम्[1] परया प्रीत्या पश्यामि। सहगोपाः प्रजापालकप्रजापतिना[2] सहिताः चरन्तीः मद्वृष्टिजनितयवाद्यन्नं भक्षयन्तीः[3] मया परया प्रीत्या दृश्यमानाश्च गोसंज्ञाः प्रजा आह्वातव्याः। मत्परिचर्यार्थं समर्पितत्वात्[4] जीवितस्य[5], मामेवेश्वरम् आराधयन्तीत्यर्थः। कियदपि स्तुतिजातं हविर्जातञ्च आसु प्रजासु स्थितं स्वपतिः आत्मीयः पतिः प्रजापतिः छन्दयाते कामयते। प्रार्थनया चात्र[6] तत्पूर्वको लाभो लक्ष्यते। अतिस्तोकं लभत इत्यर्थः॥ ८॥

वेङ्कट० गावः मदीयम् यवम्[7] विमुक्ताः शत्रोः[8] स्वभूताः अक्षन्। अहम् ताः[9] पश्यामि [10]गोपसहिताः, याः[10] चरन्ति रणेन शत्रूणां ह्वातव्याः सहायाः। तत्र प्रविष्टं माम् अभितः[11] सम् आयन्ति[12]। तदानीम् आसु गवाम् स्वपतिः स्वामी[13] मच्छत्रुः कियत् छन्दयाते किञ्चिदपि इच्छति[14] बलवान् अयमाजगाम इति गोष्वाशां विसृजति॥ ८॥

सं यद्वयं यवसादो जनानामहं यवाद उर्वज्रे अन्तः।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वान्॥ ९॥

सम्। यत्। वयम्। यवसऽअदः। जनानाम्। अहम्। यवऽअदः। उरुऽअज्रे। अन्तरिति।
अत्र। युक्तः। अवऽसातारम्। इच्छात्। अथो इति। अयुक्तम्। युनजत्। ववन्वान्॥ ९॥

उद्गीथ० 'पुरुष एवेदं सर्वम्' ( ऋ १०,९०,२ ), 'सर्वं खल्विदं ब्रह्म' ( छांउ ३,१४,१ ) इत्यादिवचनात् कारणात्मनः सर्वात्मकत्वात् अहमेव सम्यग्ज्ञानयोगात् कारणात्मरूपेण [15]सर्वात्मको भूत्वा सर्वमन्नं[15] स्थावरजङ्गमलक्षणं यवद् द्विपाच्चतुष्पादादिकञ्च सर्वमुत्पादयामि इति कारणात्मरूपेणात्मानमिन्द्रः स्तौति। जनानाम् सर्वप्राणिनाम् यत् अत्तव्यं यवसं यवाद्यन्नञ्च तस्य सर्वस्य यवसस्य यवाद्यन्नस्य च वयम् एव सम्यगत्तारः। द्विपदचतुष्पदादिना[16] कार्यरूपेण स्थितोऽहमेव कारणरूपेण स्थित्वा सर्वस्य यवादिकान्नस्याऽत्ता। क्व स्थितः सन् अत्ता त्वम्। उच्यते — उरु अज्रे अन्तः उरु विस्तारे[17]। 'अज गतिक्षेपणयोः'। अन्तरिति च मध्यवचनः[18]। विस्तीर्णस्य जङ्गमस्य[19] जगतो मध्ये, स्थितः सन् अत्ताऽसीत्यर्थः। 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' ( गी ६, ४५ ) इति वचनाद् मोक्षस्य दुष्प्रापत्वाद् अत्र अस्मिन्नेव जन्मनि अवसातारम् संसारान्तस्य कर्तारं मोक्षं गमयितारं मामेव इच्छात् आराधयितुम् इच्छति। कः। युक्तः योगी। योगीन्द्र एव संसारसागरादुद्धर्त्ता नान्य इति परया भक्त्या योऽयमाराधयति योगेन, तमहमस्मिन्नेव जन्मनि संसाराद् मोचयामीत्यर्थः। अथो अपि च अयुक्तम् अयोगिनम्[20] युनजत् उत्तमस्य[21] स्थाने प्रथमोऽयम्। युनज्म्यात्मना, संसाराद् मोचयामीत्यर्थः, ववन्वान् सम्भजन्, अहं यदि कामयेयमित्यर्थः॥ ९॥

---

१. अवश्यं मूको. २. प्रजायावनप्र° वि[1]; प्रजाचापन प्र° वि[2] अ[1]. ३. भक्षयन्ति मूको. ४. °र्थं-मभित्वात् मूको. ५. प्रनिवस्य मूको. ६. वात्र मूको. ७. वयम् मूको. ८. शत्रो मूको. ९. तान् वि[2] अ[1]. १०-१०. °तायवे वि[2] अ[1]; °तायये वि[3]. ११. अहितः मूको. १२. आपयन्ति मूको. १३. स्वामि मूको. १४. इति वि[2] अ[1]. १५-१५. स्थित्वा वि[3]. १६. °दादीनां मूको. १७. विस्तारेण वि[3]. १८. समिध्यत्र° मूको. १९. जनस्य ग° मूको. २०. योगिनं वि[3]. २१. उक्तमस्य मूको.

**वेङ्कट०** सम् गच्छन्ते[1] यदा गोभिः सस्यम् आदयन्तः[2] जनानाम् स्वभूतम् अन्ये[3], अहम् च यवम् आदयन्[4] विस्तीर्णे क्षेत्रे[5] अन्तः[6]। तत्र कश्चित् पशुरस्मदीयो विमोचकम् इच्छति। अथो अयुक्तम् सस्यानि भक्षयन्तम् आत्मीयपशुं बध्नाति ॥ ९ ॥

अत्रेदु मे मंससे सत्यमुक्तं द्विपाच्च यच्चतुष्पात् संसृजानि ।
स्त्रीभिर्यो अत्र वृषणं पृतन्यादयुद्धो अस्य वि भजानि वेदः ॥ १० ॥

अत्र । इत् । ऊँ इति । मे । मंससे । सत्यम् । उक्तम् । द्विऽपात् । च । यत् । चतुःऽपात् । सम्ऽसृजानि ।
स्त्रीभिः । यः । अत्र । वृषणम् । पृतन्यात् । अयुद्धः । अस्य । वि । भजानि । वेदः ॥ १० ॥

**उद्गीथ०** अत्र इच्छब्द[7] एवार्थः। सत्यशब्दाच्च परो द्रष्टव्यः[8]। उ इति पदपूरणः। अत्र अस्मिन्[9] मे स्तोत्रे मंससे जानीहि त्वम् सत्यम् इत्[10] उक्तम् यथार्थमेव कथितं मया, नार्थवादरूपेणाध्यारोपितगुणम् एतत् स्तोत्रमित्यर्थः। किन्तत्[11]। द्विपात् च मनुष्यजातिकम् चतुष्पात् च गवादिकम्। सामर्थ्याद् अन्यदपि बहुपादेकपादादिकं स्थावरजङ्गमम् यत् तत्[12] सर्वम् अहमेव संसृजानि उत्पादयानीति जानीहि त्वम्। किञ्च स्त्रीभिः स्त्रीसदृशैः बलपौरुषनयवर्जितैः पुरुषैः सह यः पुरुषः शूरम्मन्यः अत्र अस्मिन् जगति वृषणम् उदकं वृष्टेरायुधवृष्टेर्वा वर्षितारं माम्, परित्यज्येति शेषः, पृतन्यात् पृतन्यति[13] पृतनां सङ्ग्रामं युद्धं कर्तुमिच्छति, तस्य अस्य ईदृशस्य पुरुषस्य स्वभूतम् वेदः धनम् अयुद्धः युद्धवर्जितः तेन तादृशेन पुरुषेण सह अयोद्धा सन्नहं बलादपहृत्य वि भजानि स्वसैनिकेभ्यः स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः ॥ १० ॥

**वेङ्कट०** अस्मिन्नर्थे एव इन्द्र! मे त्वम् सत्यम् मन्यसे उक्तम्—यत् अहं सिंहादीन् मनुष्यैः एकचारिणः करोमि। किं च स्वस्त्रीभिः[14] सहायैः यः नरो मद्राष्ट्रे निवसन् पुमांसं पृतन्यति[15], तस्य पुंसो युद्धम् अकुर्वन्नेव अहं धनम् आदाय अभियोक्त्रे प्रयच्छामि ॥ १० ॥

[16]इति सप्तमाष्टके सप्तमाध्याये षोडशो वर्गः[16] ॥

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभि मन्याते अन्धाम् ।
कतरो मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात् ॥ ११ ॥

यस्य । अनक्षा । दुहिता । जातु । आस । कः । ताम् । विद्वान् । अभि । मन्याते । अन्धाम् ।
कतरः । मेनिम् । प्रति । तम् । मुचाते । यः । ईम् । वहाते । यः । ईम् । वा । वरेऽयात् ॥ ११ ॥

---

१. °च्छे वि; °च्छते वि[2]. २. आदायम् मूको. ३. अन्यः मूको. ४. आदायत् वि[2]; आदाय अ[1]. ५. क्षेत्रम् वि[2] अ[1]; क्षेत्रे क्षेत्रे वि[1]. ६. नास्ति वि[2] अ[1]. ७. इच्छन् मूको. ८. द्रष्टव्याः वि[1,1]. ९. नास्ति मूको. १०. इति वि[2] अ. ११. किञ्चित् मूको. १२. यत्तत् वि[1,3]. १३. °न्यमिति मूको. १४. स्वस्तिभिः मूको. १५. प्रतम्य वि[2] अ[1]; प्रतन्यति वि[1]. १६-१६. नास्ति मूको.

**उद्गीथ०** यस्य **ममेन्द्रस्य कारणात्मरूपेणावस्थितस्य सतः** अनक्षा **अक्षिवर्जिता दर्शनहीना** अचेतनेत्यर्थः, दुहिता **प्रकृत्याख्या** जातु आस **सर्वमोक्षपक्षे महाप्रलये वा सामर्थ्याद् मय्येव लीना यदि भवति, तदा**[1] कः **पुरुषो मत्तोऽन्यः** ताम् अन्धाम् **मम दुहितरं प्रकृत्याख्यां मय्येव लीनाम्** विद्वान् **सर्वज्ञ इत्यर्थः**, अभि मन्याते [2]**आत्मन्याश्रयप्रदानेन को देवोऽभिपूजयति, यद्वा क्षीरोदकवद् मया सहैकीभूतां तामाभिमुख्येन को जानाति, अहमेव सर्वज्ञः**[2] आत्मन्याश्रयप्रदानेनाऽभिपूजयामि । **क्षीरोदकवन्मया सहैकीभूतां तत्त्वतो जानामि, नान्य इत्यभिप्रायः । किञ्च** कतरः वा **मत्तोऽन्यः** पुरुषः मेनिम् वज्रम् तम् शत्रुम् प्रति मुचाते **मुञ्चति । स्वयमेवमुत्थाप्येदानीं प्रतिवक्ति**—यः पुरुषः ईम् एनं **शत्रुं प्रति** वहाते **प्रतिवहति प्राप्नोति धनार्थं गच्छति,** यः वा पुरुषः ईम् एनं शत्रुम् वरेयात् **युद्धाय वरयितुमिच्छति, युद्धं प्रार्थयत इत्यर्थः, स चाहमेव, नान्य इत्यर्थः** ॥ ११ ॥

**वेङ्कट०** यस्य **अक्षिवर्जिता** दुहिता जातु **कदाचिद्**[3] **भवति जायते, सः** कः ताम् विद्वान् अभि **मन्यते** [4]अन्धाम् **इयं मम अस्तु** इति । कतरः† वा **तस्य अन्तर्मेनिरूपम् आत्मशरीरे** प्रति **मुञ्चति** । यः **एनां** वहति, यः वा **एनां वरयितुम् इच्छति इत्यादित्यम् अधिष्ठाय पार्थिवं रसम् आददानम्** इन्द्रं **ब्रुवत इति**[4] ॥ ११ ॥

किय॑ती॒ योषा॑ मर्य॒तो व॑धू॒योः परि॑प्रीता॒ पन्य॑सा॒ वार्ये॑ण ।
भ॒द्रा व॒धूर्भ॑वति॒ यत् सु॒पेशाः॑ स्व॒यं सा मि॒त्रं व॑नु॒ते जने॑ चि॒त् ॥ १२ ॥

किय॑ती । योषा॑ । म॒र्य॒तः । व॒धू॒ऽयोः । परि॑ऽप्रीता । पन्य॑सा । वार्ये॑ण ।
भ॒द्रा । व॒धूः । भ॒व॒ति॒ । यत् । सु॒ऽपेशाः॑ । स्व॒यम् । सा । मि॒त्रम् । व॒नु॒ते॒ । जने॑ । चि॒त् ॥१२॥

**उद्गीथ०** कियती **किंपरिमाणा** योषा **स्त्रीजातिः** मर्यतः **मनुष्यधर्मान् सम्भोगादिधर्मान्**[5] **इच्छतः पुरुषस्य** वधूयोः **वधूकामस्य स्त्रीकामस्येत्यर्थः**, परिप्रीता **परितुष्टा अनुरक्ता वशवर्तिनीत्यर्थः**, पन्यसा **स्तोत्रेण** वार्येण **वरणीयेन शोभनेन सर्वगुणग्राहिणा, स्तुतस्यापि सत इति शेषः, सर्वगुणोपेतस्यापि सत इत्यर्थः । मम पुनरीश्वरस्य सर्वात्मकस्य सर्वस्य नियन्तुरन्तर्यामिरूपेणावस्थितस्य** [6]**इन्द्रस्य असावेव स्त्री**[6] **प्रकृत्यात्मिका**[7] **परिप्रीता**[8] **अनुरक्ता**[9] **वशवर्तिनीत्यभिप्रायः । किञ्च** [10]भद्रा **कल्याणी**[10] **सर्वगुणोपेता** सुपेशाः **सुरूपा च भवति** यत् **या वधूः स्त्री द्रौपदीदमयन्त्यादिका** सा स्वयम् **आत्मनैव** यम् मित्रम् **स्निग्धं पतिम् अर्जुननलादिकम्**[11] वनुते **स्वयंवरधर्मेण प्रार्थयते** जने चित् **वरजनमध्ये स्थितम्, स च व्रियमाणो वरनरः अहमेवेत्यभिप्रायः, 'रूपं-रूपं** प्रतिरूपो बभूव' ( ऋ ६,४७,१८ ) **इति मन्त्रलिङ्गात् सर्वात्मकत्वात्** ॥ १२ ॥

**वेङ्कट०** **ताम् इमां** वधूम् **इच्छतः** मर्यतः **इन्द्रस्य सा** योषा कियती । **तयोः मध्ये कियान्**

---

१. नास्ति मूको. २-२. नास्ति मूको; पूर्तिः सायणानुसारिणी द्र. ३. कस्यचित् मूको. ४-४. नास्ति वि[1]. † करः मूको. ५. धर्मम् मूको. ६-६. सावेवस्त्री वि[3]; सावेवतु वि[2] अ. ७. °त्यादिका मूको. ८. परप्रीता वि[2] अ. ९. अनुव्रती मूको. १०-१०. भद्राणी मूको. ११. °र्जुनेन नला° वि[2] अ; °र्जुनं मला° वि[3].

अन्तर इति अस्मिन्नर्थे कियतीति[1] दृष्टम्। सम्प्रीता स्तोतव्येन वरणीयेन[2]। तेन सा इयम् [3]वधूः सुरूपा यदा भजनीया भवति, तदा सा स्वयम् एव आत्मनः मित्रम् पतिं भजते अनेकस्मिन् अपि† जने अन्यस्मिन् स्थितं‡ तं सर्वम् अपहाय[3] ॥ १२ ॥

पत्तो जंगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम्।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥ १३ ॥

पत्तः। जगार। प्रत्यञ्चम्। अत्ति। शीर्ष्णा। शिरः। प्रति। दधौ। वरूथम्।
आसीनः। ऊर्ध्वाम्। उपसि। क्षिणाति। न्यङ्। उत्तानाम्। अनु। एति। भूमिम् ॥ १३ ॥

**उद्गीथ०** अनया वसुकः[4] स्तौतीन्द्रम्। अत्र सामर्थ्याद् उदकनिर्देशप्रतिनिर्देशार्थौ द्वितीयान्तौ यत्तच्छब्दावध्याहार्यौ[5]। यदुदकं भौमरसलक्षणं मण्डले सम्भृतं परिपक्वं वा पत्तः पादैः रश्म्याख्यैः जगार जिगर्तिर्गिरतिकर्मा वा गृह्णातिकर्मा[6] वा (तु. या ६,८)। पृथिवीतो[7] मध्यस्थानम् इन्द्रं प्रति निगिरति गृह्णाति[8] वाऽऽदित्य[9], तदुदकम्[9] इन्द्रः प्रत्यञ्चम् आत्मानं प्रत्यञ्चितं गतम् अत्ति भक्षयति उपयुङ्क्ते स्वीकरोतीत्यर्थः। स्वीकृत्य च शीर्ष्णा अन्तरिक्षलोकस्य शिरोभूतेन विद्युदात्मना स्थित्वा पृथिवीनिवासिनो लोकस्य शिरः प्रति दधौ निदधाति प्रतिक्षिपति वरूथम् वरणीयं वृष्ट्युदकम्। न केवलं शिरः प्रतिनिदधाति। किं तर्हि। आसीनः उपविष्टः। क। उपसि उपस्थे (तु. या ६,६) स्वसमीपस्थानेऽन्तरिक्षे ऊर्ध्वाम् अपि वृष्टिम् क्षिणाति 'क्षि हिंसायाम्'। हिनस्ति क्षिपतीत्यर्थः। किञ्च न्यङ् [10]नीचैरञ्चितः सन्[10] वाय्वात्मना तिर्यग्गतिः सन्नित्यर्थः, उत्तानाम् अनु एति आनुपूर्व्येण गच्छति भूमिम्।

अथवा [11]तेनेन्द्रेण उत्क्षिप्तञ्च[11] सत् तद् वृष्ट्युदकं न्यङ् लिङ्गव्यत्ययोऽत्र कर्तव्यः। [12]न्यक् नीचैरञ्चितं सत्[12] उत्तानामन्वेति पथा[13] निम्नामन्वेति अनुगच्छति भूमिम्। अथवा आदित्यात्मना इन्द्रः स्तूयते। तदंशत्वाद् आदित्यस्य पादैः रश्म्याख्यैः भौमरसलक्षणमुदकं गिरति गृह्णाति वाऽऽदित्यः। गृहीत्वा च प्रत्यञ्चमात्मानं प्रतिगतम् अत्ति भक्षयति स्वीकरोति मण्डले स्थापयतीत्यर्थः। अवस्थाप्य च परिपक्वः सन् वर्षासु प्राप्तासु शीर्ष्णा शिरस्थानीयेन रश्मिजालेन सर्वलोकस्य शिरः प्रति दधौ दधाति क्षिपतीत्यर्थः। वरूथम् वरणीयं वृष्ट्युदकम्। किञ्च आसीनः उपविष्टः। क। उपसि उपस्थे (तु. या ६,६) स्वसमीपस्थाने मण्डले दिवि वा ऊर्ध्वाम् स्वदीप्तिं रश्मिजाललक्षणां क्षिणाति हिनस्ति आलोककरणाय व्याप्नोतीत्यर्थः। किञ्च न्यङ् रश्मिजालरूपेण नीचैरञ्चिता गन्ता सन् उत्तानां भूमिमन्वेति अनुगच्छति तिर्यगूर्ध्वमधश्च सर्वरश्मिजालेनाऽऽलोककरणाय व्याप्नोतीत्यर्थः ॥ १३ ॥

**वेङ्कट०** पत्तः उदकम् उद्गिरति। अपि च प्रत्यञ्चम् अभिमुखम्[14] [15]ऊर्ध्वं रसम्[15] अत्ति। आत्मीयेन

---

१. नास्ति वि[२] अ[१]. २. विरव[२] वि[२] अ[१]. ३-३. नास्ति वि[१]. † नास्ति वि[२] अ[१]. ‡ स्थिते मूको. ४. वासुकः मूको. ५. यच्छब्दावण्या° वि[२] अ; यच्छब्दोध्या वि[१]. ६. गृह्णाति मूको. ७. पृथिवीपतिः मूको. ८. नास्ति मूको ९. तमुद° मूको. १०-१०. °ञ्चितास्सन् वि[२] अ. ११-११. तेनेन्द्रोत्क्षिप्त° मूको. १२-१२. न्यङ् नीचैरञ्चितस्सन् मूको. १३. यथा मूको. १४. उदकम् वि[२] अ[१]. १५-१५. ऊर्ध्वरसम् वि[२] अ[१].

शीर्ष्णा तेजसाम् अग्रेण तस्याः शिरः प्रति सन्धत्ते वरणीयम्। आदित्यमण्डले आसीनः कश्चिद् ऊर्ध्वः[1] तिष्ठति[2], कश्चिद्[3] उपस्थे स्पृशति, कश्चिद् रश्मिभिः न्यङ् उत्तानाम् भूमिम् [4]अनु गच्छति[4] इति। पूर्वयोः ऋचोः[5] अनयोः उत्तरम् उक्तम् इति ॥ १३ ॥

बृहन्नच्छायो अपलाशो अर्वा तस्थौ माता विषितो अत्ति गर्भः ।
अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः ॥ १४ ॥

बृहन् । अच्छायः । अपलाशः । अर्वा । तस्थौ । माता । विऽसितः । अत्ति । गर्भः ।
अन्यस्याः । वत्सम् । रिहती । मिमाय । कया । भुवा । नि । दधे । धेनुः । ऊधः ॥ १४ ॥

**उद्गीथ०** विद्युदात्मनेन्द्रः स्तूयते। बृहन् महाविद्युद्वृक्षरूपः इन्द्रः अच्छायः छायारहितः तमोवर्जित इत्यर्थः, अपलाशः पर्णरहितश्च। अथवा अपलाशः पराशदनवर्जितः[6] विनाशरहितः इत्यर्थः। अर्वा अर्ता सर्वत्रगामी वेत्यर्थः, तस्थौ तिष्ठति विषितः विमुक्तः निरालम्बन इत्यर्थः, [7]माता वृष्टिप्रदानद्वारेण[7] सर्वस्य जगतो निर्माता च अत्ति भक्षयति च हवींषि। अथवाऽदनेन विनाशो[8] लक्ष्यते। दुष्कृतो विनाशयति। गर्भः[9] मेघस्य[10] गर्भभूतश्च। अनर्थानां गरिता वा। किञ्च अन्यस्याः अदित्याख्याया देवमातुः [11]वत्सम् अपत्यमिन्द्रं[12] विद्युन्मयम् रिहती आस्वादयन्ती उपजीवयन्ती वर्धयन्ती[12] पूजयन्ती स्तुवती[13] वा मिमाय निर्मिमीते वर्षासु मेघजातिः। कया भुवा [14]केनापि भावेनाभिप्रायेण[14] भक्त्या भयेन वेत्यर्थः। नि दधे स्वोदरे निदधाति च धेनुः 'धेनुर्धयतेर्वा धिनोतेर्वा' ( या ११,४२ )। सर्वस्य वृष्ट्युदकं पाययित्री वृष्ट्युदकेन प्रीणयित्री वेत्यर्थः। ऊधः उदकाधारत्वात्[15] उदकस्थानीयम् इन्द्रं विद्युद्रूपम्।

अथवा आदित्यात्मनेन्द्रः स्तूयते तदंशत्वाद् आदित्यस्य। बृहन् महान् [16]आदित्यो वृक्षः[16] अच्छायः छायारहितः तमोरहित इत्यर्थः [17]अपलाशः पर्णरहितश्च[17]। अथवा पलाशः पराशदनात्। [18]पराशदनरहितश्चेत्यर्थः[18]। अर्वा अर्ता सर्वत्रगामी द्युलोकगामी वेत्यर्थः, तस्थौ तिष्ठति च। कथम्। विषितः विमुक्तः निरालम्बन इत्यर्थः। माता निर्माता च सूर्यस्य वृष्टिद्वारेण। अत्ति भक्षयति च हवींषि। अथवाऽदनेनात्र विनाशो लक्ष्यते। दुष्कृतो[19] विनाशयतीत्यर्थः[20]। गर्भभूतश्च दिवः त्रैलोक्यान्तर्वर्तित्वात्। अथवा [21]'गर्भो गृभेर्गृणात्यर्थे[21]। गिरत्यनर्थानिति वा' ( या १०, २३ )। भौमान् रसान् रश्मिभिः गृणाति[22] गिरति वेत्यर्थः। किञ्च अन्यस्याः देवमातुरदितेः वत्सम् अपत्यम् आदित्यं रिहन्ती आस्वादयन्ती उपजीवयन्ती स्तुवती[13] वा मिमाय निर्मिमीते, पूर्वस्यां दिश्यहन्यहनि उत्पादयन्तीत्यर्थः। कया भुवा केनापि भावेन भक्त्या भयाद्वेत्यर्थः। नि दधे स्वोदरे

---

१. ऊर्ध्वाः मूको. २. °न्ति मूको. ३. काचिद् मूको. ४-४. अधिगच्छति वि[२] अ[१]; अनुगच्छन्ति वि[१]. ५. ऋच्वयोः वि[२]. ६. ···वर्जितः वि[२] अ. ७-७. महात्र° मूको ८. विनाशं मूको. ९. विभागः मूको. १०. मवस्य वि[१]; मध्यस्य वि[२]; मध्यमस्य अ. ११-११. व···प° वि[१]; वाप° वि[२] अ. १२-१२. °वर्धन्ती मूको. १३. स्तुवन्ती मूको. १४-१४. केनाविभावीभि° मूको. १५. उदकधा° वि[१,२] अ. १६-१६. °त्यवृ° वि[२] अ. १७-१७. अथवाशो वर्णो[२] वि[२] अ. १८-१८. परागमन° वि[२] अ. १९. तद्दुष्कृ° वि[२] अ. २०. °यत्येवेत्य° वि[२] अ. २१-२१. गर्भो गृह्णात्यर्थे मूको. २२. गृह्णाति मूको. २३. स्तुवती मूको.

निदधाति च धेनुरिव ऊधः। अथवा धेनुस्थानीया द्यौरुदकस्याऽऽधारत्वात् क्षरितृत्वाद् ऊधःस्थानीयम् आदित्यम् ॥ १४ ॥

वेङ्कट० कस्याश्चित् पुत्रः तस्या रसम् अत्ति। न स पृथिव्या[1] जातो वृक्षः, नापि गोर्जातो वत्सः। स क इति पृच्छति बृहन् इति। मातुः अपि महान् छायापलाशवर्जितः गमनशीलः सदा[2] विमुक्तः कश्चित् गर्भः मातुः पयः अत्ति। माता च न कदाचित् सञ्चरति सर्वदा तिष्ठति। स इन्द्र इति उत्तरम्। किञ्च अन्यस्याः पृथिव्याः वत्सम् इमम्[3] अग्निम्, अपि वा स्थावरजङ्गमं च वर्षजिह्वया लिहन्ती काचित् शब्दायते माध्यमिका वाक्। सा धेनुः केन मार्गेण आत्मीयम् ऊधः तस्मिन् वत्से नि दधाति। तत्रोत्तरम् इन्द्रेण इति। तदुक्तम्—'तस्य सा पयसाऽपिन्वतेळा' (ऋ ३,५७,१३) इति ॥ १४ ॥

सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात् समजग्मिरन् ते।
नव पश्चातात् स्थिविमन्त आयन् दश प्राक् सानु वि तिरन्त्यश्नः ॥ १५ ॥

सप्त। वीरासः। अधरात्। उत्। आयन्। अष्ट। उत्तरात्तात्। सम्। अजग्मिरन्। ते।
नव। पश्चातात्। स्थिविऽमन्तः। आयन्। दश। प्राक्। सानु। वि। तिरन्ति। अश्नः ॥१५॥

उद्गीथ० प्रजापत्यात्मनेन्द्रः स्तूयते। सप्त ऋषयो विश्वामित्रादयः वीरासः प्रजापतेः पुत्राः अधरात् प्रजापतेरधःकायात् उत् आयन् उत्पन्ना इत्यर्थः[4]। अष्ट ये वसवः ते उत्तरात्तात् उत्तरात् प्रदेशात्[5] सम् अजग्मिरन् सञ्जज्ञिरे इत्यर्थः। नव भृगवः स्थिविमन्तः 'स्थिविः हलजम्भा, तया चात्र[6] कर्षणम्[6] उपलक्ष्यते, कृषिमन्त इत्यर्थः। पश्चातात् पृष्ठतः आयन् आगताः[8] उत्पन्ना इत्यर्थः। दश अङ्गिरसः प्राक् अग्रतः, उत्पन्नाः सन्तः इति शेषः, सानु समुच्छ्रितं प्रदेशम् वि तिरन्ति विवर्धयन्ति अश्नः अशनवतो द्युलोकस्य ॥ १५ ॥

वेङ्कट० सप्त वीराः[9] मरुत इन्द्रस्य दक्षिणार्धाद् उत् तिष्ठन्ति। अथ अष्ट उत्तरतः सम् गच्छन्ते ते वीराः। अथ नव पश्चात्[10] स्थिविमन्तः स्थानवन्त आगच्छन्ति। अथ दश अस्य[11] प्राक् स्थिताः समुच्छ्रितम् उदकं तेजो वा वि तिरन्ति इति मरुतोऽस्य साहाय्यं प्रतिदिशम् अवस्थाय कुर्वन्ति। अपर आह—सप्तर्षयः वालखिल्या अष्टौ नव भृगवो दश अङ्गिरसः इति ॥ १५ ॥

[12]इति सप्तमाष्टके सप्तमाध्याये सप्तदशो वर्गः[12] ॥

दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय।
गर्भं माता सुधितं वक्षणास्ववेनन्तं तुषयन्ती बिभर्ति ॥ १६ ॥

---

१. °व्यां वि[२] अ[१]. २. सर्वदा वि[१]. ३. नास्ति वि[२] अ[१]. ४. इन्द्र इत्यर्थः मूको. ५. प्रादेशात् वि[१२]. ६-६. स्थिविहल जभायात्र मूको. ७. कृषण° वि[१२] अ. ८. आगा मूको. ९. वीरासः वि[१]. १०. °श्चात् द्दा वि[२] अ[१]. ११. अस्यः मूको. १२-१२. नास्ति मूको.

दशानाम् । एकम् । कपिलम् । समानम् । तम् । हिन्वन्ति । क्रतवे । पार्याय ।
गर्भम् । माता । सुऽधितम् । वक्षणासु । अवेनन्तम् । तुषयन्ती । बिभर्ति ॥ १६ ॥

**उद्गीथ०** दशानाम् अङ्गिरसां मध्ये एकम् प्रधानम् कपिलम् कपिलनामानम् ऋषिम् समानम् सामर्थ्येन तुल्यम् । केन । सामर्थ्यात् प्रजापतिना । अत्र हिन्वन्तिशब्दात् पूर्वो यच्छब्दोऽध्याहार्यः, तच्छब्दश्च गर्भशब्दात् पूर्वो द्रष्टव्यः । यम् हिन्वन्ति गमयन्ति प्रेरयन्ति ते चाङ्गिरसोऽवशिष्टाः । किमर्थम् । क्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे प्रज्ञानाय वा सम्यग्ज्ञानलक्षणाय पार्याय पारं प्रापणीयाय परिसमापयितव्याय यज्ञादिकर्मोपदेशनाय सम्यग्ज्ञानोपदेशनाय वेत्यर्थः । तं प्रजापतेः गर्भम् माता प्रकृतिः सुधितम् सुहितं सुस्थापितं प्रजापतिना वक्षणासु 'वक्षणाः' ( निघ १,१३ ) इति नद्य उच्यन्ते । ताभिश्चात्र प्रकृतिस्थाः सूक्ष्मा आपो लक्ष्यन्ते । [1]प्रकृतिस्थासु सूक्ष्मास्वप्स्वित्यर्थः[1] । अवेनन्तम् गर्भवासम् अकामयमानम् तुषयन्ती[2] सम्यक् ज्ञानादुपदेष्टुं योग्योऽयमिति प्रीता सती बिभर्ति धारयति प्रजापतिनियोगात् ॥ १६ ॥

**वेङ्कट०** दशानाम् दिशाम् एकम् कपिलम् समानम् पतिम् तम् प्रेरयन्ति ते मरुतः कर्मणे पारभवाय । संस्थाप्य अयतम् गर्भम् आत्मीयेन रसेन सुसंवृत्तम्[3] माता माध्यमिका वाग् अन्तरिक्ष्यासु नदीषु स्थिता[4] सन्तुष्यन्ती[5] [6]बिभर्ति आत्मानम्[6] अकामयमानम्[7] इति ॥ १६ ॥

पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन् ।
द्वा धनुं बृहतीमप्स्व१न्तः पवित्रवन्ता चरतः पुनन्ता ॥ १७ ॥

पीवानम् । मेषम् । अपचन्त । वीराः । निऽउप्ताः । अक्षाः । अनु । दीवे । आसन् ।
द्वा । धनुम् । बृहतीम् । अप्ऽसु । अन्तः । पवित्रऽवन्ता । चरतः । पुनन्ता ॥ १७ ॥

**उद्गीथ०** पीवानम् स्थूलं मेदोयुक्तम् मेषम् अपचन्त प्रजापतिरूपस्येन्द्रस्यार्थाय पक्ववन्तः[8], पशुयागं कृतवन्त इत्यर्थः, वीराः प्रजापतेः पुत्राः अङ्गिरसः । किञ्च दीवे देवने न्युप्ताः निक्षिप्ताः सन्तः अक्षाः[9] द्वयोरेकतरस्यानुगता[10] भवन्ति । एवं प्रजापतेः अनु आसन् अनुगता भूता अङ्गिरसः । किञ्च द्वा अङ्गिरसामेव मध्ये द्वौ कौचिद् अङ्गिरसौ धनुम् धनुशब्दोऽत्र धनुःशब्दपर्यायः । धनशब्दपर्यायो वा । धनुर्यथा वधसाधनम् एवमज्ञानादिवधसाधनम्, धनवत्प्रीतिसाधनं वा, कपिलमित्यर्थः । बृहतीम् 'बृह वृद्धौ' । प्रजापत्यादेशात् वर्धयित्रीं प्रकृतिम् । क्व वर्धयित्रीम् । उच्यते — अप्सु अन्तः प्रकृतिस्थानां परमसूक्ष्माणाम् अपां मध्ये । पवित्रवन्ता मन्त्रः पवित्रमुच्यते । ध्यानसाधनप्रणवमन्त्रवन्तौ चरतः परिचरतः प्रजापत्यादेशात् आराधयतः पुनन्ता प्रणवध्यानेनाऽऽत्मानं संस्कुर्वन्तौ ॥ १७ ॥

---

१-१. प्रकृतिस्थः सुसूक्ष्मः सरः स्वप्स्वि° मूको. २. जुतं तृप्तिः वि[2] अ[1]. ३. वाजन्तम् वि[2] अ[1]. ४ स्थि वि[2]; नास्ति वि[1]; स्थिताः अ[1]. ५. तुष्यन्ति वि[2] अ[1]. ६-६. विभून्मानं वि[2] अ[1]; बमत्यात्मानं वि[1]. ७. कायमयमानम् मूको. ८ पक्तवन्तः मूको. ९. नास्ति मूको. १० °रेकस्यानुरागता वि[1,2] अ.

**वेङ्कट०** [1]ते वीराः तस्मै[1] इन्द्राय पीवानम् मेषम् अपचन्त। अथ परोक्षम् आह[2]—केचन अक्षाः देवनस्थानं प्रति निक्षिप्ताः आसन् इति। अन्तरिक्षे अपि ततो मरुत आह। अथ द्वौ देवौ तैः [3]सन्तर्पितौ अन्तरिक्षे[3] स्थितां काञ्चन धेनुम् [4]केन शोधकेन[4] रश्मिना युक्तौ पुनन्तौ चरतः इति इन्द्रवायू वदति[5] माध्यमिकां वाचं शोधयन्तौ ॥ १७ ॥

वि क्रोशनासो विष्वंञ्च आयन् पचाति नेमो नहि पक्षदर्धः ।
अयं मे देवः संविता तदाह द्र्वन्न इद्वनवत् सर्पिरंन्नः ॥ १८ ॥

वि । क्रोशनासः । विष्वंञ्चः । आयन् । पचाति । नेमः । नहि । पक्षत् । अर्धः ।
अयम् । मे । देवः । सविता । तत् । आह । द्रुऽअन्नः । इत् । वनवत् । सर्पिःऽअन्नः ॥ १८ ॥

**उद्गीथ०** वि क्रोशनासः प्रजापतिं पितरं विविधमाह्वयन्तः विष्वञ्चः नानागतयः नानापूजना वा आयन् आगताः, प्रजापतेः सकाशादुत्पन्ना इत्यर्थः। के। अङ्गिरसः सर्वाः प्रजा वा। उत्पद्य पचाति प्रजापत्यर्थं यज्ञेषु हवींषि पचति नेमः अङ्गिरसां सर्वप्रजानां वा अर्धः। नहि पक्षत् न पचति अर्धः। तदेतत्सर्वं केन तव कथितमिति चेत्, उच्यते—अयम् देवः सविता सर्वस्य प्रसविताऽऽदित्यः प्रजापतिर्वा मे मम तत् एतत् सर्वं यथोक्तम् आह कथितवान्। किञ्च द्रुन्नः इत् दार्वन्नः सार्पिरन्नः[6] च अग्निरपि वनवत् हविर्वहनद्वारेण प्रजापतिं वनति सम्भजते ॥ १८ ॥

**वेङ्कट०** ते क्रोशन्तः नानादिक्काः[7] वि[8] गच्छन्ति। क इत्याह पचाति इति। कश्चित् अर्धः इन्द्राय पक्तव्यं पचति। नहि पचति अन्यः[9] अर्धेषु[10] वीरेषु अन्येषु वा मनुष्येषु। तदिदम् उक्तम्[11]—'सप्त वीरासः' ( ऋ १०,२७,१५ ) इत्यादिकम्। मह्यम् अयम् देवः सविता आह। तथा दार्वन्नः[12] च घृतान्नोऽग्निः[13] तत् कर्म भजते पचत् पक्तव्यम् तदपि सविता एव आह इति ॥ १८ ॥

अपंश्यं ग्रामं वहंमानमाराद॑चक्रया स्वधया वर्तमानम् ।
सिषंक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो नवीयान् ॥ १९ ॥

अपंश्यम् । ग्रामम् । वहंमानम् । आरात् । अचक्रया । स्वधया । वर्तमानम् ।
सिसंक्ति । अर्यः । प्र । युगा । जनानाम् । सद्यः । शिश्ना । प्रऽमिनानः । नवीयान् ॥ १९ ॥

**उद्गीथ०** अपश्यम् आगमेनार्षेण वा ज्ञानेन साक्षाद्वा दृष्टवान् अहमस्मि वसुक्रः प्रजापतिरूपमिन्द्रम्। किं कुर्वन्तं दृष्टवानस्मि—उच्यते। ग्रामम् भूतसङ्घातम् वहमानम् प्रापयन्तम् सृजन्तमित्यर्थः।

---

१-१. नास्ति वि[1]. २. आहं वि[2]; आच वि[1]. ३-३. °तोऽन्तरिक्षे वि[2] अ[1]. ४-४. केनरगाधकेन वि[2] अ[1]. ५. पति वि[2] अ[1]. ६. सर्पिरन्नः सर्पि° मूको. ७. तानादिका मूको. ८. पि वि[2] अ[1]; पिगच्छन्ति वि[1] ९. अन्ये वि[2] अ[1]. १०. नास्ति वि[2] अ[1]. ११. न्नतम् वि[2] अ[1]. १२. °न्न मूको. १३. घृतानो° वि[2] अ[1]; घृतंनो° वि[1].

कुतः। आरात् उपादानकारणात् प्रकृतितः इत्यर्थः। किञ्चान्यत् कुर्वन्तमपश्यम्। अचक्रया स्वधया अन्नेन वर्तमानम् आत्मस्थितिञ्च कुर्वन्तम् अपश्यम् तम्। उक्तञ्च मन्त्रान्तरे 'आनीदवातं स्वधया तदेकम्' ( ऋ १०, १२९, २ ) इति। किञ्च प्र सिषक्ति प्रकर्षेण सेवते अर्यः सर्वस्येश्वरः[1] प्रजापतिः युगा युगानि यागकालान् यजमानजनानां कार्यत्वेन सम्बन्धिनः। किञ्च सद्यः समानेऽहनि शिश्ना शिश्नानि 'शिश्नम् श्नथतेः' ( या ४,१९ ) इति वचनात् श्नथितॄणि ताडयितॄणि हिंसितॄणि असुररक्षआदिशत्रुवृन्दानि प्रमिनानः प्रकर्षेण हिंसन् नवीयान् शरीरेण बलपौरुषनयादिभिश्च नवतरः, भवतीति शेषः॥ १९॥

वेङ्कट० [2]अपश्यम् वीराणां सङ्घम् गच्छन्तम् अहम् आरात् चक्ररहितया रथिवर्जितया रथम् आत्मानो† धारयन्त्या सेनया ‡प्रत्यक्षं मारुतम्‡ आगच्छन्तम्। प्र सेवते जनानाम् स्वामी मरुद्गणः अहोरात्राणि सद्यः एव श्नथयितव्यानि प्र-हिंसन्§ नवतरः[2]॥ १९॥

एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममन्धि।
आपश्चिदस्य वि नशन्त्यर्थं सूरश्च मर्क उपरो बभूवान्॥ २०॥

एतौ। मे। गावौ। प्रऽमरस्य। युक्तौ। मो इति। सु। प्र। सेधीः। मुहुः। इत्। ममन्धि।
आपः। चित्। अस्य। वि। नशन्ति। अर्थम्। सूरः। च। मर्कः। उपरः। बभूवान्॥२०॥

उद्गीथ० कार्यकारणयोरेकत्वोपचारात् 'आत्मा वै पुत्रनामासि' ( माश १४,९,४,२६ ) इति वचनाच्चेन्द्ररूपेणाऽवस्थितस्य मे मम प्रमरस्य प्रकर्षेण शत्रूणां मारयितुः स्वभूतौ गावौ शत्रून् यज्ञांश्च प्रति गन्तारौ हरी युक्तौ स्वगृहं प्रति गमनाय[3] नियुक्तौ सु[4] सुष्ठु अभिपूजितौ मो प्र सेधीः स्तुत्युपसंहारकरणेन[5] अस्मद्यज्ञात् माऽपगमय। किं तर्हि। मुहुः इत ममन्धि पुनःपुनरपीन्द्रं स्तुहि हे मम अन्तरात्मन्नित्यर्थः। यतः आपः चित् आप एव वृष्टिलक्षणाः अस्य इन्द्रस्य वि नशन्ति अनेकार्थत्वाद्धातूनां नशतिरत्र प्राप्त्यर्थः। प्राप्नुवन्ति अर्थम् गतिम्। सूरः च सूर्यश्च प्राप्नोति इति। [6]कीदृशः। मर्कः 'मृजू शुद्धौ' मार्जयिता[6] शोधयिता सर्वस्य उपरः बभूवान् उपरमदृशो [7]भवन् मेघ इव[7] शीघ्रगतिः सन्नित्यर्थः। यस्माद् गच्छन् दुरापः, तस्माद् यावन्नाऽपैति[8] यज्ञात् तावच्छीघ्रं पुनरपि स्तुहीत्यर्थः॥ २०॥

वेङ्कट० एतौ मम अश्वौ शत्रूणां प्रमारयितुः ते[9] नियुक्तौ रथे। तत्र त्वम् [10]इन्द्र! मैव[10] प्र सेधीः। साहाय्यार्थं मुहुर्मुहुः[11] मदीयेन स्तोत्रेण[12] मुदितो भव। आपः अपि देव्यः अस्य

---

१. असेश्वरः मूको. २-२. नास्ति वि[२] अ[१]. † °त्मनां मूको. ‡-‡ प्रत्यक्ष मारुतेः मूको. § प्रहिन् मूको. ३ 'मना मूको. ४. नास्ति मूको. ५ प्रत्युपसं° मूको. ६-६. …र्जयिता वि[२] अ. ७-७ भनमेव वि[२] अ; भवनमेव वि[१]. ८. °न्नाप्नोति मूको. ९. त वि[२] अ[१]; नास्ति वि[१]. १०-१०. इन्द्रमेव मूको. ११. मुहुः वि[१] अ[१]. १२. स्तोत्रे वि[२].

मम साहाय्यार्थं वि आप्नुवन्ति, सूर्यश्च शोधयिता मेघो भवन्। सूर्यस्य हि तेजांसि भवन्ति मेघाः ॥ २० ॥

[1]इति सप्तमाष्टके सप्तमाध्याये अष्टादशो वर्गः[1] ॥

अयं यो वज्रः पुरुधा विवृत्तोऽवः सूर्यस्य बृहतः पुरीषात् ।
श्रव इदेना परो अन्यदस्ति तदव्यथी जरिमाणस्तरन्ति ॥ २१ ॥

अयम् । यः । वज्रः । पुरुधा । विऽवृत्तः । अवः । सूर्यस्य । बृहतः । पुरीषात् ।
श्रवः । इत् । एना । परः । अन्यत् । अस्ति । तत् । अव्यथी । जरिमाणः । तरन्ति ॥ २१ ॥

**उद्गीथ०** यः अयम् इन्द्रस्य स्वभूतः वज्रः पुरुधा बहुधा अनेकप्रकारम् अग्रतः पृष्ठतः पार्श्वतो मध्यतः अधस्तादुपरिष्टाच्च वृष्ट्युदकप्रतिबन्धकाऽसुरमेघादिशत्रुशरीरेषु[2] विवृत्तः पतितः बृहतः पुरीषात् अवः अन्तरिक्षलोकस्य परस्तादादित्यमण्डले श्रवः इत् 'श्रवः' ( निघ २, ७ ) इत्यन्ननाम। अन्नहेतुत्वाच्चात्र आदित्यमण्डलस्थम् उदकमुच्यते। इच्छब्दोऽप्यर्थे। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यदप्युदकं मेघोदरगतादुदकात् एना परः अन्यत् अस्ति तत् अपि अव्यथी व्यथारहिताः जरिमाणः 'प्रहर भगवो जहि वीरयस्व' ( ऐब्रा ३, २० ) इति इन्द्रस्य स्तोतारो मध्यमस्थाना देवगणा मरुदादयः तरन्ति तरतिरत्रान्तर्णीतण्यर्थो[3] द्रष्टव्यः। वज्रघातमन्तरेणेन्द्रस्य प्रतापेनैवान्तरिक्षलोकं प्रति रश्मिभिरवतारयन्तीत्यर्थः। अथवा जरिमाणः तमसां भौमानां च रसानां जरितारो रश्मयो वर्षास्ववतारयन्ति। एतदुक्तं भवति— मेघोदरगतमुदकं तत्प्रतिबन्धकान् शत्रून् वज्रेण हत्वा भूमौ पातयतीन्द्रः[4] आदित्यमण्डलस्थमुदकं वज्रमन्तरेणाऽऽज्ञयैव केवलया अन्तरिक्षलोकं प्रति रश्मिभिरवतारयतीति[5] ॥ २१ ॥

**वेङ्कट०** अयम् यः इन्द्रस्य वज्रः बहुधा इतस्ततः विच्छिन्नः मेघेषु इन्द्रधनुः अवस्तात् सूर्यस्य स्वभूतात् महतः पूरकात्[6] मण्डलाद् अस्य परस्तात् श्रवणीयम् [7]अन्यत् अन्नम्[7] अस्ति, तत् अन्नं व्यथारहिताः स्तोतारः तरन्ति, जयन्ति आत्मीयं कुर्वन्ति इति। यद्वा[8] श्रवणीयम् इन्द्राख्यम् अन्यत् तेजो विद्यते[9], तत्तेजो व्यथारहिता गरितारो दक्षिणाया माध्यमिका देवगणाः तरन्ति ॥ २१ ॥

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान् पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ २२ ॥

वृक्षेऽवृक्षे । निऽयता । मीमयत् । गौः । ततः । वयः । प्र । पतान् । पुरुषऽअदः ।
अथ । इदम् । विश्वम् । भुवनम् । भयाते । इन्द्राय । सुन्वत् । ऋषये । च । शिक्षत् ॥ २२ ॥

---

१-१. नास्ति मूको. २. °दकप्रब° मूको. ३. °र्णीतमत्वर्थो मूको. ४. पातयन्तीन्द्रः वि[2]. ५. °रयन्तीति वि[1]. ६. °रका वि[2] अ[1]. ७-७. अन्नन्नम् वि[2]; अन्नम अ[1] ८. यदा वि[2] अ[1]. ९. नास्ति वि[1].

**उद्गीथ०** वृक्षेवृक्षे। 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या २, ५) इति वृक्षविकारो धनुरत्र वृक्ष इत्युच्यते। ऐश्वर्ययोगादिन्द्रस्य सङ्ग्रामकाले बहुबाहुस्थानेकधनुष्ट्वे सति वीप्सावचनमुपपद्यते। वृक्षेवृक्षे वृक्षविकारे धनुषिधनुषीन्द्रस्य स्वभूते नियता 'यमु बन्धने' निबद्धा आरोपिता सती मीमयत् 'मीमयतिः शब्दकर्मा' (या २,६)। शब्दं करोत्याकृष्यमाणा सती गौः 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति'। गव्या गोविकारस्नायुमयी ज्या गमयित्री वा शराणाम्। ततः च ज्यातः ततो वा शब्दकरणाद् अनन्तरम् वयः पक्षिसदृशाः गन्तारो वा इषवः प्र पतान् प्रपतन्ति शत्रून् प्रति। कीदृशाः। पुरुषादः शत्रुपुरुषाणामत्तारो मारयितार इत्यर्थः। अथ एतस्माच्च कारणात् इदम् विश्वम् सर्वम् भुवनम् भूतजातम् भयाते इन्द्रात् बिभेति इन्द्राय इन्द्रार्थम् सुन्वत् सोमाभिषवं कुर्वदपि ऋषये च शिक्षत् ऋषिर्द्रष्टा कर्मणाम् ऋत्विक् तस्मै च दक्षिणां ददपि सोमयागं कुर्वदपि किमुतान्यदित्यर्थः॥ २२॥

**वेङ्कट०** आत्मधनुष इयं स्तुतिः। इन्द्रधनुष इति अपरे। वृक्षमयेवृक्षमये[1] धनुषि सम्बद्धा गौः[2] गव्या ज्या शब्दं करोति। तस्मात् धनुषः पुरुषाणाम् अत्तारः पक्षिणः [3]पतन्ति इषवः। एतस्मात्[3] कारणात् सर्वम् इदम्[4] भूतजातं बिभेति। बिभ्यत्[5] च इन्द्राय सोमं सुनोति, मह्यम् च धनं प्रयच्छति इति[6]॥ २२॥

**दे॒वानां॒ माने॑ प्रथ॒मा अ॑तिष्ठन् कृ॒न्तत्रा॑दे॒षामुप॑रा॒ उदा॑यन्।**
**त्रय॑स्तपन्ति पृथि॒वीम॑नू॒पा द्वा बृबू॑कं वहतः॒ पुरी॑षम्॥ २३॥**[7]

दे॒वाना॑म्। माने॑। प्र॒थ॒माः। अ॒ति॒ष्ठ॒न्। कृ॒न्तत्रा॑त्। ए॒षा॒म्। उप॑राः। उत्। आ॒य॒न्।
त्रयः॑। त॒प॒न्ति॒। पृ॒थि॒वीम्। अ॒नू॒पाः। द्वा। बृबू॑कम्। व॒ह॒तः॒। पुरी॑षम्॥ २३॥

**उद्गीथ०** देवानाम् माने प्रथमाः अतिष्ठन् जगत्स्थितिहेतुभूतोदकाधारभूतत्वात् '[8]सर्वस्मात् पूर्वं तावदेवैते[8]' सृष्टा इत्यर्थः। क एते। मेघाः। कुत एतदवगम्यते। परस्मिन् पादे तेषामन्वादेशात्, भाष्ये च 'मेघा एव माध्यमिका देवगणाः' (तु. या. स्क. च) इत्युक्तत्वात्[9]। सृष्टानाञ्च सतामेषां मेघानां कृन्तत्रात् इन्द्रवज्रेण विकर्तनात् छेदनात् उपराः उत् आयन् उपरा मेघाः। तात्स्थ्यादत्र तच्छब्देन आप उच्यन्ते। मेघस्था आप उत्पन्नाः वृष्टिभावेन भूमौ पतिता इत्यर्थः। पतितासु च तास्वप्सु इन्द्रादेशात् पर्जन्यो वायुरादित्य इत्येते त्रयः वर्षशीतोष्णैः तपन्ति सन्तापयन्ति पाचयन्तीत्यर्थः, पृथिवीम् अत्र तात्स्थ्यात् ताच्छब्द्यम्, पृथिवीस्था ओषधीरित्यर्थः, अनूपाः[10] आनुपूर्व्येण वप्तारः प्रकरितारः[11] प्रक्षेप्तार इत्यर्थः। पाचितासु चौषधीषु द्वा द्वौ वाय्वादित्यौ बृबूकम् भूमिस्थमुदकम् वहतः आदित्यमण्डलं प्रति वाहयतः। वायुः शोषयन् आदित्यो रश्मिभिराददानः। कीदृशमुदकम्। पुरीषम् प्रीणयितृ पूरयितृ वा सर्वस्य, बह्वित्यर्थः।

---

१. धनुवृक्षमये वि[2] अ[1]. २. गोः मूको. ३-३. पतन्ति…तस्मात् वि[2] अ[1]. ४. इमं वि[2] अ[1]. ५. बिभ्रत् वि[2] अ[1]. ६. नास्ति वि[1,2]. ७. या. (२,२२) व्याख्यातचरेयम् ऋग् द्र. ८-८. सर्वं तावदेव ते मूको. ९. इत्युक्त्वा मूको. १०. नास्ति मूको. ११. प्रहरितारः मूको.

अथवा देवानामिति निर्द्धारणे षष्ठी। निर्माणमपि[1] वृष्टेर्गृह्यते[2]। प्रथमशब्दोऽपि प्रधानवचनः। तिष्ठतिरपि व्यापारार्थः। 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः' ( हितोपदेशः १,७३ ) इति यथा। देवानां मध्ये ये प्रथमा उत्कृष्टा मध्यमा देवगणाः इन्द्रस्य स्वभूता मरुदादयः' ते माने वृष्टिनिर्माणे वृष्टिजनने[3] अतिष्ठन् व्याप्रियन्त इत्यर्थः। व्याप्रियमाणेषु तेषु कृन्तत्रात् एषाम् 'कर्तृकर्मणोः कृति' ( पा २,३,६५ ) इत्येवमेषा कर्तरि षष्ठी। एभिर्माध्यमिकैः देवगणैर्यत् कृतं कृन्तत्रं विकर्त्तनं मेघानां छेदनं तस्मात् [4]हेतोः, यस्मादेतैर्विकृत्ताः[4] तस्मात् कारणादित्यर्थः। उपराः मेघाः। एतिरत्रान्तर्णीतण्यर्थः। उद्गमयन्ति जनयन्ति। किम्। सामर्थ्याद् वृष्टिलक्षणमुदकम्। जनिते च तस्मिन् उदके त्रयस्तपन्तीत्यादिरर्धर्चः आख्यातार्थः ॥ २३ ॥

वेङ्कट० रश्मीनाम् परिच्छेदके अन्तरिक्षे माध्यमिका देवगणाः तिष्ठन्ति। तेषां देवानां कृन्तनीयात्[5] अन्तरिक्षात्। कृतं हीदम् अन्तरिक्षम् तैः देवैः। उपराः मेघाः[6] उत् तिष्ठन्ति। त्रयः देवाः पृथिवीम् तपन्ति अग्निः वायुः सूर्यश्च क्रमेण अवस्थिताः। द्वौ उदकम् वहतः पूरकम् पर्जन्यः इन्द्रः च। निरुक्तम् ( २,२२ ) च द्रष्टव्यम् इति ॥ २३ ॥

**सा ते॑ जी॒वातु॑रु॒त तस्य॑ वि॒द्धि मा स्मै॑ता॒दृगप॑ गूहः सम॒र्ये ।**
**आ॒विः स्वः॑ कृणु॒ते गूह॑ते बु॒सं स पा॒दुर॑स्य नि॒र्णिजो॒ न मु॑च्यते ॥ २४ ॥**

सा । ते॒ । जी॒वातुः॑ । उ॒त । तस्य॑ । वि॒द्धि । मा । स्म॒ । ए॒ता॒दृक् । अप॑ । गू॒हः॒ । स॒ऽम॒र्ये ।
आ॒विः । स्व१॒॑रिति॒ स्वः॑ । कृ॒णु॒ते । गूह॑ते । बु॒सम् । सः । पा॒दुः । अ॒स्य॒ । निः॒ऽनिजः॑ । न । मु॒च्य॒ते॒ ॥

उद्गीथ० अनयर्चाऽऽदित्यात्मनेन्द्रः स्तूयते। सेति तच्छब्दश्रुतेरेकवाक्यतायै यच्छब्द उत्तरस्मिन्नर्धर्चेऽध्याहार्यः। यच्छब्दसम्बन्धाच्च स एव पूर्वं व्याख्येयः। यद्रश्मिरूपेण गत्वा आविः कृणुते प्रकटीकरोति स्वः सर्वं त्रैलोक्यम् आदित्यः गूहते संवृणोति च, आदत्ते चेत्यर्थः, बुसम् उदकं भौमरसाख्यम्। सः पादुः पदनम्[8] एतस्मै प्रयोजनद्वयाय रश्मिद्वारेण गमनमित्यर्थः, अस्य निर्णिजः सर्वस्य शोधयितुरादित्यस्य '[9]स्वभूतेनादित्येन न[9] कदाचिदपि मुच्यते निर्वेदात् श्रमेण वा परित्यज्यते। सा ते तव ममान्तरात्मनः जीवातुः जीविका, जीवनहेतुरित्यर्थः, यत एवमतः ते तस्य विद्धि तस्यास्याऽऽदित्यस्य उपकर्तुर्जानीहि स्तुत्या यागेन च प्रत्युपकारम्। मा च स्म[10] अस्य आदित्यस्य स्वभूतम् एतादृक् तादृशम् उपकृतम् अप गूहः अपसंवृतमपनीतं मा कार्षीरित्यर्थः, समर्ये मृत्युना सह सङ्ग्रामे वर्तमाने। प्राणिनां हि सर्वदैव मृत्युना सह सङ्ग्रामः जीवस्येष्टत्वान्मृत्योश्च[11] तदपहाराय सर्वदा प्रवर्तमानत्वात् ॥ २४ ॥

---

१. निर्धारण° वि[2] अ. २. पृष्टं गृ° वि[2] अ; सुत्र° वि[1,2]. ३. जनने मूको. ४-४. हेत्कार्यस देकैर्विकर्ता वि[1]; °सादेकैर्विकर्ता वि[2] अ. ५. कृन्ततीयात् वि[2] अ[1]; कृत्तनीयात् वि[1]. ६. मेघात् मूको. ७-७. या. ( ५,१९ ) निर्वचनं व्याख्यानञ्च द्र. ८. नदनम् वि[1]; वदनम् वि[2] अ[1]. ९-९. स्वभूतान्नान्नेनादित्येन वि[1,3]; स्वभूतेनान्नेनादित्येन वि[2] अ. १०. असै मूको. ११. जीवतस्येष्ट' वि[2]; जीवस्येष्ट° वि[3]; जीवतस्तस्येष्ट वि[2] अ.

वेङ्कट० तदुदकम् तव स्वभूतं जीवकम् मनुष्याणाम् अपि[1]। तद् अस्मभ्यं प्रयच्छ। मा खलु एतादृक्[2] जीवकम् उदकम्[3] अप गूहः समनुष्ये अस्मिन् लोके। अथ परोक्षम् आह—सोऽयं सर्वम् आविष्-करोति, गूहते उदकम्। [4]सः पाद.[4] अस्य निर्णेक्तुः सम्प्रति न मुच्यते इति। अत्र[5] निरुक्तं (५.१९) गूढं सूक्तं निरूपणीयम् इति ॥ २४ ॥

[6]इति सप्तमाष्टके सप्तमाध्याये एकोनविंशो वर्गः[6] ॥

## [ २८ ]

[7]१ इन्द्रस्नुषा वसुक्रपत्नी ऋषिका; २,६,८,१०,१२ इन्द्र ऋषिः; ३,४,५,७,९,११ ऐन्द्रो वसुक्र ऋषिः। २,६,८,१०,१२ ऐन्द्रो वसुक्रो देवता; १,३,४,५,७,९,११ इन्द्रो देवता। त्रिष्टुप् छन्दः[7]

विश्वो ह्य१॒॑न्यो अ॒रिरा॑ज॒गाम॒ ममेदह॒ श्वशु॑रो॒ ना ज॑गाम।
ज॒क्षीयाद्धाना उ॒त सोमं॑ पपीयात् स्वाशितः॒ पुन॒रस्तं॑ जगायात् ॥ १ ॥

विश्वः॑। हि। अ॒न्यः। अ॒रिः। आऽज॒गाम॑। मम॑। इत्। अह॑। श्वशु॑रः। न। आ। ज॒गा॒म॒।
ज॒क्षीयात्। धा॒नाः। उ॒त। सोम॑म्। प॒पी॒यात्। सुऽआ॑शितः। पुन॑रिति। अस्त॑म्। ज॒गा॒यात् ॥ १ ॥

उद्गीथ० उत्तरं सूक्तम् 'विश्वो ह्यन्यः' इति द्वादशर्चमैन्द्रं वसुक्र एव ददर्श। स्वयज्ञं[8] प्रति शीघ्रमनागच्छति वायौ[8] वसुक्र इन्द्राय [9]सोपालम्भं कथयति[9]। हे इन्द्र! तुभ्यं कथयाम्यहम्— विश्वः हि अस्य अन्यः अरिः आजगाम सर्व एवान्य ईश्वरः कर्माङ्ग-देवलक्षणः आजगाम यज्ञमागतः। कस्तर्हि नागत.। उच्यते— मम इत् अह श्वशुरः न आ जगाम ममैव वसुक्रस्य श्वशुरो वायुः नागतः। यद्यागच्छेत्, जक्षीयात् भक्षयेत्[10] धानाः, उत अपि च सोमम् पपीयात् पिबेत् स्वाशितः सुभोजितः पिबेत्। स्वाशितः सुतृप्तः पुनः भूयः अस्तम् स्वगृहम् जगायात् गच्छेत्। त्वञ्च सर्वेश्वरः तस्मात्तव कथितं मयेतीन्द्रस्य स्तुतिरेव जायते ॥ १ ॥

वेङ्कट० [11]विश्वः हि अन्यः[11] निर्गन्ता आजगाम। मम एव श्वशुरः कश्चित् न आ जगाम। स क इति वृद्धेभ्य एव[12] अवगन्तव्यम्। यदि तु स्नुषाया वचनम्, इन्द्रः श्वशुरो भवति[13]। सर्वेषूपस्थितेषु इन्द्रो भक्षयतु धानाः, अपि च सोमम् पिबतु। स्वाशितः च सन्[14] पुनः स्वगृहं गच्छतु ॥ १ ॥

स रोरु॑वद् वृष॒भस्ति॒ग्मशृ॑ङ्गो॒ वर्ष्म॑न् तस्थौ॒ वरि॑म॒न्ना पृ॑थि॒व्याः।
विश्वे॑ष्वेनं वृ॒जने॑षु पामि॒ यो मे॑ कु॒क्षी सु॒तसो॑मः पृ॒णाति॑ ॥ २ ॥

---

१. अपि च वि[2] अ[1]. २. तादृक् वि[1]. ३. नास्ति वि[1]. ४-४. संवादः मूको. ५. आदि स्तम् वि[2] अ[3]. ६-६. नास्ति मूको. ७. स यज्ञं मूको. ८. वायो मूको. ९-९. सोपलम्भं करोथयति मूको. १०. जक्ष° वि[2] अ. ११-११. नास्ति अ[1]. १२. नास्ति वि[1,2]. १३. °न्ति इन्द्रं धं वि[3]; °ति इन्द्रं धनन् अ[1]. १५. तत् वि[2] अ[1]; सत् वि[1].

सः । रोरुवत् । वृषभः । तिग्मऽशृङ्गः । वर्ष्मन् । तस्थौ । वरिमन् । आ । पृथिव्याः ।
विश्वेषु । एनम् । वृजनेषु । पामि । यः । मे । कुक्षी इति । सुतऽसोमः । पृणाति ॥ २ ॥

**उद्गीथ०** सः यजमानः रोरुवत् अत्यर्थं रुवन् ऋग्यजुस्सामलक्षणं शब्दं कुर्वन्नित्यर्थः । किमिव । वृषभः तिग्मशृङ्गः । लुप्तोपममेतत् । यथा गोवृषः[1] तीक्ष्णशृङ्गः दर्पितो रुवन् नर्दन् तिष्ठति, एवम् । अथवा उपमार्थीयशब्दाभावादेतत्पदद्वयं यजमानविशेषणम् । वृषभो वर्षिता यज्ञद्वारेणेति । तिग्मशृङ्गः 'तिग्मम्' तेजतेरुत्साहकर्मणः' (या १०, ६)। उत्साहशृङ्गः संस्कृतर्त्विग्गणैर्वा[2] वर्ष्मन् वर्ष्मिणि[4] मृदुतरे महति । कस्मिन् । सामर्थ्याद् यज्ञे सोमयागलक्षणे । वरिमन् [5]वरिमणि विस्तीर्णे[5] उरुतरे वेदिस्थाने पृथिव्याः अवयवभूते आ तस्थौ मर्यादया तिष्ठति[6] । मत्प्रसादात् संवत्सरे सोमयाजी ईदृग्भवतीत्यर्थः । किञ्च विश्वेषु सर्वेषु सङ्ग्रामेष्वापत्सु पामि रक्षामि एनम् यजमानम् । कीदृशम् । यः यजमानः मे ममेन्द्रस्य स्वभूतौ कुक्षी सुतसोमः कृतसोमाभिषवः सन् पृणाति सोमेन पूरयति ॥ २ ॥

**वेङ्कट०** सः इन्द्रः शब्दायमानः वर्षिता तीक्ष्णरश्मिः[7] वर्ष्मन्[8] तिष्ठति विस्तीर्णे स्थाने अन्तरिक्षस्य । वर्ष्मन्-शब्द[9] उन्नतवचनः स्थिरवचनो वा । सर्वेषु एनम् उपद्रवेषु रक्षामि, यः मे कुक्षी सुतसोमः[10] पूरयति इति मन्यमानः । यदा स्थितिमद् इन्द्रवचनम्, तदानीम् तस्थौ[11] इत्युत्तमपुरुषः ॥ २ ॥

अद्रिणा ते मन्दिन इन्द्र तूयान्त्सुन्वन्ति सोमान् पिबसि त्वमेषाम् ।
पचन्ति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन् हूयमानः ॥ ३ ॥

अद्रिणा । ते । मन्दिनः । इन्द्र । तूयान् । सुन्वन्ति । सोमान् । पिबसि । त्वम् । एषाम् ।
पचन्ति । ते । वृषभान् । अत्सि । तेषाम् । पृक्षेण । यत् । मघऽवन् । हूयमानः ॥ ३ ॥

**उद्गीथ०** अद्रिणा अभिषवग्राव्णा ते तवेन्द्रस्य मन्दिनः स्तुत्यस्यार्थाय हे इन्द्र! तूयान् क्षिप्रान् अविलम्बितान् कर्मवैगुण्यजनितेन प्रायश्चित्तेनाऽनन्तरितान् दशापवित्राद्धोमपात्राद्वा [12]क्षिप्रप्रक्षारिण इत्यर्थः[12], सोमान् सुन्वन्ति परया भक्त्याऽभिषुण्वन्ति ये यजमानाः, तेषाम् एषाम् अस्मदादीनां स्वभूतान् सोमान् पिबसि त्वम्, नेतरेषाम् । ये च यजमानाः ते[13] त्वदर्थं परया भक्त्या पचन्ति वृषभान् तेषां स्वभूतान् वृषभान् हविर्भूतान् अत्सि भक्षयसि त्वम्, नेतरेषाम् । कदा पिबसि, अत्सि । उच्यते—यत् यदा हे मघवन्! पृक्षेण अन्नेन होतव्यत्वेन[14] निमित्तभूतेन हूयमानः भूतले आहूतो भवसि त्वम्, तदेत्यर्थः ॥ ३ ॥

---

१. गौर्वृषः वि[1] अ. २. तिग्मतेजस्कः त्रि[2] अ. ३. °तर्त्विग्गणैर्वा वि[2] अ. ४. °णी मूको. ५-५. वरिवणिपतरं (वि[2]) वरिवगि पतन्त ··· (त्रि[2] अ[1]) मूको. ६. निष्ठामि वि[2]. ७. स्तीर्ण° वि[1] अ[1]. ८. वर्षे मूको. ९. वर्ष मूको. १०. °म वि[2] अ[1]; °मम वि[1]. ११. त्वम् वि[2] अ[1]; श्मिन् त्रि[1]. १२-१२. °रिण्योर्वे° वि[1]; °रिण्यो वे° वि[2] अ. १३. तेऽर्थिनः वि[2] अ. १४. कर्तव्ये मूको.

वेङ्कट० ग्राव्णा ते मादयितृन् इन्द्र![1] क्षिप्रान् सुन्वन्ति[2] सोमान्। त्वम् च पिबसि तान्। पचन्ति च ते वृषभान्। अत्सि तांश्च त्वम्, अन्नार्थं यदा मघवन्! यजमानैः हूयसे ॥ ३ ॥

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥ ४ ॥

इदम्। सु। मे। जरितः। आ। चिकिद्धि। प्रतिऽईपम्। शापम्[3]। नद्यः। वहन्ति।
[4]लोपाशः। सिंहम्। प्रत्यञ्चम्। अत्सारिति[4]। क्रोष्टा। वराहम्। निः। अतक्त। कक्षात् ॥४॥

उद्गीथ० इदम् सामर्थ्यम् सु शोभनम् अभिपूजितम् अतिशयितवदित्यर्थः[५], मे मम स्वभूतं हे जरितः! त्वं स्तोतः! आ चिकिद्धि मर्यादया जानीहि। कतमदिदं सामर्थ्यम्। उच्यते— यदि इच्छाम्यहम्, प्रतीपम् प्रतिकूलमित्यर्थः, शापम् उदकम् नद्यः गङ्गाद्याः वहन्ति। किञ्च लोपाशः रङ्कुः सिंहम् प्रत्यञ्चम् आत्मानं प्रतिगतम् अत्साः गच्छति वधाय। क्रोष्टा शृगालश्च वराहम् अतिशूरं बलवन्तं च सन्तम् निः अतक्त निर्गमयति बलान्निष्कालयति कक्षात् गहनदेशात्[६] ॥ ४ ॥

वेङ्कट० 'जरिता गरिता दक्षिणायाः' इति यास्कः (तु. या १,७)। इदम् सुष्ठु मे जरितः! आ चिकिद्धि इन्द्र!— प्रतीपम् उदकम् नद्यः वहन्ति तव पुत्रे मयि इच्छति, लोपाशः मृगः लुप्यमानतृणम् अश्नाति इति[७]। सोऽपि अभिमुखम् आगच्छन्तम् सिंहम् अभितो गच्छति, क्रोष्टा च मया प्रेरितः प्रबलम् वराहम् कक्षे शयानम् निः गमयति ॥ ४ ॥

कथा त एतदहमा चिकेतं गृत्सस्य पाकस्तवसो मनीषाम् ।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन् क्षेम्या धूः ॥ ५ ॥

कथा। ते। एतत्। अहम्। आ। चिकेतम्। गृत्सस्य। पाकः। तवसः। मनीषाम्।
त्वम्। नः। विद्वान्। ऋऽतुथा। वि। वोचः। यम्। अर्धम्। ते। मघऽवन्। क्षेम्या। धूः ॥५॥

उद्गीथ० कथा कथं केन प्रकारेण ते तवेन्द्रस्य स्वभूतम् एतत् सामर्थ्यम् अहम् आ चिकेतम् मर्यादया जानामि गृत्सस्य मेधाविनः सर्वज्ञस्य पाकः अविपक्वप्रज्ञः[८] तवसः तवसस्य वृद्धस्य महत इत्यर्थः, मनीषाम् च स्तुतिञ्च, कर्तुमिति शेषः। त्वम् एव नः अस्मभ्यम् विद्वान् सर्वज्ञः ऋतुथा ऋतावृतौ यथाकालम् क्रमेणेत्यर्थः, वि वोचः विविधं [९]स्पष्टं विशेषेण[९] वा पुनरपि ब्रूहि, यतो हे मघवन्! यम्[१०] ते तव [११]अर्धम् स्तुत्यवयवं[११] कुर्मः। अस्माकम् क्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्या स्तुतिः धूः, तस्मात्तव स्तुत्यवयवमेव वयं क्लेशेन कर्तुं शक्नुमः मन्दबुद्धित्वात्। तस्मात् त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारञ्च पुनरपि कथयेत्यर्थः ॥ ५ ॥

---

१. नास्ति वि[2] अ[1]. २. °न्ती मूको. ३. वैप १,३०९४ h द्र. ४-४. या. (५,३) निगमः द्र. ५. अतिशयतव° वि[2]अ[2]. ६. गहनं देशात् मूको. ७. नास्ति वि[2]. ८. अविपक्व° मूको. ९-९. स्पष्टवि° वि[2] अ. १०. वयं वि[2] अ. ११-११. स्तुत्यर्धमवयवं मूको.

वेङ्कट० एतत् इति क्रियाविशेषणम्। कथम् तव[1] इदम् आ जानामि मेधाविनः वृद्धस्य[2] पक्तव्यप्रज्ञः अहम् बुद्धिम्। त्वम् एव अस्माकम् विद्वान् काले वि ब्रूहि, जगतः यम् अर्थम् ते प्रतिभवति मयि पुत्रे निहिता धूः मघवन्! इति॥ ५॥

**ए॒वा हि मां त॒वसं॑ व॒र्धय॑न्ति दि॒वश्चि॑न्मे बृह॒त उत्त॑रा धूः ।**
**पु॒रू स॒हस्रा॒ नि शि॑शामि सा॒कम॑श॒त्रुं हि मा॒ जनि॑ता ज॒जान॑ ॥ ६ ॥**

ए॒व । हि । माम् । त॒वस॑म् । व॒र्धय॑न्ति । दि॒वः । चि॒त् । मे॒ । बृ॒ह॒तः । उत्ऽत॑रा । धूः ।
पु॒रु । स॒हस्रा॑ । नि । शि॒शा॒मि॒ । सा॒कम् । अ॒श॒त्रुम् । हि । मा॒ । जनि॑ता । ज॒जान॑ ॥ ६ ॥

उद्गीथ० एव एवम् [3]अनेनोक्तेन प्रकारेण[3] हि यस्मात् माम् इन्द्रम् तवसम् महान्तं स्तुतिभिः स्तुवन्तः स्तोतारः वर्धयन्ति, तस्मात् कारणात् दिवः चित् दिवोऽपि उत्तरा अधिका परार्ध्या मे ममेन्द्रस्य बृहतः महतः [4]धूः उत्साहधूः अथवा महती स्तुतिः उत्साहो[4] वा महान् रथो वा महानित्यर्थः। किञ्च पुरू पुरूणि च बहूनि सहस्रा शत्रूणां सहस्राणि नि शिशामि तनूकरोमि हिनस्मीत्यर्थः, साकम् सह युगपदित्यर्थः। कस्मात्। हि यस्मात् अशत्रुम् अविद्यमानशत्रुं मामिन्द्रम् जनिता सर्वस्य जनयिता प्रजापतिः जजान जनितवान्॥ ६॥

वेङ्कट० वृद्धम् वर्धयन्ति वन्दिनो द्युलोकादपि महतो मम धूः उद्गततरा इति[5]। बहूनि च शत्रूणां सहस्राणि सह हिनस्मि[6]। अशत्रुम् हि माम् जनिता जजान इति भावः[7]॥ ६॥

[8]इति सप्तमाष्टके सप्तमाध्याये विंशो वर्गः[8]॥

**ए॒वा हि मां त॒वसं॑ ज॒ज्ञुरु॒ग्रं कर्म॑न्कर्म॒न् वृष॑णमिन्द्र दे॒वाः ।**
**वधीं॑ वृ॒त्रं वज्रे॑ण मन्द॒सा॒नोऽप॑ व्र॒जं म॑हि॒ना दा॒शुषे॑ वम् ॥ ७ ॥**

ए॒व । हि । माम् । त॒वस॑म् । ज॒ज्ञुः । उ॒ग्रम् । कर्म॑न्ऽकर्मन् । वृष॑णम् । इन्द्र॒ । दे॒वाः ।
वधी॑म् । वृ॒त्रम् । वज्रे॑ण । म॒न्द॒सा॒नः । अप॑ । व्र॒जम् । म॒हि॒ना । दा॒शुषे॑ । व॒म् ॥ ७ ॥

उद्गीथ० [9]यस्मादेवमनेनोक्तेन प्रकारेण[9] माम् त्वत्पुत्रं वसुक्रं त्वद्रूपेणावस्थितं सन्तम् तवसम् महान्तम् जज्ञुः जानन्ति जनयन्ति वा उग्रम् क्रूरम् असह्यं वा कर्मन्-कर्मन् कर्मणि-कर्मणि अग्निहोत्रादौ वृत्रवधादौ वा वृषणम् वर्षितारं हे इन्द्र! देवाः हविषां दातारः ऋत्विग्यजमानाः मरुदादयो वा देवगणाः। अतः [10]मन्दसानः अहम् वज्रेण[10] वधीम्[11] हन्मि वृत्रम् असुरं मेघं[11] वा, दाशुषे हवींषि दत्तवते यजमानाय। [10]किञ्च महिना महत्त्वेन व्रजम् मेघसमूहम् अप वम् अपावम् अपवृणोमि[10]॥ ७॥

वेङ्कट० एव हि माम् यं वृद्धम्[12] जनितवन्तः उद्गूर्णम् सर्वस्मिन् कर्मणि वर्षितारम् इन्द्र! देवाः,

---

१. तदेव मूको. २. नास्ति वि[1]. ३-३. °नोक्तप्रका° वि[2] अ. ४-४. धूरनुत्साहधूरथपूर्वा महती स्तुतीरुत्साहो मूको. ५. नास्ति वि[1]. ६. °नसि वि[2] अ[1]; °स्ति वि[3]. ७. नास्ति वि[1,2]. ८-८. नास्ति मूको. ९. °नोक्तप्रका° वि[2] अ. १०-१०. नास्ति मूको; सा. अनु न्यासो द्र. (तु. वें.). ११. अवधीं मूको. १२. नास्ति मूको. १३. जम् वि[2] अ[1]; नास्ति वि[1].

सोऽहं हन्मि मेघम् वज्रेण मोदमानः अप आवृणोमि[1] च महत्त्वेन गवाम् व्रजम् तव प्रयच्छते यजमानाय ॥ ७ ॥

देवास॑ आय॒न् प॒र॒शूँर॑बिभ्र॒न् वना॑ वृ॒श्चन्तो॑ अ॒भि वि॒ड्भिरा॑यन् ।
नि सु॒द्र्वं१॒॑ दध॑तो व॒क्षणा॑सु॒ यत्रा॑ कृ॒पीट॒मनु॒ तद्द॑हन्ति ॥ ८ ॥

दे॒वासः॑ । आ॒य॒न् । प॒र॒शून् । अ॒बि॒भ्र॒न् । वना॑ । वृ॒श्चन्तः॑ । अ॒भि । वि॒ट्ऽभिः॑ । आ॒य॒न् ।
नि । सु॒ऽद्र्व॑म् । दध॑तः । व॒क्षणा॑सु । यत्र॑ । कृ॒पीट॑म् । अनु॑ । तत् । द॒ह॒न्ति॒ ॥ ८ ॥

**उद्गीथ०** देवेन्द्रेण चोदिताः सन्तः देवासः मरुतो देवाः आयन् गच्छन्ति मेघवधाय, परशून् वज्रान् अबिभ्रन् धारयन्ति च । मदादेशात् गत्वा धृत्वा च वना लुप्तोपममेतत् पदम् । वनानीव[2] यथा वृक्षान् परशुभिः वृश्चन्तः केचित् गच्छन्ति, एवम् [3]मेघं वज्रैः[3] वृश्चन्तः विड्भिः[4] मरुदादिमाध्यमिका[5] देवगणा मनुष्यैः सह अभि आयन् मेघान् प्रति गच्छन्ति । किञ्च [6]सुद्र्वम् सुष्ठु द्रवितृ[6] गन्तृ वृष्ट्युदकम् वक्षणासु नदीषु नि[7] दधत निधारयन्तः नियमेन स्थापयन्तः यत्र यस्मिन् मेघजाते कृपीटम् उदकम् ( तु. निघ १,१२ ) अनु गच्छन्ति उपलभन्ते, [8]तत् मेघजातम्[8] दहन्ति भस्मीकुर्वन्ति, वज्रघातैश्चूर्णयन्तीत्यर्थः ॥ ८ ॥

**वेङ्कट०** देवाः गच्छन्ति, परशून् च धारयन्ति । उदकानि वृश्चन्तः अभि गच्छन्ति[9] मरुद्भिः नियमेन स्थापयन्तः शोभनद्रवणम् उदकम् नदीषु । ते इमे यस्मिन् वृत्रे निगूढम् उदकं तिष्ठति, तत् रश्मिभिः[10] दहन्ति उदकस्य निर्गमनार्थम् इति ॥ ८ ॥

श॒शः क्षु॒रं प्र॒त्यञ्चं॑ जगा॒राद्रिं॑ लो॒गेन॒ व्य॑भेदमा॒रात् ।
बृ॒हन्तं॑ चिदृह॒ते र॑न्धयानि॒ वय॑द्व॒त्सो वृ॑ष॒भं शूशु॑वानः ॥ ९ ॥

श॒शः । क्षु॒रम् । प्र॒त्यञ्च॑म् । ज॒गा॒र॒ । अद्रि॑म् । लो॒गेन॑ । वि । अ॒भे॒द॒म् । आ॒रात् ।
बृ॒हन्त॑म् । चि॒त् । ऋ॒ह॒ते । र॒न्ध॒या॒नि॒ । वय॑त् । व॒त्सः । वृ॒ष॒भम् । शूशु॑वानः ॥ ९ ॥

**उद्गीथ०** शशः क्षुरम् लुप्तमत्वर्थतद्धितम्[11] एतत्पदम् । क्षुरवन्तं दृढदीर्घतीक्ष्णनखं सिंहव्याघ्रर्क्षादिकम्[12], बलवत्क्रूरशूरमृगमित्यर्थः[13] । प्रत्यञ्चम् वधायाऽऽत्मानं प्रतिगतम् जगार गिरति गृह्णाति वा मारणाय । किञ्च अद्रिम् पर्वतं हिमवदादिकम् लोगेन लोष्टेन मृत्पिण्डेन वि अभेदम् विविधं भिनद्मि विदारयामि आरात् [14]दूरेऽपि स्थितमित्यर्थः[14] । किञ्च बृहन्तम् चित् महान्तमपि हस्त्यादिकं ऋहते [15]ह्रस्वकाय अल्पकाय[15] ( तु. निघ ३,२ ) रन्धयानि संसाधयानि वशं गमयानि, यदीच्छानि । मत्प्रसादाच्च वयत् गच्छति वत्सः युद्धाय वृषभम् प्रति शूशुवानः ॥ ९ ॥

---

१. °णोसि अ[1]; °ति वि[1]. २. वनानि वि[1]. ३-३. मेघप्रे ( °प्र वि[1]. ) ज्रैः मूको. ४. वृश्चिः वि[2] अ; वश्छिः वि[1,3]. ५. रुद्रादि° मूको. ६-६. नास्ति वि[2] अ. ७ नास्ति मूको. ८-८. तन्मेघास्तं वि[1,3]; तन्मेघातं वि[2] अ. ९. °च्छति मूको. १०. रश्मिः वि[2] अ[2]. ११. °त्वर्थं तद्धि° वि[2] अ. १२. °व्रर्नादि° वि[1,3]; °घ्रादि° वि[2] अ. १३. °क्रूरं मृग° वि[2] अ. १४-१४. दूरे प्रस्थि° मूको. १५-१५. ह्रस्वकालपापाकाय वि[2] अ; ह्रस्वऽकालपाकाय वि[1,3].

**वेङ्कट०** मद्राष्ट्रे वर्तमानः[1] शशः व्याधेन विसृष्टम् क्षुरम् अभिमुखम् आगच्छन्तम् अत्ति । तथा इच्छन्नहं लोष्टेन शिलोच्चयम् वि भिनद्मि[2] दूरे स्थितम् । बृहन्तम् अपि पुरुषादिकं[3] ह्रस्वाय[4] वशं नयानि । गच्छति वत्सः वृषभम् वर्धमानवेगः[5] ॥ ९ ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः ।
निरुद्धश्चिन्महिषस्तर्ष्यावान् गोधा तस्मा अयथं कर्षदेतत् ॥ १० ॥

सुऽपर्णः । इत्था । नखम् । आ । सिसाय । अवऽरुद्धः । परिऽपदम् । न । सिंहः ।
निऽरुद्धः । चित् । महिषः । तर्ष्याऽवान् । गोधा । तस्मै । अयथम् । कर्षत् । एतत् ॥ १० ॥

**उद्गीथ०** सुपर्णः पक्षिराट् इत्था अमुत्र दिवि नखम् आत्मीयम् आ सिसाय आऽबध्नात् आबद्धवान्, इन्द्रार्थं सोमाहरणकाले दिवि पदम् इन्द्रप्रसादाद् न्यस्तवानित्यर्थः । किमिव । अवरुद्धः पञ्जरेण[6] वृतः परिवेष्टितः सिंहः परिपदम् न परिपदमिव यथा [7]पञ्जरस्य परि[7] सर्वतः पादमाबध्नाति न्यस्यति, एवम् । किञ्च निरुद्धः चित् चिदित्युपमार्थे (तु. या १,४) । यथा [8]पादे बद्ध्वा[8] केनापि निरुद्धो महिषः उदकाभावे तर्ष्यावान् भवति, एवमिन्द्रः सोमाभावे तृषावानभूत् । प्राक् सोमहरणात् तृषिताय चेन्द्राय तस्मै तादर्थ्यचतुर्थ्येषा । तृषितस्य तस्येन्द्रस्यार्थाय गोधा गमयति वर्णानिति गौर्वागिन्द्रियम्, तत्र निहिता गोधा वाग् गायत्र्याख्या अयथम् अयत्नेन अनायासेन लीलया कर्षत् आकृष्टवती दिवः सकाशाद् आहृतवतीत्यर्थः[9], एतत् सोमजातं मधु वा सोमलक्षणम् ॥ १० ॥

**वेङ्कट०** सुपर्णः अमुत्र अन्तरिक्षे वर्तमानः नखम् आत्मीयं भक्षस्य जन्तोः हिंसायां प्रवृत्तम्[10] आ बध्नाति, संहरति । अपि [11]च अवरुद्धः[11] सिंहः[12] आत्मनः समीपे परिपद्यमानं[13] द्विपादि न हिनस्ति । निरुद्धः च भवति महिषः तर्ष्यावान् तृष्णावान् हिंसारुचिः । कथम् इत्याह — गोधा महिषस्य बाधिका नखैः तस्मै महिषाय एतत् तर्षणम् अयथम् करोति यथा न[14] तथाऽनुतिष्ठेत्, तथा अग्रतः प्रादुर्भवति इति ॥ १० ॥

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयन्त्यन्नैः ।
सिम उक्ष्णोऽवसृष्टाँ अदन्ति स्वयं बलानि तन्वः शृणानाः ॥ ११ ॥

तेभ्यः । गोधाः । अयथम् । कर्षत् । एतत् । ये । ब्रह्मणः । प्रतिऽपीयन्ति । अन्नैः ।
सिमः । उक्षणः । अवऽसृष्टान् । अदन्ति । स्वयम् । बलानि । तन्वः । शृणानाः ॥ ११ ॥

---

१. वर्धमा° वि[2] अ[1]. २. भिद्मि वि[1]; भिन्नंभि वि[2] अ[1]. ३. °षात्मकं वि[2] अ[1]; °र्षादिकं वि[1]. ४. वाग्वाय वि[2] अ[1]; ह्रस्वा वि[1]. ५. °गम् वि[2] अ[1]. ६. अवञ्ज° वि[1,3]; अपञ्ज° वि[2] अ. ७-७. परञ्ज° वि[1,2]; °ञ्जरस्योपरि वि[3] अ. ८-८. पादेन श्रद्धा वि[1,3]; पादेन ब° वि[2] अ. ९. आकृष्टव° वि[1]. १०. °द्धम् वि[2] अ[1]. ११-११. नाचाव° वि[2] अ[1]. १२. सिंहः वि[1]; सहि वि[2] अ. १३. °रिवर्धमानं वि[2] अ[1]; °रिपद्यमानः वि[1]. १४. नु वि[2] अ[1].

**उद्गीथ०** तेभ्यः[1] तेषां च देवानामृषीणां चार्थाय गोधाः वाक् गायत्र्याख्या इन्द्रस्यार्थे देशात् अयथम् कर्षत् एतत्[2] इति व्याख्यातार्थम्[3]। ये देवा ऋषयश्च ब्रह्मणः परिवृढस्य परिवृद्धस्य स्वभूतैः अन्नैः सोमाख्यैः, तृप्ताः सन्त इति शेषः, प्रतिपीयन्ति प्रतिहिंसन्तीन्द्रेणाऽभ्यनुज्ञाताः। किञ्च सिमः सर्वान् उक्षणः वृषकान्[4] अवसृष्टान् इन्द्रेण निसृष्टान् दत्तान् हविर्भूतान् यज्ञेषु अदन्ति भक्षयन्ति च स्वयम् आत्मनैव शत्रूणाम् बलानि सेनालक्षणानि वा तन्वः शरीराणि च शृणानाः हिंसन्तः सोमे आहुते सति ॥ ११ ॥

**वेङ्कट०** तेभ्यः च गोधाः तत्कर्म अयथम् करोति। ये अमून्[5] ब्राह्मणान् प्रतिहिंसन्ति दन्तैः अदनैः वा। गूढत्वात् अर्थस्य गोधाशब्दात् सकारः पदकारेण अस्याम् ऋचि न लुप्तः। सीमाया अन्तः अवसृष्टान्[6] शत्रूणाम् उक्षणः तेषां सेनाबलानि स्वयम् एव हिंसन्तः तत्रत्याः तन्वः क्षुद्रा मृगाः अदन्ति ॥ ११ ॥

एते शमीभिः सुशमी अभूवन् ये हिन्विरे तन्वः सोम उक्थैः ।
नृवद्वदन्नुप नो माहि वाजान् दिवि श्रवो दधिषे नाम वीरः ॥ १२ ॥

एते । शमीभिः । सुऽशमी । अभूवन् । ये । हिन्विरे । तन्वः । सोमे । उक्थैः ।
नृऽवत् । वदन् । उप । नः । माहि । वाजान् । दिवि । श्रवः । दधिषे । नाम । वीरः ॥ १२ ॥

**उद्गीथ०** एते देवर्ष्यादयः शमीभिः सोमयागकर्मभिः सुशमी सुकर्माणः अभूवन् भूताः, ये हिन्विरे सङ्गमयन्ति समर्चयन्ति वा तन्वः स्वशरीराणि सोमे सोमयागे उक्थैः शस्त्रैः। यस्त्वमीदृशः स त्वम् नृवत् मनुष्यवत् वदन् इदं मया युष्मभ्यं दत्तमिति व्यक्तां वाचमुच्चारयन् नः अस्मभ्यम् उप माहि उपगम्य देहीत्यर्थः, वाजान् अन्नानि बलानि। कस्मादेवमुच्यसे। यस्मात् दिवि द्युलोके श्रवः दानपतिरिन्द्र इति कीर्तिम् दधिषे धारयसि, नाम च धारयसि वीरः दानशूरः इति ॥ १२ ॥

**वेङ्कट०** एते कर्मभिः[7] सुकर्माणः अभूवन्[8], ये प्रेरयन्ति त्वदीयानि शरीराणि सोमे स्तुतिभिः। मनुष्यवत् प्रियम् वदन् उप कुरु अस्मभ्यम् अन्नानि। त्वं हि दिवि धारयसि श्रवणीयम् उदकम् वीरः ॥ १२ ॥

[9]इति सप्तमाष्टके सप्तमाध्याये एकविंशो वर्गः[9] ॥

[ २९ ]

[9]ऐन्द्रो वसुक्र ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[9]।

वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥ १ ॥

---

१. तेभ्यो गोभ्यः वि[2] अ. २. नास्ति मूको. ३. व्याख्यार्थम् मूको. ४. पृषकात् वि[2] अ. ५. अमुना वि[2] अ[2]; मृग् वि[1]. ६. °ष्टात् मूको. ७. सक° वि[1,2]. ८. अभ° अ[1]. ९-९. नास्ति मूको.

वने । न । वा । यः । नि । अधायि । चाकन् । शुचिः । वाम् । स्तोमः । भुरणौ । अजीगरिति ।
यस्य । इत् । इन्द्रः । पुरुऽदिनेषु । होता । नृणाम् । नर्यः । नृऽतमः । क्षपाऽवान् ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'वने न वा यः' इति अष्टर्चमैन्द्रम्। वसुक्र एव तद्[१] ददर्श। वने न वा यः चाकन्नित्याख्यातपदमेतत्[२], 'अग्निर्वरूथं मम तस्य चाकन्' (ऋ १,१४८,२) इति यथा। यच्छब्दसम्बन्धाच्च तच्छब्द उत्तरे पादे अध्याहार्यः[३]। यच्छब्देनात्र सामर्थ्यात् सोमो निर्दिश्यते। यः सोमः चाकन् इन्द्रेणात्मनः पानं कामयते। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। स सोमो वने न वा नशब्दः सम्प्रत्यर्थे। वने वनविकारे वृक्षावयवे पात्रे द्रोणकलशादौ च ध्रुवस्थाल्यादौ वा मृन्मये नि अधायि निहितः इन्द्रार्थम् अस्माभिः स्थापितः। किञ्च शुचिः शुद्धः सर्वदोषरहितः वाम् युवयोः पत्नीयजमानयोः स्वभूतः स्तोमः स्तुतिविशेषः हे भुरणौ! यज्ञेन सर्वस्य जगतः भर्त्तारौ! स्वर्गन्तारौ![४] वा कर्मानुष्ठानेन[५] अजीगः इन्द्रस्य गुणानशेषान् गृह्णाति। यस्य स्तोमस्य। इत् शब्दोऽनर्थकः। इन्द्रः पुरुदिनेषु बहुष्वहस्सु होता। 'ह्वयति' (निघ ३,१४) इत्यर्चतिकर्मा। स्तोता नास्तीदृश.[६] स्तोम[७] इति प्रशंसितेत्यर्थः, मां प्रति अयमागच्छतु मा गादन्यत इत्याह्वाता वा। स इन्द्रस्य गुणानशेषान् गृह्णातीति 'सम्बन्धः कार्यः[८]। कीदृशः। नर्यः नृभ्यो हितः[९] नृणाम् मनुष्याणाम् नृतमः प्रकृष्टमनुष्यश्च क्षपावान् अतिरात्रे क्रतौ यागानां स्तोतृणाञ्चाङ्गभूतया विशिष्टया रात्र्या तद्वांश्चेत्यर्थः। एवं शाकल्यपदाविरोधेनायमर्थः स्थापितः।

इदानीं यास्कपदविधिनार्थं[१०] उच्यते (या ६,२८)—वृक्षे यथा वायः वेः पुत्रः पक्षी। पुत्रः कः। अनुपजातपक्षकः। नि अधायि मात्रा निहितः स्थापितः। तां चरित्वा आगच्छन्तीं निरीक्षते तदागमनं कामयते। एवम् [११]इन्द्रः श्रोतुमागच्छतीतीन्द्रागमनम्[११] चाकन्[१२] चायन् पश्यन् कामयमानो वा[३] शुचिः शुद्धः सर्वदोषरहितः वाम् युवयोः स्वभूतः स्तोमः हे भुरणौ! अजीगः गुणग्रहणद्वारेणेन्द्रम् आगच्छन्तमेव[१३] गृह्णाति। उत्तरोऽर्धर्चः[१४] समानार्थः पूर्वेण ॥ १ ॥

**वेङ्कट०** वृक्षे[१५] इव गच्छन् पक्षी निहितः इन्द्रं कामयमानः सोमः[१६] पात्रेषु[१७] [१८]शुचिः च वाम्†[१८] स्तोमः हे भरणशीलौ! इन्द्रकुत्सौ! निर्गमयति। यस्य एव इन्द्रः पानेन बहुषु दिनेषु शत्रूणाम् आह्वाता नृणाम् नृतमः निहितक्षपणावान्[१९] भवति हिनस्ति शत्रून् इति। यास्कः (६,२८) तु वायः इति पदम् एकं मन्यते, यदाह—'वन इव। वायो वेः पुत्रः। चायन्निति वा। कामयमान इति वा। वेति च य इति च चकार शाकल्यः। उदात्तं त्वेवम् आख्यातमभविष्यत्। असुसमाप्तश्चार्थः' इति ॥ १ ॥

---

१. तं वि[१,२] अ. २. °कन्निख्यप° वि[१] अ[१]; °कन्निख्यतप° वि[१]; °कन्निघातप° वि[३]. ३. नास्ति मूको. ४. स्वग° मूको. ५. °ष्ठाने वा मूको. ६. तादृशः वि[१,३]. ७. सोम मूको. ८-८. शेषः का कार्यः वि[३] अ. ९. हितं मूको. १०. °पदाविरोधेना वि[१,३]. ११-११. इन्द्रश्रोत्रपागच्छतीन्द्रागमनं मूको. १२. चाचकन् मूको. १३. °च्छत° मूको. १४. °रार्ध° मूको. १५. वृषभ वि[२] अ[१]. १६. सोमम् वि[२] अ[१]. १७. नास्ति वि[१]. १८-१८. नास्ति वि[२] अ[१]. † वा वि[१] १९. °णवान् वि[२] अ[१].

प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणाम् ।
अनु त्रिशोकः शतमावहन्नॄन् कुत्सेन रथो यो असत् ससवान् ॥ २ ॥

प्र । ते । अस्याः । उषसः । प्र । अपरस्याः । नृतौ । स्याम । नृऽतमस्य । नृणाम् ।
अनु । त्रिऽशोकः । शतम् । आ । अवहत् । नॄन् । कुत्सेन । रथः । यः । असत् । ससऽवान् ॥ २ ॥

**उद्गीथ०** अस्याः वर्तमानायाः उषसः अपरस्याः आगामिन्याश्च वा उषसः नृतौ 'नृ नयने'। उदयकाल इत्यर्थः, ते इन्द्रस्य स्तुत्या यागेन चाऽऽराधने प्र स्याम प्रकर्षेण भवेमेत्येतद्[1] आशास्महे वयम्। कीदृशस्य। नृणाम् मध्ये नृतमस्य प्रकृष्टमनुष्यस्य। कस्मात् कारणात् स्तुत्या यागेन च तवाऽऽराधनम् आशास्महे। यस्मात्त्वामिन्द्रमाराध्य तव प्रसादात् स रथः [2]लब्ध इति शेषः। यः[2] रथः असत् भवति ससवान् तव कुत्सस्य च सनिता सम्भक्ता सह वहनद्वारेण संसेविता। उक्तश्चाऽयमर्थो मन्त्रान्तरे — 'यासि कुत्सेन सरथमवस्युः' ( ऋ ४,१६,११ ) इति ॥ २ ॥

**वेङ्कट०** प्रकर्षेण स्याम[3] तव अस्याः उषसः प्र च परस्याः नयने नृणाम् नृतमस्य सर्वेषु अहस्सु तव प्रणयने प्रभवेम। अनु आ अवहत् तेन रथेन त्रिशोकः ऋषिः आत्मीयान् बहून् ऋषीन्[4] स्वर्गं लोकम्, कुत्सेन ऋषिणा युक्तः यः रथः अभूत् अन्नवान् इति ॥ २ ॥

कस्ते मद इन्द्र रन्त्यो भूद् दुरो गिरो अभ्युग्रो वि धाव ।
कद्वाहो अर्वागुप मा मनीषा आ त्वा शक्यामुपमं राधो अन्नैः ॥ ३ ॥

कः । ते । मदः । इन्द्र । रन्त्यः । भूत् । दुरः । गिरः । अभि । उग्रः । वि । धाव ।
कत् । वाहः । अर्वाक् । उप । मा । मनीषा । आ । त्वा । शक्याम् । उपऽमम् । राधः । अन्नैः ॥ ३ ॥

**उद्गीथ०** हे इन्द्र! ते तव रन्त्यः रमयिता प्रीतिकरः कः मदः कतमः सोमजन्यो मदः भूत् भवति। किं तावद् ईषन्मदस्तव प्रीतिजनको भवति, उत मध्यमः, उत वा उत्तमः, येन मदेन मत्तः[5] सन् त्वम् दुरः यज्ञगृहद्वाराणि च गिरः [6]स्तुतीः च अभि[6] प्रति उग्रः क्रूरः अप्रसह्यो वा[7] वि धाव लडर्थेऽयं लोट्। यज्ञगृहं गन्तुं स्तुतीः श्रोतुं च [8]विविधं धावसि। तादृशमदयोग्यसोमदानाभिप्रायेणायं[8] प्रश्नः। किंच कत् वाहः अर्वाक् कदिति कदाशब्दपर्यायः। वाहः [9]इत्येतेन नपुंसकवाचिना[9] शब्देन इन्द्रं प्रत्युह्यते इति सोम उच्यते। अर्वाक् इति तद्विशेषणम्। कदा सोमः त्वत्प्रसादात् फलदानायास्मदभिमुखः[10], भविष्यति इति शेषः। किञ्च कदा वा तव प्रसादात् उप मा मनीषा उपगमिष्यति[11] मां सर्वार्थदर्शिनी प्रज्ञा

---

१. भवामेत्ये° वि[2] अ. २-२. नास्ति वि[1,3]. ३. °मनु वि[1] अ[1]. ४. नॄन् वि[1]. ५. सन्मः मूको. ६-६. स्तुभिरभि च अभि वि[1,3]; स्तुतिरभि वि[2] अ. ७. वा त्वं मूको. ८-८. विविध…तादृश° वि[2] अ; विविधयाव्रसि तादृश° वि[1,3]. ९-९. इत्यतेन पुसक वि[1,3]; इत्यन्तेन पुंसक° वि[2] अ. १०. फलदानाय सुस्वमुखो वि[3]; अऊभासतायास्त्वसन्मुखा [1,2] अ. ११. °गमिष्य दिता वि[3]; °गमिष्यति इदं वि[2] अ[1].

स्तुतिर्वा सर्वगुणग्राहिणी। किञ्च आ त्वा आङुपसर्गश्रुतेः तद्योग्यक्रियापदाध्याहारः[1]। कदा वा आराध्य त्वाम् शक्याम् शकिरत्र गत्यर्थः। अन्तर्णीतण्यर्थः। गमयेयम् उपमम् मदन्तिकम्[2]। किम्। राधः धनम् अन्नैः ॥ ३ ॥

वेङ्कट० कः ते मदः इन्द्र! रमयिता भवति। द्वाराणि स्तुतीः च अभि गच्छ उद्गूर्णः। कदा[3] त्वां त्वदीयोऽश्वः[4] मां प्रति [5]उप हरति[5] अभिमुखं स्तुत्यर्थम्। शक्नुयाम् अहं त्वाम् आ गमयामि अन्तिकम् धनार्थम्[6] अन्नार्थम् च ॥ ३ ॥

कदु॑ द्यु॒म्नमि॑न्द्र॒ त्वाव॑तो॒ नॄन् कया॑ धि॒या क॑रसे॒ कन्न॒ आग॑न् ।
मि॒त्रो न स॒त्य उ॑रुगाय भृ॒त्या अन्ने॑ समस्य॒ यदस॑न् मनी॒षाः ॥ ४ ॥

कत् । ऊँ इति॑ । द्यु॒म्नम् । इ॒न्द्र॒ । त्वाऽव॑तः । नॄन् । कया॑ । धि॒या । क॒र॒से॒ । कत् । नः॒ । आ । अ॒ग॒न् ।
मि॒त्रः । न । स॒त्यः । उ॒रु॒ऽगा॒य॒ । भृ॒त्यै । अन्ने॑ । स॒म॒स्य॒ । यत् । अस॑न् । म॒नी॒षाः ॥ ४ ॥

उद्गीथ० कत् उ कदा वा द्युम्नम् अन्नं हविर्लक्षणम् अस्मदीयम्, अस्तीति[7] शेषः। हे इन्द्र! त्वावतः त्वत्सदृशान् नॄन् मनुष्यान् अस्मान्[8] कया धिया कया अनुग्रहबुद्ध्या करसे करिष्यसि। कत कदा वा नः अस्मान् प्रति आ अगन् आगमिष्यसीत्यर्थः। हे उरुगाय! बहुगते! बहूनां भक्तानां[9] गतिभूत! इत्यर्थः, विस्तीर्णगते! वा, सर्वगतीनां मध्ये महागते! वेत्यर्थः। किमिव किमर्थञ्च। उच्यते — मित्रः न सत्यः मूले यथा कश्चित् स्निग्धः अविसंवादी भरणीय-योगक्षेमवहनाय[10] आपद्यागच्छेत् परया प्रीत्या, एवम्। कस्मादेवमुच्यसे कदा मां प्रत्यागमिष्यसि भरणायेति। यत् यस्मात् अन्ने आहारे शरीरस्थितिनिमित्ते समस्य सर्वस्याऽस्मदादिकस्य प्राणिनः असन् भवन्ति मनीषाः प्रज्ञा अन्नाभिलाषलक्षणाः[11] ॥ ४ ॥

वेङ्कट० किम् अन्नम् इन्द्र! त्वत्सदृशान् मनुष्यान् [12]आ गमयति[12]। केन कर्मणा करोषि त्वम् अभिलषितम् अस्माकम्। कदा वा अस्मान आ गमिष्यसि। सखा इव सत्यकर्मा त्वम् उरुकीर्ते! भरणाय भवसि, अन्ने सर्वस्य स्तोतुः यदा भवन्ति बुद्धयः[13] इति ॥ ४ ॥

प्रेर॑य॒ सूरो॒ अर्थं॒ न पा॒रं ये अ॑स्य॒ कामं॑ जनि॒धाइ॑व॒ ग्मन् ।
गिर॑श्च॒ ये ते॑ तुविजात पू॒र्वीर्नर॑ इन्द्र प्रति॒शिक्ष॒न्त्यन्नैः॑ ॥ ५ ॥

प्र । ई॒र॒य॒ । सूरः॑ । अर्थ॑म् । न । पा॒रम् । ये । अ॒स्य॒ । काम॑म् । ज॒नि॒धाःऽइ॑व । ग्मन् ।
गिरः॑ । च॒ । ये । ते॒ । तु॒वि॒ऽजा॒त॒ । पू॒र्वीः । नरः॑ । इ॒न्द्र॒ । प्र॒ति॒ऽशिक्ष॑न्ति । अन्नैः॑ ॥ ५ ॥

---

१. °क्रियावाध्याहार्यः वि[2] अ; °पदाध्याहार्यः वि[3]; °क्रियापदोध्याहार्यः वि[1]. २. वदन्तिकिरोधः मूको. ३. तदा वि[1] अ[1]. ४. त्वदीयो वि[2] अ[3]; त्वदीयोन्यो वि[1]. ५-५. अपहति वि[2] अ[1]; उपहति वि[1]. ६. दना° वि[2] अ[1]. ७. °मध्विति वि[2,3] अ. ८. तस्मान् मूको. ९. दत्तानां वि[1]. १०. आहरणाय वि[2] अ; हरणाय वि[1]. ११. अन्नाभिलक्ष° वि[1,3]; अन्नाश्ल वि[2] अ[1]. १२-१२. °न्ति वि[2] अ[1]; आशमयति वि[1]. १३. बन्धव वि[1] अ[1].

उद्गीथ० यच्छब्दसम्बन्धाद् द्वितीये पादे आरम्भः[1]। ये यजमाना अस्मदादयः अस्य तवेन्द्रस्य कामम् सोमपानेच्छाम् ग्मन् गमिरत्र शुद्धोऽपि विपूर्वो[2] द्रष्टव्यः, अन्तर्णीतण्यर्थश्च द्रष्टव्यः। विगमयन्ति प्रभूतसोमप्रदानेनापनयन्ति। किमिव। जनिधाः इव जनीनां जायानां सम्भोगकाले शय्यासु धारयितारः पतयो यथा प्रभूतसम्भोगप्रदानेन मैथुनेच्छाम् अपनयन्ति, एवम्। गिरः च स्तुतीः पूर्वीः अनादिकालप्रवृत्ताः [3]अन्नैः पुरोडाशाद्यन्नैः[3] सह ये नरः मनुष्याः अस्मदादयो यजमानाः ते तुभ्यमिन्द्राय[4] प्रतिशिक्षन्ति प्रतिकालं ददति. तान् सर्वान् अस्मदादीन् यजमानान् हे इन्द्र! तुविजात! बहुभूत! 'रूपंरूपं प्रतिरूपो बभूव' ( ऋ ६,४७,१८ ) इति वचनात् सर्वात्मक! त्वम् प्र ईरय प्रगमय पारम् संसारस्यान्तं गन्तारं प्रगमय। किमिव। सूरः अर्थम् न यथा सूर्यः अर्थमर्त्तारं संसारस्यान्तं गन्तारं योगिनम् अनुगृह्णन् अपवर्गं गमयति, एवम्। दृष्टान्तगतोऽयमर्थ उक्त एव उपनिषत्सु—'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा' ( मुंउ १,११ ) इत्येवमाद्यासु ॥ ५ ॥

वेङ्कट० गमय पारम् तेषां माम्, यथा सूर्यो ...... धिकं[5] गन्तव्यं देशं गमयति। अस्य ये मम अभिलाषम् प्रजापश्वादयः गच्छन्ति, यथा जायानां धर्तारो युवानः ताः आ गच्छन्ति। तद्वत् स्तुतीः च ये ते बहुजनन! बह्वीः मनुष्याः इन्द्र! प्रतिप्रयच्छन्ति[6] हविर्भिः सह, तांश्च पारं गमय इति ॥ ५ ॥

[7]इति सप्तमाष्टके सप्तमाध्याये द्वाविंशो वर्गः[7] ॥

मात्रे नु ते सुमिते इन्द्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन ।
वराय ते घृतवन्तः सुतासः स्वाद्मन् भवन्तु पीतये मधूनि ॥ ६ ॥

मात्रे इति । नु । ते । सुमिते इति सुऽमिते । इन्द्र । पूर्वी इति । द्यौः । मज्मना । पृथिवी । काव्येन ।
वराय । ते । घृतऽवन्तः । सुतासः । स्वाद्मन् । भवन्तु । पीतये । मधूनि ॥ ६ ॥

उद्गीथ० मात्रे सर्वस्य निर्मात्र्यौ द्यावापृथिव्यौ पूर्वी अनादिकालप्रवृत्ते हे इन्द्र! ते तव स्वभूते[8] नु क्षिप्रम् सुमिते सुनिर्मिते। केन मम स्वभूते[9] क्षिप्रं सुमिते। उच्यते—द्यौः मज्मना बलेन, पृथिवी काव्येन कविकर्मणा मेधाविचेष्टितेन प्रज्ञयेत्यर्थः। यस्मादीदृशेन महत्त्वेन युक्तः त्वम्, तस्मात् वराय श्रेष्ठाय ते तुभ्यमिन्द्राय घृतवन्तः अग्निमुखं त्वां प्रति क्षरणवन्तो दीप्तिमन्तो वा संस्कृतत्वादाज्यसंयुक्ता वा सुतासः अभिषुताः सोमाः स्वाद्मन्[10] स्वशब्द आत्मवचनः। अद्मेत्यन्ननाम[11] देवानां स्वमन्नं हविर्भागलक्षणं यस्मिन् [12]स स्वाद्मा[12] यज्ञः तस्मिन् स्वाद्मनि[13] यज्ञे। अथवा स्वादुशब्दस्य उकारलोपो द्रष्टव्यः। स्वादुमनि[14] मृष्टान्ने यज्ञे अस्मदीये [15]भवन्तु अस्माभिर्दत्ताः[15]। किमर्थम्। पीतये पानाय। मधूनि मधुररसान्यन्नानि अपि हवींषि अदनाय[16] दत्तानि भवन्तु[17] ॥ ६ ॥

---

१. आरम्भे वि[१,२] अ. २. पूर्वो मूको. ३-३. 'डाशोद्यतेन्नैं मूको. ४. तुभ्यं विप्राय वि[२] अ. ५. विन्दिकं वि[१]. ६. °प्रगच्छन्ति वि[२] अ[१]. ७-७. नास्ति मूको. ८. स्वभूतौ वि[१,२]; स्वभूता वि[२] अ. ९. स्वभूतौ मूको. १०. स्वात्मन् मूको. ११. आत्मेत्य° मूको. १२-१२. स्वस्वाद्मा वि[१]; स्वस्वाद्या वि[२] अ. १३. स्वद्मनि वि[२] अ; स्वादुनि वि[१]. १४. स्वदुनि मूको. १५-१५. भवन्नमस्मा' मूको. १६. अदना मूको. १७. भवन्तः मूको.

वेङ्कट० निर्मात्र्यौ द्वे क्षिप्रं त्वयेन्द्रेण सुष्ठु निर्मिते प्रते। तदेवाऽऽह— द्यावापृथिव्यौ तव शत्रूणां मज्जकेन[1] कर्मणा निर्मिते[2] इति। वरणीयाय तुभ्यम् वसतीवरीभिः युक्ताः अभिषुताः[3] स्वदनार्थम् भवन्तु, पानाय तानि सुतानि, पानाय मधूनि इति॥ ६॥

आ मध्वो॑ अस्मा असिचन्नमत्र॒मिन्द्रा॑य पू॒र्णं स हि स॒त्यरा॑धाः।
स वा॑वृधे॒ वरि॑म॒न्ना पृ॑थि॒व्या अ॒भि क्रत्वा॒ नर्यः॒ पौंस्यै॑श्च॥ ७॥

आ। मध्वः॑। अ॒स्मै॒। अ॒सि॒च॒न्। अम॑त्रम्। इन्द्रा॑य। पू॒र्णम्। सः। हि। स॒त्यऽरा॑धाः।
सः। व॒वृ॒धे॒। वरि॑मन्। आ। पृ॒थि॒व्याः। अ॒भि। क्रत्वा॑। नर्यः॑। पौंस्यैः॑। च॒॥ ७॥

उद्गीथ० अस्मै इन्द्राय अस्येन्द्रस्यार्थम्[4] आ असिचन् आभिमुख्येन स्थित्वा परया भक्त्या सिक्तवन्तः अग्नौ प्रक्षिप्तवन्तः[5] ऋत्विजः मध्वः मधुररसस्य[6] सोमस्य पूर्णम् अमत्रम् ग्रहचमसादिकम्। कस्मात्[7] सिक्तवन्तः। हि यस्मात् सः इन्द्रः सत्यराधाः सत्यधनः यजमानेभ्यो दातव्यत्वेनाऽविसंवादिधन इत्यर्थः। तेन च पात्रेणाग्नौ सिक्तेन तृप्तः सन् सः इन्द्रः नर्यः नृभ्यः हितः ववृधे वृद्धवान् वरिमन् वरिम्णा शरीरस्योरुत्वेन आ मर्यादया प्रमाणेनेत्यर्थः। कस्य। पृथिव्याः। अभि-वृद्धवान् क्रत्वा कर्मणा च रसानुप्रदानवृत्रवधादिकेन[8] प्रज्ञया वा पौंस्यैः च बलैश्चेत्यर्थः॥ ७॥

वेङ्कट० सोमस्य पूर्णम् अमत्रम् आ असिचन् अस्मै इन्द्राय। सः हि सत्यधनः। सः अभि वर्धते विस्तीर्णे स्थाने अन्तरिक्षस्य प्रज्ञानेन नृहितः[9] वीर्यैः च युक्तः॥ ७॥

व्या॑न॒ळिन्द्रः॒ पृत॑नाः॒ स्वोजा॒ आस्मै॑ यतन्ते स॒ख्याय॒ पू॒र्वीः।
आ स्मा॒ रथं॒ न पृत॑नासु तिष्ठ॒ यं भ॒द्रया॑ सुम॒त्या चो॒दया॑से॥ ८॥

वि। आ॒न॒ट्। इन्द्रः॑। पृत॑नाः। सु॒ऽओजाः॑। आ। अ॒स्मै॒। य॒त॒न्ते॒। स॒ख्याय॑। पू॒र्वीः।
आ। स्म॒। रथ॑म्। न। पृत॑नासु। ति॒ष्ठ॒। यम्। भ॒द्रया॑। सु॒ऽम॒त्या। चो॒दया॑से॥ ८॥

उद्गीथ० सर्वप्रकारया वृद्ध्या वृद्धश्च सन् इन्द्रः स्वोजाः सुबलः वि आनट् व्याप्नोति पृतनाः सङ्ग्रामान्। अप्रतिहन्यमानः सङ्ग्रामेषु शत्रून् जयतीत्यर्थः। किञ्च पूर्वीः पूर्वशब्दोऽत्र उत्कृष्टवाची। उत्कृष्टाः शत्रुसेनाः अप्रभवन्त्यः अस्मै अस्येन्द्रस्य सख्याय सखिभावाय सखित्वलक्षणाय आ यतन्ते सन्धिं कर्तुमिच्छन्तीत्यर्थः। उत्तरोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। स्म इति पदपूरणः। न-शब्दः पुरस्तात्[10] प्रयुक्तोऽपि पृतनाशब्दस्य सामर्थ्यादुपमार्थीयः। अस्मद्यज्ञं प्रत्यागन्तुं तं स्वरथम् आ तिष्ठ महतादरेण। क्व। पृतनासु न। यथा सङ्ग्रामे

---

१. मञ्जकेन वि[1,2]; अञ्जकेन अ[1]. २. °त मूको. ३. °ता मूको. ४. अस्मै इन्द्राय वि[2] अ; अस्मै इन्द्रस्याय वि[1]. ५. प्रक्षिपन्त मूको. ६. मधुरस्य वि[1,2]. ७. अस्मात् मूको. ८. °नुप्रदेन वृत्र° वि[1]. ९. नि° वि[2] अ[1]. १०. परस्तात् मूको.

महतादरेण रथमातिष्ठसि, एवम् । यम् रथम् भद्रया कल्याण्या सुमत्या शोभनया प्रज्ञया परानुग्रहबुद्धया चोदयासि प्रेरयसि यज्ञान् प्रति ॥ ८ ॥

**वेङ्कट०** वि आप्नोति इन्द्रः पृतनाः सुबलः। इन्द्रेण[1] इदं सख्यम् अस्माकं स्यादिति प्र यतन्ते बह्वयः सेनाः। आ तिष्ठ रथम् पृतनासु गन्तुं सम्प्रति, यम् रथं त्वम्[2] भद्रया सुमत्या युक्तः चोदयसि इति ॥ ८ ॥

[3]इति सप्तमाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[3] ॥

[ ३० ]

[3]कवष ऐलूष ऋषिः। आपोऽपां नपाद् वा देवता। त्रिष्टुप् छन्दः[3]।

प्र दे॑व॒त्रा ब्रह्म॑णे गा॒तुरे॑त्व॒पो अच्छा॒ मन॑सो॒ न प्रयु॑क्ति ।
म॒हीं मि॒त्रस्य॒ वरु॑णस्य धा॒सिं पृ॑थु॒ज्रय॑से रीरधा सुवृ॒क्तिम् ॥ १ ॥

प्र । दे॒व॒ऽत्रा । ब्रह्म॑णे । गा॒तुः । ए॒तु॒ । अ॒पः । अच्छ॑ । मन॑सः । न । प्रऽयु॑क्ति ।
म॒हीम् । मि॒त्रस्य॑ । वरु॑णस्य । धा॒सिम् । पृ॒थु॒ऽज्रय॑से । री॒र॒ध॒ । सु॒ऽवृ॒क्तिम् ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'प्र देवत्रा' इति पञ्चदशर्चम् अब्देवत्यम् ऐलूषः कवषो ददर्श। प्र उपसर्ग एतिना सम्बध्यते। देवत्रा इति अब्विशेषणम्[4]। ब्रह्मणे इति तृतीयार्थे चतुर्थी। गातुः इति सोम उच्यते गुणवृत्त्या, स्तुतिलक्षणेन स्तूयमान इति शेषः। गातुः देवान् अपो वा प्रति गमनशीलः सोमः [5]प्र एतु[5] प्रगच्छतु। देवत्रा देवीः अपः वसतीवर्यैकधनालक्षणाः अच्छ [6]अभि आप्तुम्[6]। कस्येव [7]वेगेन प्रगच्छतु[7]। मनसः न[8] मनस इव प्रयुक्ति प्रयुक्त्या प्रयोगेण वेगेनेत्यर्थः। अथ[9] प्रतिगते च सोमे त्वमपि हे मदीयकर्मात्मन्! अध्वर्यो! वा महीम् धासिम् महदन्नं सोमलक्षणम् मित्रस्य वरुणस्य चार्थाय पृथुज्रयसे विस्तीर्णजवाय महागतेरिन्द्रस्य चार्थायेत्यर्थः, रीरध संसाधय संस्कुरु दानयोग्यं कुरु सुवृक्तिम् सुष्ठु दोषैर्विवर्जितां स्तुतिं च ॥ १ ॥

**वेङ्कट०** कवष ऐलूषः। प्र गच्छतु[10] देवानां मध्ये ब्रह्मणे महते देवाय स्तुतिः। तदेवाऽऽह— अपः[11] अभि गच्छतु स्तुतिः[12] शीघ्रम् यथा मनसः प्रयोग उद्योगः[13]। महतीम् मित्रावरुणयोः धारयित्रीम् अहोरात्रयोः स्तोतुः अमरणहेतुम्[14] उरुवेगाय ब्रह्मणे स्तोतः! संसाधय स्तुतिम् ॥ १ ॥

अध्व॑र्यवो ह॒विष्म॑न्तो॒ हि भू॒ताच्छा॒प इ॑तोश॒तीरु॑शन्तः ।
अव॒ याश्चष्टे॑ अ॒रुणः॑ सुप॒र्णस्तमास्य॑ध्वमू॒र्मिम॒द्या सु॑हस्ताः ॥ २ ॥

१. इन्द्र वि[1]. २. त्व मूको. ३-३. नास्ति मूको. ४. अविशे° मूको. ५-५. प्रे मूको. ६-६ अभ्द्रिराप्तुम् वि[2] अ. ७-७. °गेनागे° वि[1,3]; °गेनावग° वि[2] अ. ८. नास्ति मूको. ९. अपः मूको. १०. °न्तु वि[2] अ[1]. ११. आपः अ[1]. १२. °तीः वि[2] अ[1]. १३. °गे वि[2] अ[1]. १४. मरण° वि[2] अ[1].

अध्वर्यवः । हविष्मन्तः । हि । भूत । अच्छ । अपः । इत । उशतीः । उशन्तः ।
अव । याः । चष्टे । अरुणः । सुऽपर्णः । तम् । आ । अस्यध्वम् । ऊर्मिम् । अद्य । सुऽहस्ताः ॥२॥

**उद्गीथ०** हि इति पदपूरणः । हे अध्वर्यवः! हविष्मन्तः अभिषोतव्येन सोमलक्षणेन हविषा तद्वन्तो यूयम् भूत भवत, सोममभिषुणुतेत्यर्थः । तदर्थञ्च [1]अच्छ आप्तुं ग्रहीतुम्[1] अपः सोमाभिषवाङ्गभूताः[2] एकधनालक्षणाः इत गच्छत उशतीः सोमाभिषवाङ्गभावं[3] कामयमानाः हे उशन्तः! सोमाभिषवं कर्तुं कामयमानाः! । अपः आप्तुं गच्छतेति सम्बन्धः कार्यः । [4]याः मेघस्थाः अपः अव[4] चष्टे पश्यति अरुणः रक्तवर्णः सुपर्णः सुपतनः सोमः । ताभिः[5] सहाभिषुतं च सन्तम् तम् ऊर्मिम् सोमसङ्घातम् [6]अद्य आ सम्प्रति आभिमुख्येन अस्यध्वम् दशापवित्रे प्रक्षिपत हे सुहस्ताः![6] शोभनकर्मकारित्वाद्वा सुवर्णेनाऽलङ्कृतत्वाद्वा शोभना हस्ता येषां ते सुहस्ताः अध्वर्यवः । तेषामिदं सम्बोधनम् ॥ २ ॥

**वेङ्कट०** हे अध्वर्यवः! हविष्मन्तः हि भवत । [7]ता एव[7] अभि गच्छत अपः[8] कामयमानाः[9] हे उशन्तः!, अव पश्यति[10] याः अरुणवर्णः सुपतनः सोमः[11], तम् ऊर्मिम् आभिमुख्येन प्रक्षिपत पात्रेषु अद्य हे सुहस्ताः! । ऊर्मिसामानाधिकरण्याल्लिङ्गवचनभेदः[12] ॥ २ ॥

अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वम् ।
स वो ददद्रूर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोत ॥ ३ ॥

अध्वर्यवः । अपः । इत । समुद्रम् । अपाम् । नपातम् । हविषा । यजध्वम् ।
सः । वः । ददत् । ऊर्मिम् । अद्य । सुऽपूतम् । तस्मै । सोमम् । मधुऽमन्तम् । सुनोत ॥ ३ ॥

**उद्गीथ०** हे अध्वर्यवः! अपः एकधनालक्षणाः, आहर्तुमिति शेषः, इत गच्छत यूयम् समुद्रम् समुद्रस्थानीयम् अक्षीणोदकं जलाशयम् । इदानीमुत्तरोऽर्धो व्याख्यायते । पश्चात् द्वितीयः पादो व्याख्येयः । आर्थोऽयं क्रमः । जलाशयं प्रति गतेभ्यः वः युष्मभ्यम्[13], यस्यार्थाय सोमः पूयते[14] सः अपां नपात् ददत् ददातु ऊर्मिम् अप्समूहम् अद्य सम्प्रति सुपूतम् सुशुद्धम् । तेन चाऽप्समूहेन सह तस्मै तदर्थम् अपांनप्त्रर्थमित्यर्थः[15], सोमम् मधुमन्तम् मधुस्वादोपेतम् सुनोत अभिषुणुत यूयम् । अभिषुत्य च तेन सोमाख्येन हविषा अप्सु हितेन[16] अपाम् नपातम् मध्यमं वृष्टिकर्मण्यधिकृतं देवम् यजध्वम् यूयं हे अध्वर्यवः! ॥ ३ ॥

**वेङ्कट०** अध्वर्यवः! अपः प्रति गच्छत, अपाम् आवासम् अपाम् नपातम् च हविषा यजध्वम् ।

---

१-१. अगच्छ आप्तं गृहीत मूको. २. °म भिषवभूताङ्गभूताः मूको. ३. °षवाङ्गभूतावं मूको. ४. या अव वि[१,३]; या अप वि[२] अ. ५ अभिः वि[१,३]; आभिः वि[२] अ. ६-६. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र. ७-७. तदेव वि[२] अ[१]; देव वि[१]. ८. अव मूको. ९. °नः वि[२] अ[१]. १०. °न्ति वि[२] अ[१]. ११. सोमम् वि[२] अ[१]; सेमः वि[१]. १२. ऊर्मिः समानाधिकरणा° वि[२] अ[१]; सामानाधिरण्या° वि[१]. १३. युष्माकम् मूको. १४. पूरयते मूको. १५. अपोनपूतमिथर्थः मूको. १६. वितेन वि[१,३].

सः युष्मभ्यम् प्रयच्छतु अद्य सुपूतम् हविष्यम् ऊर्मिम् । तथा सति तस्मै देवाय सोमम् रसवन्तम् सुनुत ॥ ३ ॥

योअ॑नि॒ध्मो दीद॑यद॒प्स्व१॒॑न्तर्यं विप्रा॑स॒ ईळ॑ते अध्व॒रेषु॑ ।
अ॒पां नपा॒न्मधु॑मतीर॒पो दा॒ याभि॒रिन्द्रो॑ वावृ॒धे वी॒र्या॑य ॥ ४ ॥

यः । अ॒नि॒ध्मः । दीद॑यत् । अ॒प्ऽसु । अ॒न्तः । यम् । विप्रा॑सः । ईळ॑ते । अ॒ध्व॒रेषु॑ ।
अ॒पाम् । न॒पा॒त् । मधु॑ऽमतीः । अ॒पः । दाः॒ । याभिः॑ । इन्द्रः॑ । व॒वृ॒धे । वी॒र्या॑य ॥ ४ ॥[1]

**उद्गीथ०** उत्तरार्धस्य प्रत्यक्षकृतत्वाद् एकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः प्रथमेऽर्धर्चेऽध्याहार्यः । यः भवान् अपां नपात् अनिध्मः अनिन्धनः दीदयत् दीप्यते अप्सु अन्तः मेघस्थानामपां मध्ये, यम् च भवन्तम् अपां नपातम् विप्रासः मेधाविनः ऋत्विग्यजमानाः ईळते स्तुवन्ति अध्वरेषु यज्ञेषु, स त्वं हे अपाम् नपात्! मधुमतीः मधुस्वादयुक्ताः अपः वृष्टिलक्षणाः दाः देहि अस्मभ्यम्, याभिः अद्भिः वसतीवर्यैकधनारूपाभिः सोमेन मिश्रिताभिः इन्द्रः ववृधे वर्धते वीर्याय वीरकर्मणे, वृत्रवधादिकार्यं[2] कर्तुमित्यर्थः ॥ ४ ॥

**वेङ्कट०** यः अग्निः काष्ठवर्जितः दीप्यत उदकेषु, यम् च मेधाविनः स्तुवन्ति यज्ञेषु, स त्वम् अपाम् नपात्! रसवतीः अपः प्रयच्छ, याभिः इन्द्रः वर्धते वीरकर्मकरणार्थम् ॥ ४ ॥

याभि॒ः सोमो॒ मोद॑ते॒ हर्ष॑ते च कल्या॒णीभि॑र्युव॒तिभि॒र्न मर्यः॑ ।
ता अ॑ध्वर्यो अ॒पो अच्छा॒ परे॑हि॒ यदा॑सि॒ञ्चा ओष॑धीभिः पुनीतात् ॥ ५ ॥

याभिः॑ । सोमः॑ । मोद॑ते । हर्ष॑ते । च॒ । क॒ल्या॒णीभिः॑ । यु॒व॒तिऽभिः॑ । न । मर्यः॑ ।
ताः॑ । अध्व॒र्यो इति॑ । अ॒पः । अच्छ॑ । परा॑ । इ॒हि॒ । यत् । आ॒ऽसि॒ञ्चाः । ओष॑धीभिः । पु॒नी॒ता॒त् ॥

**उद्गीथ०** चतुर्थः पादः पूर्वं व्याख्येयः पश्चात् यथाक्रमं त्रयः पादा व्याख्येयाः । यत् यदा आ-सिञ्चाः मर्यादया सिञ्चसि अभिषवणचर्मस्थितस्य[3] सोमस्याऽभिषूयमाणस्योपरि प्रक्षिपसि अपः, यदा च ओषधीभिः पुनीतात् । ओषधिरत्र सोम उच्यते । बहुवचनं चाऽवयवापेक्षम् । यदा च सोमेन सह दशापवित्रे पुनासि अपः, तदा[4] याभिः अद्भिः वसतीवर्यैकधनारूपाभिः सह सोमः मोदते हृष्यति हर्षते च पुनरुक्तपरिजिहीर्षया अन्तर्णीतभृशार्थोऽत्र हृष्यतिर्द्रष्टव्यः । अत्यर्थं हृष्यति च । किमिव । कल्याणीभिः युवतिभिः न मर्यः यथा कमनीयाभिः यौवनान्विताभिः स्त्रीभिः सह मनुष्यः कश्चित्[5] अत्यर्थं मोदते, एवम् । ताः अपः अच्छ आप्तुम् आहर्तुम् परा इहि जलाशयं गच्छ त्वं हे अध्वर्यो! ॥ ५ ॥

**वेङ्कट०** याभिः सोमः मुदितो[6] भवति हृष्यति च कल्याणीभिः युवतिभिः[7] इव मनुष्यः, ताः

---

१. या. (१०,१९) व्याख्याता द्र. २. वत्र° मूको. ३. °चर्मसः स्य वि[1]; °चर्मसास्य वि[1]; °चमसः स वि[2] अ. ४. कदा मूको. ५. किञ्चिद् मूको. ६. मुदिनता वि[2] अ[1]; मृतो वि[1]. ७. °तीभिः वि[2].

अध्वर्यो ! अपः प्राप्तुम् परा इहि । यदा आसिञ्चसि ओषधीः आभिः, तदा त्वम् ओषधीभिः सह अभिषुताभिः अपश्च दशापवित्रे पुनीहि इति ॥ ५ ॥

[१]इति सप्तमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[१] ॥

एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ ।
सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥ ६ ॥

एव । इत् । यूने । युवतयः । नमन्त । यत् । ईम् । उशन् । उशतीः । एति । अच्छ ।
सम् । जानते । मनसा । सम् । चिकित्रे । अध्वर्यवः । धिषणा । आपः । च । देवीः ॥ ६ ॥

उद्गीथ० एव-शब्दो नमन्त-शब्दात् परो द्रष्टव्यः । इत् शब्दोऽत्र पदपूरणः । यूने अभिषवादिकर्मणाम् आत्मना सह मिश्रयित्रे कर्त्रेऽध्वर्यवे युवतयः सोमेन सह आत्मनो मिश्रयित्र्यो यौवनान्विता वा आपो वसतीवर्यैकधनालक्षणाः नमन्त एव प्रह्वीभवन्त्येव उपनमन्त्येवेत्यर्थः । कदा । उच्यते — यत् यदा ईम् एनाः अपः[२] उशन् सोमाऽभिषवादिकर्म कर्तुं कामयमानोऽध्वर्युः उशतीः सोमेन सह मिश्रीभावम् अभिषवादिकम् अङ्गभावञ्च कामयमानाः[३] अच्छ आप्तुम् आहर्तुम् एति गच्छति, तदा[४] । कस्मात् कारणाद् उपनमन्ते । यस्मात् सम् जानते सम्यक् जानन्ति [५]मनसा विशिष्टया प्रज्ञया[५], सम् चिकित्रे सम्यक् पश्यन्ति च विशिष्टेन चक्षुषा स्वंस्वम् अधिकारं परस्परोपकारं च अध्वर्यवः धिषणा वाक् स्तुतिलक्षणा आपः च देवीः देव्यः ॥ ६ ॥

वेङ्कट० एवम् एव सोमाय आपः[६] प्रह्वीभवन्ति, यदा एताः कामयमानः कामयमानाः[७] अभिगच्छति[८] । अधिषवणफलकायाम् अभिषवणप्रवृत्ताः अध्वर्यवः आपः च देव्यः सम् जानते । संज्ञानम् इतरेतरावगमः । अन्योऽन्यम् अवगच्छन्ति अन्योऽन्यं ज्ञापयन्ते च ॥ ६ ॥

यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुञ्चत् ।
तस्मा इन्द्राय मधुमन्तमूर्मिं देवमादनं प्र हिणोतनापः ॥ ७ ॥

यः । वः । वृताभ्यः । अकृणोत् । ऊँ इति । लोकम् । यः । वः । मह्याः । अभिऽशस्तेः । अमुञ्चत् ।
तस्मै । इन्द्राय । मधुऽमन्तम् । ऊर्मिम् । देवऽमादनम् । प्र । हिनोतन । आपः ॥ ७ ॥

उद्गीथ० यः इन्द्रः वः युष्मभ्यम् अद्भ्यः वृताभ्यः मेघेनाऽऽवृताभ्यः वेष्टिताभ्यः । तादर्थ्ये चतुर्थ्येषा । युष्माकम् अपां मेघेन वेष्टितानामर्थायेत्यर्थः । अकृणोत् कृतवान् । उ इति पदपूरणः । लोकम् स्थानं मेघोदरान्निर्गमनमार्गम्[९] । यः च वः युष्मान् मह्याः महत्याः अभिशस्तेः मेघवेष्टनाऽभिहिंसातः[१०] अमुञ्चत् मोचितवान्, तस्मै इन्द्राय मधुमन्तम् मधुस्वादुयुक्तम् ऊर्मिम्

---

१-१. नास्ति मूको. २. आप: मूको. ३. °माना: मूको. ४. कदा मूको. ५-५. मानसविशिष्टया ईज्ञया वि[२] अ. ६. आवः मूको. ७. अकामयमाना वि[२] अ[१]. ८. °न्ति वि[२] अ[१]. ९ मेघोद मूको १०. °नाभिः हिंसातः मूको.

अप्सङ्घातम् देवमादनम् इन्द्रादिदेवानां सोमेन[1] सह मिश्रीभूय तर्पयितारम् प्र हिणोतन प्रगमयत अस्मद्यज्ञं प्रत्यङ्गभावाय प्रस्थापयत यूयं हे आपः! ॥ ७ ॥

वेङ्कट० यः युष्मभ्यम् मेघेन परिवृताभ्यः अकरोत् निर्गमनमार्गम्, यः च युष्मान्[2] महत्याः[3] अभिशस्तेः[4] ब्रह्महत्यायाः अमुञ्चत् । 'शुवं सिन्धूँरभिशस्तेरवद्यात्' ( ऐब्रा २,९ ) इत्युक्तम् । तस्मै इन्द्राय मधुमन्तम् ऊर्मिम् देवस्य इन्द्रस्य मादनम् प्र गमयत हे आपः! ॥ ७ ॥

प्रास्मै॑ हिनोत॒ मधु॑मन्तमू॒र्मिं गर्भो॒ यो वः॑ सिन्धवो॒ मध्व॒ उत्सः॑ ।
घृ॒तपृ॑ष्ठमी॒ड्य॑मध्व॒रेष्वापो॒ रेवतीः शृणु॒ता हवं॒ मे ॥ ८ ॥

प्र । अ॒स्मै॒ । हि॒नो॒त॒ । मधु॑ऽमन्तम् । ऊ॒र्मिम् । गर्भः॑ । यः । व॒ः । सि॒न्ध॒व॒ः । मध्वः॑ । उत्सः॑ ।
घृ॒तऽपृ॑ष्ठम् । ई॒ड्य॑म् । अ॒ध्व॒रेषु॑ । आपः॑ । रे॒व॒तीः॒ । शृ॒णु॒त । हव॑म् । मे॒ ॥ ८ ॥

उद्गीथ० [5]यच्छब्दसम्बन्धाद् द्वितीयः पादः[5] पूर्वं व्याख्येयः। गर्भः सार. यः वः युष्माकं स्वभूतः हे सिन्धवः! स्यन्दनशीलाः! मध्वः मधुनः मिष्टरसस्य उत्सः उत्स्यन्दन.[6] उत्सर्पी[7]। यच्छब्दसम्बन्धात् 'तच्छब्दोऽध्याहार्यः। तं गर्भम्[8] मधुमन्तम् मधुस्वादोपेतम् ऊर्मिम् अप्सङ्घातम् घृतपृष्ठम् घृतेनाज्येन स्पृष्टम् ईड्यम् स्तुत्यम् अध्वरेषु यज्ञेषु ईदृशं सारं युस्मत्सम्बन्धिनम् अस्मै अस्येन्द्रस्यार्थाय प्र हिनोत प्रगमयत प्रस्थापयत अस्मद्यज्ञं प्रत्यङ्गभावाय। हे आपः! रेवतीः![9] अस्मभ्यं युष्माभिः दातव्यधनेन[10] दृष्टाऽदृष्टफललक्षणेन तद्वत्यः! शृणुत हवम् आह्वानवचनमेतदित्यर्थः, मे मम स्वभूतम् ॥ ८ ॥

वेङ्कट० प्र हिणुत इन्द्राय अस्मै मधुमन्तम् ऊर्मिम्[11]। गर्भभूतः यः युष्माकम् सिन्धवः! उदकस्य उत्सभूतः[12], तम् उदकपृष्ठम्[13] स्तोतव्यम् यज्ञेषु[14], कुरुत इति शेषः। हे आपः! पशुमत्यः! शृणुत हवम् मदीयम्। यद्वा गर्भः [15]यः वः[15] मधुररसस्य उत्सः, तम् उदकपृष्ठम् अध्वरेषु स्तोतव्यम् ऊर्मिम् प्र हिणुत इति ॥ ८ ॥

तं सिन्ध॑वो मत्स॒रमि॑न्द्र॒पान॑मू॒र्मिं प्र हे॑त॒ य उ॒भे इय॑र्ति ।
म॒द॒च्युत॑मौशा॒नं न॑भो॒जां परि॑ त्रि॒तन्तुं॑ वि॒चर॑न्त॒मुत्स॑म् ॥ ९ ॥

तम् । सि॒न्ध॒व॒ः । म॒त्स॒रम् । इ॒न्द्र॒ऽपान॑म् । ऊ॒र्मिम् । प्र । हे॒त॒ । यः । उ॒भे इति॑ । इय॑र्ति ।
म॒द॒ऽच्युत॑म् । औ॒शा॒नम् । न॒भः॒ऽजाम् । परि॑ । त्रि॒ऽतन्तु॑म् । वि॒ऽचर॑न्तम् । उत्स॑म् ॥ ९ ॥

उद्गीथ० हे सिन्धवः! स्यन्दनशीला आपः! यः उभे दृष्टाऽदृष्टफले अस्मभ्यं दातुम् इयर्ति

---

१. नास्ति मूको. २. शुष्मा वि[2]; युष्माकं अ[1]. ३ महात्मा वि[2] अ[1]. ४. °स्ते मूको. ५-५. प्रास्मे हिनो शब्दसम्बधात् द्वितये पादे मूको. ६. उत्स्यन्दिनः मूको. ७. उत्सिपिता वि[1,1]; उत्सपिता वि[2] अ. ८-८. गर्भं मूको. ९. नास्ति मूको. १०. दातव्र मूको. ११. इन्द्रं वि[2] अ[1]. १२. उद्भुतः वि[2] अ[1] १३ °वृष्टं वि[2]; °वृष्टं मेघस्य अ[1]. १४. यज्ञे वि[2] अ[1]. १५-१५. ययो म वि[2] अ[1].

गच्छति कर्माङ्गभावं प्रतिपद्यते, तम् मत्सरम् मदयितारम् इन्द्रादिदेवानां तर्पयितारम् इन्द्रस्य पानं प्राधान्येनेन्द्रेण पातव्यम् ऊर्मिम् उदकसङ्घातम् प्र हेत प्रगमयत प्रेषयतास्मद्यज्ञं प्रत्यङ्गभावाय मदच्युतम् मदस्य च्योतयितारम् उत्पादयितारमित्यर्थः, औशनम् सोमेन सह मिश्रीभवितुं कामयमानम् नभोजाम् नभसि आकाशे अन्तरिक्षे वृष्टिरूपेण जातम् परि सर्वतः त्रितन्तुम् त्रयाणां सवनानां तनितारं विस्तारयितारम् विचरन्तम् विविधं यज्ञपात्रेषु गच्छन्तम् उत्सम् उत्स्यन्दनम् उत्सर्प्तारं[1] देवान् प्रत्यूर्ध्वं गन्तारमित्यर्थः ॥ ९ ॥

**वेङ्कट०** तम् हे सिन्धवः! मदकरम् इन्द्रस्य पातव्यम् ऊर्मिम् प्र हिणुत। यः उभे द्यावापृथिव्यौ प्रेरयति[2], तस्मा इन्द्राय अपि तं शत्रुमदस्य च्यावकम् कामयमानानां हितम् उदकात् जातम् परि प्रेरयत[3] त्रयाणां लोकानां तनितारम् विचरन्तम्[4] उदकानाम् उत्सम् ॥ ९ ॥

आवर्वृततीरध नु द्विधारा गोषुयुधो न नियवं चरन्तीः ।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वन्दस्व सवृधः सयोनीः ॥ १० ॥

आऽवर्वृततीः । अध । नु । द्विऽधाराः । गोषुऽयुधः । न । निऽयवम् । चरन्तीः ।
ऋषे । जनित्रीः । भुवनस्य । पत्नीः । अपः । वन्दस्व । सऽवृधः । सऽयोनीः ॥ १० ॥

**उद्गीथ०** आवर्वृततीः आवृत्ताः[5] अस्मदभिमुखीभूताः अध अथानन्तरम् नु क्षिप्रम् द्विधाराः द्विशब्दोऽत्र अनेकत्वमात्रवचनः। अनेकधारा इत्यर्थः। किमिव। गोषुयुधः न गोषु वृष्टिलक्षणासु अप्सु निमित्तभूतासु मेघेन सह युध्यत इति गोषुयुद्[6] इन्द्रः। तस्य यथा वृष्टिलक्षणा आपः अपर्यन्तधाराः, एवम्। नियवम् निश्चयेन मिश्रणीयं[7] सोमं प्रति चरन्तीः गच्छन्तीः। अथवा नियवशब्देन यवलूनपादमुच्यते। लुप्तोपमं चैतत् पदम्। चरतिरपि भक्षणार्थः। यथा यवलूनपादं गाश्चरन्तीः वन्दते कश्चित्, एवं यवलूनपादस्थानीयं सोमं चरन्तीः हेतुभावेन सञ्चूर्णयन्तीः एकधनाः अपः वन्दस्व प्रणम स्तुहि वा त्वम् हे ऋषे! कर्मणां द्रष्टः! यजमान!। कीदृशीरपः। उच्यते—जनित्रीः जनयित्रीः। कस्य। भुवनस्य सर्वस्य लोकस्य। पत्नीः पालयित्रीश्च सवृधः सह सोमस्य वर्धयित्रीः[8] सयोनीः सोमेन सह समानस्थानाः[9] ॥ १० ॥

**वेङ्कट०** आवर्तमानाः अपि च द्वयोर्लोकयोः धारयित्रीः[10] गोनिमित्तम् युध्यमानाः इव सेना अभिमुखं सञ्चरन्तीः त्वम् ऋषे![11] [12]जनयित्रीः† इव[12] भुवनस्य पालयित्रीः सहवृद्धाः सस्थानाः वन्दस्व अपः ॥ १० ॥

[13]इति सप्तमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः[13] ॥

---

१. उत्सर्पितारं मूको. २. °न्ति मूको. ३. पीणय° मूको. ४. अपि च° वि[2] अ[1]. ५. आवर्ताः मूको. ६. गोषुयद् मूको. ७. मिश्रयणीयं मूको. ८. वर्धयितुः मूको ९. समाम्तानः मूको. १०. °त्री वि[2] अ[1]; °त्रिः वि[1]. ११. ऋषेः वि[2] अ[1]. १२-१२. नास्ति वि[1]. † °त्री वि[2] अ[1]. १३-१३. नास्ति मूको.

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥ ११ ॥

हिनोत । नः । अध्वरम् । देवऽयज्या । हिनोत । ब्रह्म । सनये । धनानाम् ।
ऋतस्य । योगे । वि । स्यध्वम् । ऊधः । श्रुष्टीऽवरीः । भूतन । अस्मभ्यम् । आपः ॥ ११ ॥[1]

उद्गीथ० हिनोत समाप्तिं गमयत वर्धयत वा नः अस्माकम् अध्वरम् यज्ञम् देवयज्या देवयज्यायै देवयागार्थमित्यर्थः । हिनोत गमयत च परिसमाप्तिम् वर्धयत वा ब्रह्म स्तुत्याख्यम् सनये लाभाय धनानाम् दृष्टाऽदृष्टफलप्राप्त्यर्थमित्यर्थः । किञ्च[2] ऋतस्य यज्ञस्य योगे सम्बन्धे वर्तते यदिदम् ऊधः[3] ऊधःस्थानीयम् अधिषवणचर्म तदेतत्[4] प्रति वि स्यध्वम् विमुञ्चतात्मानम्, सोमरसेन सह मिश्रीभूतेन रसेन[5] पूरयतैतदित्यर्थः । अथवा अनुडुद्भ्यां युज्यत इति योगो हविर्धानशकटम् । सामीपिकं चेदमधिकरणम्, 'गङ्गायां गावश्चरन्ति' इति यथा । यज्ञस्य सर्वस्य हविर्धानशकटे सामीपिकाधिकरणभूते यदिदम् ऊधःस्थानीयम् अधिषवणचर्म तदेतत् प्रति विमुञ्चतात्मानमित्यादि पूर्ववद्योज्यम् । एतच्च कुर्वत्यः श्रुष्टीवरीः सुखवत्यः सुखकर्यः भूतन भवत यूयम् अस्मभ्यम् हे आपः ! ॥ ११ ॥

वेङ्कट० प्रेरयत अस्माकम् यज्ञम्[6] देवयागार्थम् । अप्सु हि यज्ञः[7] श्रितः । तदेवाऽऽह — प्रेरयत कर्म लाभाय धनानाम् । यज्ञेन युक्ताः यूयम् आत्मीयम् ऊधः वि स्यध्वम् । सुखवत्यः[8] भवत अस्मभ्यम् हे आपः ! ॥ ११ ॥

आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद् गृणते वयो धात् ॥ १२ ॥

आपः । रेवतीः । क्षयथ । हि । वस्वः । क्रतुम् । च । भद्रम् । बिभृथ । अमृतम् । च ।
रायः । च । स्थ । सुऽअपत्यस्य । पत्नीः । सरस्वती । तत् । गृणते । वयः । धात् ॥ १२ ॥

उद्गीथ० हे आपः ! रेवतीः ! धनवत्यः ! क्षयथ[9] ईशिध्वम् वस्वः वसुनः धनस्य । क्रतुम् च कर्म च भद्रम् कल्याणं सोमयागलक्षणम् बिभृथ धारयथ पुष्णीथ वा [10]अमृतम् अमरणधर्माणम्[10] इन्द्रादिदेवम् च । रायः धनस्य चास्मदीयस्य । कीदृशस्य । स्वपत्यस्य शोभनपुत्रसहितस्य[11] । पत्नीः पालयित्र्यः स्थ भवथ यूयम् । तस्मात् कारणात् सरस्वती वाक् स्तुतिलक्षणा तत् वयः यदन्नम्[12] उत्कृष्टं तत् धात् ददातु[13] गृणते स्तुवते मह्यम् ॥ १२ ॥

वेङ्कट० [14]हे आपः ![14] पशुमत्यः ! ईशिध्वे हि धनस्य[15] । कर्म च भजनीयम् धारयथ अमृतम् च ।

---

१. या. (६,२२) व्याख्यातेयमृग् द्र. २. नास्ति वि[3]. ३ नास्ति मूको. ४. तदेव वि[1,2]. ५. रसेन सह वि[2] अ. ६. यज्ञे वि[1]. ७. °ज्ञ मूको. ८. °यत्ये वि[2] अ[1]; °यत्यौ त्रि[1]. ९. क्षयत वि[2] अ. १०-१०. अमृतत्वामरणधर्माणः मूको. ११. °पुत्रस्य सहि° मूको. १२. तद° मूको. १३. दधातु वि[2]. १४-१४. नास्ति वि[1]. १५. °स्य च वि[1].

धनस्य [१]च सुपुत्रस्य[१] भवथ पालयित्र्यः। सरस्वती तत् इदं सर्वम् गृणते मह्यम् अन्नम् प्रयच्छतु नदी इति[२] ॥ १२ ॥

प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि ।
अध्वर्युभिर्मनसा संविदाना इन्द्राय सोमं सुषुतं भरन्तीः ॥ १३ ॥

प्रति । यत् । आपः । अदृश्रम् । आऽयतीः । घृतम् । पयांसि । बिभ्रतीः । मधूनि ।
अध्वर्युऽभिः । मनसा । सम्ऽविदानाः । इन्द्राय । सोमम् । सुऽसुतम् । भरन्तीः ॥ १३ ॥

उद्गीथ० हे आपः! यत् 'सुपां सुलुक्' (पा ७,१,३९) इति द्वितीयाबहुवचनस्याऽत्र लुक्। याः युष्मान् प्रति अदृश्रम् अभिमुखं दृष्टवानस्म्यहम् आयतीः अस्मद्यज्ञं प्रत्यागच्छन्तीः अङ्गभावाय घृतम् आज्यं सोमसंसृष्टम्[३] पयांसि उदकानि स्वावयवभूतानि मधूनि मधुसदृशानि मृष्टरसानि बिभ्रतीः धारयन्तीः अध्वर्युभिः सह मनसा अन्तःकरणेन संविदानाः सम्भाषमाणाः इन्द्राय इन्द्रार्थम् सोमम् सुषुतम् सुष्ठु सुतम् भरन्तीः हरन्तीः हेतुकर्तृत्वेनास्मद्यज्ञं प्रतिपादयन्तीः, ताः युष्मान् स्तौमि[४] प्रणमामि वेति शेषः ॥ १३ ॥

वेङ्कट० प्रति पश्यामि यदा मत्समीपम् आगच्छन्तीः[५] सरस्वत्याः घृतम् पयांसि मधूनि च धारयन्तीः[६]। तद्धि[७] सर्वं सरस्वत्या विद्यते। तदुक्तम्— 'घृतं पयो दुदुहे नाहुषाय' (ऋ ७,९५,२) [८]इति। अध्वर्युभिः[८] मनसा सङ्गच्छमानाः इन्द्राय सुषुतम् सोमम् भरन्तीः, तदानीं सरस्वती[९] वयोऽधात्[१०] इति ॥ १३ ॥

एमा अंग्मन् रेवतीर्जीवधंन्या अध्वर्यवः सादयंता सखायः ।
नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानासं एनाः ॥ १४ ॥

आ । इमाः । अग्मन् । रेवतीः । जीवऽधन्याः । अध्वर्यवः । सादयत । सखायः ।
नि । बर्हिषि । धत्तन । सोम्यासः । अपाम् । नप्त्रा । सम्ऽविदानासः । एनाः ॥ १४ ॥

उद्गीथ० इमाः वसतीवर्येकधनारूपाः आपः रेवतीः धनवत्यः जीवधन्याः जीवनस्य जीवानां वा वर्धयित्र्यः प्रीणयित्र्यो वा आ अग्मन् आगता अस्मद्यज्ञं प्रति अङ्गभावाय। एतज्ज्ञात्वा हे अध्वर्यवः! सादयत स्थापयत हे सखायः! सखिभूताः! समानाख्यानाः! वा तुल्यकर्मविषय-विज्ञानाः! वेत्यर्थः। क्व सादयाम। उच्यते— बर्हिषि वेदिस्तरणे नि धत्तन नियमेन धारयत

---

१-१. पशुपुत्रस्य वि[१]; च पुत्रस्य च वि[२] अ[१]. २. नास्ति वि[१,२]. ३. होमसृष्टं मूको. ४. नौमि वि[१] अ. ५. °न्ति मूको. ६. °न्ती मूको. ७. एतद्धि वि[१]. ८-८. इत्यध्व° मूको. ९. सरस्वतीं मूको. १०. पयोधा° वि[२] अ[१]; पयोधाम् वि[१].

स्थापयत हे सोम्यासः! सोमसम्पादिनः! अपाम् नप्त्रा देवेन वृष्ट्यधिकारिणा सह संविदानासः सम्मन्त्रयमाणाः [१]एनाः अपः[१] ॥ १४ ॥

**वेङ्कट०** आगताः इमाः पशुमत्यः जीवधन्याः जीवन्तः सर्वे एव धनार्हा यासां तथोक्ताः। हे अध्वर्यवः! सखायः! [२]ताः सादयत[२]। तदेवाऽऽह — बर्हिषि नि धत्तन हे सोमसम्पादिनः! अपाम् नप्त्रा संवादं कुर्वतीः एताः ॥ १४ ॥

आग्मन्नाप॑ उश॒तीर्ब॒र्हिरेदं न्य॑ध्व॒रे अ॑सदन् दे॒व॒यन्तीः॑ ।
अध्व॑र्यवः सुनु॒तेन्द्रा॑य॒ सोम॒मभू॑दु वः सु॒शका॑ देव॒य॒ज्या ॥ १५ ॥

आ । अ॒ग्म॒न् । आप॑ः । उ॒श॒तीः । ब॒र्हिः । आ । इ॒दम् । नि । अ॒ध्व॒रे । अ॒स॒द॒न् । दे॒व॒ऽयन्तीः॑ ।
अध्व॑र्यवः । सु॒नु॒त । इन्द्रा॑य । सोम॑म् । अभू॑त् । ऊँ इति॑ । व॒ः । सु॒ऽशका॑ । दे॒व॒ऽय॒ज्या ॥ १५ ॥

**उद्गीथ०** आ अग्मन् आगतवत्यः आपः वसतीवर्यैकधनाख्याः उशतीः कामयमानाः। किम्। बर्हिः[३] इदम् वेदिस्तरणम्। आगत्य [४]याः अध्वरे[४] यज्ञे आ नि असदन् मर्यादया निषण्णा उपविष्टाः देवयन्तीः देवान् कामयमानाः तर्पयितुमिच्छत्य इत्यर्थः। एतज्ज्ञात्वा हे अध्वर्यवः! सुनुत अभिषुणुत इन्द्राय इन्द्रार्थम् सोमम्। इदानीम् अपां प्रसादात् अभूत् भूता संवृत्ता वा युष्माकम् सुशका सुष्ठु शकनीया अयत्नसाध्या देवयज्या सोमेनेन्द्रादिदेवयाग इत्यर्थः ॥ १५ ॥

**वेङ्कट०** आगताः आपः कामयमानाः इदम् [५]बर्हिः। आगताश्च[५] नि असीदन् देवकामाः यज्ञे। हे अध्वर्यवः! सुनुत इन्द्राय सोमम्। आसीत् हि युष्माकम् कर्तुं सुशक्यः[६] देवयज्ञः[७] ॥ १५ ॥

[८]इति सप्तमाष्टके सप्तमाध्याये षड्विंशो वर्गः[८] ॥

## [ ३१ ]

[८]ऐलूषः कवष ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः[८]।

आ नो॑ दे॒वाना॒मुप॑ वेतु॒ शंसो॒ विश्वे॑भिस्तु॒रैरव॑से॒ यज॑त्रः ।
तेभि॑र्व॒यं सु॑ष॒खायो॑ भवेम॒ तर॑न्तो॒ विश्वा॑ दु॒रि॒ता स्या॑म ॥ १ ॥

आ । न॒ः । दे॒वाना॑म् । उप॑ । वे॒तु॒ । शंसः॑ । विश्वे॑भिः । तु॒रैः । अव॑से । यज॑त्रः ।
तेभि॑ः । व॒यम् । सु॒ऽस॒खायः॑ । भ॒वे॒म॒ । तर॑न्तः । विश्वा॑ । दुः॒ऽइ॒ता । स्या॒म॒ ॥ १ ॥

---

१-१. नो आपः मूको. २-२. नास्ति वि[१]. ३. बर्हिरेव वि[२] अ. ४-४. याध्वरे मूको. ५-५. बर्हिरत्र गताश्च वि[२] अ[१]. ६. शक्या मूको. ७. °यज्ञाः वि[२] अ[१]; °यज्ञ वि[१]. ८-८. नास्ति मूको.

उद्गीथ० उत्तरं सूक्तम् 'आ नो देवानाम्' इत्येकादशर्चं वैश्वदेवम् ऐलूषो ददर्श। नः उप आ वेतु अस्मान् उपागच्छतु 'सम्प्राप्नोतु। किम्'। देवानाम् विश्वेषां सम्बन्धी शंसः शंस इति कान्तिकर्मा। शंसः कान्तिरिच्छा अभिप्रायः, अनुग्रहबुद्धिरित्यर्थः। कथमागच्छतु[2]। विश्वेभिः तुरैः सर्वैः त्वरणैः शीघ्रमित्यर्थः। किमर्थमागच्छतु। अवसे अस्माकं रक्षणार्थम्। कीदृशः शंसः। यजत्रः यष्टव्यः पूजयितव्यः। किञ्च तेभिः तैर्देवैः सखिभिः वयम् सुषखायः शोभनसखायः भवेम इत्याशास्महे। तत्प्रसादाच्च तरन्तः अतिगच्छन्तः[3] विश्वा सर्वाणि[4] दुरिता पापानि स्याम इत्येतदाशास्महे वयम् ॥ १ ॥

वेङ्कट० उप आ गच्छतु अस्मान् स्तोतॄणाम् स्तोतव्य इन्द्रः विश्वेभिः क्षिप्रैः मरुद्भिः सह रक्षणार्थम् अस्माकं यष्टव्यः। तैः वयम् शोभनसखायः भवेम[5]। विश्वानि च[6] दुरितानि तरन्तः च स्याम ॥ १ ॥

परि॑ चि॒न्मर्तो॑ द्रवि॑णं ममन्यादृ॒तस्य॑ प॒था नम॒सा वि॑वासेत् ।
उ॒त स्वेन॒ क्रतु॑ना॒ सं व॑देत॒ श्रेयां॑सं॒ दक्षं॒ मन॑सा जगृभ्यात् ॥ २ ॥

परि॑ । चि॒त् । मर्तः॑ । द्रवि॑णम् । म॒म॒न्या॒त् । ऋ॒तस्य॑ । प॒था । नम॑सा । आ । वि॒वा॒से॒त् ।
उ॒त । स्वेन॑ । क्रतु॑ना । सम् । व॒दे॒त॒ । श्रेयां॑सम् । दक्ष॑म् । मन॑सा । ज॒गृ॒भ्या॒त् ॥ २ ॥

उद्गीथ० विश्वेषां देवानां यागार्थम् परि चित् अप्रतिनिषिद्धात्[7] सर्वतः मर्तः मनुष्योऽधिकृतः द्रविणम् धनम् ममन्यात् मन्यतिः कान्तिकर्मा। कामयेत लब्धुमिच्छेत्। लब्ध्वा च धनम् ऋतस्य यज्ञस्य पथा यथोक्तेन मार्गेण विधिना नमसा हविरन्नेन आ विवासेत् परिचरेत्[8]। परिचरणकाले च उत अपि स्वेन क्रतुना आत्मीयेन विज्ञानेन मनसेत्यर्थः, सम् वदेत संवादोऽत्र सामर्थ्यात् ध्यानमुच्यते। हविर्गृहीत्वा वषट्करिष्यन् विश्वान् देवान् मनसा ध्यायेदित्यर्थः। विश्वेदेवानां[9] यागानन्तरञ्च तत्प्रसादात् श्रेयांसम् प्रशस्यतरम् दक्षम् वृद्धं सर्वव्यापिनम् मनसा ध्यानसाधनेनाऽन्तःकरणेन जगृभ्यात् अत्यर्थं गृह्णीयाद् ध्यायेत्, चलितञ्च तत्त्वचिन्तयाऽऽत्मन्येव[10] समादध्यादित्यर्थः ॥ २ ॥

वेङ्कट० अयं मनुष्यः देवानां प्रसादेन धनम् परि ममन्यात् आत्मीयबुद्धिं धने करोतु। यज्ञस्य मार्गेण गच्छन् अन्नेन देवांश्च परिचरतु[11]। अपि च आत्मीयेन प्रज्ञानेन शुश्रूषमाणैः [12]अन्यैः सम्भाषणं[12] करोतु। श्रेयांसम् प्रवृद्धतपस्कं[13] च अतिथिम्[14] मनसा गृह्णातु ॥ २ ॥

अधा॑यि धी॒तिरस॑सृग्र॒मंशा॑स्ती॒र्थे न द॒स्ममुप॑ य॒न्त्यूमाः॑ ।
अ॒भ्या॑नश्म सु॒वि॒तस्य॑ शू॒षं नवे॑दसो अ॒मृता॑नामभूम ॥ ३ ॥

---

१-१. ॰प्राप्नोतुर्कं वि[1]; ॰प्राप्तोदकं वि[2]; प्राप्नोतुतं अ[1]. २. ॰गच्छत वि[2] अ. ३. अभिग॰ मूको. ४. सर्वा मूको. ५. ॰महि वि[2] अ[1]. ६. नास्ति वि[2]. ७. अभिप्रति॰ वि[2] अ. ८. परिचरत मूको. ९. विश्वेदेवा मूको. १०. वतचि॰ मूको. ११. ॰चर त्वम् वि[2] अ[1]; ॰चरन्तु वि[1]. १२-१२. अन्यसं॰ वि[2] अ[1]. १३. संप्र॰ वि[1]. १४. ॰थि वि[2] अ[1].

अधायि । धीतिः । असंसृग्रम् । अंशाः । तीर्थे । न । दस्मम् । उप । यन्ति । ऊर्माः

अभि । आनश्म । सुवितस्य । शूषम् । नवेदसः । अमृतानाम् । अभूम ॥ ३ ॥

**उद्गीथ०** अधायि निहिता स्थापिता प्रवर्त्तिताऽस्माकम् धीतिः देवयागक्रिया[1]। इदानीम् असंसृग्रम् असमानसृष्टिम् उत्कृष्टजन्मानमित्यर्थः। कम्[2]। विश्वदेवसङ्घम्। अंशाः हविर्भागाः तीर्थेन[3](?) तीर्थदेशेन दस्मम् शत्रूणामुपक्षपयितारं दर्शनीयं वा उप यन्ति लोडर्थेऽत्र लट् [4]लेड् वा[4]। उपयन्तु उपगच्छन्तु स्वीभवन्तः ऊमाः अवितारः तर्पयितारः। तृप्ते च सति सर्वदेवगणे तत्प्रसादाद् वयम् अभि आनश्म व्याप्नुयाम प्राप्नुयामेत्याशास्महे सुवितस्य सु इतस्य[5] सुगतस्य स्वर्गादिकस्य सुतस्य वा प्रजायाः सम्बन्धि शूषम् बलं सुखलक्षणं स्वर्गादिसुखम् अपत्यसुखं वेत्यर्थः। किंच[6] नवेदसः अमृतानाम् अभूम न न वेत्ति वेत्त्येवैतस्मिन्नर्थे नवेदश्शब्दं वैयाकरणा निपातयन्ति 'नभ्राण्नपान्नवेदानासत्या' ( पा ६,३,७५ ) इति। न न वेत्तारो वेत्तार एव स्वरूपतो ज्ञातार एव वयम् अमृतानाम् अभूम भवेमेत्येतदाशास्महे ॥ ३ ॥

**वेङ्कट०** पिपासिते मयि देवैः बुद्धिः[7] निहिता[8]। विसृष्टाः च अस्मदीया अपाम् अंशाः। तीर्थे इव दर्शनीयम् माम्[9] उप गच्छन्ति आपोऽविभ्यः[10]। अभिप्राप्ताः कल्याणस्य कर्मणः [11]सुखम्। ज्ञातारः[11] च देवानाम् अभूम। 'नवेदाः' (निघ ३,१५) इति मेधाविनामसु पठितम् इति ॥३॥

नित्यश्चाकन्यात् स्वपतिर्दमूना यस्मा उ देवः सविता जजान ।
भर्गो वा गोभिरर्यमेमनज्यात् सो अस्मै चारुश्छदयदुत स्यात् ॥ ४ ॥

नित्यः । चाकन्यात् । स्वऽपतिः । दमूनाः । यस्मै । ऊँ इति । देवः । सविता । जजान ।

भर्गः । वा । गोभिः । अर्यमा । ईम् । अनज्यात् । सः । अस्मै । चारुः । छदयत् । उत । स्यात् ॥ ४ ॥

**उद्गीथ०** नित्यः कल्पावस्थायी प्रजापतिः चाकन्यात्[12] कामयताम्। किम्। सामर्थ्यात् दृष्टाऽदृष्टफलम्। तस्मै दातुम् स्वपतिः स्वासां[13] प्रजानां स्वामी दमूनाः दममना वा दान्तमना वा (तु० या ४,४)। कस्मै। यस्मै यजमानाय मह्यम् देवः सविता जजान जनितवान्। दृष्टाऽदृष्टफलं च दातुम् छदयत् कामयतामित्येतदाशास्महे वयम् ॥ ४ ॥[14]

**वेङ्कट०** अजस्रः[15] कामयताम् अस्मान् धनपतिः दममनाः अग्निः। यस्य होमार्थं प्रातः देवः सविता प्रादुर्भवति, [16]तम् ईम् इमम् अग्निम्[16] भगः अर्यमा वा[17] गोभिः अनक्ति रश्मिभिः। [18]सः अग्निः[18] कल्याणः अस्मै मह्यं छन्दयतु उपच्छन्दयतु[19] माम्, अपि च भवतु मद्गृह इति ॥ ४ ॥

---

१. °गवया मूको. २. किम् मूको. ३. तदर्थेन मूको. ४-४. लोड् वा वि[1]; वोच्चा वि[1] अ. ५. इत्यस्य मूको. ६. किम् मूको. ७. °द्धिम् मूको. ८. °ताश्च वि[2] अ[1]. ९. अपाम् वि[1,2]. १०. °विरूपः वि[2] अ[1]; °वित्र्यः वि[1]. ११-११. सुखवितारः वि[2] अ[1]. १२. चकन्यात् मूको. १३. स्वसां मूको. १४. मूको. उत्तरार्धस्य व्याख्यानम् अपूर्णं द्र. १५. °स्रम् वि[2] अ[1]. १६-१६. तमिममग्निम् वि[2] अ[1]; तमिमग्नि वि[1]. १७. नास्ति वि[1]. १८-१८. नास्ति वि[1]. १९. नास्ति वि[2] अ[1].

इयं सा भूया उषसामिव क्षा यद्ध क्षुमन्तः शवसा समायन् ।
अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यन्तु वाजाः ॥ ५ ॥

इयम् । सा । भूयाः । उषसाम्ऽइव । क्षाः । यत् । ह । क्षुऽमन्तः । शवसा । सम्ऽआयन् ।
अस्य । स्तुतिम् । जरितुः । भिक्षमाणाः । आ । नः । शग्मासः । उप । यन्तु । वाजाः ॥ ५ ॥

**उद्गीथ०** यत् 'सुपां सुलुक्' ( पा ७,१,३९ ) इति द्वितीयैकवचनस्य लुक् । ह इति पदपूरणः । यां स्तुतिं यागक्रियां वा क्षुमन्तः क्षुशब्देनान्नमुच्यते शब्दो वा । हविरन्नेनान्नवन्तः शब्दवन्तो वा, स्तुतिमन्तः कीर्तिमन्तो वेत्यर्थः । के । देवाः सर्वे शवसा सर्वेण बलेन समायन् समागताः सम्प्राप्ताः । सा इयम् अस्मदीया स्तुतिः यागक्रिया वा भूयाः पुरुषव्यत्ययः कार्यः । भूयात्[1] भवतु । किम् । सामर्थ्यात् देवानां व्याप्त्या । किमिव । उषसाम् इव क्षाः यथोषसां द्यावापृथिवी । एवं देवप्रसादात् सगुणा भवतु, सगुणत्वाच्च देवाः परया प्रीत्या अङ्गभावमुपगच्छन्त्वित्यर्थः । [2]अस्य मम जरितुः स्वभूताम् स्तुतिम् भिक्षमाणाः याचमानाः श्रोतुमिच्छन्त इत्यर्थः, नः अस्मान् आ उप यन्तु मर्यादयोपगच्छन्तु विशेषेण वाजाः सुधन्वनः पुत्रास्त्रयोऽपि ऋभुः विभ्वा वाज इत्येते । कीदृशाः । शग्मासः 'शग्मम्' ( निघ ३,६ ) इति सुखनाम । सुखाः सुखकराः सुखसेव्या वेत्यर्थः[2] ॥ ५ ॥

**वेङ्कट०** सा इयम् स्तुतिः मम च[3] भवतु निवसताम् इव मनुष्याणां पृथिवी, यदा[4] खलु स्तुतिमन्तो देवाः वेगेन मयि समागच्छन्ति । अस्य मम स्तुतिम् स्तोतुः याचमानाः अस्मान् [5]उप आ गच्छन्तु[5] शक्ताः[6] सुखकराः वाजाः सौधन्वनाः ॥ ५ ॥

[7]इति सप्तमाष्टके सप्तमाध्याये सप्तविंशो वर्गः[7] ॥

अस्येदेषा सुमतिः पप्रथानाभवत् पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥ ६ ॥

अस्य । इत् । एषा । सुऽमतिः । पप्रथाना । अभवत् । पूर्व्या । भूमना । गौः ।
अस्य । सऽनीळाः । असुरस्य । योनौ । समाने । आ । भरणे । बिभ्रमाणाः ॥ ६ ॥

**उद्गीथ०** अस्य इत् इच्छब्दोऽत्र उपमार्थे, पूर्व्याशब्दाच्च[8] परो द्रष्टव्यः । अस्य यजमानस्य स्वभूता एषा सुमतिः सुस्तुतिः पप्रथाना विस्तार्यमाणा अस्माभिः क्रियमाणेत्यर्थः, अभवद् भूता संवृत्ता पूर्व्या इत् पूर्वकालीनेव । पूर्वस्मिन् काले यादृशी उत्कृष्टा स्तुतिरासीत् तादृशी इदानीमपि सञ्जातेत्यर्थः । भूमना भूम्ना बहुत्वेन च, युक्तेति शेषः, सर्वदेवसम्बन्धित्वात् बह्वीव सञ्जातेत्यर्थः, गौः सर्वान् देवान् प्रति गन्त्री च संवृत्तेत्यर्थः । एतज्ज्ञात्वा सर्वे देवाः सनीळाः समानस्थानाः अस्य मम यजमानस्य असुरस्य प्रज्ञावतः

---

१. भूयाः मूको. २-२. नास्ति वि[3]. ३. नास्ति वि[3]. ४. यथा अ[1]. ५-५. °न्त वि[3] अ[1]; उपगच्छन्तु वि[1]. ६. शक्ता मूको. ७-७. नास्ति मूको. ८. पूर्वश° मूको.

स्वभूते योनौ स्थाने यज्ञाख्ये वेद्याख्ये वा समाने सर्वदेवसाधारणे[1] भरणे[2] सर्वस्य जगतो धारणसमर्थे पोषणसमर्थे च । आ इत्युपसर्गश्रुतेः गच्छन्त्विति[3] शेषः । कथम्भूता आगच्छन्तु । उच्यते — बिभ्रमाणाः दृष्टादृष्टफलम् अस्मभ्यं धारयन्तः, गृहीत्वेत्यर्थः ॥ ६ ॥

वेङ्कट० अस्य एव इन्द्रस्य एषा सुमतिः पप्रथाना भवति, यद् अभूत् प्रला पृथिवी भूम्ना युक्ता। 'अप्रथयत इन्द्रः पृथिवीम्' ( तु. माश ६,१,१,१५, ) इति । अपि च अस्य स्थाने बलवतः सनीळाः सर्वेषां साधारणे धारके भ्रममाणा भवन्ति मरुतः अन्तरिक्षे ॥ ६ ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
संतस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त ॥ ७ ॥

किम् । स्वित् । वनम् । कः । ऊँ इति । सः । वृक्षः । आस । यतः । द्यावापृथिवी इति । निःऽततक्षुः । सन्तस्थाने इति सम्ऽतस्थाने । अजरे इति । इतऊती इतीतःऽऊती । अहानि । पूर्वीः । उषसः । जरन्त ॥

उद्गीथ० किम् स्वित् वनम् किम् पुनः तदुपादानकाष्ठं मृत्पिण्डस्थानीयम् । अस्य प्रश्नस्य [4]प्रतिवचनम् सामर्थ्यात्[4] प्रधानमिति द्रष्टव्यम्, तस्योपादानकारणत्वात् । कः उ सः वृक्षः आस कश्च पुनः स मूलकारणं वृक्षः पृथिवीस्थानीयः[5], यस्यावयवः प्रधानम् उपादानकारणम् । अस्य प्रतिवचनं[6] सामर्थ्यात् परमात्मा, तस्य मूलकारणत्वात् । यतः उपादानकारणाद् मूलकारणाच्च द्यावापृथिवी निष्टतक्षुः । तक्षतिः करोतिकर्मा निष्कृष्य कृतवन्तो देवा विश्वसृजः । कीदृश्यौ द्यावापृथिव्यौ । सन्तस्थाने सम्भूय स्थिते सुप्रतिष्ठिते[7] वेत्यर्थः, अजरे जरावर्जिते इतऊती इत एभ्यः प्रकृतेभ्यो देवेभ्यः ऊतिः[8] अवनं रक्षणं ययोस्ते इतऊती [9]देवरक्षिते इत्यर्थः[9] । अथवा इतश्चेतश्च गतिर्वृद्धिर्वा ययोस्ते इतऊती सर्वतो गते वृद्धे वेत्यर्थः । अहानि पूर्वीः अनादिकालप्रवृत्ताः उषसः च निष्टतक्षुः देवाः । य एवं सामर्थ्ययुक्ता देवाः, तान् सर्वे स्तोतारः जरन्त स्तुवन्तीत्यर्थः ॥ ७ ॥

वेङ्कट० किम् स्वित् अरण्यम्, कः वा वृक्षः सः आस, यस्मिन्नरण्ये स वृक्षः जातः, यस्माद् वृक्षाद् इमे द्यावापृथिव्यौ निष्टतक्षुः । ते इमे द्यावापृथिव्यौ सह तिष्ठन्त्यौ जरावर्जिते इतऊती । अस्माद् रक्षणं ययोः वृक्षात् ते तथोक्ते । अहानि बह्वीः च उषसः । ते द्यावापृथिव्यौ स्तुवन्ति स्तोतारः । ते कुरुत प्रादुर्भूते इति ॥ ७ ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान् यदीं सूर्यं न हरितो वहन्ति ॥ ८ ॥

---

१. °देवासा° मूको. २. भरणे भरणे वि[२] अ[१]. ३. आग° मूको. ४-४. °वचनसाम° मूको. ५. °स्थायः वि[२] अ; °स्थानः वि[१]. ६. °वचनमानसभूवस्थिते । सुप्रतिष्ठिते वा इत्यर्थः । अजरे जरावर्जिते । इतऊती इतएभ्यः प्रकृतेभ्यो देवेभ्यः ऊतीरवनं रक्षणं ययोस्ते इतऊती मूको. ७. नास्ति मूको. ८. ऊतीः मूको. ९-९. वेरक्षिते वेत्यर्थः मूको.

न । एतावत् । एना । परः । अन्यत् । अस्ति । उक्षा । सः । द्यावापृथिवी इति । बिभर्ति ।
त्वचम् । पवित्रम् । कृणुत । स्वधाऽवान् । यत् । ईम् । सूर्यम् । न । हरितः । वहन्ति ॥ ८ ॥

**उद्गीथ०** न एतावत् नैतावद्[1] देवजातं सामर्थ्ययुक्तम् । किन्तर्हि । एना एभ्यो देवेभ्यः परः उत्कृष्टः अन्यत् अन्यः हिरण्यगर्भः अस्ति उक्षा सेक्ता प्रजानां स्रष्टेत्यर्थः । सः हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिङ्गात्मा अन्तरनुप्रविश्य द्यावापृथिवी बिभर्ति धारयति । किञ्च त्वचम् पवित्रम् मन्त्रं तन्मयीमात्मीयां त्वचं तनुमित्यर्थः, दीप्तं वा मन्त्रम् कृणुत करोति स्वधावान् । कदा करोति । यत् यदा ईम् इमाम्[2] त्वचम् सूर्यम् हरितः अश्वाः न वहन्ति, तदा [3]देवसृष्टेः प्रागित्यर्थः[3] ॥ ८ ॥

**वेङ्कट०** अस्य परस्तात् एतावत् प्रमाणम् अन्यत् भूतम् न अस्ति । सः सेक्ता द्यावापृथिव्यौ धारयति । सोऽयम् त्वचम् आत्मीयां दीप्तिम् पवित्रम् करोति [4]बलवान्, यत् एनाम् हरयः[4] वहन्ति सूर्यम् इव तदीया अश्वाः ॥ ८ ॥

स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥ ९ ॥

स्तेगः । न । क्षाम् । अति । एति । पृथ्वीम् । मिहम् । न । वातः । वि । ह । वाति । भूम ।
मित्रः । यत्र । वरुणः । अज्यमानः । अग्निः । वने । न । वि । असृष्ट । शोकम् ॥ ९ ॥

**उद्गीथ०** स्तेगः 'स्त्यै ष्ट्यै शब्दसङ्घातयोः' । रश्मिसङ्घात आदित्यः क्षाम्[5] पृथिवीम् पृथ्वीम् विस्तीर्णाम् न अति एति नातिगच्छति[6] तेजसा समस्तां न व्याप्नोति । पृथिवी स्तूयते । मिहम् सर्वस्य सेक्त्रीं[7] वृष्टिम् वातः मध्यस्थानो देवो वृष्टिकर्मण्यधिकृतः न ह नैव वि वाति वातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । विविधं गमयति भूम भूम्ना बहुत्वेन । सर्वां वृष्टिं न पातयत्यसामर्थ्यात्, सावशेषामेव पातयतीत्येवं वृष्टिः स्तूयते । अथवा स्तेगो [8]रश्मिसङ्घातरूप आदित्यः पृथिवीं नात्येति इति आदित्यः स्तूयते । एवं वातो वृष्टिं न विविधं[8] गमयति भूमिं प्रति सावशेषमेव वर्षतीति वातः स्तूयते । यत्र प्रजापतौ मित्रः च वरुणः च ······ ॥ ९ ॥

**वेङ्कट०** स्तेगः[9] नाम मण्डूकवद् वर्षासु प्रादुर्भवति । सः स्तेगः न विस्तीर्णाम् भूमिम् इतस्ततः अति[10] गच्छति । वृष्टिम्[11] च वातः न मध्ये गच्छति महतीम् । मित्रावरुणौ तेजोभिः अज्यमानः दवाग्निः[12] अरण्ये इव वि सृजतः[13] [14]स्वं रश्मिं[14] यस्मिन्काले ग्रीष्मवसन्तयोः ॥ ९ ॥

---

१-१. °ताव मूको. २. रम्मः मूको. ३-३. देविसृष्टेः प्रतीत्येत्यर्थः वि[२] अ[१]. ४-४. °वान्नयेन ह° वि[२] अ[१]; °नान्यभ्य ह° वि[१]. ५. क्ष्मां वि[२] अ[१]. ६. नाग° मूको. ७. सेक्तिं मूको. ८. °रूपामतिवि° वि[२] अ[१]; °रूपमवि° वि[१,३]. ९. स्तोको वि[२] अ[१]. १०. अभि वि[२] अ[१]. ११. वृष्टिः मूको. १२. देवा° मूको. १३. °तम् वि[२] अ[१]; °त वि[१]. १४-१४. स रश्मीन् वि[२] अ[१].

स्तरीर्यत् सूत सद्यो अज्यमाना व्यथिरव्यथीः कृणुत स्वगोपा ।
पुत्रो यत् पूर्वः पित्रोर्जनिष्ट शम्यां गौर्जगार यद्ध पृच्छान् ॥ १० ॥

स्तरीः । यत् । सूत । सद्यः । अज्यमाना । व्यथिः । अव्यथीः । कृणुत । स्वऽगोपा ।
पुत्रः । यत् । पूर्वः । पित्रोः । जनिष्ट । शम्याम् । गौः । जगार । यत् । ह । पृच्छान् ॥ १० ॥

वेङ्कट० निवृत्तप्रसवा यदा पुत्रं सूते, तदानीम् एव निषिच्यमानरेतस्का सा शत्रूणां व्यथयित्री स्वभूतरक्षणा व्यथारहिताः करोति प्रजा इति शमीम् आह। अग्नेः जनयित्रोः पुत्रः यदा[1] प्रत्नः अग्निः अरण्योः जायते, तदानीम् इयं पृथिवी काञ्चित् शम्याम् उद्गिरति। शम्या शम्याम् उद्गिरति। [2]शम्या शमी[2]। [3]इमाम् शमीं[3] पृच्छन्ति[4] यियक्षवः। शम्यागर्भाद् अश्वत्थाद् अरण्योः आहरणम् इति ॥ १० ॥

उत कण्वं नृषदः पुत्रमाहुरुत श्यावो धनमादत्त वाजी ।
प्र कृष्णाय रुशदपिन्वतोधर्ऋतमत्र नकिरस्मा अपीपेत् ॥ ११ ॥

उत । कण्वम् । नृऽसदः । पुत्रम् । आहुः । उत । श्यावः । धनम् । आ । अदत्त । वाजी ।
प्र । कृष्णाय । रुशत् । अपिन्वत । ऊधः । ऋतम् । अत्र । नकिः । अस्मै । अपीपेत् ॥ ११ ॥

वेङ्कट० अपि च कण्वम् ऋषिम् नृषदः पुत्रम् आहुः। स श्याववर्णः सन् अस्मात्[5] अग्नेः हविष्मान् धनम् आ अदत्त। अपि च अस्य अग्नेः ऊधः[6] कृष्णवर्णाय नार्षदाय कण्वाय श्वेतं रूपम् [7]प्र अपिन्वत[7]। तद्व्यतिरिक्तोऽन्यो न अस्मै कण्वाय इत्थं यज्ञम् अवर्धयत्। 'युवं श्यावाय रुशतीमदत्तम्' ( ऋ १,११७,८ ) इत्युक्तम् ॥ ११ ॥

[8]इति सप्तमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[8] ॥

## [ ३२ ]

[8]कवष ऐलूष ऋषिः। इन्द्रो देवता। जगती छन्दः, अन्त्याश्चतस्रस्त्रिष्टुभः[8]।

प्र सु ग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभि षु प्रसीदतः ।
अस्माकमिन्द्र उभयं जुजोषति यत् सोम्यस्यान्धसो बुबोधति ॥ १ ॥

प्र । सु । ग्मन्त । धियसानस्य । सक्षणि । वरेभिः । वरान् । अभि । सु । प्रऽसीदतः ।
अस्माकम् । इन्द्रः । उभयम् । जुजोषति । यत् । सोम्यस्य । अन्धसः । बुबोधति ॥ १ ॥

---

१. यथा वि[2] अ[1]. २-२. शमी शमी वि[2] अ[1]. ३-३. यामशरी वि[2]; यामशरीरं अ[1]; या शमी वि[1] ४. प्रयच्छन्ति वि[2] अ[1]. ५. 'स्मान् मूको. ६. त्रुटितम् वि[2] अ[1]; कसः वि[1]. ७-७. प्रापिबन वि[2] अ[1]; प्रपिन्वत मूको. ८-८ नास्ति मूको

**वेङ्कट०** प्र नयति मम सुष्ठु (मम परा[1] सङ्गच्छमानौ वधूवरौ[2] चिन्तयतः सचनार्थम्[3]। अभि नयति च सुष्ठु प्रसीदतः कन्याप्रदातुः वरान् अस्मदीयैः वरैः। अस्माकम् इन्द्रः उभयम् सेवते मानार्थं[4] कुलम्, यदि सोममयम् अन्नम् सेवत इति ॥ १ ॥

वीन्द्र यासि दिव्यानि रोचना वि पार्थिवानि रजसा पुरुष्टुत ।
ये त्वा वहन्ति मुहुरध्वराँ उप ते सु वन्वन्तु वग्वनाँ अराधसः ॥ २ ॥

वि । इन्द्र । यासि । दिव्यानि । रोचना । वि । पार्थिवानि । रजसा । पुरुऽस्तुत ।
ये । त्वा । वहन्ति । मुहुः । अध्वरान् । उप । ते । सु । वन्वन्तु । वग्वनान् । अराधसः ॥ २ ॥

**वेङ्कट०** वि यासि इन्द्र! दिव्यान् लोकान्, अपि च पार्थिवान् लोकान् बहुभिः स्तुत!। ये त्वाम्[5] 'उप आ वहन्ति[6] मुहुः अध्वरान् प्रति, ते सुष्ठु भजन्तां[7] वाचा 'भजमानान् अधनान्[8] अस्मान् धनप्रदानार्थम् इति ॥ २ ॥

तदिन्मे छन्त्सद्वपुषो वपुष्टरं पुत्रो यज्जानं पित्रोरधीयति ।
जाया पतिं वहति वग्नुना सुमत्पुंस इद्भद्रो वहतुः परिष्कृतः ॥ ३ ॥

तत् । इत् । मे । छन्त्सत् । वपुषः । वपुःऽतरम् । पुत्रः । यत् । जानम् । पित्रोः । अधिऽइयति ।
जाया । पतिम् । वहति । वग्नुना । सुऽमत् । पुंसः । इत् । भद्रः । वहतुः । परिऽकृतः ॥ ३ ॥

**वेङ्कट०** तत्[9] एव[10] मह्यम् इच्छतु वपुष्मतो वपुष्मत्तरम् अत्यन्तं सुरूपम्, पुत्रः यत् जननादागतं धनम् पित्रोः सकाशात् अधिगच्छति। जाया पतिम् आत्मसमीपं प्रापयति शब्देन[11] कल्याणेन। पुंसः एव भजनीयः अर्थः संस्कृतः प्रदातव्यः जायायै। तदुक्तम्—'सुभद्रमर्य भोजनं बिभर्षि' ( ऋ ८,१,३४ ) इति ॥ ३ ॥

तदित्सधस्थमभि चारु दीधय गावो यच्छासन्वहतुं न धेनवः ।
माता यन्मन्तुर्यूथस्य पूर्व्याभि वाणस्य सप्तधातुरिज्जनः ॥ ४ ॥

तत् । इत् । सधऽस्थम् । अभि । चारु । दीधय । गावः । यत् । शासन् । वहतुम् । न । धेनवः ।
माता । यत् । मन्तुः । यूथस्य । पूर्व्या । अभि । वाणस्य । सप्तऽधातुः । इत् । जनः ॥ ४ ॥

**वेङ्कट०** तत् एव सधस्थम् कल्याणम् अभि धारय अस्माकम्। यस्मिन् स्थाने धेनवः गावः

---

१. परां वि[2] अ[1]. २. पत्नीव° वि[1]. ३. सपानार्थम् वि[1]. ४. सन्धानार्थम् वि[1]. ५. त्वा वि[1]. ६-६. उपाह्वयन्ति अ[1]; नास्ति वि[1]. ७. °ता मूको. ८-८. भजमानां धनान् वि[2] अ[1]; भजमानानां ध° भजमानानधनन् वि[1]. ९. सत् तत् वि[1]. १०. एवं वि[2] अ[1]. ११. शब्द वि[2] अ[1]; शब्दे वि[1].

वहतुम् इदानीम् अनुशासति। [1]येन उह्यते पुरुषः स वहतुः। अन्नं पयो दधि घृतम् इत्यादिकमिदानीं भोक्तव्यम् इति प्रकटयन्ति इत्यर्थः। यस्मिन् च पुत्रसमूहस्य मुख्या सम्मन्तव्या माता अभि गच्छति, यथा †वाणस्य अभिगच्छति† सप्तधातुः ‡जायमानः स्वरः‡[1] ॥ ४ ॥

प्र वोऽच्छा रिरिचे देवयुष्पदमेको रुद्रेभिर्याति तुर्वणिः ।
जरा वा येष्वमृतेषु दावने परि व ऊमेभ्यः सिञ्चता मधु ॥ ५ ॥

प्र । वः । अच्छ । रिरिचे । देवऽयुः । पदम् । एकः । रुद्रेभिः । याति । तुर्वणिः ।
जरा । वा । येषु । अमृतेषु । दावने । परि । वः । ऊमेभ्यः । सिञ्चत । मधु ॥ ५ ॥

**वेङ्कट०** [2]प्र रिरिचे युष्माकं स्थानं प्रति[2] देवकामः होता। इन्द्रः च एकः मरुद्भिः सह याति क्षिप्रः। स्तुतिः अपि येषु अमृतेषु धनप्रदानाय भवति, तेभ्यो रक्षितृभ्यः परि सिञ्चत[3] यूयं सोमम् इति ॥ ५ ॥

[4]इति सप्तमाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः[4] ॥

निधीयमानमपगूळ्हमप्सु प्र मे देवानां व्रतपा उवाच ।
इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ ६ ॥

निऽधीयमानम् । अपऽगूळ्हम् । अप्ऽसु । प्र । मे । देवानाम् । व्रतऽपाः । उवाच ।
इन्द्रः । विद्वान् । अनु । हि । त्वा । चचक्ष । तेन । अहम् । अग्ने । अनुऽशिष्टः । आ । अगाम् ॥

**वेङ्कट०** अस्मिन् यज्ञे निधीयमानम् त्वाम् अप्सु[5] अपगूळहम्[6] तासु[7] अपरोक्षं वर्तमानम् प्र उवाच मे देवानाम् कर्मणो रक्षकः। तदेवाऽऽह—इन्द्रः जानन् अग्ने! अनु हि त्वा चचक्ष। तेन अनुशिष्टः अहम् अग्ने! अत्र आ अगाम् इति कुरुश्रवणस्य यज्ञे निधीयमानम् अग्निम् आह इति ॥ ६ ॥

अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः ।
एतद्वै भद्रमनुशासनस्योत स्रुतिं विन्दत्यञ्जसीनाम् ॥ ७ ॥

अक्षेत्रऽवित् । क्षेत्रऽविदम् । हि । अप्राट् । सः । प्र । एति । क्षेत्रऽविदा । अनुऽशिष्टः ।
एतत् । वै । भद्रम् । अनुऽशासनस्य । उत । स्रुतिम् । विन्दति । अञ्जसीनाम् ॥ ७ ॥

**उद्गीथ०** कल्याणं कमनीयं सामर्थ्यम् अनुशासनस्य मार्गोपदेशस्य, उत[8] अपि च स्रुतिम् मार्गं विन्दति लभते ॥ ७ ॥

---

१-१. नास्ति वि[१]. †-† °स···भिग° वि[२] अ[१]. ‡-‡ °मान स्वर वि[२] अ[१]. २-२. नास्ति वि[१].
३. °ञ्च मूको. ४-४. नास्ति मूको. ५. अस्वद्वःसु वि[१२]. ६. °गूढम् वि[२] अ[१]. ७. तासि वि[२] अ[१].
८. °त अत मूको.

वेङ्कट० सेयम् अनुशासनस्तुतिः प्रासङ्गिकी। अक्षेत्रज्ञः क्षेत्रज्ञम्[1] हि[2] पृच्छति। स च वदति गन्तव्यम् अनेन पथेति। सः च तेन अनुशिष्टः प्र एति। तत् एतत् अनुशासनस्य भद्रत्वम्। अपि च अञ्जसीनाम् अपां[3] मार्गम्[4] पिपासितः अनुशिष्टः लभते ॥ ७ ॥

अ॒द्येदु॑ प्रा॒णी॒दम॑मन्नि॒माहापी॑वृतो अधयन्मा॒तुरूधः॑ ।
एमे॑नमाप जरि॒मा यु॒वान॒महे॑ळ॒न् वसुः॑ सु॒मना॑ बभूव ॥ ८ ॥

अ॒द्य । इत् । ऊँ इति॑ । प्र । आ॒नी॒त् । अम॑मन् । इ॒मा । अहा॑ । अपि॑ऽवृतः । अ॒ध॒य॒त् । मा॒तुः । ऊध॑ः ।
आ । ई॒म् । ए॒न॒म् । आ॒प॒ । ज॒रि॒मा । यु॒वान॑म् । अहे॑ळन् । वसुः॑ । सु॒ऽमनाः॑ । ब॒भू॒व ॥ ८ ॥

उद्गीथ० महाभाग्ययोगात् सर्वात्मभावात् तद्धर्मत्वमापन्न इन्द्रः स्तूयते। अद्य इत् अद्यैव। उ इति पदपूरणः। प्र आनीत् प्राणिति जीवति। स्वमायया केनचित् प्राणिरूपेणाद्यैव जातः सन् अद्यैव जीवित्वा स्वेच्छया श्वोमरणेन[5] युज्यत[6] इत्यर्थः। अद्यग्रहणञ्च प्रदर्शनार्थम्। गर्भस्रावे तत्क्षणं जीवति। हिरण्यगर्भात्मा आ महाप्रलयाज्जीवति। एवं सर्वत्र यथाकालं योज्यम्। किञ्च न जीवनमेव केवलं मरणं वा कालाः कुर्वन्ति सर्वभूतात्मकस्य इन्द्रस्य। किन्तर्हि। अममन् 'अम रोगे'। रोगञ्च कुर्वन्ति इमा इमानि अहा अहानि काला इत्यर्थः। किञ्च अपीवृतः वाय्वादिसन्निरोधार्थं वस्त्रेणाच्छादितः[7] शिशुरूपः इन्द्रः अधयत् पिबति स्वस्याः मातुः देवमनुष्यादिसर्वजातिस्थायाः स्वभूतम् ऊधः ऊधस्थम् स्तन्यमित्यर्थः[8]। किञ्च आ ईम् एनम् आप। ईमिति पदपूरणः। एनमिन्द्रं मर्यादया व्याप्नोति जरिमा जराभावः जरेत्यर्थः, युवानम् तरुणं सन्तम्। किञ्च अहेळन् अक्रुध्यन् वसुः[9] प्रशस्तः[10] सुमनाः शोभनबुद्धिः प्रसन्नचित्तश्च बभूव भवति। देवादिभावे स्थितः[11] महाभाग्ययोगाद्[12] इन्द्रो यद्यद्रूपं कामयते, तद् भवति [13]तद्धर्मा वेति[13] समस्तार्थः ॥ ८ ॥

वेङ्कट० अद्य एव अयम् अग्निः प्र आनीत् मथितः। तदानीम् एव इमानि सौमिकानि अहानि मन्यते नेतुम्। अपि च तेजोभिः परिवृतः पिबति पृथिव्याः सारम्। आप्नोति च एनम् स्तुतिः युवानम्। अक्रुध्यन् वासयिता अग्निः सुमनाः बभूव इति ॥ ८ ॥

ए॒तानि॑ भ॒द्रा क॑लश क्रि॒याम॒ कुरु॑श्रवण दद॑तो म॒घानि॑ ।
दा॒न इद्वो॑ मघवा॒नः सो अ॑स्त्व॒यं च॒ सोमो॑ हृ॒दि यं बिभ॑र्मि ॥ ९ ॥

ए॒तानि॑ । भ॒द्रा । क॒ल॒श॒ । क्रि॒या॒म॒ । कुरु॑ऽश्रवण । दद॑तः । म॒घानि॑ ।
दा॒नः । इत् । व॒ः । म॒घ॒ऽवा॒नः॒ । सः । अ॒स्तु॒ । अ॒यम् । च॒ । सोम॑ः । हृ॒दि । यम् । बिभ॑र्मि ॥ ९ ॥

---

१. क्षेत्रविद वि[१]. २. नास्ति वि[१]. ३. अपा मूको. ४. °र्गं वि[२] अ[१]. ५. रमणेन वि[२] अ. ६. इज्यते वि[३]. ७. वज्रेणाच्छा° मूको. ८. स्तनमि° मूको. ९. प्रवसुः वि[१,३]; प्रयसुः वि[२] अ. १०. प्रशास्यः वि[२] अ. ११. स्थितम् वि[२] अ. १२. °योगम् वि[२] अ. १३-१३. तद्धर्मायति वि[१,३].

उद्गीथ० एतानि भद्रा भद्राणि कल्याणानि शोभनानि स्तोत्राणि हवींषि च हे कलश!। कलाशयन! सर्वकालाधार! परिपूर्ण! अथवा कलशसदृश! कलशवदुदकाधार! इत्यर्थः। अथवाऽन्तर्णीत-मत्वर्थमेतत् पदम्। द्रोणकलशवन्! इन्द्र! क्रियाम कृतवन्तो वयम् हे कुरुश्रवण! कुरव ऋत्विजः। कुरूणामृत्विजां स्वभूतानां स्तुतीनां श्रोतः!। कस्यार्थाय कृतवन्तो वयम्। ददतः मघानि स्तोतृभ्यो यष्टृभ्यश्च धनानि यच्छतः तवेन्द्रस्यार्थाय[1]। एतज्ज्ञात्वा प्रत्युपकारार्थम् दानः इत् दातैव[2] अस्मभ्यम् ईप्सितार्थानाम् वः मघवानः! इत्युभयत्र व्यत्येन बहुवचनम्। वः [3]तव स्वभूतानां[3] हे मघवानः! मघवन्! धनवन्! इन्द्र!। स[4] इति तच्छ्रुतेः यच्छब्दोऽध्याहार्यः। यो दाता प्रियो वा आत्मा सः अस्तु भवतु। अयम् च सोमः दाता, हृदि तवेन्द्रस्य हृदये यम् सोमम् हेतुकर्तृत्वेनाहम्[5] बिभर्मि धारयामि ॥ ९ ॥

इति वनवासीविनिर्गताचार्योद्गीथस्य[6] कृता ऋग्वेदभाष्ये पञ्चपञ्चाशोऽध्यायः।

कालहा शूलधृक् पातु शंकरः यास्कायनः ? ॥

वेङ्कट० एतानि भजनीयानि कर्माणि हे कलशकुलजात! क्रियाम राजन्! कुरुश्रवण! प्रयच्छतः धनानि ऋत्विग्भ्यः। हे धनवन्तः! युष्माकं सर्वदा अस्तु [7]दाता इन्द्रः[7], तथा[8] अयम् च सोमः, हृदये यम् पीतम् अहम् बिभर्मि इति ॥ ९ ॥

[9]इति सप्तमाष्टके सप्तमाध्याये त्रिंशो वर्गः[9] ॥

सप्तमस्याष्टकस्येत्थं माधवः सुन्दरीसुतः।
व्याख्यत् सप्तममध्यायम् इमं श्रीवेङ्कटात्मजः ॥ १ ॥

इति वेङ्कटाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके सप्तमोऽध्यायः ॥

—*—

## इति ऋग्वेदे सभाष्ये सप्तमाष्टके सप्तमोऽध्यायः ॥



१. °स्यार्थं वि[३]. २. दत्तेव मूको. ३-३. तव स्वभूतः वि[२] अ. ४. नास्ति मूको. ५. °तुकर्मकर्तृ° वि[२]. ६. °वासिविनिर्गरोतावार्योद्गीथस्य मूको. ७-७. तथातेन्द्रः वि[२] अ[१]. ८. तदा वि[२] अ[१]. ९-९. नास्ति मूको.

अथ अष्टमोऽध्यायः ।

**वेङ्कट०**　'प्र मा युयुज्रे प्रयुजः' व्याचिख्यासति माधवः ।
यदात्मविषये वाच्यं तदादौ संप्रदर्शयन् ॥ १ ॥

एक एव महानात्मा बहुधाभूय तिष्ठति ।
यथा सोभरिरेकः सन् बहुधा योगतोऽभवत् ॥ २ ॥

बहुधांऽशावतारेषु यथा वा भगवानभूत् ।
इन्द्रो वाऽभूद्[1] यथा सव्यो[2] धीरो वैकुण्ठ एव च ॥ ३ ॥

अत्र ब्राह्मणानि—'प्रजापतिः सविता भूत्वा प्रजा असृजत । ता[3] विश्वकर्मा भूत्वा व्यमार्दयत् । तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्' ( तु. तैब्रा १,६,४,१ ) इति ।

तदेतद्[4] दीर्घतमसा विस्पष्टमृषिणेरितम् ।
वदती(ति 'इ)न्द्रं मित्रम्'[5] इति 'सुपर्णम्'[6] इति ऋक्तथा[7] ॥ ४ ॥

जगद्व्यापारकरणं तत्तद्रूपपरिग्रहात् ।
'विश्वतश्चक्षुरि( क्षुः'[8] इ )त्याद्यास्तस्मान्नात्मपरा इति ॥ ५ ॥

तत्र चोपनिषत्सूक्ताः परस्य ब्रह्मणो गुणाः ।
सर्वथा संभवे नेया ब्रह्मद्वारेति निश्चयः ॥ ६ ॥

ब्रह्मैव विश्वकर्मोक्तं विश्वस्य करणादिति ।
ब्रुवन्ति कवयः केचिद् ऐश्वर्यादिन्द्रमेव च ॥ ७ ॥

'इन्द्रो मायाभिरि( भिः'[9] इ )त्यत्र न तथेच्छति शौनकः ।
नैवं कात्यायनोऽप्याह तस्मान्नात्मपरा इति ॥ ८ ॥

'युक्ता ह्यस्ये(स्य'[9] इ)ति चेन्द्रस्य[10] हरयः परिकीर्तिताः ।
न सन्ति ब्रह्मणस्तेऽश्वा नान्वादेशं तदर्हति ॥ ९ ॥

निश्चरन्ति यथा लोहपिण्डात्तप्तात् स्फुलिङ्गकाः ।
सकाशान्महतस्तद्वद् आत्मानोऽन्ये विनिर्गताः ॥ १० ॥

स एष बहुधाभावो महतोऽस्माभिरीरितः ।
अणवो जीवसंज्ञास्ते नानाकर्मफलैर्युताः ॥ ११ ॥

---

१. बाहुद् वि[1,2]; भवद् अ[1]. २. सख्वो वि[1,2]. ३. तां वि[1,2] अ. ४. °तं वि[2] अ[1]; °दत: वि[1]. ५. ऋ १,१६४,४६. ६. ऋ १०,११४,५. ७. चक्तथा ऋ अ. ८. ऋ १०,८१,३. ९. ऋ ६,४७,१८. १०. वेन्द्र° वि[1].

व्याप्य वायुर्यथा प्राणांस्तिष्ठत्येको बहूनिह ।
तथा महानिमान् जीवान् [१]एकः सन्[१] व्याप्य तिष्ठति ॥ १२ ॥

पयसीव घृतं गूढम् अरण्योरिव पावकम् ।
व्याप्तं नापक्वकरणास्तं पश्यन्तीव मानवाः ॥ १३ ॥

ततो विनिर्गता जीवा यदैकीभावयन्त्यमी ।
अग्निनाऽग्निमिवात्मानं जानन्त्यन्येन्द्रियैरपि ॥ १४ ॥

योगेश्वरेण तदिदं याज्ञवल्क्येन भाषितम् ।
योगी मुक्तश्च सर्वासां[२] ज्ञानं त्वाप्नोति[३] वेदनाम्[४] ॥ १५ ॥

ब्रह्मैव नित्यमस्माकं ततः सर्वमभूदिदम् ।
तदेव प्रलयेऽभ्येति समुद्रमिव निम्नगा ॥ १६ ॥

अत्र महोपनिषत्—'महानव्यक्ते विलीयते[५] । अव्यक्तमक्षरे विलीयते[५] । अक्षरं तमसि विलीयते[५] । तमः परे देव एकीभवति' ( सुबाउ २, २ ) इति ।

यतः सर्वमिदं भूत्वा महानात्मा व्यवस्थितः ।
तस्मादग्न्यादिविषयो वेदस्तत्र प्रतिष्ठितः[६] ॥ १७ ॥

अनित्यत्ववादा[७] इह जीवप्रकृतिगोचराः ।
आ महाप्रलयात्स्थानात् ते भाक्ता[८] इति निश्चयः ॥ १८ ॥

'पुरुषं प्रकृतिं चैव विद्ध्यनादी उभावपि'[९] ।
इति ब्रूते विशेषेण [१०]भगवानिह नित्यताम्[१०] ॥ १९ ॥

'सदेव सोम्येदमग्र आसीद्†' इति च दृश्यते ।
ततः प्रकृतिनित्यत्वं‡ कविभिः कैश्चिदीरितम् ॥ २० ॥

अथैतदिति पृच्छामि किमग्नी रूपमात्मनः ।
'यथाग्निरग्नौ प्रक्षिप्तः' इत्युक्तेरुत वा जलम् ॥ २१ ॥

व्याप्य वाऽवस्थितो¶ वायुर्यद्वाऽऽकाशो भवेदिति[१०] ।
तं वयं न विजानीमः कथं ब्रूते विनिश्चितम् ॥ २२ ॥

---

१. स वि[१,२] अ. २. सर्वाणां वि[२] अ[१]. ३. चाप्नो° वि[१]. ४. चेतनाम् वि[१]. ५. ली° मूको. ६. °त वि[१]; °तम् वि[२] अ[१]. ७. नित्यत्ववा° वि[१,२] अ[१]. ८. भक्ता वि[१,२] अ[१]. ९. भगी १३,१९. १०-१०. नास्ति वि[१]. † छाउ ६,२,१. ‡ °कृत्यनित्य° वि[१,२] अ[१]. ¶ वाहस्थि वि[१,२] अ[१].

[1]नानाभ्युपाया बहवः प्रदिष्टाः
महर्षिभिस्तस्य †महात्मनो नु† ।
तेष्वाशु यत्नः क्रियतां भवद्भि-
र्न हेतुवादैर्भविताऽऽत्मलाभः[1] ॥ २३ ॥

[ ३३ ]

[2]कवष ऐलूष ऋषिः । १ विश्वे देवा देवता; २, ३ इन्द्रः; ४, ५ कुरुश्रवण-त्रासदस्यवः; ६-९ उपमश्रवा मित्रातिथिः । प्रथमा त्रिष्टुप्, द्वितीयातृतीये प्रगाथः (= २ बृहती, ३ सतोबृहती), शिष्टा गायत्र्यः[2] ।

प्र मा॑ युयुज्रे प्र॒युजो॒ जना॑नां॒ वहा॑मि स्म पू॒षण॒मन्त॑रेण ।
विश्वे॑ दे॒वासो॒ अध॒ मामर॑क्षन् दु॒ःशासु॒रागा॒दिति॒ घोष॑ आसीत् ॥ १ ॥

प्र । मा॒ । यु॒यु॒ज्रे॒ । प्र॒ऽयुज॑ः । जना॑नाम् । वहा॑मि । स्म॒ । पू॒षण॑म् । अन्त॑रेण ।
विश्वे॑ । दे॒वास॑ः । अध॑ । माम् । अ॒र॒क्ष॒न् । दु॒ःऽशासुः॑ । आ । अ॒गा॒त् । इति॑ । घोष॑ः । आ॒सी॒त् ॥

उद्गीथ० उत्तरं सूक्तं 'प्रमा, इति नवर्चं[3] वैश्वदेवं कवषो ददर्श । मा माम् कवषम् प्र युयुज्रे देवयागकर्मणि प्रयुक्तवन्तो विश्वे देवाः । कीदृशाः । प्रयुजः जगति [4]स्थित्यर्थं यागकर्मणि[4] धनदानेन प्रयोक्तारः । केषाम्[5] । जनानाम्[6] यजमानानाम् । तैश्च देवयागकर्मणि प्रयुक्तः सन् अहम् वहामि स्म 'स्मोत्तरे लङ् च' (पा ३,३,१७६) इति स्मशब्दयोगात् भूते लट् । ऊढवानस्मि प्रापितवानस्मि स्तुतीर्हवींषि च पूषणम् आदित्यं प्रति । क्व स्थितो वहामि स्म । उच्यते— अन्तरेण मध्येन । कस्य । सामर्थ्याद् अग्नीनां देवानां द्यावापृथिव्योर्वा । देवयागकर्मणि प्रयुज्य च विश्वे देवासः सर्वे देवाः अध अथ माम् यजमानं कवषाख्यम् अरक्षन् रक्षितवन्तः । कुतः । दुश्शासुः दुश्शासनात् शत्रोरसुरराक्षसादिकात् । रक्षितॄणां च तेषां देवानाम् घोषः 'जहि जहि' इत्यादिशब्दः आ अगात् सर्वस्य लोकस्य कर्णपथमागतः सर्वेण श्रूयत इति एतत् आसीत् अभूद्वचनम् । एवमतीते काले मे सप्रसादा आसुः ॥ १ ॥

वेङ्कट० कवषः[6] । कात्यायनः (ऋअ २,१०,३३)—'प्र माद्या वैश्वदेव्यैन्द्रः प्रगाथः परा गायत्र्यो द्वे कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवणं पुत्रमस्य व्यशोकयत्' इति । मा प्रयुक्तवन्तः कुरुश्रवणं प्रति सर्वेषाम् जनानाम् प्रयोक्तारो देवाः । वहामि स्म अहम् पूषणम् मार्गे अध्वनां पतिं सखायम् । 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्

१-१. नास्ति वि[1]. †-† महामनो न वि[1] अ[1]. २-२. नास्ति मूको. ३. पञ्चर्चम् मूको. ४-४. °त्यर्थयोग° वि[1,2]; °त्यर्थयो° अ. ५. तेषां मूको. ६. नास्ति मूको.

जनतामेध्यन्निन्द्राग्नी' इत्युक्त्वा आह—'पौष्णं चरुमनु निर्वपेत्' (तै २,२,१,४) इति। विश्वे देवाः अथ माम् अध्वनि अरक्षन्। शासितुम् अशक्यः अयम् ऋषिः[1] आ गच्छति इति घोषः च अध्वनि अभूत्[2] ॥ १ ॥

सं मा॑ तपन्त्य॒भित॑ः स॒पत्नी॑रिव॒ पर्श॑वः ।
नि बा॑धते॒ अम॑तिर्न॒ग्नता॑ ज॒सुर्वेर्न वे॑वीयते म॒तिः ॥ २ ॥

[3]सम् । मा । त॒प॒न्ति॒ । अ॒भित॑ः । स॒पत्नी॑ःऽइव । पर्श॑वः[3] ।
नि । बा॒ध॒ते॒ । अम॑तिः । न॒ग्नता॑ । ज॒सुः । वेः । न । वे॒वी॒य॒ते॒ । म॒तिः ॥ २ ॥

**उद्गीथ०** इदानीं तु देवेष्वप्रसन्नेषु देवप्रसादाद् अपेतम् मा सम् तपन्ति अन्नाभावाद् आबल्यात्[4] कुशशयनाच्च दुःखयन्तीत्यर्थः, अभितः उभयतः उभयोरपि पार्श्वयोरित्यर्थः, पर्शवः। किमिव सन्तापयन्ति। सपत्नीः इव यथा सपत्न्यः समानभर्तृकाः स्त्रियो भर्तारं परस्परं वा सन्तापयन्ति, एवम्। किञ्च नि बाधते सम्पीडयति अमतिः अज्ञानं सर्वार्थेषु सम्मोहः। नग्नता च निबाधते। नग्नतया चाऽत्र निर्धनत्वं लक्ष्यते। दारिद्र्यं च मां सम्पीडयतीत्यर्थः, जसुः 'जसु ताडने'। शत्रुताडनां च निबाधते। किञ्च वेः न पक्षिण इव यथा पक्षिणो मनः कम्पते शाकुनिकव्याधादिभयात्[5], एवं [6]मे मतिः[6] मनः वेवीयते वेपते शत्रुभयात् ॥ २ ॥

**वेङ्कट०** माम् अभितः सम् तपन्ति अनशनात्[7], सपत्न्य[8] इव सपत्नीः[9], पर्शवः। नि बाधते च दारिद्र्याद्[10] आगता दुर्मतिः, वस्त्राभावाद् आगता नग्नता, अशनाभावात् आगतश्च उपक्षयः। पक्षी इव च कम्पते बुद्धिः ॥ २ ॥

मूषो॒ न शि॒श्ना व्य॑दन्ति मा॒ध्य॑ः स्तो॒तारं॑ ते शतक्रतो ।
स॒कृत् सु नो॑ मघवन्निन्द्र मृळ॒याधा॑ पि॒तेव॑ नो भव ॥ ३ ॥

[1]मूष॑ः । न । शि॒श्ना । वि । अ॒द॒न्ति॒ । मा॒ । आ॒ऽध्य॑ः । स्तो॒तार॑म् । ते॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।[3]
स॒कृत् । सु । न॒ः । म॒घ॒ऽव॒न् । इन्द्र॑ । मृ॒ळ॒य॒ । अध॑ । पि॒ताऽइ॑व । न॒ः । भ॒व॒ ॥ ३ ॥

**उद्गीथ०** [11]मूषो न शिश्ना स्नायतेः स्नातेर्वा 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' (पावा ३,३,५८) इति कः[11] प्रत्ययः। छान्दसत्वात् सकारस्य शकारः। 'द्विर्वचनप्रकरणे कृञादीनां के' (पावा ६,१,१२) इति द्विर्वचनम्। 'बहुलं छन्दसि' (पा ७,४,७८) इति अभ्यासस्य इत्वम्। कोऽस्यार्थः। [12]शिश्ना शिश्नानि सामर्थ्याद्[12] वायितानि[13] सूत्राणि। तानि हि अन्नलिप्तत्वात् शौचार्हाणि वेष्टि-

१. ऋषिम् मूको. २. आभूत् वि[2] अ[1]. ३-३. या (४,६) व्याख्यानं द्र. ४. आबाल्यात् मूको. ५. °कव्यथादि° वि[1,3]. ६-६. प्रमति मूको. ७. अन्यदर्शनात् वि[2] अ[1]. ८. °त्न वि[2] अ[1]; °त्नय वि[1]. ९. सुवर्ति वि[2] अ[1]; थपत्नीः वि[1]. १०. °द्र्यम् वि[2] अ[1]. ११-११. शिश्नापरो शिश्नोतेः कः वि[2]; सस्नापवशिश्नेति कः वि[1] अ[1]. १२-१२. नास्ति मूको. १३. पायीता° वि[2] अ.

तानि च तन्तुवायन्त्रे। अथवा लोके शिश्नम्[१] प्रजननं प्रसिद्धम्। तस्मादश्याच्चात्र पुच्छं शिश्नमुच्यते। यथा मूषिका वायितानि[२] सूत्राणि अन्नगन्धित्वात् स्वानि वा पुच्छानि तैलभाण्डके घृतभाण्डके वा प्रक्षिप्योत्तार्य च विविधं भक्षयन्ति, एवम् मा माम् असम्पद्यमानाः[३] आध्यः आधयो यागभोगकामाः वि विविधम् अदन्ति दुःखयन्ति स्तोतारम् सन्तम् ते तव हे शतक्रतो! बहुकर्मन्!। एतज्ज्ञात्वा सकृत् सततम् नः अस्मान् हे मघवन्! धनवन्! इन्द्र! सु मृळय ईप्सितार्थप्रदानेन सुष्ठु सुखय। अध अथ पिता इव प्रियहितयोः नः अस्माकम् भव ॥ ३ ॥

**वेङ्कट०** माम्[४] आध्यः विविधम् अदन्ति, यथा सूत्राणि मूषिका अश्नाति, स्तोतारम् ते शतक्रतो!। तथा सति सकृत् सुष्ठु धनवन्! इन्द्र! अस्मान् सुखय। अथ पिता इव च अस्माकम् भव इति ॥ ३ ॥

## कुरुश्रवणमावृणि राजानं त्रासदस्यवम्। मंहिष्ठं वाघतामृषिः ॥ ४ ॥

कुरुऽश्रवणम्। आऽवृणि। राजानम्। त्रासदस्यवम्। मंहिष्ठम्। वाघताम्। ऋषिः ॥ ४ ॥

**उद्गीथ०** इन्द्रादिदेवाभ्यनुज्ञया कुरुश्रवणम् कुरव ऋत्विज उच्यन्ते कर्मणां कर्तृत्वात्। तेषां स्तुतीनां श्रोतारम्, सततयाजिनम् एतन्नामानं वेत्यर्थः, आवृणि मर्यादया वृणोमि प्रार्थये देवयागार्थं धनम् राजानम् त्रासदस्यवम् त्रसदस्योः पुत्रम् मंहिष्ठम् अतिशयेन मंहितं[५] दातारं धनानाम्। केषामर्थाय। वाघताम् वाघत ऋत्विज उच्यन्ते। तेषामर्थाय ऋषिः कवषः ॥ ४ ॥

**वेङ्कट०** [६]कुरुश्रवणम् आभिमुख्येन[६] प्रार्थितवान् अस्मि धनम् राजानम् त्रसदस्योः पुत्रम् अतिशयेन दातारम् ऋत्विजाम् ऋषिः अहमिति ॥ ४ ॥

## यस्य मा हरितो रथे तिस्रो वहन्ति साधुया। स्तवै सहस्रदक्षिणे ॥ ५ ॥

यस्य। मा। हरितः। रथे। तिस्रः। वहन्ति। साधुऽया। स्तवै। सहस्रऽदक्षिणे ॥ ५ ॥

**उद्गीथ०** लब्ध्वा राजतो धनम् अनन्तरं किं करोषीति चेत्। उच्यते—यस्य इत्यादित्यः निर्दिश्यते हरित्सम्बन्धात्[७]। यस्यादित्यस्य स्वभूताः हरितः तिस्रः हरित्संज्ञका [८]अश्वाः त्रयो मध्यमाः[८] रथे नियुक्ताः सन्तः मा मां कवषं यजमानं प्रति वहन्ति प्रापयन्त्यादित्यम्। कथं वहन्ति। साधुया प्रथमैकवचनस्य च्छान्दसं या। क्रियाविशेषणं चैतत्। साधु शोभनम्। स्तवै स्तौमि सहस्रदक्षिणे बहुदक्षिणे यज्ञे वाजपेयादौ ॥ ५ ॥ अतः परं 'यस्य' इति सूक्तशेषे मृते मित्रातिथौ नृपे उपमश्रवसः स्नेहाद् ऋषिः शोकमपानुदत्[९]।

---

१. शस्निग्धं मूको. २. पायि° वि[२] अ. ३. असम्पा° मूको. ४. मम वि[२] अ[१]. ५. मंहितां वि[३] अ[२]. ६-६. नास्ति वि[१]. ७. हरिसं° मूको. ८-८. °श्वाः तयोर्म° मूको. ९. °पनु° मूको

वेङ्कट० यस्य स्वभूताः तिस्रः अश्वाः रथे स्थितम् माम् वहन्ति सुष्टुतम्। अहम् स्तवै कुरुश्रवणं बहुदक्षिणे अस्मिन् यज्ञे। इति प्रष्टिवाहिनं[1] रथं परिगृह्याऽऽशास्ते[2] ॥ ५ ॥

[3]इति सप्तमाष्टके अष्टमाध्याये प्रथमो वर्गः[3] ॥

यस्य॑ प्रस्वा॒दसो॒ गिर॑ उपमश्र॑वसः पि॒तुः । क्षेत्रं॒ न र॒ण्वमू॒चुषे॑ ॥ ६ ॥

यस्य॑ । प्रऽस्वा॑दसः । गिर॑ः । उ॒प॒मऽश्र॑वसः । पि॒तुः । क्षेत्र॑म् । न । र॒ण्वम् । ऊ॒चुषे॑ ॥ ६ ॥

उद्गीथ० 'यस्य प्रस्वादसो गिरः' इत्यनेन सूक्तशेषभूतेन चतुर्ऋचेन वर्गेण मृते देहान्तरं गते सति मित्रातिथिनाम्नि नृपे राजनि उपमश्रवोनाम्नः मित्रातिथे राज्ञः पुत्रस्य शोकं स्नेहादेवापानुदद् अपनीतवानृषिः कवषः। यस्य ऊचुषे इत्यनयोः सामानाधिकरण्याद् ऊचुषे इति षष्ठ्यर्थे चतुर्थी। लिड् वात्र वर्तमाने 'छन्दसि लुङ्लङ्लिटः' ( पा ३, ४, ६ ) इति। यस्य मित्रातिथिनाम्नो राज्ञः उपमश्रवसः तव पितुः ऊचुषे ब्रुवतः भाषमाणस्य प्रस्वादसः प्रकर्षेणास्वाद्याः[4] मधुराः गिरः वाचः दृष्टान्तेन तुल्यत्वसामर्थ्यात् रण्वाः[5] रमणीयाः चित्तप्रीतिकरा इत्यर्थः। किमिव। क्षेत्रम् न रण्वम् यथा क्षेत्रं व्रीह्यादिसस्यसम्पन्नं रण्वं रमणीयं चित्तप्रीतिकरम्, एवम्। वाक्यार्थस्यापरिसमाप्तत्वाद् उत्तरया एकवाक्यता योज्या ॥ ६ ॥

वेङ्कट० यस्य प्रकर्षेण स्वादयित्र्यः[6] गिरः[7] उपमश्रवसः पितुः मित्रातिथेः, यथा रमणीयम् क्षेत्रम् दानार्थं सम्पन्नसस्यं[8] सेवमानाय दरिद्राय। स्वादसः इत्युत्तरत्र सम्बन्धः ॥ ६ ॥

अधि॑ पुत्रोपमश्रवो॒ नपा॑न्मित्रातिथेरि॑हि । पि॒तुष्टे॑ अस्मि वन्दि॒ता ॥ ७ ॥

अधि॑ । पु॒त्र॒ । उ॒प॒म॒ऽश्र॒वः॒ । नपा॑त् । मि॒त्र॒ऽअ॒ति॒थेः॒ । इ॒हि॒ । पि॒तुः । ते॒ । अ॒स्मि॒ । व॒न्दि॒ता ॥७॥

उद्गीथ० पुत्रेति प्रियवचनेन[9] सम्बोध्य[10] उपमश्रवसम् ऋषिराह कवषः। हे पुत्र! उपमश्रवः! हे [11]नपात्! पुत्रक![11] मित्रातिथेः मित्रातिथिनाम्नो राज्ञः अधि इहि अवगच्छ अवजानीहि। किम्। उच्यते—पितुः ते अस्मि वन्दिता। पूर्वस्यामृचि यस्येति श्रुतेः तस्येत्यध्याहार्यम्। तस्य पितुः ते तव उपमश्रवसः सम्बन्धिनः अस्मि भवामि वन्दिता स्तोता पुरोहितः ऋत्विग् वेत्यर्थः। एवं सति [12]त्वं चाहं[12] च तुल्यशोकौ। एतज्ज्ञात्वा मा शोकं कार्षीः। अहं तव पितृस्थानीयो जीवामीत्यभिप्रायः ॥ ७ ॥

वेङ्कट० हे पुत्र! उपमश्रवः! मित्रातिथेः नपात्! अपातयितः![13] माम् अधि गच्छ मत्समीपम् आगच्छ[14]। पितुः तव अहम् अस्मि स्तोता। मह्यं धनं प्रयच्छ[15] इति ॥ ७ ॥

---

१. पृष्टि° मूको. २. प्रतिगृ° वि[1]. ३-३. नास्ति मूको. ४. °स्वाद्यः मूको. ५. रण्वं मूको. ६. स्व° मूको. ७. निर मूको. ८. सवणसल्यं वि[2] अ[1]; संपन्तसन्नय वि[1]. ९. प्रियय° वि[3]. १०-१०. °ध्योपमश्रवः मूको. ११. °पात् इत् प्राणात्क वि[3]. १२-१२. त्वाच्चा° मूको. १३. °तं मूको. १४. नास्ति वि[2] अ[1]. १५. °च्छति वि[2] अ[1]; °च्छत वि[3].

यदीशीयामृतानामुत वा मर्त्यानाम् । जीवेदिन्मघवा मम ॥ ८ ॥

यत् । ईशीय । अमृतानाम् । उत । वा । मर्त्यानाम् । जीवेत् । इत् । मघऽवा । मम ॥ ८ ॥

**उद्गीथ०** किञ्च यदि ईशीय ईश्वरोऽहं स्याम् अमृतानाम् देवानाम् उत वा मर्त्यानाम् मनुष्याणाम् । देवमनुष्यादिकस्य सर्वस्य मरणहेतोः निर्धारणे यद्यहं समर्थः स्यामित्यर्थः । ततः किम् । उच्यते—जीवेत् इत् प्राणान् धारयेदेव न म्रियेत एवेत्यर्थः, मघवा धनवानीश्वरो राजा मित्रातिथिः मम कवषस्य पुरोहितभूतस्य, याज्य इति शेषः ॥ ८ ॥

**वेङ्कट०** [1]'यदि अहम् ईश्वरः† स्याम् अमारकाणाम् अपि च मारकाणाम्‡, जीवितो$ भवेत्¶ धनवान् राजा मम† अर्थाय'[1] ॥ ८ ॥

न देवानामति व्रतं शतात्मा चन जीवति । तथा युजा वि वावृते ॥ ९ ॥

न । देवानाम् । अति । व्रतम् । शतऽआत्मा । चन । जीवति । तथा । युजा । वि । ववृते ॥ ९ ॥

**उद्गीथ०** अन्यच्च [2]कवषः कथयति[2] । देवानाम् ब्रह्मादीनाम् व्रतम् कर्म मर्यादाकरणलक्षणम्[3] अति अतीत्य, 'शतायुर्वै पुरुषः' (तैब्रा १,७,६,४) इति[4] देवैर्या मर्यादा[5] कृता, तां स्वकर्मानुरूपां च [6]उल्लङ्घयेत्यर्थः[6], शतात्मा चन बहुशरीरवीर्यमतिरपीत्यर्थः, वृत्ररावणादिकः न जीवति । कस्मात् । यस्मात् तथा तेन प्रकारेण शतं वर्षाणि पुरुषो जीवतीति स्वकर्मानुरूपश्चेत्यनेन प्रकारेणेत्यर्थः । उत्पत्तिस्थितिप्रलयकारणेन युज्यते इति युक् प्रजापतिः, तेन युजा प्रजापतिना [7]वि ववृते[7] विवर्तितं निर्मितम् जगदित्यर्थः । एतद् ज्ञात्वा मा शोकं कार्षीः ॥ ९ ॥

**वेङ्कट०** [8]न देवानाम् अति क्रम्यते कर्म । शतसंवत्सरश्च† कश्चित् जीवति अन्यः । तथा युजा सहायादिना‡ वि वर्त्तते वियुक्तो भवति मृत इति[8] ॥ ९ ॥

[9]इति सप्तमाष्टके अष्टमाध्याये द्वितीयो वर्गः[9] ॥

## [ ३४ ]

[1]कवष ऐलूषः, अक्षो मौजवान् वा ऋषिः । १,७,९,१२ अक्षाः देवता; १३ कृषिः; २-६,८, १०,११,१४ अक्ष-कितव-निन्दा । त्रिष्टुप् छन्दः, सप्तमी जगती[1] ॥

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥ १ ॥

---

१-१. नास्ति वि[२] अ[१]. † °श्वर वि[१]. ‡ °णाम् अपि च मारकाणाम् वि[१]. $ जीवे वि[१]. ¶ भव वि[१]. † नामम वि[१]. २-२. कवषकथ्यत मूको. ३. °दाकारलक्षणम् मूको. ४. नास्ति मूको. ५. °दया मूको. ६-६. °ङ्घ्येतेत्यर्थः वि[१,३]; °ङ्घयतेत्यर्थः वि[२] अ. ७-७ विवृते मूको. ८-८. नास्ति वि[२] अ[१]. † °तयंव° वि[१]. ‡ °यान् दिना वि[१]. ९-९. नास्ति मूको.

प्राऽवेपाः । मा । बृहतः । मादयन्ति । प्रवातेऽजाः । इरिणे । वर्वृतानाः ।
सोमस्यऽइव । मौजऽवतस्य । भक्षः । विऽभीदकः । जागृविः । मह्यम् । अच्छान् ॥ १ ॥[1]

**उद्गीथ०** प्रावेपाः प्रवेपिनः प्रकम्पनशीलाः अक्षाः मा माम् बृहतः महतः विभीतकस्य सम्बन्धिनः फलत्वेन, फलानीत्यर्थः, मादयन्ति हर्षयन्ति प्रवातेजाः प्रवरवाते काले वर्षासु प्रवणे वा प्रदेशे जाताः इरिणे आस्फारे[2] वर्वृतानाः वर्तमानाः । न च मनाग् मादयन्ति । किं तर्हि । सोमस्य इव यथा सोमस्य मौजवतस्य मूजवत्पर्वते जातस्य भक्षः पानं यजमानादीन् [3]अत्यर्थं मादयति[3], एवम् विभीदकः विभीदकविकारः[4] जागृविः विजयपराजययोः हर्षशोकाभ्यां जागरणस्य कर्ता मह्यम् द्वितीयार्थे चतुर्थी । माम् अच्छान् अन्तर्णीतभृशार्थमेतद् द्रष्टव्यम् । अचच्छदद् अत्यर्थं मादयति[5] । केन । सामर्थ्यात् हर्षेण ॥ १ ॥

**वेङ्कट०** [6]कात्यायनः (२,१०,३४)—'मौजवान् वाऽक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिन्दा च' इति । प्रवेपिणः†[6] माम् महतः विभीतकस्य फलानि मादयन्ति प्रवणे देशे जाताः इरिणे वर्तमानाः । इरिणो नूनम् अधिदेवनं भवति । सोमस्य इव मूजवति पर्वते जातस्य भक्षः[7] । तत्र हि उत्तमः सोमो[8] जायते । विभीतकः जागरणस्य कर्ता कितवस्य मह्यम् उपच्छन्दनं करोति इति । प्रशंसति एनान् अनया, निन्दति उत्तराभिः । यद्वा प्रवातेजाः[9] प्रकृष्टवाते देशे स्थितैः आक्षिकैः युज्यमानाः[10] ॥ १ ॥

न मा॑ मिमेथ॒ न जि॑हीळ ए॒षा शि॒वा सखि॑भ्य उ॒त मह्य॑मासीत् ।
अ॒क्षस्या॒हमे॑कप॒रस्य॑ हे॒तोरनु॑व्रता॒मप॒ जा॒याम॑रोधम् ॥ २ ॥

न । मा । मिमेथ । न । जिहीळे । एषा । शिवा । सखिऽभ्यः । उत । मह्यम् । आसीत् ।
अक्षस्य । अहम् । एकऽपरस्य । हेतोः । अनुऽव्रताम् । अप । जायाम् । अरोधम् ॥ २ ॥

**उद्गीथ०** मा माम् न मिमेथ नाऽऽक्रुष्टवती सुशीलात्वात्[11], न जिहीळे नापि लज्जापितवती सुचरितात्वात्, अथवा न चुक्रोध एषा मम जाया किञ्च शिवा सुखा आसनप्रदानपादप्रक्षालनादियथार्हप्रतिपत्त्या सुखकरीत्यर्थः, सखिभ्यः सखिभूतेभ्यः कितवादिभ्यः[12] । न केवलं मम सखिभ्य एव सुखा, उत अपि मह्यम् आसीत् सुखा । एवं गुणविशिष्टां सतीम् अक्षस्य एकपरस्य एकः परः प्रधानो यस्य स एकपरः तस्य एकपरस्य पराजयप्रधानस्येत्यर्थः, अथवा एकपरस्य एककृतायप्रधानस्य हेतोः कारणाद् अक्षकृतद्यूतेन[13] निमित्तेनेत्यर्थः, अनुव्रताम् अनुगतकर्माणम् अनुकूलामित्यर्थः, जायाम् भार्याम् अहम् अप[14] अरोधम् अपरोधितवान्[15] अस्मि, वित्तनाशेन दुःखितां कृतवानित्यर्थः ॥ २ ॥

---

१. इयमृग् या. (९,८) व्याख्याता द्र. २. आप्सरे वि[1,3] अ; अप्सरे वि[2]. ३-३. °त्यर्थमुद° वि[3]; °र्थं मद° वि[2] अ. ४. °दकः वि[3] मूको. ५. छादयति वि[2] अ. ६-६. नास्ति वि[2] अ[1]. † प्रविवविणः वि[1]. ७. पक्षः वि[2] अ[1]; भक्षन् वि[1]. ८. सोमः सोमः वि[2] अ[1]. ९. प्रवावेजाता वि[2] अ[1]. १०. युय्यमानान् वि[2] अ[1]; न्युपमानाः वि[1]. ११. सुशीलावत्त्वात् मूको. १२. कितवेभ्यः वि[1]. १३. अक्षनित° मूको. १४. मव वि[1,2] अ; एव वि[3]. १५. उपरो° मूको

**वेङ्कट०** न माम् आक्रुष्टवती, न चुक्रोध[1] एषा, शिवा मदीयेभ्यः सखिभ्यः मह्यम् च प्राक् आसीत्। अक्षस्य अहम् एकपरस्य यः[2] परपुरुषं[3] तत् प्रवणं करोति स तथोक्तः, तस्य हेतोः [4]इत्थम् अनुव्रताम्[4] जायाम् अहम् अप अरोधम् अक्षव्यासक्तः परित्यक्तवान् ॥ २ ॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥ ३ ॥

द्वेष्टि। श्वश्रूः। अप। जाया। रुणद्धि। न। नाथितः। विन्दते। मर्डितारम्।
अश्वस्यऽइव। जरतः। वस्न्यस्य। न। अहम्। विन्दामि। कितवस्य। भोगम् ॥ ३ ॥

**उद्गीथ०** श्वश्रूः अयोग्यत्वात् कितवं जामातरमपि सन्तम् द्वेष्टि निन्दतीत्यर्थः। जाया च अप रुणद्धि गृहे निरुणद्धि लोकलज्जया अर्थहान्या भयाच्च। किञ्च नाथितः ऋणमोक्षार्थं वृत्त्यर्थं च धनं याचमानः उपतप्तो वा क्षुधा कितवैर्वा सम्पीडित इत्यर्थः, न विन्दते न लभते मर्डितारम् धनदानेन सुखयितारम्। किंच अश्वस्य इव यथा अश्वस्य जरतः वृद्धस्य वस्न्यस्य वस्नं[5] मूल्यं तदर्हस्य वाहनभोगं दौर्बल्यभयात् न लभते स्वामी, एवम् अहम् न विन्दामि नोपलभे न पश्यामीत्यर्थः, कितवस्य द्यूतकरस्य भोगम् कुटुम्बभरणभोगम् ॥ ३ ॥

**वेङ्कट०** द्वेष्टि मां गृहगतम् श्वश्रूः। अप रुणद्धि जाया च। न याचमानः लभते सुखयितारम्। अश्वस्य इव वृद्धस्य विक्रेतव्यस्य[6] वस्नं[7] मूल्यम् तदर्हस्य, न अहम् लभे कितवस्य भोगम् बुद्ध्या विमृशन्निति ॥ ३ ॥

अन्ये जायां परि मृशन्त्यस्य यस्यागृधद्वेदने वाज्य१क्षः।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतम् ॥ ४ ॥

अन्ये। जायाम्। परि। मृशन्ति। अस्य। यस्य। अगृधत्। वेदने। वाजी। अक्षः।
पिता। माता। भ्रातरः। एनम्। आहुः। न। जानीमः। नयत। बद्धम्। एतम् ॥ ४ ॥

**उद्गीथ०** अन्ये कितवाख्याः पुरुषाः जायाम् भार्याम् परि मृशन्ति संस्पृशन्ति, हस्तवस्त्रगलकेशान् गृहीत्वा आकर्षन्तीत्यर्थः, द्रौपदीमिव दुश्शासनः, अस्य मदादिकस्य कितवस्य स्वभूताम्। यस्य कितवस्य मदादिकस्य, स्वभूतं धनम् इति शेषः, अगृधत् अभिकाङ्क्षति[7] इच्छति[8], जेतुमिति शेषः। केच्छति जेतुम्। वेदने विदिर्लाभे। विन्दते लभते धनमस्मिन् कितवः इति वेदनम् आस्फारकम्[9], तस्मिन् वेदने धनलम्भने आस्फारे। [10]वाजी वेजनवान् वेगवान्[10]

1. चुक्रोष वि[2] अ[1]. २. यम् वि[2] अ[1]. ३. पुरुषं वि[1]. ४-४. इन्थमाप्रताम् वि[2] अ[1]. ५. वसुमूलस्याहस्य वस्नं मूको. ६. विकेतुः यस्य वि[2] अ[1]; विक्रोतव्यस्य वि[1]. ७° वस्त्न मूको, ८. °ते मूको. ९. आस्व° मूको. १०-१०. वाजिवेजिवेनवान् वि[2] अ[1]; वाजिवेजिवेगवान् वि[1].

लुण्ठनशील इत्यर्थः, अक्षः देवनसाधनः। किंचान्यत्। कितवस्य पिता माता भ्रातरः च अत्यन्ताप्ता अपि सन्तः एनम् कितवं मदादिकम् न जानीमः वयम् कस्याप्ययं सम्बन्धीति आहुः ब्रुवन्ति। धनापहारकत्वात् निर्विण्णाः सन्तो नायम् अस्मदीयः इति वदन्तीत्यर्थः। नयत हे कितवाः! [१]यत्रेष्टं तत्र[१] प्रापयत यूयं रज्ज्वा बद्धम् सन्तम् एतम् कितवम् इत्येवमाहुः ॥ ४ ॥

वेङ्कट० अन्ये[२] जायाम् अस्य कितवस्य परि मृशन्ति[३], यस्य धने बलवान् अक्षः देवः अभिकाङ्क्षां करोति। पित्रादयः च एनम् वदन्ति—न वयम् एनम् अस्मदीयम् जानीमः, स्वगृहम् नयत[४] बद्धम् एतम् इति ॥ ४ ॥

**यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभ्यः।**
**न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव ॥ ५ ॥**

यत्। आऽदीध्ये। न। दविषाणि। एभिः। परायत्ऽभ्यः। अव। हीये। सखिऽभ्यः।
निऽउप्ताः। च। बभ्रवः। वाचम्। अक्रत। [५]एमि। इत्। एषाम्। निःऽकृतम्। जारिणीऽइव[५] ॥

उद्गीथ० यत् यदा अक्षैः पराजितः हृतसर्वस्वः सर्वैर्निन्द्यः[६] आदीध्ये आभिमुख्येन ध्यायामि इत्यर्थः—न दविषाणि पुनर्न देविष्यामि[७] एभिः अक्षैः इति, तदा परायद्भ्यः आस्फारं[८] प्रति पराङ्मुखं गच्छद्भ्यः अव हीये अवगच्छामि[९] अपसर्पामीत्यर्थः, सखिभ्यः सखिभूतेभ्यः। किंच न्युप्ताः च यदित्यनुवर्तते। यदा च आस्फारे[१०] कितवैः प्रक्षिप्ताः सन्तः बभ्रवः बभ्रुवर्णाः अक्षाः वाचम् भूम्यभिघातपरस्पराभिघातलक्षणं शब्दम् अक्रत कुर्वन्ति, तदा तस्य शब्दं श्रुत्वा व्यसनेनाभिभूयमानः सङ्कल्पं परित्यज्य एमि इत् गच्छाम्येव एषाम् अक्षाणां सम्बन्धिनम् आस्फारप्रदेशम्[८] निष्कृतम् सन्तम्। किमिव सङ्कल्पं परित्यज्य गच्छामि। जारिणी इव यथा जारिणी जारवती व्यभिचारिणी काचित् स्त्री व्यसनेनाभिभूयमाना स्वचारित्रमविगणय्य सङ्केतस्थानं गच्छति, एवम् ॥ ५ ॥

वेङ्कट० यदा अहम् आभिमुख्येन क्रीडे, तदानीम् न दूषये[११] अक्षैः न परितपामि। स्वयमेव परागच्छद्भ्यः सखिभ्यः अहम् अव-हितः[१२] भवामि, नाहं प्रथमम् अक्षान् विसृजामि। पित्रादिभ्यः अवधानम्। न्युप्ताः[१३] च अक्षाः वाचम् कुर्वन्ति। तेषाम् अक्षाणाम्[१४] निष्कृतम् स्थानम् अहम् आगच्छामि[१५] एव जारिणी इव सङ्केतस्थानम् ॥ ५ ॥

[१६]इति सप्तमाष्टके अष्टमाध्याये तृतीयो वर्गः[१६] ॥

---

१-१. यत्रेषं तव मूको. २. नास्ति वि[१,२]. ३. °न्ती मूको. ४. °ते वि[२] अ[१]; णबत वि[१], ५-५. निगम एष या. (१२,७) द्र. ६. °र्निन्द्यम् मूको. ७. दवि° मूको. ८. आस्व° मूको. ९. अवसा ग° वि[१]; असो ग° वि[२] अ. १०. आसने वि[१]; आसरे वि[२] अ. ११. दूये वि[१]. १२. अवमहितः वि[२] अ[१]; अवम् अहीनः वि[१]. १३. उप्ताः वि[२] अ[१]. १४. °क्षान् वि[२] अ[१]. १५. ग° वि[१]. १६-१६. नास्ति मूको.

सभामेति कितवः पृच्छमानो जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं प्रतिदीव्ने दधत आ कृतानि ॥ ६ ॥

सभाम् । एति । कितवः । पृच्छमानः । जेष्यामि । इति । तन्वा । शूशुजानः ।
अक्षासः । अस्य । वि । तिरन्ति । कामम् । प्रतिऽदीव्ने । दधतः । आ । कृतानि ॥ ६ ॥

**उद्गीथ०** कितवसम्बन्धिनीम् सभाम् एति गच्छति कितवः । किं कुर्वन् एति । पृच्छमानः हे कितव! अस्ति [1]परिपणितव्यमिति पृच्छन्नित्यर्थः[1] । केन अभिप्रायेण । अवश्यम् अद्याऽहम् जेष्यामि इति अनेनाभिप्रायेण । तन्वा शरीरेण शूशुजानः शुचेरेव चकारस्यायं जकारः छान्दसः । शोशुचानः दीप्यमानश्चेत्यर्थः । कितवस्य सभां गतस्य अक्षासः अक्षाः अस्य कितवस्य वि तिरन्ति विविधं हिंसन्ति कामम् देवनेच्छाम्[2] । किं कुर्वन्तः । प्रतिदीव्ने प्रतिदेवित्रे प्रतिकितवाय आ दधतः आभिमुख्येन मर्यादया वा दधतः धारयन्त इत्यर्थः । [3]किं धारयन्तः[3] । कृतानि पराजयहेतून् कृतद्वापरादीन् इत्यर्थः ॥ ६ ॥

**वेङ्कट०** [4]सभाम् एति कितवः[4] पृच्छन् किमत्र अस्ति शक्त इति जेष्यामि इति शरीरेण दीप्यमानः । तत्र अक्षाः अस्य कामम् वर्धयन्ति कितवाय प्रतिदेवित्रे[5] तज्जयार्थम् आभिमुख्येन कृतानि दधतः । कृतेषु ह्यानिहितेषु भवति जयः ॥ ६ ॥

अक्षास इदङ्कुशिनो नितोदिनो निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो मध्वा संपृक्ताः कितवस्य बर्हणा ॥ ७ ॥

अक्षासः । इत् । अङ्कुशिनः । निऽतोदिनः । निऽकृत्वानः । तपनाः । तापयिष्णवः ।
कुमारऽदेष्णाः । जयतः । पुनःऽहनः । मध्वा । सम्ऽपृक्ताः । कितवस्य । बर्हणा ॥ ७ ॥

**उद्गीथ०** अक्षा एव अङ्कुशिनः अङ्कुशवन्तः, अङ्कुशवन्तो यथा पुष्पफलहस्तिशिरःप्रभृतीनाम्[6] आक्रष्टारो[7] दुःखयितारश्च भवन्ति, एवं द्यूतकारिणाम् आक्रष्टारः दुःखयितारश्चेत्यर्थः, नितोदिनः 'तुद व्यथने' । हेतुकर्तृत्वेन नियमेन व्यथयितारः[8] हस्तलगुडादिना ताडयितारश्च इत्यर्थः, निकृत्वानः 'कृती छेदने' । नियमेन खड्गादिशस्त्रेण छेत्तारश्चेत्यर्थः, तपनाः पराजयेन सन्तापयितारश्च तापयिष्णवः सर्वस्वहारकत्वेन सर्वस्य कुटुम्बजनस्य सन्तापनशीलाश्चेत्यर्थः, कुमारदेष्णाः धनदानद्वारेण कन्यां लम्भयन्तः कुमाराणां दातारश्च । अथवा कुमार इव देवनीयाः क्रीडनीया[9] इत्यर्थः । किञ्च जयतः धनानां जेतुः कितवस्य पुनर्हणः पुनः पश्चात् हन्तारश्च । केन । बर्हणा परिबर्हिणा परिवृद्धेन वधेन सर्वस्वहरणलक्षणेन । कथम्भूताः पुनर्हन्तारः । मध्वा मधुना क्षौद्रेण विभीदकप्रभवेन[10] संपृक्ताः संसृष्टाः प्रतिकितवेन देवनवेलायां प्रकाशं संक्षिप्ता इत्यर्थः । एतत् परमरहस्यप्रकाशनीयं कथितम् ॥ ७ ॥

---

१-१. °तव्यंति पृच्छन्नित्यर्थः वि[1]; °तव्यंति वृणीतः वि[2] अ[1]. २. देवनेच्छानां मूको. ३-३. किं वातयम् वि[3] अ; किं त्वया वि[1]. ४-४. नास्ति वि[1,2]. ५. प्रतिदीप्ते मूको. ६. °स्तिमिरप्र° मूको. ७. आकृ° मूको. ८. व्यथिता° मूको. ९. क्रीणीया वि[2] अ; निनीषा वि[1]. १०. विभीतक° वि[2] अ.

वेङ्कट० तीक्ष्णाग्रः अङ्कुशः। पिण्डिताग्रो नितोदः। अक्षाः एव अङ्कुशिनः नितोदिनः[१] इति। पुरुषस्य आकर्षणात् आह — निकर्तनशीलाः, पराजये आत्मनः तपनाः, विजये[२] परेषाम् तापयिष्णवः। कुमारतिः हर्षकर्मा। हर्षदानाः[३], जयतः अपि पुनर्हन्तारः, मधुना सम्पृक्ताः चेत् प्रतिकितवस्य परिबर्हणायै[४] भवन्ति[५] ॥ ७ ॥

त्रिपञ्चाशः क्रीळति व्रात एषां देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते राजा चिदेभ्यो नम इत् कृणोति ॥ ८ ॥

त्रिऽपञ्चाशः। क्रीळति। व्रातः। एषाम्। देवःऽइव। सविता। सत्यऽधर्मा।
उग्रस्य। चित्। मन्यवे। न। नमन्ते। राजा। चित्। एभ्यः। नमः। इत्। कृणोति ॥ ८ ॥

उद्गीथ० त्रिपञ्चाशः त्र्यधिकपञ्चाशत्संख्योपेतः क्रीळति क्रीडति आस्फारे[६] व्रातः सङ्घातः स्तुत्यः [७]एषाम् अक्षाणां[७] सम्बन्धी[८]। किमिव विहरति। देवः इव सविता सत्यधर्मा यथा देवः सविता सत्यकर्मा दिवि विहरति, एवम् अक्षसम्बन्धिसङ्घातः। स्तुत्या चाक्षा एवात्र[९] स्तूयन्ते। किञ्च उग्रस्य चित् क्रूरस्यापि[१०] मन्यवे पञ्चम्यर्थे चतुर्थीयम्। मन्योः क्रोधात्[११] न आ(?) नमन्ते आभिमुख्येन मर्यादया वा न प्रह्वीभवन्ति न वशे वर्तन्ते अक्षाः। किञ्च राजा चित् सर्वलोकनम्यो राजा एभ्यः अक्षेभ्यः नमः इत् कृणोति देवनवेलायां नमस्कारमेव करोति, नावमन्यत इत्यर्थः ॥ ८ ॥

वेङ्कट० एषाम् अक्षाणाम् त्रिपञ्चाशः व्रातः जगति सञ्चरति। तावद्भिः[१२] अक्षैराक्षिका दीव्यन्ति। [१३]देवः इव[१३] सविता सत्यधर्मा। ते अमी उग्रस्य अपि पुरुषस्य मन्यवे न नमन्ति। तमपि जयन्ति। राजा अपि[१४] एभ्यः नमस्कारमेव करोति, न युद्धम् इति ॥ ८ ॥

नीचा वर्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

नीचा। वर्तन्ते। उपरि। स्फुरन्ति। अहस्तासः। हस्तऽवन्तम्। सहन्ते।
दिव्याः। अङ्गाराः। इरिणे। निऽउप्ताः। शीताः। सन्तः। हृदयम्। निः। दहन्ति ॥ ९ ॥

उद्गीथ० [१५]नीचा वर्तन्ते देवनकाले[१५] क्षिप्ताः भूमौ नीचैर्वर्तमानाः लुठन्तः सन्त इत्यर्थः। उपरि स्फुरन्ति पराजयात् भीतानां द्यूतकराणां हृदयस्योपरि स्फुरन्तीव चलन्तीवेत्यर्थः। किंच अहस्तासः हस्तरहिता अपि सन्तः हस्तवन्तम् द्यूतकरम् सहन्ते पराजयकरणेन अभिभवन्त्यक्षाः। किञ्च दिव्याः दिविभवाः, अप्राकृता इत्यर्थः, अङ्गाराः अक्षलक्षणाः इरिणे आस्फारे[१६] समिन्धनरहिते न्युप्ताः कितवैः प्रक्षिप्ताः शीताः सन्तः हिमस्पर्शा अपि सन्तः कितवानां हृदयं पराजयजनितदुःखेन निः दहन्ति नियमेन भस्मीकुर्वन्ति इव[१७] ॥ ९ ॥

---

१. दिनः वि[२] अ[१]; नीतोदिन. वि[१]. २. जये वि[१]. ३. हर्षका···वि[२] अ[१]. ४. °णावै वि[२] अ[१]. ५. भवत वि[२] अ[१]; भवन्तः वि[१]. ६. आस्वरे मूको. ७-७. एषा समक्षाणां मूको. ८. सम्बन्धि मूको. ९. एवा मूको. १०. °पि वा मूको. ११. क्रोधा मूको. १२ °द्भिः निम् वि[२] अ[१]; स्तुतम् वि[१]. १३-१३. नास्ति वि[१]. १४. हि वि[१] १५-१५. वन° मूको. १६. आस्वरे मूको. १७. नास्ति वि[२] अ.

वेङ्कट० स्थले नीचीनाः वर्तन्ते, उपरि च[1] स्फुरन्ति आक्षिकस्य हस्त आ निघातोः। ते अमी हस्तवर्जिताः हस्तवन्तम् अभिभवन्ति[2] अयुद्धेन। केचन अन्तरिक्ष्याः अङ्गाराः इरिणे देवने न्युप्यमानाः शीताः[3] सन्तः कस्यचिद् हृदयम् निः दहन्ति इति परोक्षम् अक्षान् आह ॥ ९ ॥

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्व स्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥ १० ॥

जाया । तप्यते । कितवस्य । हीना । माता । पुत्रस्य । चरतः । क्व । स्वित् ।
ऋणऽवा । बिभ्यत् । धनम् । इच्छमानः । अन्येषाम् । अस्तम् । उप । नक्तम् । एति ॥ १० ॥

उद्गीथ० जाया भार्या तप्यते वियोगजसन्तापम् अनुभवति[4] कितवस्य सम्बन्धिनी [5]हीना 'ओहाक्[5] त्यागे'। त्यक्ता सती। माता च सन्तप्यते पुत्रस्य कितवाख्यस्य[6] चरतः क्व स्वित् अक्षपरिद्यूतस्य निर्वेदात् क्वापि गच्छतः सम्बन्धिनी। किञ्च ऋणवा अक्षपराजयजनितर्णवान् सर्वतः बिभ्यत् धनम् स्तेयजनितम् इच्छमानः कामयमानः अन्येषाम् ब्राह्मणादीनाम् अस्तम् गृहम् उप एति गच्छति नक्तम् रात्रौ ॥ १० ॥

वेङ्कट० जाया तप्यते कितवस्य परित्यक्ता, माता च तप्यते क्व चित् चरतः पुत्रस्य। यद्वा माता च अन्यत्र भवति। अपि [7]च ऋणवान्[7] उत्तमर्णात् बिभ्यत् निर्धनः धनम् इच्छन्[8] अन्येषाम् गृहम् उप एति रात्रौ ॥ १० ॥

[9]इति सप्तमाष्टके अष्टमाध्याये चतुर्थो वर्गः[9] ॥

स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान् युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद ॥ ११ ॥

स्त्रियम् । दृष्ट्वाय । कितवम् । तताप । अन्येषाम् । जायाम् । सुऽकृतम् । च । योनिम् ।
पूर्वाह्णे । अश्वान् । युयुजे । हि । बभ्रून् । सः । अग्नेः । अन्ते । वृषलः । पपाद ॥ ११ ॥

उद्गीथ० स्त्रियम् अन्येषाम् मनुष्याणाम् जायाम् जायाभूताम् दृष्ट्वाय सामर्थ्यात् सुखितां दृष्ट्वा सुकृतम् च सुसंस्कृतं च योनिम् गृहं दृष्ट्वा मज्जाया[10] दुःखिता गृहं चासंस्कृतमिति कितवम् तताप कितवस्तप्यते इति। अत्र[11] प्रथमाऽर्थे द्वितीया[12]। वर्तमाने च लिट्। किञ्च पूर्वाह्णे आदित्योदयानन्तरमेवेत्यर्थः, अश्वान् अश्वसदृशान् अश्वान् द्यूतकर्मवोढॄन्[13] इत्यर्थः, व्याप्तॄन्[14] वा अक्षान् युयुजे युङ्क्ते द्यूतकर्मणि। हि इति पदपूरणः। बभ्रून् बभ्रुवर्णान् अक्षान्। युक्त्वा चतुर्थम् अह्नः[15] च अग्नेः अग्निसदृशस्याह्नः अन्ते अवसाने अस्ते आदित्ये सः वृषलः वृषलसदृशः

१. नास्ति वि[1]. २. [°]भितपन्ति वि[1]. ३. शिताः मूको. ४. [°]वन्ती मूको. ५-५. ना हो वि[1]; ओहाङ् वि[1] अ. ६. कितवस्व वि[1]. ७-७. वर्षणवान् वि[1]; च ऋतुवान् वि[2]; ऋतवान् अ[1]. ८. इच्छमानः वि[1]. ९-९. नास्ति मूको. १०. जाया…त्रि[1]. ११. अतः मूको. १२. द्वितीयार्थे मूको. १३. [°]कमात्रो[°] मूको. १४. वाहकृत् पितॄन् वि[1]; वापितॄन् वि[2] अ. १५. अह्नः मूको.

शास्त्रातिक्रमात् शूद्रसमः कितवः पपाद तृट्क्षुत्पिपासार्दितः[1] भग्नपृष्ठकटिग्रीवस्कन्धदृष्टिरधोमुखः जितः शोकार्णवे निमग्नः शयनार्थं भूमौ पतति। अथवा स वृषलः शीतार्दितः सन् रात्रावग्नेः समीपे पतति शयनार्थम् ॥ ११ ॥

**वेङ्कट०** स्त्रियम् दृष्ट्वा कितवम् तपति अक्षः अन्येषाम् जायाम् संस्कृतम्[2] च गृहम्। असमानकर्तृकतायाम्[3] आर्षः क्त्वाप्रत्ययः। प्रातःकाले [4]अश्वान् अभियुनक्ति बभ्रुवर्णान्[4]। सः अग्नेः अन्ते वृषलः रात्रौ गच्छति ॥ ११ ॥

**यो वः सेनानीर्महतो गणस्य राजा व्रातस्य प्रथमो बभूव।**
**तस्मै कृणोमि न धना रुणध्मि दशाहं प्राचीस्तदृतं वदामि ॥ १२ ॥**

यः। वः। सेनाऽनीः। महतः। गणस्य। राजा। व्रातस्य। प्रथमः। बभूव।
तस्मै। कृणोमि। न। धना। रुणध्मि। दश। अहम्। प्राचीः। तत्। ऋतम्। वदामि ॥ १२ ॥

**उद्गीथ०** यः अक्षः वः युष्माकमक्षाणाम् सेनानीः। कस्य। महतः गणस्य महाप्रभावस्य अक्षसङ्घातस्य। राजा स्वामी च व्रातस्य तदीयसङ्घातस्य प्रथमः पूर्वः बभूव भवति। तस्मै अक्षाय कृणोमि करोमि, पूजामिति शेषः। न धना रुणध्मि नापि धनानि धारयामि, यदि भवन्ति तत्प्रभावात्, ततो ददामीत्यर्थः। दश प्राचीः दशवारान्[5] दशकृत्व इत्यर्थः। तत् [6]तादर्थ्ये-चतुर्थ्या लुगत्र[6] द्रष्टव्यः। तस्मै तदर्थम् तदाराधनार्थमित्यर्थः, ऋतम् सत्यम् अहम् वदामि महदेतत् तपः द्यूतकराणां यत् सत्यवचनम्। एतज्ज्ञात्वा मम प्रसीदतु जयस्य कर्ता भवतु उक्तगुणोऽक्ष इत्यभिप्रायः ॥ १२ ॥

**वेङ्कट०** यः युष्माकम् अक्षाणाम्[7] महतः गणस्य सेनानीः बभूव, राजा च[8] व्रातस्य[9] मुख्यः। गणव्रातयोः अल्पो भेदः, तस्मै अहं करोमि अञ्जलिम्। अत ऊर्ध्वं न अहम् धनानि अक्षार्थम् रुणध्मि। तदेवाऽऽह — दश अहम् प्राचीः अङ्गुलीः करोमि। तत् इदम् अहं सत्यमेव ब्रवीमि इति ॥ १२ ॥

**अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः।**
**तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ १३ ॥**

अक्षैः। मा। दीव्यः। कृषिम्। इत्। कृषस्व। वित्ते। रमस्व। बहु। मन्यमानः।
तत्र। गावः। कितव। तत्र। जाया। तत्। मे। वि। चष्टे। सविता। अयम्। अर्यः ॥ १३ ॥

**उद्गीथ०** ऋषिरात्मानम् अन्तरात्मकर्मात्मरूपेण[10] द्विधा विभज्य कर्मात्मानं निवर्तयन् आह — हे कितव! मम कर्मात्मन्! बहुप्रत्यवायदर्शनात् अक्षैः मा दीव्यः मा देवीः। कृषिम् इत्

---

१. कृक्षुत्पि° वि[1]; कृत्क्षुत्पिपासार्दितः ··· वि[2] अ. २. सुसं° वि[1]. ३. असतान° वि[2] अ[1]; समानकर्तृकतया° वि[1]. ४-४. स्वाभिन्ननक्तिश्वभ्रू° वि[2] अ[1]. ५. दशवान् मूको. ६-६. °र्थ्यात् लुगत्र वि[1]; °र्थ्यलुगत्र वि[2] अ. ७. नास्ति वि[1]. ८. व वि[2] अ[1]; प वि[1]. ९. प्रातस्य वि[1]; द्रातस्य वि[2]; धातस्य अ[1]. १०. अन्तरात्मरूपेण मूको.

कृषस्व कृषिमेव कर्ष। वित्ते धने न्यायोपात्ते रमस्व रतिं कुरु सन्तोषं भावय, न किञ्चनान्यायोपात्ते द्यूतार्जिते, बहु मन्यमानः। कस्मात् कारणात् कृषिमित् कृषस्वेति ब्रवीमि। यस्मात् तत्र कृषौ कृष्यमाणायां सत्याम् गावः, भवन्तीति शेषः। तत्र एव जाया भवति। तत् मे वि चष्टे, तदेव[1] मह्यं विविधम् आख्यातवान् [2]श्रुतिस्मृत्यागमसम्प्रदाय-करणः सर्वात्मा[2] सविता [3]आदित्य इत्यर्थः[3], अयम् [4]नभसि दर्शनगोचरतामापन्नः[4] नः अर्यः सर्वस्येश्वरः ॥ १३ ॥

**वेङ्कट०** [5]अक्षैः मा[5] दीव्यः। कृषिम् एव कृषस्व। आत्मीये धने रमस्व तदेव बहु मन्यमानः। तत्र कृष्याम् गावः कितव![6] सन्ति, तत्र जाया। तत् मे वि चष्टे सविता अयम् ईश्वरः ॥ १३ ॥

मि॒त्रं कृ॑णु॒ध्वं खलु॑ मृ॒ळता॑ नो॒ मा नो॑ घो॒रेण॑ चरता॒भि धृ॒ष्णु ।
नि वो॒ नु म॒न्युर्वि॑शता॒मरा॑तिर॒न्यो ब॑भ्रू॒णां प्रसि॑तौ॒ न्व॑स्तु ॥ १४ ॥

मि॒त्रम् । कृ॒णु॒ध्व॒म् । खलु॑ । मृ॒ळत॑ । नः॒ । मा । नः॒ । घो॒रेण॑ । च॒र॒त॒ । अ॒भि । धृ॒ष्णु ।
नि । वः॒ । नु । म॒न्युः । वि॒श॒ता॒म् । अरा॑तिः । अ॒न्यः । ब॒भ्रू॒णाम् । प्रऽसि॑तौ । नु । अ॒स्तु ॥१४॥

**उद्गीथ०** मित्रम् स्निग्धम् कृणुध्वम् यूयम् अभि धृष्णु तृतीयार्थे प्रथमैषा। अभिधृष्णुना (?) सर्वार्थानामभिभवित्रा, अपहारिणेत्यर्थः। [7]मा नः घोरेण चरत[7] सर्वार्थापहारित्वाद्[8] घोरम् अक्षव्यसनम् अस्माकं [9]मा कार्ष्टेत्यर्थः[9]। किं तर्हि करवाम। [10]उच्यते। नः मृळत कुरुत सुखमस्मभ्यमित्यर्थः[10]। [*]वः मन्युः नु नि विशताम्[*]। क्रुद्धेषु च युष्मासु अस्मत्तः अन्यः अरातिः अस्मच्छत्रुः बभ्रूणाम् बभ्रुवर्णानां युष्माकम् अक्षाणां सम्बन्धिन्याः[11] प्रसितौ प्रबन्धने [12]व्यसनलक्षणे नु[12] क्षिप्रम् अस्तु भवतु। अन्यस्य अस्मच्छत्रोः अक्षव्यसनमस्तु, माऽस्माकमित्यर्थः[13] ॥ १४ ॥

**वेङ्कट०** मैत्रीम् अस्मासु कृणुध्वम्। सुखयत अस्मान्। [14]मा अस्मान्[14] घोरेण अमैत्र्या अभि चरत। धृष्टः[15] शत्रुभूतो युष्माकम् मन्युः नि विशताम् विरमतु। अन्यः बभ्रुवर्णानां[16] प्रबन्धने[17] भवतु ॥ १४ ॥

[*]इति सप्तमाष्टके अष्टमाध्याये पञ्चमो वर्गः[*] ॥

## [ ३५ ]

[*]लुशो धानाक ऋषिः। विश्वे देवा देवता। जगती छन्दः, त्रयोदशीचतुर्दश्यौ त्रिष्टुभौ[*]।

अबु॑ध्रमु॒ त्य इन्द्र॑वन्तो अ॒ग्नयो॒ ज्योति॒र्भर॑न्त उ॒षसो॒ व्यु॑ष्टिषु ।
म॒ही द्यावा॑पृथि॒वी चे॑तता॒मपो॒ऽद्या दे॒वाना॒मव॒ आ वृ॑णीमहे ॥ १ ॥

---

१. तद्वैव मूको २-२. °सम्प्रदानकरणसर्वात्मा मूको. ३-३. °दित्यर्थः मूको. ४-४. न भवसि दर्शनगोचरत्वावन्न नः मूको. ५-५. नास्ति वि[१]. ६. कित वि[२] अ[१]; कितवः वि[१]. ७-७. नास्ति मूको. ८. °प्रहारत्वाद् मूको. ९-९. मार्ष्टेत्य मूको. १०-१०. उच्यामे सभ्यमित्यर्थः मूको. ११. °न्यान् मूको. १२-१२. °क्षणेन मूको. १३. °र्थः। इत्यृग्वेदभाष्ये उद्गीथाचार्यकृतौ प्रमेति सूक्तं समाप्तम् वि[२] अ. १४-१४. नास्ति वि[१]. १५. सृष्ट वि[२] अ[१]; धृष्ट वि[१]. १६. बभ्रू° मूको. १७. ब° मूको.

अबुध्रम् । ऊँ इति । त्ये । इन्द्रऽवन्तः । अग्नयः । ज्योतिः । भरन्तः । उषसः । विऽउंष्टिषु ।
मही इति । द्यावापृथिवी इति । चेतताम् । अपः । अद्य । देवानाम् । अवः । आ । वृणीमहे ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'अबुध्रम्' इति चतुर्दशर्चं वैश्वदेवम् धनाकस्य[1] पुत्रो धानाको लुशो[2] ददर्श। अबुध्रम् उ त्ये। अबुध्रम् 'झोऽन्तः' ( पा ७,१,३ ) इति [3]झ इत्यस्यान्तादेशे[3] नकारस्य छान्दसो मकारः। अबुध्रन् बुध्यन्ते स्वमधिकारं हविर्वहनादिकं कर्तृत्वेनावगच्छन्ति। उ इति पदपूरणः। त्ये ते यजमानस्य, अभ्युदयनिःश्रेयसहेतवः[4] इत्यध्याहार्यम्, इन्द्रवन्तः यष्टव्येन इन्द्रादित्यादिदेवगणेन[5] तद्वन्त इत्यर्थः, अग्नयः आहवनीयादयः अस्मदीयाः ज्योतिः स्वदीप्तिं ज्वालालक्षणाम् भरन्तः ऊर्ध्वं हरन्तः नयन्त इत्यर्थः, [6]आकाशे इति शेषः[6]। [7]कदा। उषसः व्युष्टिषु व्युच्छनेषु तमसां विवासनकालेषु। किञ्च मही महत्यौ द्यावापृथिवी द्यावापृथिव्यौ चेतताम् जानीताम्[7]। किम्। अपः कर्म अस्मत्कर्माङ्गभावादिस्वाधिकारयुक्तम्[8]। वयमपि च अद्य अस्मिन्नहनि देवानाम् अस्मत्कर्माङ्गभूतानां[9] प्रसन्नानां सतां सम्बन्धि[10] अवः रक्षणं स्वर्गतिं तर्पणं वा आ वृणीमहे आभिमुख्येन मर्यादया वा प्रार्थयामहे देवान् ॥ १ ॥

**वेङ्कट०** [11]लुशो धानाकः[11]। प्रबुद्धा [12]आसन् अमी[12] इन्द्रवन्तः अग्नयः ज्योतिः धारयन्तः उषसः व्युच्छनेषु। महत्यौ द्यावापृथिव्यौ जानीताम् कर्म। अद्य देवानाम् रक्षणम् वयम् आ वृणीमहे ॥ १ ॥

दिवस्पृथिव्योरव आ वृणीमहे मातॄन्त्सिन्धून् पर्वताञ्छर्यणावतः।
अनागास्त्वं सूर्यमुषासमीमहे भद्रं सोमः सुवानो अद्या कृणोतु नः ॥ २ ॥

दिवःपृथिव्योः । अवः । आ । वृणीमहे । मातॄन् । सिन्धून् । पर्वतान् । शर्यणाऽवतः ।
अनागाःऽत्वम् । सूर्यम् । उषसम् । ईमहे । भद्रम् । सोमः । सुवानः । अद्य । कृणोतु । नः ॥ २ ॥

**उद्गीथ०** दिवस्पृथिव्योः द्यावापृथिव्योः सम्बन्धि अवः रक्षणं तर्पणं वा आ वृणीमहे आभिमुख्येन मर्यादया वा प्रार्थयामहे। मातॄन् सर्वस्य मातॄन् सिन्धून् स्यन्दितॄन् नदान् पर्वतान् च हिमवदादीन् शैलान् मेघवत्त्वात्[13]। कीदृशान्। शर्यणावतः[14] [15]सर्वस्य सारभूतानित्यर्थः[15]। अवः आ वृणीमहे इत्यनुवर्तते। किंच अनागास्त्वम् कर्मवैगुण्यजनितापराधवर्जितत्वम् सूर्यम् उषसम् च ईमहे वयम्। किंच भद्रम् कल्याणम् सोमः सुवानः अभिषूयमाणः अद्य अस्मिन् अहनि कृणोतु करोतु नः अस्माकम् ॥ २ ॥

**वेङ्कट०** द्यावापृथिव्योः पालनम् आ वृणीमहे लोकस्य निर्मातॄन् सिन्धून् शिलोच्चयांश्च शर्यणावतः

---

१. लुशस्य मूको. २. नास्ति मूको. ३-३. इत्यस्यान्ता° मूको. ४. °दयिनिनिश्रेय° मूको. ५. °न्द्रादिदेव° वि[1]; °न्द्रादित्येदव° वि[2] अ. ६-६. कादशाषः मूको. ७-७. नास्ति मूको.; पूर्तिः सायणानुसारिणी द्र. ८. °भावात्···स्वाधिका° वि[2] अ; °भावत् इति स्वाधिका° वि[1]. ९. °मांशभू° मूको. १०. सम्बन्धी मूको. ११-११. शुशो धोनाक वि[2] अ[2]; लुशो धनाकः वि[1]. १२-१२. °मि वि[2] अ[2]; आसमी वि[1]. १३. मेघत्वात् मूको. १४. अर्यब्दावतः वि[1]; अय्याम्बावतः वि[2]; अप्यम्बावतः अ. १५-१५. सर्वस्यासारभू° मूको.

सरसः समीपवर्तिनः। तथा सूर्यम् उषसम् च अनागास्त्वम् याचामहे। भद्रम् सोमः च सूयमानः अद्य[1] कृणोतु अस्माकम्[2] ॥ २ ॥

द्यावा नो अद्य पृथिवी अनागसो मही त्रायेतां सुविताय मातरा।
उषा उच्छन्त्यप बाधतामघं स्वस्त्य१ग्निं समिधानमीमहे ॥ ३ ॥

द्यावा। नः। अद्य। पृथिवी इति। अनागसः। मही इति। त्रायेताम्। सुविताय। मातरा।
उषाः। उच्छन्ती। अप। बाधताम्। अघम्। स्वस्ति। अग्निम्। सम्ऽइधानम्। ईमहे ॥ ३ ॥

**उद्गीथ०** द्यावा पृथिवी इति व्यवहितयोः सम्बन्धः। द्यावापृथिव्यौ नः अस्मान् अनागसः कर्मवैगुण्यजनितापराधवर्जितान् मही महत्यौ त्रायेताम् सर्वतः पालयेताम् सुविताय सुगताय स्वर्गप्राप्त्यर्थमित्यर्थः, मातरा मातरौ सर्वस्य मातृभूते। किंच उषाः उच्छन्ती तमांसि विवासयन्ती अप बाधताम् कर्माङ्गभावं प्रतिपद्यमाना अपनयत्वस्माकम् अघम् पापम्। किञ्च स्वस्ति सर्वप्रकारमविनाशम् अग्निम् आहवनीयादिकम् समिधानम् कर्मार्थम् सम्यग् दीप्यमानम्[3] ईमहे याचामहे वयम् ॥ ३ ॥

**वेङ्कट०** द्यावापृथिव्यौ अस्मान् अद्य अपापान्[4] महत्यौ रक्षेताम् सुखार्थम्[5] मातरौ। तथा उषाः[6] अपि उच्छन्ती अप बाधताम् पापम्। अविनाशम् अग्निम् समिधानम् याचामहे ॥ ३ ॥

इयं न उस्रा प्रथमा सुदेव्यं रेवत् सनिभ्यो रेवती व्युच्छतु।
आरे मन्युं दुर्विदत्रस्य धीमहि स्वस्त्य१ग्निं समिधानमीमहे ॥ ४ ॥

इयम्। नः। उस्रा। प्रथमा। सुऽदेव्यम्। रेवत्। सनिऽभ्यः। रेवती। वि। उच्छतु।
आरे। मन्युम्। दुःऽविदत्रस्य। धीमहि। स्वस्ति। अग्निम्। सम्ऽइधानम्। ईमहे ॥ ४ ॥

**उद्गीथ०** इयम् उस्रा यजमानभोगानाम् अवश्यायानां देवयागानां च उस्राविणी[7], कर्माङ्गभावप्रतिपत्त्या कर्त्रीत्यर्थः, प्रथमा देवयागकालानां पूर्वा सुदेव्यम् शोभनं देवयोग्यं च रेवत् दृष्टादृष्टफल-लक्षणेन अस्मभ्यं दातव्येन धनेन तद्वत्। किं तत्। सामर्थ्याद् हि[8] प्रधानयागकालत्वम्। देवेभ्यो ददातीति शेषः। नः अस्मभ्यम् सनिभ्यः दृष्टादृष्टफललाभार्थमित्यर्थः, रेवती धनवती वि उच्छतु तमांसि विवासयतु उषाः। किञ्च आरे अस्मत्तो दूरे मन्युम् क्रोधम् दुर्विदत्रस्य [9]दुर्धनस्य पुरुषस्य धीमहि[9]। व्याख्यातार्थोऽयं पादः। आदरार्थं च पुनः पुनर्वचनम् ॥ ४ ॥

---

१. आ मूको. २. इति अ[1]. ३. °नमग्निम् मूको. ४. अवाचान् वि[2] अ[1]; अपापात् वि[1]. ५. असु° वि[1,2]. ६. उषा मूको. ७. उस्रा° मूको. ८. नास्ति वि[1]. ९-९. नास्ति मूको.

वेङ्कट० इयम् अस्मभ्यम् उषा मुख्या सुदेवानामर्हम्[1] वि उच्छतु धनयुक्तम् च भजमानेभ्यो धनवती। दूरे क्रोधम्[2] दुर्धनस्य नि धीमहि इति ॥ ४ ॥

प्र याः सिस्रते सूर्यस्य रश्मिभिर्ज्योतिर्भरन्तीरुषसो व्युष्टिषु।
भद्रा नो अद्य श्रवसे व्युच्छत स्वस्त्य१ग्निं समिधानमीमहे ॥ ५ ॥

प्र । याः । सिस्रते । सूर्यस्य । रश्मिऽभिः । ज्योतिः । भरन्तीः । उषसः । विऽउष्टिषु ।
भद्राः । नः । अद्य । श्रवसे । वि । उच्छत । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ५ ॥

उद्गीथ० याः उषसः प्र सिस्रते [3]प्र इत्येतत्[3] सम् इत्येतस्य स्थाने[4]। सङ्गच्छन्ते सूर्यस्य रश्मिभिः सह ज्योतिः दीप्तिम् आत्मीयाम्[5] भरन्तीः भरन्त्यो [6]विक्षिपन्त्य इत्यर्थः[6], व्युष्टिषु तमसां विवासनवेलासु, ताः उषसः भद्राः नः कल्याण्यः[7] अस्माकम् अद्य प्रधानयागाहनि श्रवसे कीर्त्यर्थम् अन्नार्थं वा वि उच्छत परोक्षरूपेण प्रक्रान्तत्वादत्र प्रथमस्य स्थाने मध्यमः। व्युच्छन्तु तमांसि विवासयन्तु। वयमपि उषसः प्रसादात् अद्य लब्धकीर्तयो लब्धधना वा सन्तः स्वस्ति अग्निम् समिधानम् ईमहे ॥ ५ ॥

वेङ्कट० प्र सिस्रते याः[8] सूर्यस्य रश्मिभिः सह ज्योतिः भरन्तीः उषसः आत्मनो व्युच्छनेषु, ता यूयं भजनीयाः अस्माकम् अद्य अन्नाय वि उच्छत ॥ ५ ॥

[9]इति सप्तमाष्टके अष्टमाध्याये षष्ठो वर्गः[9] ॥

अनमीवा उषस आ चरन्तु न उदग्नयो जिहतां ज्योतिषा बृहत्।
आयुक्षातामश्विना तूतुजिं रथं स्वस्त्य१ग्निं समिधानमीमहे ॥ ६ ॥

अनमीवाः । उषसः । आ । चरन्तु । नः । उत । अग्नयः । जिहताम् । ज्योतिषा । बृहत् ।
अयुक्षाताम् । अश्विना । तूतुजिम् । रथम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ६ ॥

उद्गीथ० अनमीवाः अरोगाः उषसः आ चरन्तु आगच्छन्तु नः अस्माकम्, कर्मार्थमिति शेषः। अग्नयः च आहवनीयादयः उत् जिहताम् उद्गच्छन्तु ज्योतिषा ज्वालालक्षणेन बृहत् तृतीयार्थे प्रथमैषा। लुग् वा तृतीयायाः। बृहता। देवयागार्थमुज्ज्वलितेषु वह्निषु आ (?) अयुक्षाताम्[10] आङुपसर्गश्रुतेः(?) योग्यक्रियापदाध्याहारः कार्यः। अस्मद्यज्ञम् आगन्तुं[11] युवाम् अश्विनौ तूतुजिम् क्षिप्रं शीघ्रगमनम्[12] रथम् रासभाभ्याम्। देवयागे सन्निवृत्ते स्वस्ति अग्निम् समिधानम् ईमहे ॥ ६ ॥

वेङ्कट० अरोगाः उषसः आ चरन्तु अस्मान्। उत् गच्छन्तु च अग्नयः[13] ज्योतिषा युक्ताः। अश्विनौ च क्षिप्रम् रथम् अयुक्षाताम् युक्ताम्[14] ॥ ६ ॥

---

१. °वानार्हम वि[2]; °वानार्य अ[1]; °वानार्हां वि[1]. २. क्रोध मूको. ३-३. प्रेत्येव मूको. ४. स्थानेन मूको. ५. °त्मीयात मूको. ६-६. °पन्त्यर्थः वि[1,2]; °पन्त्यः अ. ७. कल्याणाः मूको. ८. या मूको. ९-९. नास्ति मूको. १०. दयु° वि[2] अ. ११. °गच्छन्तु मूको. १२. शीघ्रमाग° मूको. १३. आग्नेयः मूको. १४. युक्ताम् वि[1]; यु…ताम वि[2]; त्रुटितम् अ[1].

श्रेष्ठं नो अद्य सवितर्वरेण्यं भागमा सुव स हि रत्नधा असि ।
रायो जनित्रीं धिषणामुप ब्रुवे स्वस्त्य१ग्निं समिधानमीमहे ॥ ७ ॥

श्रेष्ठम् । नः । अद्य । सवितः । वरेण्यम् । भागम् । आ । सुव । सः । हि । रत्नऽधाः । असि ।
रायः । जनित्रीम् । धिषणाम् । उप । ब्रुवे । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥ ७ ॥

**उद्गीथ०** श्रेष्ठम् प्रशस्यतमम् नः अस्मदर्थम् अद्य हे सवितः! वरेण्यम् वरणीयं च भागम् भजनीयं च देवमनुष्याद्युपभोगार्हं धनम् आ सुव अभ्यनुजानीहि, देहीत्यर्थः । कस्मादेवमुच्यते[1] । यस्त्वम्[2] अस्माभिरर्थितः, सः त्वम् हि यस्मात् रत्नधाः असि धनानां दाता संविभक्ता भवसि सर्वस्मै । उक्तं च मन्त्रान्तरे 'विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम्' ( ऋ १,२२,७ ) इति । इममेव मन्त्रमधिकृत्य ब्राह्मणमपि भवति अस्मिन्नेवार्थे — 'तदेष[3] सविता विभक्ताभ्यः प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यः' ( माश १०,२,६,५ ) इत्यादिकम् । रायः धनस्य जनित्रीम् जनयित्रीम् उत्पादयित्रीम्[4] धिषणाम् सर्वदेवस्तुतिलक्षणां वाचम् उप ब्रुवे उपगम्य ब्रवीमि, धनम् उक्तलक्षणम् अस्मभ्यं देहीति । किञ्च स्वस्ति अग्निम् समिधानम् ईमहे ॥ ७ ॥

**वेङ्कट०** [5]श्रेष्ठम् अस्मभ्यम्[5] अद्य सवितः! वरणीयम् भागम् आ सुव । सः हि त्वम् रत्नधाः भवसि । धनस्य जनयित्रीम् धिषणाम् देवीम् उप स्तौमि ॥ ७ ॥

पिपर्तु मा तदृतस्य प्रवाचनं देवानां यन्मनुष्या३ अमन्महि ।
विश्वा इदुस्राः स्पळुदेति सूर्यः स्वस्त्य१ग्निं समिधानमीमहे ॥ ८ ॥

पिपर्तु । मा । तत् । ऋतस्य । प्रऽवाचनम् । देवानाम् । यत् । मनुष्याः । अमन्महि ।
विश्वाः । इत् । उस्राः । स्पट् । उत् । एति । सूर्यः । स्वस्ति । अग्निम् । समऽइधानम् । ईमहे ॥

**उद्गीथ०** पिपर्तु ईप्सितार्थसम्प्रदानेन[6] पालयतु मा माम् तत् ऋतस्य यज्ञस्य सत्यस्य वा यथाभूतस्य गुणगणस्य सम्बन्धि प्रवाचनम् प्रकर्षेणोच्यन्ते देवतागुणाः अनेनेति प्रवाचनं स्तोत्रम् देवानाम् स्वभूतार्थाय वा यत् स्तोत्रम् मनुष्याः यजमानमनुष्या वयम् अमन्महि कर्तुं ज्ञातवन्तः कृतवन्त इत्यर्थः । विश्वाः इत् सर्वा [7]उस्राः रश्मीन् भोगानाम् उत्स्राविणीः[7] वा स्तुतीः स्पट् 'स्पश बन्धने' इत्यस्य वा 'स्पश ग्रहणश्लेषणयोः' इत्यस्य [8]वा क्विबन्तस्यैतद्रूपम्[8] । आत्मनि बध्नन् गृह्णन् श्लेषयन् वा उत् एति उद्गच्छति सूर्यः । स च माम् ईप्सितार्थसम्प्रदानेन पालयतु इति योज्यम् । स्वस्ति अग्निम् समिधानम् ईमहे ॥ ८ ॥

**वेङ्कट०** पालयतु[9] [10]माम् तत् सत्यस्य[10] प्रवचनम्[11] देवानाम्, यत् मनुष्याः ब्रूमः । सर्वाः एव उषसः स्पृशन् अवगच्छन् वा उत् एति सूर्यः । तत् इदम् अमृतम् इति ॥ ८ ॥

---

१. °च्यसे वि[१]. २. हि य° मूको. ३. सवेष मूको ४. उत्साद° मूको. ५-५. नास्ति वि[१]. ६. रचितासं° मूको. ७-७. प्रोः रश्मिम् भोनानां उस्रावि° मूको. ८-८. वाक् विन्तबोरित्यस्यैतद्रूपम् मूको. ९. वारयतु मा वारयतु वि[२] अ[१]; पारय° वि[१]. १०-१०. स्य वि[१]. ११. °न वि[२] अ[१].

अद्वेषो अद्य बर्हिषः स्तरीमणि ग्राव्णां योगे मन्मनः साधे ईमहे ।
आदित्यानां शर्मणि स्था भुरण्यसि स्वस्त्य१ग्निं समिधानमीमहे ॥ ९ ॥

अद्वेषः । अद्य । बर्हिषः । स्तरीमणि । ग्राव्णाम् । योगे । मन्मनः । साधे । ईमहे ।
आदित्यानाम् । शर्मणि । स्थाः । भुरण्यसि । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ ९ ॥

**उद्गीथ०** अद्वेषः **अद्वेष्टारः प्रीता वयं देवानाम् अत्यन्तभक्ताः सन्त इत्यर्थः,** अद्य बर्हिषः **वेदिस्तरणस्य** स्तरीमणि **स्तरणे सति** ग्राव्णाम् **च** योगे[1] **अभिषवार्थं सोमेन[2] सह संयोगे सति** मन्मनः **मननीयस्य** साधे **साधने करणे च सति** ईमहे **ईप्सितमर्थं याचामहे देवान्[3] । किञ्च** आदित्यानाम् **स्वभूते** शर्मणि **गृहे मण्डलाख्ये विमानाख्ये वा** स्थाः **तद्भावापत्त्या [4]स्थाता सन्[4] त्वम् हे मदीयान्तरात्मन्!** भुरण्यसि **भुरण्यतिर्गतिकर्मा ( तु. निघ २, १४ )। लोडर्थेऽत्र लट्। भुरण्य[5] स्तुतिभिरुपगच्छ आदित्यान् स्तुहीत्यर्थः । किञ्च** स्वस्ति अग्निम् समिधानम् ईमहे ॥ ९ ॥

**वेङ्कट० द्वेषवर्जितान्** अद्य बर्हिषः **स्तरणे** ग्राव्णाम् **च** योगे **अभिलषितस्य[6] साधके याचामहे आदित्यान्[7] । तेषाम्** आदित्यानाम् **सुखे तिष्ठन् कर्तव्यान् बिभर्षि गच्छसि वा स्तोतः! इति ॥ ९ ॥**

आ नो बर्हिः सधमादे बृहद्दिवि देवाँ ईळे सादया सप्त होतॄन् ।
इन्द्रं मित्रं वरुणं सातये भगं स्वस्त्य१ग्निं समिधानमीमहे ॥ १० ॥

आ । नः । बर्हिः । सधऽमादे । बृहत् । दिवि । देवान् । ईळे । सादय । सप्त । होतॄन् ।
इन्द्रम् । मित्रम् । वरुणम् । सातये । भगम् । स्वस्ति । अग्निम् । सम्ऽइधानम् । ईमहे ॥ १० ॥

**उद्गीथ० आ इत्युपसर्गः सादयेत्यनेन क्रियापदेन सह सम्बन्धयितव्यः ।** नः[8] **अस्माकं स्वभूतं वेदिस्तरणम्** बर्हिः बृहत् 'देवान् आ सादय' **त्वं हे अग्ने! । कुत एतत् । 'इहाद्य** दैव्यं जनं बर्हिरा सादया वसो' ( ऋ १,४५,९ ) **इत्येवमादिष्वाग्नेयेषु मन्त्रेषु अग्नेरुच्यमान-त्वात् । किमर्थम्[10] आसादयानि ।** सधमादे **सहमादनाय सहभूतानां हर्षाय तर्पणायेत्यर्थः ।** दिवि **दीप्ते च बर्हिषि त्वयाऽऽसादितांश्च** देवान् **अहम्** ईळे **स्तौमि** सप्त **सप्तसङ्ख्याकान्** होतॄन् **च स्वपुरुषान् आसादय ।** इन्द्रम् मित्रम् वरुणम् भगम् **च आसादय । किमर्थं चासादयानि[11] ।** सातये **सर्वार्थलाभाय । किञ्च** स्वस्ति अग्निम् समिधानम् ईमहे ॥ १० ॥

**वेङ्कट० आभिमुख्येन स्तौमि अस्माकं यज्ञे, बर्हिः इति यज्ञनाम, सह यत्र मदन्ति, बृहति**

---

१. °गेषु मूको. २. सोमो मूको. ३. वयं देवान् मूको. ४-४. स्त स्थाता स मूको. ५. तुरस्य मूको. ६. अभिवर्षि° वि[1]; अहिषि° वि[2]; अहिषतस्य अ[2]. ७. °त्यानाम मूको. ८. नास्ति मूको. ९. देवानां सा° मूको. १०. किमुत्थम् मूको. ११. °दयन्ति किमर्थम् मूको.

दीप्ते देवान्। सादय तत्र सप्त वषट्कर्तॄन्। इन्द्रादींश्च स्तौमि धनलाभाय इति ॥ १० ॥

[1]इति सप्तमाष्टके अष्टमाध्याये सप्तमो वर्गः[1] ॥

त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये वृ॒धे नो॑ य॒ज्ञम॑वता सजोषसः ।
बृह॒स्पतिं॑ पू॒षण॑म॒श्विना॒ भगं॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ ११ ॥

ते । आ॒दि॒त्याः । आ । ग॒त॒ । स॒र्वऽता॑तये । वृ॒धे । नः॒ । य॒ज्ञम् । अ॒व॒त॒ । स॒ऽजो॒ष॒सः॒ ।
बृह॒स्पति॑म् । पू॒षण॑म् । अ॒श्विना॑ । भग॑म् । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ ११ ॥

**उद्गीथ०** ते आदित्याः! आ गत आगच्छत। किमर्थम्। सर्वतातये 'सर्वदेवात्तातिल्' (पा ४,४,१४२) इत्येवमयं[2] स्वार्थिकः तातिल् प्रत्ययः। सर्वस्मै, अस्मभ्यं यज्ञाङ्गभावाय। अथवा तनोतेः तातिशब्दः[3] यज्ञसन्ततिवचनः[4]। सर्वयज्ञसन्तानाय विस्ताराय निर्विघ्नेन निर्वर्तनायेत्यर्थः[5]। आगत्य च सर्वप्रकारया वृद्ध्या वर्धनाय नः अस्माकम् यज्ञम् अवत रक्षत यूयम् हे सजोषसः! समानप्रीतयः! समानसेवनाः!। बृहस्पतिम् पूषणम् अश्विना भगम् च देवम्, ब्रूम इति शेषः। किञ्च स्वस्ति अग्निम् समिधानम् ईमहे ॥ ११ ॥

**वेङ्कट०** ते[6] आदित्याः! आ गच्छत यज्ञार्थम्। वर्धनाय अस्माकम् यज्ञम् प्रति गच्छत हे सङ्गताः!। बृहस्पत्यादींश्च अविनाशं[7] याचामहे ॥ ११ ॥

तन्नो॑ देवा यच्छत सुप्रवाच॒नं छ॒र्दिरा॑दित्याः सु॒भरं॑ नृ॒पाय्य॑म् ।
पश्वे॑ तो॒काय॒ तन॑याय जी॒वसे॑ स्व॒स्त्य१॒॑ग्निं स॑मिधा॒नमी॑महे ॥ १२ ॥

तत् । नः॒ । दे॒वाः॒ । य॒च्छ॒त॒ । सु॒ऽप्र॒वा॒च॒नम् । छ॒र्दिः । आ॒दि॒त्याः॒ । सु॒ऽभर॑म् । नृ॒ऽपाय्य॑म् ।
पश्वे॑ । तो॒काय॑ । तन॑याय । जी॒वसे॑ । स्व॒स्ति । अ॒ग्निम् । स॒म्ऽइ॒धा॒नम् । ई॒म॒हे॒ ॥ १२ ॥

**उद्गीथ०** तत् नः अस्मभ्यं हे देवाः! यच्छत दत्त सुप्रवाचनम् सुष्ठु शोभनं प्रवचनार्हम्, अत्यन्तशोभनमित्यर्थः, छर्दिः गृहं हे आदित्याः! सुभरम् सुष्ठु धारयितृ सुखनिवासं[8] सुसमृद्धं वेत्यर्थः, नृपाय्यम् नृणां पातृ रक्षितृ सुसङ्गुप्तं चेत्यर्थः। किमर्थम्। पश्वे तोकाय तनयाय सर्वत्र[9] षष्ठ्यर्थे चतुर्थी। पशूनां पुत्रस्य पौत्रस्य अपत्यस्य च सर्वस्य अस्मदादिकस्य जीवसे सुखजीवनाय। किंच स्वस्ति अग्निम् समिधानम् ईमहे ॥ १२ ॥

**वेङ्कट०** [10]तत्† नः देवाः![10] प्र यच्छत सुप्रवाचनम् छर्दिः गृहम् आदित्याः! सुपूर्णम्[11] नृणां रक्षकम् पश्वे पुत्राय पौत्राय च जीवनार्थमिति ॥ १२ ॥

---

१-१. नास्ति मूको. २. इति ह्वमयः मूको. ३. °शब्दं वि[2] अ[1]. ४. °वचनं वि[2] अ[1]. ५. निवर्तना° मूको. ६. नास्ति वि[2] अ; तत्र वि[1]. ७. विनाशं मूको. ८. सुखानि वयं मूको. ९. नास्ति वि[2]. १०-१०. नास्ति वि[1]. † तं वि[2] अ[1]. ११. सुपर्णं वि[2] अ[1]; सम्पूर्णं वि[1].

विश्वे॑ अ॒द्य म॒रुतो॒ विश्व॑ ऊ॒ती विश्वे॑ भवन्त्व॒ग्नयः॒ समि॑द्धाः ।
विश्वे॑ नो दे॒वा अव॒सा ग॑मन्तु॒ विश्व॑मस्तु॒ द्रवि॑णं॒ वाजो॑ अ॒स्मे ॥ १३ ॥

विश्वे॑ । अ॒द्य । म॒रुतः॑ । विश्वे॑ । ऊ॒ती । विश्वे॑ । भ॒व॒न्तु॒ । अ॒ग्नयः॑ । सम्ऽइ॑द्धाः ।
विश्वे॑ । नः॒ । दे॒वाः । अव॑सा । आ । ग॒म॒न्तु॒ । विश्व॑म् । अ॒स्तु॒ । द्रवि॑णम् । वाजः॑ । अ॒स्मे इति॑ ॥

**उद्गीथ०** विश्वे **सर्वे** अद्य **अस्मिन् प्रधानयागदिवसे** मरुतः विश्वे **सर्वे मरुद्गणसहिता[1] देवगणाः रुद्रादयः** ऊती **ऊत्या अवनेन[2] रक्षणेन निमित्तेन** विश्वे देवाः नः **अस्माकम्** अवसा **रक्षणेन निमित्तेन** आ गमन्तु **आगच्छन्तु दृष्टाऽदृष्टभयात् अस्माकं संरक्षणार्थम्। आगतेषु च देवेषु** विश्वे **सर्वे** अग्नयः **आहवनीयादयः** समिद्धाः **सन्दीप्ताः भवन्तु कर्मार्थम्। अग्निषु देवयागे च निर्वृत्ते देवप्रसादात्** विश्वम् **सर्वम्** अस्तु **भवतु** द्रविणम् **धनम्** वाजः **अन्नं च** अस्मे **अस्मासु** ॥ १३ ॥

**वेङ्कट०** [3]**सर्वे** अद्य[3] मरुतः **व्याप्ताः रक्षणाय** भवन्तु। विश्वे भवन्तु अग्नयः **च** समिद्धाः। **सर्वे अस्मान्** देवाः **रक्षणेन** आ **गच्छन्तु**। विश्वम् अस्तु **धनम् अन्नम् च अस्मासु** ॥ १३ ॥

यं दे॑वा॒सोऽव॑थ॒ वाज॑सातौ॒ यं त्राय॑ध्वे॒ यं पि॑पृ॒थात्यंहः॑ ।
यो वो॑ गोपी॒थे न भ॒यस्य॒ वेद॒ ते स्या॑म दे॒ववी॑तये तु॒रासः॑ ॥ १४ ॥

यम् । दे॒वा॒सः॒ । अव॑थ । वाज॑ऽसातौ । यम् । त्राय॑ध्वे । यम् । पि॒पृ॒थ । अति॑ । अंहः॑ ।
यः । वः॒ । गो॒ऽपी॒थे । न । भ॒यस्य॑ । वेद॑ । ते । स्या॒म॒ । दे॒वऽवी॑तये । तु॒रासः॑ ॥ १४ ॥

**उद्गीथ०** यम् **यजमानं मनुष्यम्** हे देवासः! अवथ **रक्षथ** वाजसातौ **सङ्ग्रामे,** यम् **च मनुष्यम्** त्रायध्वे **आधिव्याधिक्षुत्पिपासादिभयात् पालयथ,** यम् **च मनुष्यम्** पिपृथ **कामैः पूरयथ** अति अंहः **अतिनीय पापम्,** यः **च यजमानो मनुष्यः** वः **युष्माकं सम्बन्धिनि** गोपीथे **सोमपाने, युष्मत्पीताऽवशिष्टं सोमं पीत्वेत्यर्थः,** न भयस्य वेद **षष्ठीश्रुतेः संसारभयस्य स्तोकमपि न जानातीत्यर्थः,** [4]ते स्याम देववीतये तुरासः![4] ॥ १४ ॥

**वेङ्कट०** यम् हे **देवाः! रक्षथ[5] सङ्ग्रामे,** यम् **शत्रोः** त्रायध्वे, यम् अति **पारयथ अंहसः,** यः वः[6] **रक्षणे** न **भयं[7] वेत्ति, वयं च** ते स्याम **यज्ञार्थम्** हे **क्षिप्राः!** ॥ १४ ॥

[8]**इति सप्तमाष्टके अष्टमाध्याये अष्टमो वर्गः**[8] ॥

## [ ३६ ]

[8]**लुशो धानाक ऋषिः। विश्वे देवा देवता। जगती छन्दः, अन्त्ये त्रिष्टुभौ**[8]।

उ॒षासा॒नक्ता॑ बृह॒ती सु॒पेश॑सा॒ द्यावा॒क्षामा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।
इन्द्रं॑ हुवे म॒रुतः॒ पर्व॑ताँ अ॒प आ॑दि॒त्यान् द्यावा॑पृथि॒वी अ॒पः स्वः॑ ॥ १ ॥

---

१. मरुद्गणाः सहवा मूको. २. अनेन मूको. ३-३. पुनरुक्तम् वि[२]. ४-४. इति अध्रवमिति सूक्तम् वि[१] अ. ५. °क्षत वि[१-२]. ६. वा वि[२] अ[१]. ७. भवं वि[२] अ[१]. ८-८ नास्ति मूको.

उषसानक्ता । बृहती इति । सुऽपेशसा । द्यावाक्षामा । वरुणः । मित्रः । अर्यमा ।
इन्द्रम् । हुवे । मरुतः । पर्वतान् । अपः । आदित्यान् । द्यावापृथिवी इति । अपः । स्वरिति स्वः ॥१॥

उद्गीथ० उत्तरं सूक्तम् 'उषासानक्ता' इति चतुर्दशर्चं धानाको लुशो ददर्श। उषासानक्ता रात्र्युषसौ बृहती बृहत्यौ सुपेशसा सुरूपे द्यावाक्षामा द्यावापृथिव्यौ च वरुणः मित्रः अर्यमा च, अस्मभ्यं यज्ञाङ्गभावाय आगच्छन्त्विति शेषः। किञ्च इन्द्रम् हुवे आह्वयामि मरुतः पर्वतान् च अपः च पयांसि[1] आदित्यान् च। द्यावापृथिवी आदरार्थं पुनर्वचनम्। महताऽऽदरेण द्यावापृथिव्यौ चं आह्वयामि। अपः यागकर्म प्रति स्वः [2]सर्वान् अन्यांश्च[2] देवान् ॥ १ ॥

वेङ्कट० नक्तोषासौ बृहत्यौ सुरूपे[3] द्यावापृथिव्यौ मित्रावरुणौ अर्यमा च तान् इमान् इन्द्रम् च ह्वयामि, मरुतः पर्वतान् अपः च, तथा आदित्यान् द्यावापृथिव्यौ अन्तरिक्षम् सर्वं च इति। पुनः द्यावापृथिव्योः ग्रहणं पूरणार्थम् इति ॥ १ ॥

द्यौश्च नः पृथिवी च प्रचेतस ऋतावरी रक्षतामंहसो रिषः ।
मा दुर्विदत्रा निर्ऋतिर्न ईशत तद् देवानामवो अद्या वृणीमहे ॥ २ ॥

द्यौः । च । नः । पृथिवी । च । प्रऽचेतसा । ऋतवरी इत्यृतऽवरी । रक्षताम् । अंहसः । रिषः ।
मा । दुःऽविदत्रा । निःऽऋतिः । नः । ईशत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ २ ॥

उद्गीथ० द्यौः च पृथिवी च प्रचेतसा [4]प्रवृद्धप्रज्ञाने ऋतावरी[4] सत्यवत्यौ उदकवत्यौ वा नः अस्मान् रक्षताम् पालयताम् [5]अंहसः पापात्[5] रिषः हिंसितुश्च सकाशात्। किंच दुर्विदत्रा कुत्सितज्ञाना क्रूरा निर्ऋतिः निर्ऋतिर्मृत्युदेवता नः अस्माकम् मा ईशत ईश्वरी मा भूत्। किंच [6]यत् असाधारणम्[6] तत् अवः रक्षणम् अन्नं वा देवानाम् देवतानां स्वभूतम् अद्य अस्मिन् प्रधानयागाहनि वृणीमहे प्रार्थयामहे देवान् ॥ २ ॥

वेङ्कट० द्यौः च अस्मान् पृथिवी च सुमती यज्ञवत्यौ रक्षताम् आहन्तुः शत्रोः। मा च कुत्सितज्ञाना दुर्बुद्धिः निर्ऋतिः[7] इति(?)[8] अस्माकम् ईशिष्ट। तत् देवानाम् रक्षणम् अद्य वृणीमहे ॥ २ ॥

विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः ।
स्वर्वज्ज्योतिरवृकं नशीमहि तद् देवानामवो अद्या वृणीमहे ॥ ३ ॥

विश्वस्मात् । नः । अदितिः । पातु । अंहसः । माता । मित्रस्य । वरुणस्य । रेवतः ।
स्वःऽवत् । ज्योतिः । अवृकम् । नशीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ३ ॥

---

१. पतन् वि[1]; पतत् वि[2] अ[1]. २-२. सर्वनद्य श्च मूको. ३. सुक्रवे वि[2] अ[1]. ४-४. °ज्ञानेनमत्तः परी वि[2] अ. ५-५. अंभसा वावन् मूको. ६-६. यात् साधारणे मूको. ७. तत् नि° वि[1]; नास्ति वि[2] अ[1]. ८. इति मा अ[1]; इति म् वि[1,2].

उद्गीथ० विश्वस्मात् सर्वस्मात् नः अस्मान् अदितिः पातु रक्षतु अंहसः पापात् माता जनयित्री[1]। कस्य। मित्रस्य वरुणस्य रेवतः धनवतः, सामर्थ्याद् अन्यस्य च देवगणस्य माता। मित्रावरुणयोः मातृत्वव्यपदेशोऽदितेः[2] योग्यत्वप्रियत्वादिना केनापि सम्बन्धेनेति द्रष्टव्यम्। [3]अदित्या देव्या[3] पालिताश्च सन्तो वयम् स्वर्वत् स्वरित्यत्र द्यौरुच्यते। द्युमत् द्युस्थानमित्यर्थः, ज्योतिः आदित्याख्यम् अवृकम् 'वृक वृक आदाने'। निजेन निरतिशयेन ऐश्वर्येण युक्तत्वाद् अन्यतः कस्यचिदर्थस्य अनादातृ नशीमहि 'नश पलायने' पलायनं च [4]शीघ्रं पराङ्मुखगमनम्[4]। पराङ्मुखा गच्छेमेत्याशास्महे। किञ्च तत् देवानाम् अवः अद्य वृणीमहे। आदरार्थं पुनर्वचनम् ॥ ३ ॥

वेङ्कट० विश्वस्मात् अस्मान् अदितिः[5] रक्षतु पापात्[6] माता मित्रावरुणयोः धनवतोः। सर्वंज्योतिः वृकरहितम् प्राप्नुमः ॥ ३ ॥

ग्रावा वदन्नप रक्षांसि सेधतु दुष्ष्वप्न्यं निर्ऋतिं विश्वमत्रिणम्।
आदित्यं शर्म मरुतामशीमहि तद् देवानामवो अद्या वृणीमहे ॥ ४ ॥

ग्रावा। वदन्। अप। रक्षांसि। सेधतु। दुःऽस्वप्न्यम्। निःऽऋतिम्। विश्वम्। अत्रिणम्।
आदित्यम्। शर्म। मरुताम्। अशीमहि। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ४ ॥

उद्गीथ० ग्रावा अभिषवग्रावा वदन् सोमाभिषवशब्दं कुर्वन् अप सेधतु अपगमयतु रक्षांसि यज्ञविध्वंसकानि, दुःस्वप्न्यम्[7] दुःस्वप्ने भवम् [8]अनिष्टं च[8] अपगमयतु, निर्ऋतिम् मृत्युदेवतां च विश्वम् सर्वं च अत्रिणम् अदनशीलं सरीसृपश्वापदप्रेतपिशाचादिकम् अपगमयतु। ग्राव्णा अपनीतेषु च तेषु निर्विघ्नेन निर्वृत्ते यज्ञे आदित्यम् आदित्यानां स्वभूतम् शर्म गृहं विमानाख्यम्[9] मरुताम् च स्वभूतम् अशीमहि प्राप्नुयामेत्याशास्महे। किञ्च तत् इत्यादि व्याख्यातार्थम् ॥ ४ ॥

वेङ्कट० ग्रावा अभिषवशब्दं कुर्वन् अप सेधतु रक्षांसि दुःस्वप्ननिमित्तम् निर्ऋतिम् विश्वम् च अदनशीलम्। आदित्यानां स्वभूतं सुखम् मरुताम् च अशीमहि ॥ ४ ॥

एन्द्रो बर्हिः सीदतु पिन्वतामिळा बृहस्पतिः सामभिर्ऋक्वो अर्चतु।
सुप्रकेतं जीवसे मन्म धीमहि तद् देवानामवो अद्या वृणीमहे ॥ ५ ॥

आ। इन्द्रः। बर्हिः। सीदतु। पिन्वताम्। इळा। बृहस्पतिः। सामऽभिः। ऋक्वः। अर्चतु।
सुऽप्रकेतम्। जीवसे। मन्म। धीमहि। तत्। देवानाम्। अवः। अद्य। वृणीमहे ॥ ५ ॥

उद्गीथ० इन्द्रः अस्मदीयं वेदिस्तरणम् बर्हिः आ सीदतु कर्माङ्गभावाय आगच्छतु। तच्च इन्द्रेण आसादितम्[10] बर्हिः पिन्वताम् वृष्ट्या सिञ्चतु इळा माध्यमिका वाक् स्तनयित्नुलक्षणा। बृहस्पतिः

---

१. जनयितृ वि[1]; जननीयित्री वि[2] अ. २. °देशोतादित्तेः मूको. ३-३. आदित्या वदः मूको. ४-४ नास्ति मूको. ५. °ति मूको. ६. वाचाम् वि[2] अ[1]. ७. दुःस्वप्नदुःस्वप्न्यं मूको. ८-८. अनिञ्च मूको. ९. पीवानाख्यम् वि[1]; पीतवानाख्यम् वि[2] अ[1]. १०. धनम् मूको.

च इन्द्रस्य पुरोहितः ऋक्षः स्तुतिमान् प्रस्तोता वा सामभिः गीयमानैः तद्वन्तम्[1] इन्द्रं तत्रोपविष्टं सर्वत्र वा पूजयतु[2] प्रस्तोत्रात्मना स्थितः सन्। वयमपि सुप्रकेतम् सुप्रज्ञानम् अक्लिष्टत्वात् सुप्रबोधम् जीवसे अस्माकम् इह परत्र च सुखजीवनाय मन्म मननीयं स्तुतिजातम् धीमहि इन्द्रस्य बुद्धौ निधीमहि स्थापयामः, इन्द्रं स्तुम इत्यर्थः। किंच यद् असाधारणम् तत् अवः रक्षणम् अन्नं वा देवानाम् स्वभूतम् अद्य अस्मिन् प्रधानयागाहनि वृणीमहे प्रार्थयामहे ॥ ५ ॥

वेङ्कट० आ सीदतु इन्द्रः बर्हिः। पिन्वताम् इळा धनं दुग्धाम्। बृहस्पतिः सामभिः गीयमानैः[3] पूजयतु अस्मान् स्तुतिमान्। सुप्रज्ञानम् जीवनार्थम् मननीयम् धनम् नि धीमहि ॥ ५ ॥

[4]इति सप्तमाष्टके अष्टमाध्याये नवमो वर्गः[4] ॥

दिविस्पृशं यज्ञमस्माकमश्विना जीराध्वरं कृणुतं सुम्नमिष्टये ।
प्राचीनरश्मिमाहुतं घृतेन तद् देवानामवो अद्या वृणीमहे ॥ ६ ॥

दिविऽस्पृशम् । यज्ञम् । अस्माकम् । अश्विना । जीरऽअध्वरम् । कृणुतम् । सुम्नम् । इष्टये ।
प्राचीनऽरश्मिम् । आऽहुतम् । घृतेन । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ६ ॥

उद्गीथ० दिविस्पृशम् दिवि स्प्रष्टारं दिवं प्रति गन्तारमित्यर्थः, यज्ञम् अस्माकम् स्वभूतं हे अश्विनौ! जीराध्वरम् जीरमिति क्षिप्रनाम (तु. निघ २,१५)। अध्वरमिति ध्वरतिः हिंसाकर्मा। नञ् प्रतिषिद्धौ[5]। क्षिप्रं[6] रक्षोभिः अहिंसितं चेत्यर्थः, कृणुतम् कुरुतम् सुम्नम् सुखम् इह परत्र च सुखसाधनमित्यर्थः। किमर्थं कुरुतम्। इष्टये देवयागार्थम्। प्राचीनरश्मिम् देवान् प्रति गताङ्गप्रत्यङ्गरश्मिम्[7] देवाभिमुखम्[8] इत्यर्थः, आहुतम् मर्यादया यावदर्थं हुतम् घृतेन आज्येन। किंच तत् देवानाम् अवः अद्य वृणीमहे ॥ ६ ॥

वेङ्कट० दिवि स्प्रष्टारम् यज्ञम् अस्माकम् अश्विनौ! कुरुतम्[9]। तथा क्षिप्रं यज्ञम् कृणुतम् सुखम् च अभिलषितसिद्ध्यर्थम्। प्राचीनरश्मिम् च अग्निम् आहुतम्[10] कृणुतम् घृतेन ॥ ६ ॥

उप ह्वये सुहवं मारुतं गणं पावकमृष्वं सख्याय शंभुवम् ।
रायस्पोषं सौश्रवसाय धीमहि तद् देवानामवो अद्या वृणीमहे ॥ ७ ॥

उप । ह्वये । सुऽहवम् । मारुतम् । गणम् । पावकम् । ऋष्वम् । सख्याय । शम्ऽभुवम् ।
रायः । पोषम् । सौश्रवसाय । धीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ७ ॥

उद्गीथ० उप ह्वये उपगम्याह्वयामि अस्मद्यज्ञं प्रति सुहवम् स्वाह्वानम् मारुतम् गणम् मरुतां

---

१. तद्वद्भिः वि[1]. २. °तु वा मूको. ३. पूय° वि[2] अ[1]. ४-४. नास्ति मूको. ५. °षिद्धः वि[2] अ[1]. ६. किंत्र मूको. ७. प्रतिमद्दताङ्ग° मूको. ८. देवामुख्य वि[1]; देवमुख्य ९. °त वि[2] अ[1]. १०. आहुः वि[2] अ[1].

**समूहम्** पावकम् **शोधयितारम्** **ऋष्वम्** **महान्तम्** । **किमर्थम्** । सख्याय **स्तुत्यत्वस्तोतृत्वेज्यत्व-यष्टृत्वलक्षणाय** **सखिभावाय** । शंभुवम् **स्वर्गादिसुखस्य** **भावयितारम्** रायः **धनस्य** पोषम् **पोष्टारम्** । आगतं च **सन्तम्** सौश्रवसाय **शोभनं** **श्रवो** **यस्य** **स** **सुश्रवाः** **सुकीर्तिः** **स्वन्नो** वा, **तस्य** **भावः** **सौश्रवसम्**, **तस्मै** **सौश्रवसाय** **सुकीर्तित्वाय** **स्वन्नत्वाय** **वेत्यर्थः**, धीमहि **आ**[1] **कर्मपरिसमाप्तेः** **धारयामः** । **किञ्च** तत् देवानाम् **इति** **व्याख्यातार्थः** ॥ ७ ॥

**वेङ्कट०** [2]उप ह्वये[2] **स्वाह्वानम्** मारुतम् गणम् शोधकम् **दर्शनीयम्** **सख्यसिद्ध्यर्थम्** **सुखस्य** **भावयितारम्** । **धनस्य** **च**[3] पोषम् [4]सौश्रवसाय **वयम्**† धीमहि[4] । **सौश्रवसं** **कीर्तिः** ॥ ७ ॥

अपां पेरुं जीवधन्यं भरामहे देवाव्यं सुहवमध्वरश्रियम् ।
सुरश्मिं सोममिन्द्रियं यमीमहि तद् देवानामवो अद्या वृणीमहे ॥ ८ ॥

अपाम् । पेरुम् । जीवऽधन्यम् । भरामहे । देवऽअव्यम् । सुऽहवम् । अध्वरऽश्रियम् ।
सुऽरश्मिम् । सोमम् । इन्द्रियम् । यमीमहि । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ८ ॥

**उद्गीथ०** अपाम्[1] **उदकानां**[1] **वसतीवर्येकधनारूपाणां** **वा** **अपाम्** पेरुम् **पातारं** **पालयितारं** **पूरयितारं** **वा** जीवधन्यम् **जीवानां** **वर्धयितारं** **प्रीणयितारं** **वा** भरामहे **हरामः** **पत्नीशालातो** **हविर्धानं** **प्रति** **प्रापयामः** **द्युतो** **वा** **अस्मद्यज्ञं** **प्रति** **प्रापयामः** देवाव्यम् **देवान्** **प्रति** **आहारत्वेन**[5] **गन्तारं** **देवानां** **प्रियं** **तर्पयितारं** **वा** सुहवम् **स्वाह्वानं** **सुस्तुतिं** **वा** अध्वरश्रियम् **यज्ञस्य** **विभूतिभूतम्** **अङ्गभावप्रतिपत्त्याऽऽश्रयितारं**[6] **वा** सुरश्मिम् **शोभनांशुम्** सोमम् **ओषधिरूपं** **देवतारूपं** **च** इन्द्रियम् **वीर्यवन्तमित्यर्थः** । **प्रापितं** **च** **सन्तम्** यमीमहि **'यमु** **बन्धने'** । **कर्मणि** **आत्मनि** **वा** **निबध्नीमः** **धारयाम** **इत्यर्थः** । **किञ्च** तत् देवानाम् **इत्यादि** ॥ ८ ॥

**वेङ्कट०** अपाम् **रक्षकम्** जीवधन्यम् **धन्या** **यस्मिन्** जीवाः **तम्** भरामहे **देवानां** **तर्पयितारम्** सुहवम् **यज्ञश्रियम्** । सुरश्मिम् सोमम् **याचामहे** इन्द्रियम् ॥ ८ ॥

सनेम तत् सुसनिता सनित्वभिर्वयं जीवा जीवपुत्रा अनागसः ।
ब्रह्मद्विषो विष्वगेनो भरेरत तद् देवानामवो अद्या वृणीमहे ॥ ९ ॥

सनेम । तत् । सुऽसनिता । सनित्वऽभिः । वयम् । जीवाः । जीवऽपुत्राः । अनागसः ।
ब्रह्मऽद्विषः । विष्वक् । एनः । भरेरत । तत् । देवानाम् । अवः । अद्य । वृणीमहे ॥ ९ ॥

**उद्गीथ०** सनेम **स्तुत्या** **यागेन** **च** **सम्भजेमहि** तत् **देवजातम्** सुसनिता **शोभनेन** **सम्भजनेन** **परया** **भक्त्या** **इत्यर्थः**, सनित्वभिः **ऋत्विक्पुत्रपौत्रादिभिः** **सह** वयम् जीवाः **सुखं** **जीवन्तः**

---

१. नास्ति मूको. २-२. नास्ति वि॰. ३. नास्ति वि[2] अ[1]. ४-४. नास्ति वि[1]. † ययवम् वि[2] अ[1]. ५. आह॰ मूको. ६. °शयिता॰ वि[2] अ.

इत्यर्थः, जीवपुत्राः सुखं जीवत्पुत्राश्चेत्यर्थः, अनागसः कर्मवैगुण्यजनितापराधवर्जिताश्चेत्यर्थः। किञ्च ब्रह्मद्विषः ब्राह्मणानाम् अस्माकं देवयागप्रवृत्तानां द्वेष्टारः अयज्वानः विष्वक् विषुशब्दो [1]नानावाची। अञ्चतिरत्र गत्यर्थः[1]। नानाऽञ्चितृ अनेकधा विसर्तृ इत्यर्थः, एनः पापम् भरेरत 'डुभृञ् धारणपोषणयोः'। आत्मनि धारयन्तु पुष्णन्तु वेत्येतद् आशास्महे वयम्। किञ्च तत् देवानाम् इत्यादि ॥ ९ ॥

वेङ्कट० भजेमहि तत् शोभनेन भजनेन सनित्वभिः सम्भक्तृभिः[2] पुत्रपौत्रैः सह वयम् जीवन्तः जीवपुत्राः च अपापाः[3]। ये ब्राह्मणान् द्विषन्ति ते नानाञ्चनम्[4] एनः धारयन्तु। वयं रक्षणं सनेम इति ॥ ९ ॥

ये स्था मनो॑र्य॒ज्ञिया॒स्ते शृ॑णोतन॒ यद्वो॑ दे॒वा ईम॑हे॒ तद्द॑दातन ।
जैत्रं॒ क्रतुं॑ र॒यिम॑द्वी॒रव॒द्यश॒स्तद् दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ १० ॥

ये। स्थ। मनोः। य॒ज्ञियाः। ते। शृ॒णो॒त॒न॒। यत्। वः॒। दे॒वाः। ईमहे। तत्। द॒दा॒त॒न॒।
जैत्रम्। क्रतुम्। र॒यिमत्। वी॒रऽवत्। यशः। तत्। दे॒वाना॑म्। अवः। अ॒द्य। वृ॒णी॒म॒हे॒ ॥ १० ॥

उद्गीथ० ये यूयम् स्थ भवथ मनोः मनुष्यस्य यज्ञियाः यज्ञार्हाः[5] यज्ञसम्पादिनो वा, ते यूयम् शृणोतन शृणुत अस्मदीयां स्तुतिम्, हवींषि च भक्षयत सामर्थ्यात्। श्रुत्वा भक्षयित्वा च यत् सुखसाधनं स्वर्गादिकं च वः युष्मान् हे देवाः! ईमहे याचामहे, तत् सुखसाधनम् अस्मभ्यम् ददातन[6] दत्त यूयम्। किञ्च जैत्रम् सर्वार्थानां जेतारम् क्रतुम् कर्म श्रौतं स्मार्तं च प्रज्ञां वा रयिमत् धनसंयुक्तम् वीरवत् अपत्यसहितं च यशः, दत्तेत्यनुवर्त्यम्। किञ्च तत् देवानाम् इत्यादि ॥ १० ॥

वेङ्कट० ये भवथ मनुष्यस्य [7]यज्ञियाः, ते[7] शृणुत। यत् वः देवाः! याचामहे, तत् प्रयच्छत जयशीलम् प्रज्ञानम्[8] धनपुत्रयुक्तम् च यशः ॥ १० ॥

[9]इति सप्तमाष्टके अष्टमाध्याये दशमो वर्गः[9] ॥

म॒हद॒द्य म॑ह॒तामा वृ॑णीम॒हेऽवो॑ दे॒वानां॑ बृह॒ताम॑न॒र्वणा॑म् ।
यथा॒ वसु॑ वी॒रजा॑तं॒ नशा॑महै॒ तद् दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ ११ ॥

म॒हत्। अ॒द्य। म॒ह॒ताम्। आ। वृ॒णी॒म॒हे॒। अवः। दे॒वाना॑म्। बृ॒ह॒ताम्। अ॒न॒र्वणा॑म्।
यथा॑। वसु॑। वी॒रऽजा॑तम्। नशा॑महै। तत्। दे॒वाना॑म्। अवः। अ॒द्य। वृ॒णी॒म॒हे॒ ॥ ११ ॥

उद्गीथ० महत् अपरिमितम् अद्य अस्मिन्नहनि महताम् अपरिमितगुणानां स्वभूतम् आ वृणीमहे

---

१. नानावाच्यर्थः मूको.	२. °तृभिः मूको.	३. अपाः वि[२] अ[१].	४. नाञ्चनम् वि[२] अ[१].
५. यज्ञार्हाद् मूको.	६. दधातन वि[२] अ[१].	७-७. नास्ति वि[१].	८. °ज्ञां वि[२] अ[१].
९-९. नास्ति मूको.

मर्यादया यावदर्थं प्रार्थयामहे अवः रक्षणम् अन्नं वा देवानाम् बृहताम् वयसा वृद्धानां सृष्टिकाले[1] उत्पन्नत्वात् अनर्वणाम् [2]अप्रत्यृतानाम् आश्रिततया[2] अन्यं प्रति अगतानां स्वतन्त्राणामित्यर्थः। यथा वसु धनम् वीरजातम् अपत्यजातं च प्रति नशामहै शीघ्रं प्राप्नुयाम, तथा च देवाः कुर्वन्तु[3] इति शेषः। किञ्च तद् देवानाम् इत्यादि ॥ ११ ॥

वेङ्कट० महताम् आ वृणीमहे महत् रक्षणम् देवानाम् बृंहितानाम् अप्रत्यृतानाम्, यथा धनम् अपत्यजातम् च नशामहै ॥ ११ ॥

म॒हो अ॒ग्नेः स॑मिधा॒नस्य॒ शर्म॒ण्यना॑गा मि॒त्रे वरु॑णे स्व॒स्तये॑ ।
श्रेष्ठे॑ स्याम सवि॒तुः सवी॑मनि॒ तद् दे॒वाना॒मवो॑ अ॒द्या वृ॑णीमहे ॥ १२ ॥

म॒हः । अ॒ग्नेः । स॒म्ऽइ॒धा॒नस्य॑ । शर्म॑णि । अना॑गाः । मि॒त्रे । वरु॑णे । स्व॒स्तये॑ ।
श्रेष्ठे॑ । स्या॒म॒ । स॒वि॒तुः । सवी॑मनि । तत् । दे॒वाना॑म् । अवः॑ । अ॒द्य । वृ॒णी॒म॒हे॒ ॥ १२ ॥

उद्गीथ० महः महतः अग्नेः समिधानस्य [4]सम्यग् दीप्यमानस्य[4] स्वभूते शर्मणि गृहे विमानाख्ये श्रेष्ठे अतिशयेन प्रशस्ये स्याम भवेमेत्याशास्महे। अनागाः स्यामेत्यनेन सामानाधिकरण्याद् वचनव्यत्ययः[5]। अनागसः कर्मवैगुण्यजनितापराधवर्जिता वयम् मित्रे वरुणे षष्ठ्यर्थे सप्तमी उभयत्र। मित्रस्य वरुणस्य [6]च शर्मणि श्रेष्ठे स्याम। किमर्थम्[6] स्वस्तये कल्पान्तावस्थायित्वलक्षणाय[7] अविनाशित्वाय। सवितुः सवीमनि प्रसवे अभ्यनुज्ञायां सत्यां देवेन सवित्राऽभ्यनुज्ञाताः सन्तो वयमित्यर्थः। किञ्च तत् देवानाम् इत्यादि ॥ १२ ॥

वेङ्कट० महतः अग्नेः समिध्यमानस्य सुखे स्याम, अनागसश्च मित्रावरुणयोः अविनाशार्थम्, श्रेष्ठे स्याम सवितुः च प्रसवे ॥ १२ ॥

ये स॑वि॒तुः स॒त्यस॑वस्य॒ विश्वे॑ मि॒त्रस्य॑ व्र॒ते वरु॑णस्य दे॒वाः ।
ते सौभ॑गं वी॒रव॒द्गोम॒दप्नो॒ दधा॑तन॒ द्रवि॑णं चि॒त्रम॒स्मे ॥ १३ ॥

ये । स॒वि॒तुः । स॒त्यऽस॑वस्य । विश्वे॑ । मि॒त्रस्य॑ । व्र॒ते । वरु॑णस्य । दे॒वाः ।
ते । सौभ॑गम् । वी॒रऽव॑त् । गोऽम॑त् । अप्नः॑ । दधा॑तन । द्रवि॑णम् । चि॒त्रम् । अ॒स्मे इति॑ ॥ १३ ॥

उद्गीथ० ये भवन्तः विश्वे देवाः सवितुः सत्यसवस्य [8]अविसंवाद्यभ्यनुज्ञानस्य[8] मित्रस्य वरुणस्य च व्रते कर्मणि अभ्यनुज्ञानलक्षणे, वर्तन्त इति शेषः, ते यूयं हे देवाः! एतैः सवित्रादिभिः अभ्यनुज्ञाताः सन्तः सौभगम् सुभगत्वम्[9] वीरवत् पुत्रादिमनुष्यसहितम्[10] गोमत् गोसहितं च अप्नः कर्म च यज्ञरूपं वा दधातन धत्त, द्रविणम् धनं च चित्रम् अस्मे अस्मभ्यम् ॥ १३ ॥

---

१. वृष्टि° मूको. २-२. अप्रत्यृतनायामाश्रिततया वि[2] अ[1]; °नाश्रित्यतया वि[1]. ३. कुर्वन्ति मूको.
४-४. यद्दीप्य° वि[1]; ··· दीप्य वि[2] अ[1]. ५. यथोनव्य° मूको. ६-६. चर्मणि श्रेष्ठस्यामर्कमर्थम् मूको.
७. कल्पाकल्पाव° मूको. ८-८. अविसंवाद्य° मूको. ९. °गत्वे मूको. १०. पूत्रादिमनुष्यादि° मूको.

**वेङ्कट०** ये सवितुः सत्यप्रसवस्य विश्वे मित्रावरुणयोश्च कर्मणि भवन्ति देवाः, ते यूयं सौभाग्यम्[1] वीरयुक्तम् पशुयुक्तम् च कर्म प्रयच्छत, द्रविणम् च पूजनीयम् अस्मभ्यम् ॥ १३ ॥

सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ १४ ॥

सविता । पश्चातात् । सविता । पुरस्तात् । सविता । उत्तरात्तात् । सविता । अधरात्तात् ।
सविता । नः । सुवतु । सर्वऽतातिम् । सविता । नः । रासताम् । दीर्घम् । आयुः ॥ १४ ॥

**उद्गीथ०** सविता देवः आदित्यानाम् अन्यतमः पश्चातात् अस्माकं पश्चिमतः, स्थित इति शेषः । सविता एव पुरस्तात् पूर्वतश्च स्थितः । सविता एव उत्तरात्तात् उत्तरतश्च स्थितः । सविता एव अधरात्तात् अधरतश्च स्थितः । एवम् उपरिष्टात् दक्षिणतश्च स्थितः । सविता नः अस्माकम् सुवतु अभ्यनुजानातु । किम् । सर्वतातिम् । सविता नः अस्मभ्यम् रासताम् ददातु दीर्घम् आयुः ॥ १४ ॥

**वेङ्कट०** सर्वाभ्यो दिग्भ्यः सविता अस्माकम् सर्वम् प्रसौतु । सविता नः प्रयच्छतात् दीर्घम् आयुः इति[2] ॥ १४ ॥

[3]इति सप्तमाष्टके अष्टमाध्याये एकादशो वर्गः[3] ॥

## [ ३७ ]

[3]सौर्योऽभितपा ऋषिः । सूर्यो देवता । जगती छन्दः, दशमी त्रिष्टुप्[3] ।

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥ १ ॥

नमः । मित्रस्य । वरुणस्य । चक्षसे । महः । देवाय । तत् । ऋतम् । सपर्यत ।
दूरेऽदृशे । देवऽजाताय । केतवे । दिवः । पुत्राय । सूर्याय । शंसत ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'नमो मित्रस्य' इति द्वादशर्चं सौर्यं सौर्योऽभितपा ददर्श । 'नमः मित्रस्य' 'समानकर्तृकयोः पूर्वकाले' ( पा ३,४,२१ ) इति वचनाद् अत्र कृत्वेत्यध्याहार्यम् । नमः कृत्वा । कस्मै । सामर्थ्यात् सूर्याय । उत्तराश्च सर्वाः तादर्थ्यचतुर्थ्यः सपर्यत शंसतेत्येताभ्यां क्रियापदाभ्यां सम्बन्धयितव्याः । मित्रस्य वरुणस्य चक्षसे स्नेहमयेन चक्षुषा द्रष्ट्रे देवाय देवाय द्योतनात्मकाय, वृष्ट्यादिदानाद्वा । दूरेदृशे दूरे दृश्यमानाय देवजाताय देवात् प्रजापतेः सकाशाद् उत्पन्नाय केतवे प्रज्ञानसत्त्वाय दिवस्पुत्राय दिवि अहन्यहनि जायमानत्वात् दिवस्पुत्रभूताय सूर्याय सूर्याख्याय[4] महः[5] तत् ऋतम् सपर्यत[6] महःशब्दोऽत्र महत्त्ववचनः । तच्छब्दश्रुतेः यच्छब्दोऽध्याहार्यः ।

---

१. °ग्य वि[2] अ[1]. २. नास्ति वि[1]. ३-३. नास्ति मूको. ४. सूर्यार्थाय मूको. ५. महतः मूको. ६. सपर्यतमत्र मूको.

ऋतशब्दश्चात्र यज्ञवचनः। सपर्यतिरपि परिचरणकर्मा। परिचरणेन चात्रानुष्ठानं लक्ष्यते। यो महान् अपरिमितगुणो यज्ञः तम् अनुतिष्ठत यूयं हे ऋत्विजः! इत्यर्थः। शस्त्राणि च शंसत। नमस्कारपूर्वकं यागं स्तुतिं च सूर्यस्य कुरुतेत्यर्थः ॥ १ ॥

वेङ्कट० अभितपाः सौर्यः[1]। नमः मित्रावरुणयोः द्रष्ट्रे[2] महते देवाय। तत् ऋतम् कर्म पूजयत। दूरे सन्तमपि पश्यते देवेषु जाताय प्रज्ञापकाय दिवः पुत्राय सूर्याय शंसत स्तुतिम् ॥ १ ॥

सा मां सत्योक्तिः परि पातु विश्वतो द्यावा च यत्र ततनन्नहानि च।
विश्वमन्यन्नि विशते यदेजति विश्वाहापो विश्वाहोदेति सूर्यः ॥ २ ॥

सा। मा। सत्यऽउक्तिः। परि। पातु। विश्वतः। द्यावा। च। यत्र। ततनन्। अहानि। च।
विश्वम्। अन्यत्। नि। विशते। यत्। एजति। विश्वाहा। आपः। विश्वाहा। उत्। एति। सूर्यः ॥ २ ॥

उद्गीथ० सा, सूर्यस्य तनुरित्यध्याहार्यम्[3] स्त्रीलिङ्गनिर्देशसामर्थ्यात्[4]। मा माम् सत्योक्तिः उच्यन्ते देवतागुणाः अनया इत्युक्तिः स्तुतिः। सा सत्या अविसंवादिनी यस्याः सा सत्योक्तिः यथाभूतगुणग्राहिस्तुतिरित्यर्थः, परि पातु संरक्षतु विश्वतः सर्वत्र[5], द्यावा च रश्मिलक्षणा दीप्तिश्च अहानि च यत्र यस्यां सूर्यमूर्तौ ततनन् ततानि[6] च विस्तीर्यावस्थितानि[7] इत्यर्थः। स्तुतिरेव केवला उत्तरार्धर्चे उपेता, नाशीः। विश्वम् सर्वम्[8] अन्यत् अन्यद् भूतजातम् नि विशते विश्रमार्थम् उपविशति स्वपिति चेत्यर्थः, यत् भूतजातम् एजति गच्छति परिस्पन्दते। विश्वाहा सर्वदा आपः सूर्यमण्डलस्थाः सर्वस्य व्यापारो वा रश्मयः उद्यन्ति। विश्वाहा सर्वदैव उत् एति ऊर्ध्वं गच्छति सूर्यः श्रमाभावात्। आपश्च सूर्यश्च विश्रमार्थं 'न निविशन्त'[9] इत्यर्थः ॥ २ ॥

वेङ्कट० सा[10] मा सत्योक्तिः[11] परि रक्षतु सर्वतः। द्यावापृथिव्यौ अहोरात्राणि च यस्मिन् देशे विततानि, तत्र स्थितं[12] सर्वम् अन्यत् अस्तमिते सूर्ये नि विशते, यत् कम्पते सर्वदा। आपः गच्छन्ति सर्वदा। उत् एति सूर्यः। तदिदं सत्यवचनम् इति ॥ २ ॥

न ते अदेवः प्रदिवो नि वासते यदेतशेभिः पतरै रथर्यसि।
प्राचीनमन्यदनु वर्तते रज उदन्येन ज्योतिषा यासि सूर्य ॥ ३ ॥

न। ते। अदेवः। प्रऽदिवः। नि। वासते। यत्। एतशेभिः। पतरैः। रथर्यसि।
प्राचीनम्। अन्यत्। अनु। वर्तते। रजः। उत्। अन्येन। ज्योतिषा। यासि। सूर्य ॥ ३ ॥

उद्गीथ० ते तव सूर्यस्य, समीप इति शेषः, अदेवः देवादन्योऽसुरराक्षसादिः। कीदृशः[13]। प्रदिवः

---

१. °र्यस्य मूको. २. नास्ति वि[२] अ[१]; द्रष्टे वि[१]. ३. °ध्याहार्यः मूको. ४. °लिङ्गदेश° मूको. ५. यत मूको. ६. गतानि मूको. ७. विस्तारि अवा° मूको. ८. सर्वं सर्वम् मूको. ९-९. निविशन्ते वि[२] अ[१]; निनिविशन्ते वि[१]. १०. स मूको. ११. सत्यस्योक्तिः वि[१]. १२. °तिं वि[२] अ[१]. १३ किं मूको.

पुराणः चिरन्तनोऽपि आदिसर्गजः प्राजापत्योऽपि सन्नित्यर्थः । न नि वासते न निवसति[1] मरणभयात् न तिष्ठतीत्यर्थः । कदा । यत् यदा एतशेभिः अश्वैः आत्मीयैः हरित्संज्ञकैः[2] पतरैः पतनशीलैः सह रथर्यसि अनवगतसंस्कारमेतत्पदम् । 'रथर्यतीति सिद्धस्तत्प्रेप्सुः । रथं कामयत इति वा' (या ६,२८) इति प्रच्छन्नावगमप्रदर्शनवाक्यम् । रथं हर्यसि रथीयसि इति वाऽवगमः, रथमिच्छसि योक्तुमित्यर्थः । किंचान्यत् च[3] प्राचीनम् प्रागञ्चितम् । प्राक्शब्दश्चात्र सामर्थ्यात् तिर्यगधोवचनः । तिर्यगधोमुखमित्यर्थः । अन्यत् रजः[4] ज्योती रश्मिलक्षणं तव स्वभूतम् अनु वर्तते प्रदीपार्चिर्वत् आनुपूर्वीं गच्छति । अन्येन ज्योतिषा रश्मिलक्षणेन उत् यासि ऊर्ध्वं गच्छसि त्वं हे सूर्य ! । कदम्बगोलकवत् तव मण्डलस्य अवस्थानात् तिर्यगूर्ध्वमधश्च स्वरश्मिजालेन व्याप्नोषीत्यर्थः ॥ ३ ॥

वेङ्कट० न ते असुरो राक्षसो वा प्रत्नः कश्चित् समीपे नि वसति, यदा त्वम् एतशैः अश्वैः गमनं कामयसे । प्राचीनम् अन्यत् ज्योतिः उदकम् अनु वर्तते, अन्येन ज्योतिषा यासि सूर्य ! । यद्वा प्राचीनम् अन्यद् अनुवर्तते[5] 'चन्द्राख्यं ज्योतिः'[6], ततः त्वम् अन्येन सह उदेषीति ॥ ३ ॥

येन॑ सूर्य॒ ज्योति॑षा॒ बाध॑से॒ तमो॒ जग॑च्च॒ विश्व॑मुदि॒यर्षि॑ भा॒नुना॑ ।
तेना॒स्मद्विश्वा॒मनि॑रा॒मना॑हुति॒मपामी॑वा॒मप॑ दु॒ष्ष्वप्न्यं॑ सुव ॥ ४ ॥

येन॑ । सू॒र्य॒ । ज्योति॑षा । बाध॑से । तमः॑ । जग॑त् । च॒ । विश्व॑म् । उ॒त्ऽइ॒यर्षि॑ । भा॒नुना॑ ।
तेन॑ । अ॒स्मत् । विश्वा॑म् । अनि॑राम् । अना॑हुतिम् । अप॑ । अमी॑वाम् । अप॑ । दुः॒ऽस्वप्न्य॑म् । सु॒व॒ ॥ ४ ॥

उद्गीथ० हे सूर्य ! येन ज्योतिषा बाधसे रश्मिलक्षणेन बाधसे अभिभवसि तमः शार्वरं तिमिरम्, जगत् च संसारमण्डलं च विश्वम् सर्वं प्रति उदियर्षि उद्गच्छसि भानुना, तेन ज्योतिषा अस्मत् अस्मत्तः विश्वाम् सर्वप्रकाराम् अनिराम् अनिरमणाम्[7] अविद्यमानरतिम् अत्यन्ताप्रीतिकरीम् अनाहुतिम् अविद्यमानजाठराग्न्याहुतिं विशोषणकरीमित्यर्थः[8], अमीवाम् रोगजातिम् अप सुव 'षू प्रेरणे' । अपप्रेरय अपगमय अपनाशयेत्यर्थः । दुःस्वप्न्यम् दुःस्वप्नभवं च दोषम् अपसुव ॥ ४ ॥

वेङ्कट० येन सूर्य ! ज्योतिषा तमः बाधसे, येन च जङ्गमम् सर्वं स्वप्नग्रस्तम् उद्गमयसि भानुना, तेन अस्मत्तः[9] सर्वम् अन्नाभावम् अहोमम् रोगम् दुःस्वप्न्यम् च अप गमय इति ॥ ४ ॥

विश्व॑स्य॒ हि प्रेषि॑तो॒ रक्ष॑सि व्र॒तमहे॑ळयन्नु॒च्चर॑सि स्व॒धा अनु॑ ।
यद॒द्य त्वा॑ सूर्योपब्र॒वाम॑है॒ तं नो॑ दे॒वा अनु॑ मंसीरत॒ क्रतु॑म् ॥ ५ ॥

---

१. यवसति मूको. २. हरिसं° मूको. ३. व मूको. ४. रजत् मूको. ५. °मयमनु° वि[2] अ[1]. ६-६. °ल्य ··· वि[2] अ[1]; °न्द्राख्यां ज्यो° वि[1]. ७. अनि रमाणां मूको. ८. विशोषणकरी ९. अस्मत्तत् वि[1].

विश्वस्य । हि । प्रऽइंषितः । रक्षसि । व्रतम् । अहेळयन् । उत्ऽचरसि । स्वधाः । अनु ।
यत् । अद्य । त्वा । सूर्य । उपऽब्रवामहै । तम् । नः । देवाः । अनु । मंसीरत । क्रतुम् ॥ ५ ॥

उद्गीथ० विश्वस्य सर्वस्य यजमानस्य हि यस्मात् प्रेषितः अभ्यर्थित इत्यर्थः, रक्षसि यज्ञं विध्वंसकेभ्यः सकाशात् पालयसि । व्रतम् अहेळयन् अक्रुध्यन् उच्चरसि च स्वधाः अनु प्रातर्होमानां पश्चात्, प्रातर्होमे निर्वृत्त इत्यर्थः । यत् यस्माच्च अद्य यागदिवसे त्वा त्वाम् हे सूर्य ! उपब्रवामहै उपगम्य ब्रूमः अभ्यर्थयामहे इत्यर्थः, तस्मात् अस्माकमपि[1] यज्ञं प्रातर्होमं च रक्षेत्यर्थः[2] । तम् च क्रतुम् रक्ष । अथ[3] मनः च अस्माकं यज्ञस्य प्रातर्होमस्य च सम्बन्धि त्वया क्रियमाणम् देवाः सर्वे अनु मंसीरत त्वत्प्रसादात् अनुमन्यन्ताम् अव्याघातेन वर्तन्तामित्यर्थः ॥ ५ ॥

वेङ्कट० सर्वस्य हि स्तुतिभिः प्रेषितः त्वम् रक्षसि कर्म । अक्रोधयन् च उद्गच्छसि हवींषि अनु[4] । तथा सति [5]यत् अद्य[5] त्वाम् सूर्य ! उपब्रूमो याचामहे, तम् अस्माकम् देवाः अनुमन्यन्ताम् क्रतुम् कर्मेति ॥ ५ ॥

तं नो द्यावापृथिवी तन्न आप इन्द्रः शृण्वन्तु मरुतो हवं वचः ।
मा शूने भूम सूर्यस्य संदृशि भद्रं जीवन्तो जरणामशीमहि ॥ ६ ॥

तम् । नः । द्यावापृथिवी इति । तत् । नः । आपः । इन्द्रः । शृण्वन्तु । मरुतः । हवम् । वचः ।
मा । शूने । भूम । सूर्यस्य । सम्ऽदृशि । भद्रम् । जीवन्तः । जरणाम् । अशीमहि ॥ ६ ॥

उद्गीथ० तम् नः अस्माकं स्वभूतम् हवम् आह्वानम् तत् च नः वचः स्तुतिलक्षणं द्यावापृथिव्यौ आपः च इन्द्रः च मरुतः च शृण्वन्तु सूर्येणाभ्यनुज्ञाताः । किंच मा भूम वयम् । क्व । शूने 'टुओश्वि गतिवृद्ध्योः' । वृद्धे महति सामर्थ्यात् पापे दुःखे वा तत्कार्ये । सूर्यस्य संदृशि संदृष्टौ अनुग्रहबुद्धौ वर्तमाना इत्यर्थः । किं तर्हि । भद्रम् कल्याणं धर्मं सुखं वा तत्कार्यम् जीवन्तः वर्षशतं प्राणान् धारयन्तः जरणाम् जरां च अशीमहि प्राप्नुयामेत्याशास्महे ॥ ६ ॥

वेङ्कट० तम् अस्माकम् हवम् तत् च स्तुतिवचः द्युप्रभृतयः शृण्वन्तु । मा उपद्रवाय निर्धनत्वाय[6] भवेम । सूर्यस्य सन्दर्शने कल्याणम् जीवन्तः चिरं जराम् अशीमहि अमृता भवेम इति ॥ ६ ॥

[7]इति सप्तमाष्टके अष्टमाध्याये द्वादशो वर्गः[7] ॥

विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावन्तो अनमीवा अनागसः ।
उद्यन्तं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य ॥ ७ ॥

---

१. तस्मात् कमपि मूको. २. रक्ष्ये रक्षत्यर्थः मूको. ३. अथं वि[२] अ; अर्थ वि[१]. ४. तु वि[१]. ५-५. यत् वि[२] अ[१]; अन्यत् वि[३]. ६. निबन्धनत्वाया वि[२] अ[१]; निर्धनत्वाया वि[३]. ७-७. नास्ति मूको.

विश्वाहा । त्वा । सुऽमनसः । सुऽचक्षसः । प्रजाऽवन्तः । अनमीवाः । अनागसः ।
उत्ऽयन्तम् । त्वा । मित्रऽमहः । दिवेऽदिवे । ज्योक् । जीवाः । प्रति । पश्येम । सूर्य ॥ ७ ॥

**उद्गीथ०** विश्वाहा **सर्वदा** त्वा **त्वाम् यजेम वयमिति शेषः। कीदृशाः सन्तः।** सुमनसः **प्रीतियुक्तमनस्काः** सुचक्षसः **सुशोभनचक्षुषः** प्रजावन्तः **पुत्रादिप्रजासहिताश्च** अनमीवाः **अरोगाश्च** अनागसः **कर्मवैगुण्यजनितापराधवर्जिताश्च**[1] **सन्तः। किञ्च** दिवेदिवे **अहन्यहनि** उद्यन्तम् **उद्गच्छन्तम्** त्वा **त्वां हे** मित्रमहः! **मित्राणां यज्वनां पूजयितः!**[2] ज्योक् **चिरम्** जीवाः **जीवन्तः वयम्** प्रति पश्येम **प्रतिदिनं पश्येमेत्याशास्महे वयं हे** सूर्य! ॥ ७ ॥

**वेङ्कट०** **सर्वदा त्वाम्** सुमनसः **सुदर्शनाः** प्रजावन्तः **अरोगाः अपापाः** उद्यन्तम् त्वा **हे मित्राणां पूजयितः! अन्वहं चिरम्** जीवन्तः प्रति पश्येम सूर्य![3] ॥ ७ ॥

महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषेचक्षुषे मयः ।
आरोहन्तं बृहतः पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥ ८ ॥

महि । ज्योतिः । बिभ्रतम् । त्वा । विऽचक्षण । भास्वन्तम् । चक्षुषेऽचक्षुषे । मयः ।
आऽरोहन्तम् । बृहतः । पाजसः । परि । वयम् । जीवाः । प्रति । पश्येम । सूर्य ॥ ८ ॥

**उद्गीथ०** [4]महि **महत्** ज्योतिः[4] **रश्मिजाललक्षणम्** बिभ्रतम् त्वा **त्वां** हे विचक्षण! **सर्वस्य विशेषद्रष्टः!** भास्वन्तम् **रश्मिमत्त्या**[5] **दीप्त्या दीप्तिमन्तं सर्वस्य** प्राणिजनस्य चक्षुषेचक्षुषे मयः **मयस्करं सर्वार्थप्रकाशनद्वारेण सुखकरमित्यर्थः**[6], आरोहन्तम् बृहतः महतः पाजसः **पाजस्विनः**[7] **बलवत** परि **समुद्रस्योपरि**[8] **वयम्** जीवाः **चिरं जीवन्तः** प्रति **प्रतिदिनम्** पश्येम हे सूर्य! ॥ ८ ॥

**वेङ्कट०** **महत् तेजो धारयन्तम् त्वाम् विद्रष्टः!**[9] **दीप्तिमन्तं सर्वेभ्यः पश्यद्भ्यः सुखकरम्** आरोहन्तम्[10] **महतः समुद्रोदकाद् बलवतः** वयम् जीवन्तः प्रति पश्येम सूर्य![11] ॥ ८ ॥

यस्य ते विश्वा भुवनानि केतुना प्र चेरते नि च विशन्ते अक्तुभिः ।
अनागास्त्वेन हरिकेश सूर्याह्नाह्ना नो वस्यसावस्यसोदिहि ॥ ९ ॥

यस्य । ते । विश्वा । भुवनानि । केतुना । प्र । च । ईरते । नि । च । विशन्ते । अक्तुऽभिः ।
अनागाःऽत्वेन । हरिऽकेश । सूर्य । अह्नाऽअह्ना । नः । वस्यसाऽवस्यसा । उत् । इहि ॥ ९ ॥

**उद्गीथ०** यस्य तव[12] **स्वभूतेन** केतुना 'केतुः' ( निघ **३,९** ) इति [13]**प्रज्ञानाम। तेन**[13] **चात्र तत्कारणमुपलक्ष्यते। सप्तम्यर्थे तृतीया। सर्वार्थप्रज्ञानेऽहनीत्यर्थः।** विश्वा **विश्वानि भुवनानि भूतजातानि**[14] प्र च ईरते

---

१. °जनिताश्च मूको. २. पूजयितः सन्तं मूको. ३. °र्थम् वि[२] अ[१]; °र्थः वि[१]. ४-४. महिमज्योतिः मूको. ५. रश्मिमिता मूको ६. नखकर° वि[२]; नमाक८° वि[२] अ. ७. वाजस्विनः वि[२] अ. ८. सर्वस्योपरि मूको. ९. °ष्ट मूको. १०. °ह्वन्तो वि[२] अ[१]. ११. सूर्यम् वि[२] अ[२]; °र्यः वि[१]. १२. केतवः मूको. १३-१३ °ज्ञानमतेन मूको. १४. भूतानि वि[२] अ.

प्रचरन्ति स्वकर्मसु प्रवर्तन्ते, नि विशन्ते च विश्रामार्थम् स्वपन्ति चेत्यर्थः, अक्तुभिः अत्रापि सप्तम्यर्थे तृतीया। अक्तुषु त्वत्कार्यासु रात्रिष्वित्यर्थः। स त्वम् अनागास्त्वेन अस्माकं कर्मवैगुण्यजनितापराधवर्जितत्वेन हेतुना हे हरिकेश! भौमरसहरणस्वरश्मिकेश! वा हे सूर्य! अह्नाऽह्ना वस्यसा-वस्यसा दिवसेन वसुमत्तरेण, अस्मभ्यं दातव्येन धनेन अतिशयेन तद्वतातद्वता दिवसेन उपलक्षितः सन् नः अस्मभ्यम्, अतिशयेन धनं दातुमिति शेषः, उत् इहि उद्गच्छ। अहन्यहनि उद्गच्छ, सम्यक्कारिभ्योऽस्मभ्यम् अहन्यहनि अतिशयेन धनं देहीत्यर्थः॥ ९॥

वेङ्कट० यस्य ते सर्वाणि भुवनानि प्रज्ञानेन प्र च[१] गच्छन्ति अह्नि[२], [३]नि विशन्ते[३] च रात्रिभिः[४], स[५] त्वम् अनागास्त्वेन हरिकेश! सूर्य! [६]अह्नाऽह्ना च[६] वस्यसा-वस्यसा श्रेयस्करेण अस्माकम् उत् इहि॥ ९॥

शं नो॑ भव॒ चक्ष॑सा॒ शं नो॒ अह्ना॒ शं भा॒नुना॒ शं हि॒मा शं घृ॒णेन॑।
यथा॒ शम॑ध्व॒ञ्छम॑स॑द् दुरो॒णे तत् सूर्य॒ द्रवि॑णं धेहि चि॒त्रम्॥ १०॥

शम्। नः॒। भव॒। चक्ष॑सा। शम्। नः॒। अह्ना॑। शम्। भा॒नुना॑। शम्। हि॒मा। शम्। घृ॒णेन॑।
यथा॑। शम्। अध्व॑न्। शम्। अस॑त्। दु॒रो॒णे। तत्। सू॒र्य॒। द्रवि॑णम्। धे॒हि॒। चि॒त्रम्॥१०॥

उद्गीथ० शम् सुखम् नः अस्माकम् भव त्वं कुरु इत्यर्थः। केन। चक्षसा दर्शनेन। शम् नः अह्ना भवेति सर्वत्रानुवर्त्यम्। सुखमस्माकं कुरु दिवसेन चेत्यर्थः। शम् नो भव भानुना रश्मिलक्षणेन दीप्त्या। शम् नो भव हिमा राज्या उदकेन चेत्यर्थः। शम् नो भव घृणेन [७]च हिमक्षरणेन[७] च इत्यर्थः। किञ्च यथा प्रातिपदिकार्थेऽत्र प्रकारवचनः प्रत्ययः। यत् शम् सुखम् अध्वन् अध्वनि वर्तमानानाम् अस्माकम्, सुखमेवम् दुरोणे गृहेऽपि वर्तमानानाम् अस्माकम् असत् भवति। तत् हे सूर्य! द्रविणम् धनम् चित्रम् विचित्रम् नानाजातिहस्त्यश्वरथपदातिगोहिरण्यवस्त्रधान्यादिकम् धेहि देह्यस्मभ्यम्॥ १०॥

वेङ्कट० शङ्करः अस्माकम् भव तेजसा, शम् नः दिवसेन, शम् च रश्मिना, शम् च शैत्येन, शम् औष्ण्येन। यथा शम् मार्गे, शम् भवति गृहे, तत् सूर्य! धनम् देहि चित्रम्॥ १०॥

अ॒स्माकं॑ देवा उ॒भया॑य॒ जन्म॑ने॒ शर्म॑ यच्छत द्वि॒पदे॒ चतु॑ष्पदे।
अ॒दत् पिब॑दू॒र्जय॑मान॒माशि॑तं॒ तद॒स्मे शं योर॑र॒पो द॑धातन॥ ११॥

अ॒स्माक॑म्। दे॒वाः। उ॒भया॑य। जन्म॑ने। शर्म॑। य॒च्छ॒त। द्वि॒ऽपदे॑। चतुः॑ऽपदे।
अ॒दत्। पिब॑त्। ऊ॒र्जय॑मानम्। आशि॑तम्। तत्। अ॒स्मे इति॑। शम्। योः। अ॒र॒पः। द॒धा॒त॒न॥

उद्गीथ० हे देवाः! अस्माकम् स्वभूताय उभयाय द्विप्रकाराय जन्मने अन्तर्णीतमत्वर्थमेतत्। जन्मग्रहणं चेतरेषामपि प्राणिधर्माणां प्रदर्शनार्थम्। जन्मजरामरणादिदुःखनिमित्तप्राणिधर्मवते शर्म

---

१. व मूको. २. अह्निः वि[२] अ[१]. ३-३. हि बि° वि[१]; निविशन्ति वि[२] ४. रात्री° वि[१]. ५. सम वि[२] अ[१]. ६-६. अमा ··· च वि[२]; भास्त्व अ[१]; °ह्ना नाम वि[१]. ७-७. सदिम रक्षणे मूको

सुखं व्याध्याद्यनिष्टासंयोगलक्षणं च सूर्येण अनुज्ञाताः सन्तो दत्त यूयम् द्विपदे चतुष्पदे मनुष्यगवादिलक्षणाय। किञ्च [1]अदत् मोदकादि कठिनं[1] भक्षयत्, क्षीरोदकादि द्रव्यं चान्वहं[2] पिबत्, ऊर्जयमानम् 'ऊर्ज बलप्राणनयोः'। बलवन्तमिवात्मानमाचरत्[3] आशितम् [4]दध्योदनादि अभिमतम्[4], आशितवच्च तत् द्विपाच्चतुष्पाच्च कुरुतेति शेषः। किञ्च अस्मे अस्मभ्यम् शम्[5] शमनम् उत्पन्नानां रोगाणामुपशमनं चेत्यर्थः, योः यावनं[6] च पृथग्भावं च उत्पत्स्यमानैः भयैः असम्बन्धं चेत्यर्थः (तु. या ४,२१), अरपः अपापत्वं च दधातन दत्त[7] यूयम्॥ ११॥

**वेङ्कट०** अस्माकम् देवाः! उभयाय भूतजाताय सुखम् यच्छत, द्विपदे चतुष्पदे च। अदत् पिबत् ऊर्जयमानम्[8] सुहितं च पुत्रादिकं यथा भवति, तथा शम् च योः च अपापम् प्रयच्छत॥ ११॥

यद्वो॑ देवाश्चकृ॒म जि॒ह्वया॑ गु॒रु मन॑सो वा॒ प्रयु॑ती देव॒हेळ॑नम्।
अरा॑वा॒ यो नो॑ अ॒भि दु॑च्छुना॒यते॒ तस्मि॒न् तदेनो॑ वसवो॒ नि धे॑तन॥ १२॥

यत्। वः। दे॒वाः। च॒कृ॒म। जि॒ह्वया॑। गु॒रु। मन॑सः। वा॒। प्रऽयु॑ती। दे॒व॒ऽहेळ॑नम्।
अरा॑वा। यः। नः॒। अ॒भि। दु॒च्छु॒न॒ऽयते॑। तस्मि॑न्। तत्। एनः॑। व॒स॒वः॒। नि। धे॒त॒न॥ १२॥

**उद्गीथ०** हे देवाः! यत् एतत्[9] देवहेळनम् वः युष्माकं देवानां हेडनं क्रोधनम् चकृम कृतवन्तो वयम्। केन। जिह्वया जिह्वेन्द्रियेण वाक्सहितेनेत्यर्थः। अदनवदनव्यापारयोः उभयव्यापारत्वात् गुरु महत् अभक्ष्यभक्षणानृतवदनादि[10] वाचिककर्मजनितम् मनसः वा प्रयुती मनसः प्रयुत्या वा प्रमिश्रणेन वा परद्रव्याभिध्यानानिष्टचिन्तावितथाभिनिवेशलक्षणेन[11] मानसेन वा कर्मणा यत् एनः कृतवन्तो वयम्। अरावा अरणवान्[12] अर्ता वा अस्माकम् अभिभवनार्थम् अस्मान् प्रति गमनवान् गन्ता वा भूत्वा यः असच्छत्रुः नः अस्मान् अभि दुच्छुनायते उद्वेजयतीत्यर्थः, तस्मिन् अस्मच्छत्रौ तत् एनः यदुक्तलक्षणं पापं हे वसवः! भक्तान् अभीप्सितार्थैः आच्छादयितारः! नि धेतन निधत्त स्थापयत यूयम्। सूर्येण अनुज्ञाताः सन्तः सञ्चारयतेत्यर्थः॥ १२॥

**वेङ्कट०** यत् युष्मान् हे देवाः! कृतवन्तः वाचा महत् पापम् मनसः वा प्रयोगेण देवक्रोधनम् अप्रयच्छन्, यः अस्मान् अभि दुच्छुनायते पापानि अस्मासु आचरति[13], तस्मिन् अस्माभिः कृतम् तत् एनः हे वासयितारः! देवाः! नि धेतन इति सूर्ये सन्निविष्टानां देवानां स्तुतिः॥ १२॥

[14]इति सप्तमाष्टके अष्टमाध्याये त्रयोदशो वर्गः[14]॥

## [ ३८ ]

[14]मुष्कवानिन्द्र ऋषिः। इन्द्रो देवता। जगती छन्दः[14]॥

अ॒स्मिन् न॑ इन्द्र पृत्सु॒तौ यश॑स्वति॒ शिमी॑वति॒ क्रन्द॑सि॒ प्राव॑ सा॒तये॑।
यत्र॒ गोषा॑ता धृषि॒तेषु॑ खा॒दिषु॒ विष्व॒क् पत॑न्ति दि॒द्यवो॑ नृ॒षाह्ये॑॥ १॥

१-१. आदर्शमोद° मूको. २. वान्वहं मूको. ३. °त्मात्मनिवाचरत् मूको. ४-४. दध्योदनोभिमतम् वि[2] अ; दध्याद्यशनाभिमतम् वि[1]. ५. नास्ति मूको. ६ यापनं मूको. ७. धत्त वि[2] अ[1]. ८. उर्जयमान वि[2] अ[1]; उर्जयमानम् वि[1]. ९. एनान् मूको. १०. अभक्षणा° मूको. ११. °चिन्ताविकथा° वि[1]. १२. अर्थवान् मूको. १३. °न्ति वि[2] अ[1]. १४-१४. नास्ति मूको.

अस्मिन् । नः । इन्द्र । पृत्सुतौ । यशस्वति । शिमीऽवति । क्रन्दसि । प्र । अव । सातये ।
यत्र । गोऽसाता । धृषितेषु । खादिषु । विष्वक् । पतन्ति । दिद्यवः । नृऽसह्ये ॥ १ ॥

उद्गीथ० उत्तरं सूक्तम् 'अस्मिन्न इन्द्र' इति पञ्चर्चमैन्द्रं मुष्कवानिन्द्रो ददर्श । हे इन्द्र! अस्मिन् पृत्सुतौ सङ्ग्रामे । कीदृशे । यशस्वति यशो धनं कीर्तिर्वा । हस्त्यश्वादिधनवति शूरयोद्धादिसम्पन्नत्वात् कीर्तिमति वा शिमीवति परस्परप्रहरणकर्मवति क्रन्दसि अन्तर्हितमत्वर्थमेतत्[1] । क्रन्दस्वतीति[2] परस्पराह्वानवति रोदनवति[3] वा नः अस्मान् [4]प्र अव यत्नेन[4] रक्ष । किमर्थम् । सातये लाभाय सम्भजनाय वा, अस्माकं धर्मार्थकामप्राप्तय इत्यर्थः । यत्र यस्मिन् सङ्ग्रामे गोषाता गवां[5] सातये लाभायेत्यर्थः, धृषितेषु प्रगल्भेषु अभिभवितृषु खादिषु परस्परं भक्षयितृषु च योद्धृषु विष्वक् सर्वतः पतन्ति दिद्यवः वज्रपट्टाद्यायुधानि । किमर्थं पतन्ति । नृषाह्ये नृणां योद्धृमनुष्याणाम् अभिभवनाय । तस्मिन्नस्मिन् सङ्ग्रामे प्रावेति[6] सम्बन्धः कार्यः ॥ १ ॥

वेङ्कट० ताण्ड्यकाच्छाट्यायनकात् ( तु. तांब्रा ९,२,२२; जैब्रा १,२२८ ) च अस्य सूक्तस्य मुष्कवान् इन्द्रो देवता, लुश ऋषिरिति प्रतिभाति । सूक्तस्थानि च अक्षराणि तथैव समीचीनानि । यत्तु इदं कात्यायनेन उक्तम्—'मुष्कवान् इन्द्र ऋषिः केवल इन्द्रो देवता' ( तु. ऋअ २,१०,३८ ) इति तस्याभिप्रायो वृद्धेभ्योऽवगन्तव्यः ।

अस्मिन् नः इन्द्र! सङ्ग्रामे कीर्तिमति कर्मवति सिंहनादं करोषि, प्र रक्षसि च धनलाभाय, यस्मिन् लब्धपशुके धृष्टेषु शत्रूणां खादकेषु योद्धृषु इतस्ततः पतन्ति आयुधानि नृणाम् अभिभावुके ॥ १ ॥

**स नः क्षुमन्तं सदने व्यूर्णुहि गोअर्णसं रयिमिन्द्र श्रवाय्यम् ।**
**स्याम ते जयतः शक्र मेदिनो यथा वयमुश्मसि तद्वसो कृधि ॥ २ ॥**

सः । नः । क्षुऽमन्तम् । सदने । वि । ऊर्णुहि । गोऽअर्णसम् । रयिम् । इन्द्र । श्रवाय्यम् ।
स्याम । ते । जयतः । शक्र । मेदिनः । यथा । वयम । उश्मसि । तत् । वसो इति । कृधि ॥ २ ॥

उद्गीथ० यस्त्वं भक्तानामनुग्राहकः सः त्वं हे इन्द्र! सदने स्वगृहे, स्थितेभ्य इति शेषः, क्षुमन्तम् अन्नवन्तं शब्दवन्तं वा गोअर्णसम् गावः अर्ण उदकमिव प्रवृद्धा यस्मिन् तम् श्रवाय्यम् श्रवणीयम् रयिम् धनम् वि ऊर्णुहि विविधम् आच्छादय, अनेकार्थत्वाद्धातूनां विविधं देहीत्यर्थः । किञ्च स्याम भवेम वयम् मेदिनः बलवन्तः ते तवेन्द्रस्य शत्रुम् जयतः प्रसादात् । अथवा मेदिनः स्नेहवन्तो भक्तियुक्ताः सदा वयं तवोपरि भवेमेति आशास्महे । किं बहुनोक्तेन । यथा प्रातिपदिकार्थे प्रकारवचनः प्रत्ययः । यत् वयम् उश्मसि कामयामहे, तत् त्वं हे वसो! वसुमन्! प्रशस्त! वा कृधि कुरु, देह्यस्मभ्यमित्यर्थः ॥ २ ॥

वेङ्कट० सः नः शब्दवन्तम् आवासे आनीय अवीवृधः यस्मिन् गाव उदकम् इव प्रवृद्धाः[7] तम् रयिम्

---

१. अन्तर्नीत° वि[2] अ. २. क्रन्दसीति वि[1]; क्रन्दस्वतेति वि[2] अ. ३. तरादन° मूको. ४-४. प्रायत्नेन मूको. ५. न मूको ६. मवेति वि[1]; प्रयेति वि[2] अ[2]. ७ °द्धम् मूको.

इन्द्र! श्रवणीयम्। स्याम[1] तव शत्रुम् जयतः स्वभूता मेदसा युक्ताः। [2]यथा वयम्[2] कामयामहे, तत् वासयितः! अस्माकं कुरु ॥ २ ॥

यो नो दास आर्यो वा पुरुष्टुतादेव इन्द्र युधये चिकेतति ।
अस्माभिष्टे सुषहाः सन्तु शत्रवस्त्वया वयं तान् वनुयाम संगमे ॥ ३ ॥

यः । नः । दासः । आर्यः । वा । पुरुऽस्तुत । अदेवः । इन्द्र । युधये । चिकेतति ।
अस्माभिः । ते । सुऽसहाः । सन्तु । शत्रवः । त्वया । वयम् । तान् । वनुयाम । सम्ऽगमे ॥३॥

**उद्गीथ०** यः दासः अकुलीन इत्यर्थः, आर्यः वा कुलीनो वेत्यर्थः, अदेवः देवादन्यो वा पिशाचासुरराक्षसादिकः हे पुरुष्टुत! बहुस्तुत! इन्द्र! नः अस्मान् युधये युद्धाय, योगं[3] कर्तुमिति शेषः, चिकेतति जानाति इच्छतीत्यर्थः। ते सर्वे शत्रवः अस्माभिः सुषहाः[4] सन्तु तव प्रसादात् सुखाभिभवा भवन्तु। सुखेनाभिभूय च त्वया सहिताः वयम् तान् शत्रून् उक्तलक्षणान् वनुयाम अनुहन्याम सङ्गमे सङ्ग्रामे ॥ ३ ॥

**वेङ्कट०** यः अस्मान् दासः[5] कर्मकरः शूद्रः त्रैवर्णिकः वा अदेवः वा[6] असुरः[7] इन्द्र! योत्स्य[8] इति बुध्यते। सर्वे शत्रवः ते स्वभूतैः अस्माभिः स्वभिभवा भवन्तु। त्वया वयम् सहायेन तान्[9] हन्याम सङ्ग्रामे ॥ ३ ॥

यो दभ्रेभिर्हव्यो यश्च भूरिभिर्यो अभीके वरिवोविन्नृषाह्ये ।
तं विखादे सस्निमद्य श्रुतं नरमर्वाञ्चमिन्द्रमवसे करामहे ॥ ४ ॥

यः । दभ्रेभिः । हव्यः । यः । च । भूरिऽभिः । यः । अभीके । वरिवःऽवित् । नृऽसह्ये ।
तम् । विऽखादे । सस्निम् । अद्य । श्रुतम् । नरम् । अर्वाञ्चम् । इन्द्रम् । अवसे । करामहे ॥ ४ ॥

**उद्गीथ०** यः इन्द्रः दभ्रेभिः अल्पैः योद्धृभिः हव्यः आह्वानार्हः, यः च इन्द्रः भूरिभिः बहुभिरपि योद्धृभिराह्वातव्यः। किमर्थम्। नृषाह्ये नृणामभिभवनाय। यः च इन्द्रः अभीके सङ्ग्रामे शत्रुसमीपे वा वरिवोवित् शत्रुधनानां लब्धा पराजित्य स्वीकर्ता, तम् इन्द्रम् सस्निम् स्नानसंशुद्धं[10] सञ्चेष्टयितारं वा शत्रूणामायुधैः अथवा संशोधयितारं सञ्चेष्टयितारं वा वृष्ट्या सर्वस्य पृथिव्यादेः श्रुतम् विख्यातम् नरम् नराकारम् अद्य अस्मिन् शत्रुभिः सह युद्धदिवसे अर्वाञ्चम् करामहे अस्मदभिमुखं कुर्मः। किमर्थम्। [11]विखादे विविधखादे[11] [12]सङ्ग्रामे अवसे[12] अस्माकं रक्षणार्थम् ॥ ४ ॥

---

१. स्याम वि[2] अ[1]. २-२. नास्ति वि[1]. ३. यः वि[2] अ. ४. सहा वि[1]; वहा वि[2] अ. ५. नास्ति वि[1,2]. ६. नास्ति वि[1]. ७. °रांशः मूको. ८. योत्स्यानि वि[2]; योत्स्यामि अ[1]; योध्यामि वि[1]. ९. °त्वाम् वि[2] अ[1]. १०. सास्नानं संशुद्धे वि[1]; वि[2] अ. ११-११. विधाखाकेदं मूको. १२-१२. अवसे संग्रामे मूको.

वेङ्कट० यः स्वल्पैः ह्वातव्यः, यः च बहुभिः, [1]यः च[1] सङ्ग्रामे [2]नृणाम् अभिभावुके धनस्य लम्भकः, तम् शत्रूणां विशेषेण भक्षके सङ्ग्रामे[2] शुचिम् अद्य विश्रुतम् नेतारम् अभिमुखम् इन्द्रम् रक्षणाय कुर्मः ॥ ४ ॥

स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम् ।
प्र मुञ्चस्व परि कुत्सादिहा गहि किमु त्वावान् मुष्कयोर्बद्ध आसते ॥ ५ ॥

स्वऽवृजम् । हि । त्वाम् । अहम् । इन्द्र । शुश्रव । अननुऽदम् । वृषभ । रध्रऽचोदनम् ।
प्र । मुञ्चस्व । परि । कुत्सात् । इह । आ । गहि । किम् । ऊँ इति । त्वाऽवान् । मुष्कयोः । बद्धः । आसते ॥

उद्गीथ० अत्रेतिहासः छन्दोगब्राह्मणे पठ्यते । कुत्सश्च लुशश्च युगपदिन्द्रम् आहूतवन्तौ स्वंस्वं यज्ञं प्रत्यङ्गभावाय । सखित्वादिन्द्रः कुत्सं प्रति जगाम । तं तत्र गतं वशित्वात् कुत्सो वार्ध्रीशतेनाण्डयोरबध्नात्[3] तमिन्द्रं बद्धं सेर्ष्यं [4]सदयं नाहान् अपनयंश्चाह[4] ( तु. तांब्रा ९,२,२२; जैब्रा १,२२८ )।

इन्द्र! वृषभ! वर्षितः! स्ववृजम् वर्जयितारं मोचयितारम् आत्मनो बन्धनेभ्यः हि यस्मात् त्वाम् अहम् शुश्रव श्रुतवानस्मि अनानुदम् आभिमुख्येन मर्यादया वा नोदनं[5] कर्तुं प्रेरयितुं युद्धाद् अपनेतुमशक्यं च रध्रचोदनम् रध्रस्य राधयितव्यस्य[6] चोदयितारं वशमानेतारं च, तस्माद् आत्मानम् अण्डयोर्बद्धम् प्र मुञ्चस्व विमुञ्च परि सर्वतः कुत्सात्, इह अस्मद्यज्ञे आ गहि आगच्छ । किं वा त्वावान् त्वत्सदृशोऽन्यः कश्चन मुष्कयोः वार्ध्रीशतेन[7] बद्ध आसते वचनव्यत्ययः । आस्ते तिष्ठति । कश्चिदन्य ईदृशोऽस्ति त्वत्तो हीनसत्त्वो निर्लज्जश्चेत्यभिप्रायः ॥ ५ ॥

वेङ्कट० स्वयमेव छेत्तारम् हि त्वाम् अहम् इन्द्र! अश्रौषम् अनपेक्षितबलानुप्रदानं हे वृषभ! राधकस्य चोदकम् । स त्वम् आत्मानम् प्र मुञ्चस्व, अथ कुत्सात् इह आ गच्छ । किम् उ त्वत्सदृशः कश्चित् मुष्कयोः बद्धः[8] आस्ते ।

अत्र शाट्यायनकम् "कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम् । स कुत्सस्य हवम् आगच्छत् । तं शतेन वार्ध्रीभिराण्डयोरबध्नात्[9] । तं लुशोऽभ्यवदत्—'स्ववृजं हि त्वामहमिन्द्र शुश्रवानानुदं वृषभ रध्रचोदनम् । प्र मुञ्चस्व परि कुत्सादिहागहि किमु त्वावान् मुष्कयोर्बद्ध आसते' इति ताः सर्वाः संलुप्य लुशम् अभि प्राद्रवत्" ( जैब्रा १,२८८ ) इति ॥ ५ ॥

[10]इति सप्तमाष्टके अष्टमाध्याये चतुर्दशो वर्गः[10] ॥

[ ३९ ]

[10]काक्षीवती घोषा ऋषिः । अश्विनौ देवता । जगती छन्दः, चतुर्दशी त्रिष्टुप्[10] ।

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता ।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥ १ ॥

---

१-१. नास्ति वि[1]. २-२. नास्ति अ[1]. ३. बध्नश° मूको. ४-४. सदीयं नाहानयच्चाह मूको. ५. नो मूको. ६. धारयि° मूको. ७. वृद्धश° मूको. ८. बन्धः मूको. ९. वार्धि° मूको. १०-१०. नास्ति मूको.

यः । वाम् । परिऽज्मा । सुऽवृत् । अश्विना । रथः । दोषाम् । उषसः । हव्यः । हविष्मता ।
शश्वत्ऽतमासः । तम् । ऊँ इति । वाम् । इदम् । वयम् । पितुः । न । नाम । सुऽहवम् । हवामहे ॥१॥

**उद्गीथ०** उत्तरं सूक्तम् 'यो वां परिज्मा' इति चतुर्दशर्चं घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता ददर्श । हे अश्विना! अश्विनौ! यः रथः वाम् युवयोः स्वभूतः । कीदृशः । परिज्मा सर्वतोगामी सुवृत् शोभनं वर्तिता गन्ता वा दोषाम् रात्रिं प्रति उषसः च, रात्रावह्नि चेत्यर्थः[1], हव्यः आह्वातव्यः । केन[2] । हविष्मता यजमानेन । तम् उ वाम् उ इति पदपूरणः । तं रथं युवयोः स्वभूतम् सुहवम् स्वाह्वानम् शश्वत्तमासः अतिशयेन नित्याः चिरन्तनाः स्तोतारः यष्टारश्च वयम् हवामहे अस्मान्[3] प्रत्याह्वयामः । किमिव । इदम् पितुः न नाम यथा लोके प्रसिद्धमिदं पितुः[4] नाम वत्समर्यादिकं (?) गृहीत्वा सुहवम् स्वाह्वानं पितरम् आह्वयति कश्चित्, एवम् ॥ १ ॥

**वेङ्कट०** घोषा काक्षीवती । यः वाम् [5]परितो गन्ता[5] सुवर्तनः अश्विनौ! रथः अहोरात्रयोः आह्वातव्यः यजमानेन, चिरन्तनाः वयम् तम् एव युवयो रथम् पितुः इव नाम स्वाह्वानम् इदम् हवामहे ॥ १ ॥

चोदयतं सूनृताः पिन्वतं धिय उत् पुरंधीरीरयतं तदुश्मसि ।
यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम् ॥ २ ॥

चोदयतम् । सूनृताः । पिन्वतम् । धियः । उत् । पुरम्ऽधीः । ईरयतम् । तत् । उश्मसि ।
यशसम् । भागम् । कृणुतम् । नः । अश्विना । सोमम् । न । चारुम् । मघवत्ऽसु । नः । कृतम् ॥ २ ॥

**उद्गीथ०** चोदयतम् युवाम् सूनृताः उषसः कर्माङ्गभावाय । उषसः उद्गमयतम् इत्यर्थः । पिन्वतम् सिञ्चतं प्रक्षरतं स्वयागकालकरणेन कर्माङ्गभावाय प्रतिपत्त्या च प्रवर्तयतम्[6] इत्यर्थः, धियः देवयागकर्माणि । पुरन्धीः पुरुधीः बह्वीः प्रज्ञाश्च अस्माकं सत्यरमणाय उत् ईरयतम् उद्गमयतम् उत्पादयतम् दत्तमित्यर्थः । तत् एतत् त्रयं यथोक्तं युष्मत्तो वयम्[7] उश्मसि कामयामहे । किञ्च यशसम् यशस्विनं दत्तभुक्तफलत्वात् धनस्य, दानभोगजनितकीर्तिमन्तमित्यर्थः[8], भागम् धनम्[9] अस्मदनुरूपं कुरुतं दत्तमित्यर्थः, नः अस्मभ्यं हे अश्विनौ! । किञ्च सोमम् न चारुम् यथा सोमं देवतारूपम् ओषधिरूपं च चारुं शोभनं प्रजापतिः मघवत्सु ईश्वरेषु कृतवान्, एवं तौ नः अस्माकं देवेषु कृतम् कुरुतं युवाम्, स्वर्गं नयतमित्यर्थः ॥ २ ॥

**वेङ्कट०** प्रेरयतम् वाचः[10] । पूरयतम् कर्माणि । उत् ईरयतम् च प्रज्ञाः । तत् वयं कामयामहे । यशस्विनम् भागम् कृणुतम् अस्माकम् अश्विनौ! । सोमम् इव कल्याणम् धनवत्सु अस्मान् कृणुतम् श्रद्धेयान् ॥ २ ॥

---

१. चेत्यर्थः मूको २. तेन मूको. ३. अस्म मूको. ४. पितुर्न मूको. ५-५. परिगन्ता वि[1]. ६. प्रव्रयतम् वि[1]; प्रवयतयतम् वि[2] अ. ७. वरम् मूको. ८. धनमो° अ. ९. धनं यत् मूको. १०. वाचम् वि[2] अ[1].

अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित् ।
अन्धस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर्भिषजा रुतस्य चित् ॥ ३ ॥

अमाऽजुरः । चित् । भवथः । युवम् । भगः । अनाशोः । चित् । अवितारा । अपमस्य । चित् ।
अन्धस्य । चित् । नासत्या । कृशस्य । चित् । युवाम् । इत् । आहुः । भिषजा । रुतस्य । चित् ॥ ३ ॥

उद्गीथ० अत्रेतिहासमाचक्षते — घोषा किल दुर्भगत्वात् पत्या परित्यक्ता पितुः कक्षीवतः गृहे जरां गता सती सौभाग्यमश्विनौ ययाचे । तस्या अश्विनौ च तुष्टौ स्वयमेव भगत्वं गतौ पतिदानायेति । तदेतत् कक्षीवताऽप्युक्तम् — 'घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्' ( ऋ १,११७,७ ) । तदेतदिह प्रथमे पादे कथ्यते 'अमाजुरश्चिद् भवथो युवं भगः' इति[1] । अमाजुरः 'अमा' (निघ ३,४) इति गृहनाम । 'जॄ वयोहानौ' । चित्-छन्दोऽप्यर्थे । पितृगृहे जीर्णाया अपि सत्या मम घोषायाः युवम् युवाम् अश्विनौ! स्वयमेव भगः भवथः । भूते लट् । शोभनं भगरूपेण आत्मानं विपरिणमय्य मे पतिं दत्तवन्तौ स्थ इत्यर्थः । किञ्च अनाशोः चित् अवितारा अनुष्ठानेनाशीघ्रस्यापि अक्षिप्रकारिणोऽपि रक्षितारौ युवां स्थः । अपमस्य निकृष्टस्य जात्यादिहीनस्यापि । अवितारावित्यनुवर्तते सर्वत्र । अन्धस्य इत् चक्षुर्विकलस्य च सर्वस्य । हे नासत्यौ! कृशस्य चित् दुर्बलस्य च सर्वस्य । किञ्च युवाम् चित् युवामेव अश्विनौ! आहुः वदन्ति विद्वांसः वेदागमा वा भिषजा भिषजौ भेषजस्य कर्तारौ रुतस्य चित् रोगेण आर्तस्यापि, सर्वानुकम्पिनौ युवाम् इत्यर्थः ॥ ३ ॥

वेङ्कट० पितृगृहे सह[2] जीर्यन्त्या घोषाया दुर्भगायाः युवाम् भगः भवथः[3] । 'घोषायै चित् पितृषदे दुरोणे' ( ऋ १,११७,७ ) इत्युक्तम् । अनशनस्य रक्षकौ अपमीयमानस्य च । अन्धस्य चित् नासत्यौ![4] कृशस्य च युवाम् एव आहुः भिषजौ रोगाद् रुदतश्च[5] ॥ ३ ॥

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ॥ ४ ॥

[6]युवम् । च्यवानम् । सनयम् । यथा । रथम् । पुनः । युवानम् । चरथाय । तक्षथुः ।[6]
निः । तौग्र्यम् । ऊहथुः । अत्ऽभ्यः । परि । विश्वा । इत् । ता । वाम् । सवनेषु । प्रऽवाच्या ॥

उद्गीथ० युवम् युवाम् अश्विनौ! च्यवानम् च्यवनमृषिम् सनयम् पुराणं चिरन्तनं जीर्णं सन्तम्, यथा रथम् कश्चित् पुनः नवं करोति, एवं पुनः युवानम् तरुणम् चरथाय चरणाय उपगमनाय सुकन्यायाः तक्षथुः कृतवन्तौ स्थः । अयं चेतिहासः शतपथे सुकन्याब्राह्मणे ( माश ४,१,५ ) पठ्यते । किं च तौग्र्यम् तुग्रस्य पुत्रं भुज्युं नाम समुद्रमध्ये विपन्ननावं सखिभिः परित्यक्तम् निः ऊहथुः निरूढवन्तौ स्थः, उत्तारितवन्तौ इत्यर्थः, अद्भ्यः सामुद्रीभ्यः परि सर्वतः । अयमपि इतिहास ऋग्वेदे पठ्यते — 'उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे ।

---

१. त्रुटितम् मूको. २. नास्ति वि[1]. ३. नास्ति मूको. ४. °त्या वि[1]. ५. रुतश्च वि[2] अ[1]; रदतश्च वि[1]. ६-६. या. ( ४,१९ ) व्याख्यातोऽयमर्धर्चः द्र.

निर्रीं पर्षदरावा यो युवाकुः' ( ऋ ७,६८,७ ) इत्येवमादिषु मन्त्रान्तरेषु। अथवा 'तुग्र्या'[1] ( निघ १,१२ ) इत्युदकनाम। तत्समूहं तौग्र्यम्। तद् निरूहथुः मेघान्निर्हृतवन्तौ[2] स्थ इत्यर्थः, अद्भ्यः परि अपां विचरन्तीनाम्[3] उपरि अक्षीणायामेव पूर्ववृष्ट्याम् इत्यर्थः। विश्वा इत् ता वाम् यान्येवमादीनि कर्माणि सर्वाण्येव तानि युवयोः कर्माणि सवनेषु यज्ञेषु प्रवाच्या प्रकर्षेण वचनार्हाणि ॥ ४ ॥

वेङ्कट० युवम् च्यवानम् ऋषिं प्रत्नम् रथम् इव जीर्णम् पुनः युवानम् चरणार्थम्[4] तक्षथुः तक्षतिः करोतिकर्मा ( या ४, १९ )। निः ऊहथुः च तुग्रपुत्रं भुज्युं समुद्रे[5]। विश्वानि एव तानि युवयोः सवनेषु प्रवाच्यानि ॥ ४ ॥

पुराणा वां वीर्या३ प्र ब्रवा जनेऽथो हासथुर्भिषजा मयोभुवा।
ता वां नु नव्याववसे करामहेऽयं नासत्या श्रदरिर्यथा दधत् ॥ ५ ॥

पुराणा। वाम्। वीर्या। प्र। ब्रव। जने। अथो इति। ह। आसथुः। भिषजा। मयःऽभुवा।
ता। वाम्। नु। नव्यौ। अवसे। करामहे। अयम्। नासत्या। श्रत्। अरिः। यथा। दधत् ॥

उद्गीथ० पुराणा पुराणानि चिरन्तनानि आदिसर्गादारभ्य प्रवृत्तानीत्यर्थः, वाम् युवयोः वीर्या वीर्याणि प्र ब्रव प्रकर्षेण ब्रवीमि जने लोके। अथो ह आसथुः स्वजन्मानन्तरमेव[6] बभूवथुः भिषजा देवानां भिषजौ मयोभुवा शत्रुषु[7] प्रहरणद्वारेण सुखस्य भावयितारौ। ययोर्युवयोः अहं वीर्याणि प्रख्यापयामि ता वाम् तौ युवाम् नव्यौ स्तुत्यौ अवसे हविषा युवयोः तर्पणाय नु क्षिप्रम् करामहे[8] आह्वानेन अस्मदभिमुखौ कुर्मः[9]। कृत्वा हे नासत्यौ! यत् हविः श्रत् सत्यं यथाचोदितं हविषां च स्तुतीनां च करणम् अयम्[7] अरिः[7] ईश्वरो यजमानः यथा येन प्रकारेण सम्यक् परया भक्त्या दधत् ददाति, तथा वयमपि[10] दध्मो युवाभ्यामित्यर्थः ॥ ५ ॥

वेङ्कट० प्रत्नानि युवयोः वीर्याणि प्र ब्रवीमि जने। अथो बभूवथुः[11] पुनर्युवा[12] भिषजौ सुखस्य भावयितारौ। तौ वाम्[13] स्तुत्यौ रक्षणाय कुर्मः, अयम् नासत्यौ! अरिः गन्ता पतिः यथा श्रत् दध्याद् इति ॥ ५ ॥

[14]इति सप्तमाष्टके अष्टमाध्याये पञ्चदशो वर्गः[14] ॥

इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतम्।
अनापिरज्ञा असजात्यामतिः पुरा तस्या अभिशस्तेरव स्पृतम् ॥ ६ ॥

---

१. तुग्र्य मूको. २. मघानिहृत° मूको. ३. °रन्त° मूको. ४. चरक्षणा° वि[3]. ५. °द्र वि[2] अ[1]; °द्रा वि[1]. ६. °न्मान्तरमे मूको. ७. नास्ति मूको. ८. करवामहे मूको. ९. कर्म मूको. १०. यमपि मूको. ११. बभूव मूको. १२. °युवथुः वि[2] अ[1]. १३. वा मूको. १४-१४. नास्ति मूको.

इयम् । वाम् । अह्वे । शृणुतम् । मे । अश्विना । पुत्रायऽइव । पितरा । मह्यम् । शिक्षतम् ।
अनापिः । अज्ञाः । असजात्या । अमतिः । पुरा । तस्याः । अभिऽशस्तेः । अव । स्पृतम् ॥ ६ ॥

**उद्गीथ०** इयम् **अहं घोषा** वाम् **युवाम् अश्विनौ** अह्वे **आह्वयामि । आहूयमानौ च युवाम्** शृणुतम् मे **ममाह्वानं** हे अश्विना ! **अश्विनौ ! । श्रुत्वा च** मह्यम् **घोषायै** शिक्षतम् **दत्तम् ईप्सितमर्थम् । किमिव ।** पुत्राय इव **मातापितरौ ईप्सितमर्थं दत्तः ।** अनापिः **अज्ञातिः** [1]अज्ञाः **अकृतज्ञेत्यर्थः**[1] । असजात्या **असमानजातीया** अमतिः **अप्रज्ञा मन्दबुद्धिरित्यर्थः । अथवा** अमतिः **अन्याऽभिमानिनीत्यर्थः ।** तस्याः **शत्रुजातेः स्वभूतायाः**[2] **तत्कर्तृकाया**[3] **इत्यर्थः,** [4]अभिशस्तेः **अभिहिंसायाः**[4] पुरा **पूर्वम्** अव स्पृतम् **अभयप्रदानाच्छादनेन आच्छादयतम्, मां पालयतमित्यर्थः ॥ ६ ॥**

**वेङ्कट०** इयम् **अहम्** वाम् **ह्वयामि ।** शृणुतम् **मदीयम् अश्विनौ ! ।** पुत्राय इव **पितरौ धनम्** मह्यम् **दत्तम् । अबन्धुः अज्ञातिः** असजात्या **अश्रद्धेया च अभिशस्तिः यदा अस्मान् आगच्छति,** प्रागेव तस्याः [5]अव **पारयतम्**[5] **इति ॥ ६ ॥**

**युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम् ।**
**युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये ॥ ७ ॥**

युवम् । रथेन । विऽमदाय । शुन्ध्युवम् । नि । ऊहथुः । पुरुऽमित्रस्य । योषणाम् ।
युवम् । हवम् । वध्रिऽमत्याः । अगच्छतम् । युवम् । सुऽसुतिम् । चक्रथुः । पुरम्ऽधये ॥ ७ ॥

**उद्गीथ० अत्रेतिहासमाचक्षते — ऋषिर्विमदः परिणीय महत्या विभूत्या**[6] **युक्तो भार्यां स्वगृहं नेतुमिच्छन् अश्विनौ तुष्टाव । तस्य भार्यामश्विनौ आगत्य स्वसेनापरिवृतेन रथेन नीतवन्तौ, गाश्चास्मै**[7] **प्रभूता दत्तवन्ताविति । तदेतत् कुत्सेनोक्तम्** 'याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम्' ( ऋ १,११२,१९ ) **इति ।** युवम् **युवाम् अश्विनौ स्वसेनापरिवृतेन** रथेन, **आगत्येति शेषः ।** विमदाय **षष्ठ्यर्थे चतुर्थी । विमदस्य** शुन्ध्युवम् **नाम भार्याम्** [8]नि ऊहथुः **न्यूढवन्तौ**[8] **विमदस्य गृहं प्रापितवन्तौ स्थः ।** पुरुमित्रस्य **मित्रशब्दोऽत्र प्रदर्शनार्थः । बहुमित्रस्वजनस्येत्यर्थः ।** योषणाम् **स्त्रियं स्त्रीगुणोपेतामित्यर्थः । किञ्च 'युवम् हवम्' अत्रेतिहासः — वध्रिमती नाम** [9]**स्वयं योद्ध्री**[9] **स्त्री । सा सङ्ग्रामे शत्रुभिः छिन्नहस्ता अश्विनौ आजुहाव तुष्टाव । तस्या अश्विनौ हिरण्मयं हस्तं ददतुरिति । तदेतत् कक्षीवता विस्तरेणोक्तम् —** 'अजोहवीन्नासत्या करा वां महे यामन् पुरुभुजा पुरंधिः । श्रुतं तच्छासुरिव वध्रिमत्याः हिरण्यहस्तमश्विनावदत्तम्' ( ऋ १,११६,१३ ) **इति । कक्षीवतो**[1] **दुहिता घोषा संक्षिप्याह — युवम् युवामेव अश्विनौ !** हवम् **आह्वानं सामर्थ्यात्**

---

१-१. अज्ञाती अज्ञेत्यर्थः मूको. २. °ताय मूको. ३. °र्तृजाया मूको. ४-४. अभिगतेसरभिहिं° मूको. ५-५. अपारयम् वि[2] अ[2]. ६. नास्ति मूको. ७. नौश्चास्मै मूको. ८-८. निरूहथुः निरूढ° मूको. ९-९. स्वयोध्री मूको.

स्तुतिं च वध्रिमत्याः । वध्रिमती नाम कन्या । शत्रुभिः सङ्ग्रामे [1]छिन्नहस्तायाः स्त्रियाः[1] स्वभूताम् श्रुतवन्ताविति शेषः । अगच्छतम् प्रतिगतवन्तौ युवां हिरण्मयहस्तं तस्यै दत्तवन्तौ स्थः । किञ्च युवम् युवामेव सुषुतिम् [2]सुप्रसवम् शोभनमैश्वर्यम्[2] चक्रथुः कृतवन्तौ स्थः, दत्तवन्तावित्यर्थः, पुरन्धये बहुप्रज्ञायै वध्रिमत्यै ॥ ७ ॥

**वेङ्कट०** युवम् रथेन विमदाय ऋषये शुन्ध्युवम् नाम[3] नि ऊहथुः पुरुमित्रस्य दुहितरम् । 'यावर्भगाय विमदाय जायाम्' ( ऋ १,११६,१ ) इत्युक्तम् । युवम् हवम् वध्रिमत्याः च अगच्छतम् । 'अजोहवीन्नासत्या करा वाम्' ( ऋ १,११६,१३ ) इत्युक्तम् । युवां सुप्रसवम्[4] चक्रथुः पुरन्धये वध्रिमत्यै ॥ ७ ॥

युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः ।
युवं वन्दनमृश्यदादुदूपथुर्युवं सद्यो विश्पलामेतवे कृथः ॥ ८ ॥

युवम् । विप्रस्य । जरणाम् । उपऽईयुषः । पुनरिति । कलेः । अकृणुतम् । युवत् । वयः ।
युवम् । वन्दनम् । ऋश्यऽदात् । उत् । ऊपथुः । युवम् । सद्यः । विश्पलाम् । एतवे । कृथः ॥

**वेङ्कट०** युवम् विप्रस्य जरणाम् उपगतवतः पुनः च कलिनाम्नः अकृणुतम् युवत्वयुक्तम् वयः । युवम् वन्दनम् [5]कूपे पतितं[5] तस्मात् कूपात् उत् ऐरयतम् । युवाम् विश्पलाम् छिन्नजङ्घाम् सद्यः गमनाय कृथः[6] ॥ ८ ॥[7]

युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना ।
युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये ॥ ९ ॥

युवम् । ह । रेभम् । वृषणा । गुहा । हितम् । उत् । ऐरयतम् । ममृऽवांसम् । अश्विना ।
युवम् । ऋबीसम् । उत । तप्तम् । अत्रये । ओमन्ऽवन्तम् । चक्रथुः । सप्तऽवध्रये ॥ ९ ॥

**उद्गीथ०** ⋯⋯ अग्निकूटम्[8] तप्तम् महता सन्तापेन युक्तम् अत्रये अत्रेरर्थाय ओमन्वन्तम् अवनवन्तं रक्षणवन्तं वृष्ट्या निशमय्य[9] शीतम् चक्रथुः कृतवन्तौ स्थः[6], सप्तवध्रये च । अत्रेतिहासमाचक्षते — अश्वमेधो नाम भारतो[10] राजा केनचिदपराधेन अपराद्धं सप्तवध्रिम् ऋषिं रात्रौ काष्ठमय्यां मञ्जूषायां न्यधापयत् । स तत्र गर्भवद् दुःखं वसन्निर्विण्णः ततो गन्तुमिच्छन् अश्विनौ तुष्टाव । तमश्विनौ मञ्जूषाम् उद्धाट्य[11] ततोऽपनीय मञ्जूषां पूर्ववद्धटितवन्तौ[12] च, यथाऽश्वमेधो राजा न जानाति ( तु. बृदे ५,८०-८६ ) ॥ ९ ॥

---

१-१. ये स्त्रियः मूको. २-२. सुप्रसवश्च मूको. ३. नास्ति वि[1]. ४. प्रस° वि[2] अ[1]. ५-५. कूपेतितं वि[2]; कूपमेतीतितं अ[1]; कूपेवति वि[1]. ६. अकृथः मूको. ७. तु. ऋ १,११२,५;१५; ११६,१५. ८. अनीकूटं वि[2] अ; अरिकूटं वि[1]. ९. निनिश° वि[2] अ[1]; निविश° वि[1]. १०. भरतो वि[2]. ११. उद्घा मूको. १२. बुधे उद्घाटि° वि[1]; अद्घाटि° वि[2] अ.

**वेङ्कट०** युवम् ह रेभम् **ऋषिं वृषणौ! असुरैः गुहायाम् निहितम्** उत् ऐरयतम् **म्रियमाणम् अश्विनौ!**। 'दश रात्रीरशिवेन' ( ऋ १,११६,२४ ) इत्युक्तम्। युवाम् ऋबीसम्[1] अपि च[2] तप्तम् अत्रये **अवनवन्तम्** चक्रथुः सप्तवध्रये च। 'हिमेनाग्निं घ्रंसम्' ( ऋ १,११६,८ ) इत्युक्तम्, 'वि जिहीष्व वनस्पते' ( ऋ ५,७८,५ ) इति च ॥ ९ ॥

युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती चं वाजिनम् ।
चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् ॥ १० ॥

युवम् । श्वेतम् । पेदवे । अश्विना । अश्वम् । नवऽभिः । वाजैः । नवती । च । वाजिनम् ।
चर्कृत्यम् । ददथुः । द्रवयत्ऽसखम् । भगम् । न । नृऽभ्यः । हव्यम् । मयःऽभुवम् ॥ १० ॥

**उद्गीथ०** युवम् युवाम् श्वेतम् **शुक्लम्** पेदवे **राज्ञे हे अश्विनौ!** अश्वम् नवभिः **नवसङ्ख्याकैः** वाजैः **अन्नैः व्रीहियवादिभिः सारभूतैः सहिता** नवती **द्वितीयैकवचनस्य पूर्वसवर्णश्च। नवतिशब्दश्च सङ्ख्येयवचनः वाजिशब्देन सम्बन्धयितव्यः**। वाजिनम् इति बहुवचनस्य स्थाने एकवचनं भवति। **नवतिं वाजिनश्च नवतिसङ्ख्यायुक्तान्**, [3]**वाजिनां नवतिमित्यर्थः**[3], चर्कृत्यम् **अत्यर्थं सङ्ग्रामाणां कर्तारं छेत्तारं शत्रूणां खुरदन्ताद्यङ्गैः** ददथुः **दत्तवन्तौ स्थः** द्रवयत्सखम् **शत्रुसखीनां विद्रावयितारं शत्रुसेनानां स्फोटयितारमित्यर्थः**, हव्यम् **हवः सङ्ग्रामो ह्वानमाह्वानं**[4] वा **तदर्हम्**, मयोभुवम् **शत्रुजयजनितसुखस्य भावयितारम्**। **किमिव ददथुः**। भगम् न नृभ्यः **धनं यथा परिचारकमनुष्येभ्यः कश्चिद् ईश्वरो ददाति, एवम्** ॥ १० ॥

**वेङ्कट०** युवम् **श्वेतवर्णम्** पेदवे **राज्ञे अश्विनौ!** अश्वम् नवभिः **अश्वैः नवत्या** च **सहितं बलिनम् युद्धे पुनःपुनः कर्तव्यम्** ददथुः **द्रावयत्सखायम्। प्रतियोद्धारः सखायः। भाग्यमिव मनुष्येभ्यः ह्वातव्यम् सुखस्य भावयितारम्** ॥ १० ॥

[5]**इति सप्तमाष्टके अष्टमाध्याये षोडशो वर्गः**[5] ॥

न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयम् ।
यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ॥ ११ ॥

न । तम् । राजानौ । अदिते । कुतः । चन । न । अंहः । अश्नोति । दुःऽइतम् । नकिः । भयम् ।
यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । पुरःऽरथम् । कृणुथः । पत्न्या । सह ॥

**उद्गीथ०** तम् **स्तोतृजनं यष्टृजनं** हे राजानौ! **सर्वस्येश्वरौ! दीप्तौ!** वा अदिते! **वचनव्यत्ययेनेदम् अश्विनोः सम्बोधनम्। हे अदिती! अदीनौ! अदीनाकारौ! अनुपक्षीणौ!** कुतः चन **कुतश्चि-दपि स्वसम्बन्धिनश्चेत्यर्थः, कुतश्चन** अंहः **पापम्** न अश्नोति **न व्याप्नोति। किञ्च** दुरितम्

---

१. ऋधसम् वि[1] अ[1]; ऋजीसम् वि[2]. २. नास्ति वि[2] अ[1]. ३-३. वान्यानवीत्यर्थः मूको.
४. दानं बह्वानां वि[1]; दानं बहन्नं वि[2] अ. ५-५. नास्ति मूको.

कुतश्चन-नाश्नोति-शब्देन[1] सह सम्बन्धनीयम्। नकिः भयम् दुरितपापाभावादेव न[2] संसार-भयम् आप्नोति। यम् स्तोतृजनं यष्टृजनं हे अश्विनौ! सुहवा! स्वाह्वानौ! सुष्टुती! वा रुद्रवर्तनी शब्दवद्वर्त्मवन्तौ![3] पुरोरथम् अग्रतोरथम्। रथग्रहणमत्र प्रदर्शनार्थम् ऐश्वर्यस्य। हस्त्यश्वरथादि-धनवन्तम्, ईश्वरमित्यर्थः, कृणुथः कुरुथो युवाम् पत्न्या सह पत्नीसहितं यजमानमित्यर्थः। अथवा पत्न्या सहेत्येतद्वचनम् अश्विविषयम्, पत्नी चाश्विनोरुषाः। यागकालत्वेन अश्विनोः सम्भोगसामान्यात्[4] इतरथा वा। रथशब्देन च हविर्धानशकटमुच्यते। यं मनुष्यं हविर्धानलक्षण-पुरोरथं कुरुथः। केन सह। उषसा पत्न्या सह ॥ ११ ॥

वेङ्कट० न तम् हे राजानौ! अदिते! कुतः चित् अंहः प्राप्नोति। तदेवाऽऽह — [5]न अंहः[5] व्याप्नोति, न दुरितम् न च भयम्, यम् अश्विनौ![6] स्वाह्वानौ! स्तोतृयुक्तमार्गौ![7] पुरस्तात् गच्छद्रथम्[8] कृणुथः[9] पत्न्या[10] सह स्वयंवरे[11] इति ॥ ११ ॥

आ तेन॑ यातं॒ मन॑सो॒ जवी॑यसा॒ रथं॒ यं वा॑मृ॒भव॑श्च॒क्रुर॑श्विना।
यस्य॒ योगे॑ दुहि॒ता जाय॑ते दि॒व उ॒भे अह॑नी सु॒दिने॒ वि॒वस्व॑तः ॥ १२ ॥

आ। तेन॑। या॒त॒म्। मन॑सः। जवी॑यसा। रथ॑म्। यम्। वा॒म्। ऋ॒भव॑ः। च॒क्रुः। अ॒श्वि॒ना। यस्य॑। योगे॑। दु॒हि॒ता। जाय॑ते। दि॒वः। उ॒भे इति॑। अह॑नी॒ इति॑। सु॒दि॒ने॒ इति॑ सु॒ऽदि॒ने॑। वि॒वस्व॑तः ॥

उद्गीथ० आ यातम् आगच्छतं युवाम् तेन रथेन मनसः अपि सकाशात् जवीयसा जववत्तरेण वेगवत्तरेण, रथम् यम् वाम् युवयो [12]रथं यम् ऋभवः[12] ऋभुर्विभ्वा वाजः इत्येते त्रयः सुधन्वनः पुत्राः रथकाराः चक्रुः कृतवन्तः हे अश्विनौ!। यस्य च रथस्य [13]योगे संयोगे[13] यज्ञेन सह समागमे सति दिवः दुहिता उषाः जायते उत्पद्यते, विवस्वतः आदित्यस्य सकाशात् उभे च अहनी अहोरात्रे। कीदृशे। सुदिने शोभनप्रधानयागदिवसलक्षणे। यस्य रथस्य सहयोगे सति जाते विवस्वतः सकाशात्। तेन[14] रथेन आयातम् अस्मान् प्रति इति सम्बन्धः कार्यः ॥ १२ ॥

वेङ्कट० आ यातम् तेन मनसः अपि वेगवत्तरेण, रथम् यम् युवयोः ऋभवः चक्रुः अश्विनौ!, यस्य च[15] रथस्य योगे दिवः दुहिता उषाः प्रादुर्भवति, यस्य च योगे विवस्वतः अहोरात्रे शोभने जायेते इति ॥ १२ ॥

ता व॒र्तिर्या॑तं ज॒युषा॒ वि पर्व॑तमपि॑न्वतं श॒यवे॑ धे॒नुम॑श्विना।
वृक॑स्य चि॒द्वर्ति॑काम॒न्तरा॒स्या॑द्यु॒वं शची॑भिर्ग्र॒सि॒ताम॑मुञ्चतम् ॥ १३ ॥

ता। व॒र्तिः। या॒त॒म्। ज॒युषा॑। वि। पर्व॑तम्। अपि॑न्वतम्। श॒यवे॑। धे॒नुम्। अ॒श्वि॒ना। वृक॑स्य। चि॒त्। वर्ति॑काम्। अ॒न्तः। आ॒स्या॑त्। यु॒वम्। शची॑भिः। ग्र॒सि॒ताम्। अ॒मु॒ञ्च॒त॒म् ॥

---

१. चनशब्देन मूको. २. नास्ति मूको. ३. शब्दवद् भवति मूको. ४. संभोगमान्वात् मूको. ५-५. नांहोर्य मूको. ६. °ना वि[1]. ७. °र्गौ मार्गौ वि[2] अ[1]. ८. °च्छन्तं र° मूको. ९. °त वि[1,2]; °थ अ[1]. १०. पत्या मूको. ११. स्वयं परम् वि[2] अ[1]. १२-१२. रथाय ऋषवो भूव मूको. १३-१३. योगो संभोगो मूको. १४. क्रोन वि[2] अ. १५. नास्ति वि[2] अ[1].

उद्गीथ० ता यथोक्तगुणौ तौ युवाम् 'वर्तिः इति' तृतीयार्थे प्रथमा। वर्त्या वर्तन्या रथमार्गेण वि यातम् लडर्थे अत्र लोट्। विविधं गच्छथः[२]। कथम्। वर्षासु जयुषा शत्रूणां जेत्रा[३] रथेन पर्वतम् मेघं प्रति वृष्ट्यर्थम्। किञ्च अपिन्वतम् इत्यादि। अत्रेतिहासमाचक्षते — शयुर्नाम राजा ऋषिर्वा। सोऽश्विनौ परिचरणेन तुष्टावुवाच मम गौः अधेनुः निवृत्तप्रसवा प्रवयाश्च[४]। तां मे धेनुं कुरुतमिति। तामस्मै धेनुमश्विनौ चक्रतुरिति। तदेतत् कक्षीवतोक्तम् — 'युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय' ( ऋ १,११८,८ ), 'अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम्' ( ऋ १,११७,२० ) इति च। तदेतदिहोच्यते — अपिन्वतम् सेचितवन्तौ स्थः [५]युवां गाम्[५] क्षारितवन्तौ स्थ इत्यर्थः, शयवे धेनुम् शयोरर्थाय अधेनुं[६] निवृत्तप्रसवां च गां धेनुं कृत्वा पयसः प्रभूतदोग्ध्रीं कृतवन्तौ स्थ इत्यर्थः, हे अश्विनौ!। किञ्च वृकस्य[७] चित् इत्यादि। अत्रेतिहासमाचक्षते — वर्तिका नाम चटका शीघ्रा श्रमरहिता च, चवट्टो[८] इत्यपभ्रंशेन या प्रसिद्धा लोके। यस्या गच्छन्त्याः समुद्रमध्येऽपि [९]महान् शब्दः[९] श्रूयत इति नाविका आचक्षते। ताम् शीघ्रगतित्वात् श्रमरहितत्वाच्च केचिदृषयः प्रेषयाञ्चक्रुः[१०]। तां गच्छन्तीं वृको जग्राह। साऽश्विनावजुहाव[११]। अथ तामश्विनौ मोचयाञ्चक्रतुरिति। तदेतत् कक्षीवतोक्तम् 'अजोहवीदश्विना वर्तिका वामास्नो यत् सीममुञ्चतं वृकस्य' ( ऋ १,११७,१६ ) इति। [१२]वृकस्य च अन्तः आस्यात् मुखात् ग्रसिताम् वर्तिकाम्[१२] अमुञ्चतम् मोचितवन्तौ युवम् युवाम्। केन मोचितवन्तौ। शचीभिः स्वाभिः असाधारणाभिः प्रज्ञाभिः कर्मभिः ॥ १३ ॥

वेङ्कट० तौ मार्गम् वि यातम् जयशीलेन रथेन पर्वतम् प्रति। 'वि जयुषा रथ्या यातमद्रिम्' ( ऋ ६,६२,७ ) इत्युक्तम्। अपिन्वतम् च शयवे धेनुम् अश्विनौ!। तदुक्तम् — 'युवं धेनुं शयवे' ( ऋ १,११८,८ ) इति। वृकस्य च वर्तिकाम्[१३] अन्तः। आस्यात् युवम् प्रज्ञाभिः ग्रसिताम्[१४] अमुञ्चतम् ॥ १३ ॥

**एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथम्।**
**न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ १४ ॥**

एतम्। वाम्। स्तोमम्। अश्विनौ। अकर्म। अतक्षाम। भृगवः। न। रथम्।
नि। अमृक्षाम। योषणाम्। न। मर्ये। नित्यम्। न। सूनुम्। तनयम्। दधानाः ॥ १४ ॥

उद्गीथ० एतम् यथोक्तम् स्तोमम् स्तुतिम् वाम् युवयोः हे अश्विनौ! अकर्म कृतवन्तो वयम्। यथाकथञ्चित् अतक्षाम तक्षिरत्र सामर्थ्यात् संस्कारार्थः। सम्यक् कृतवन्त इत्यर्थः। भृगवः न रथम् यथा भृगवः ऋषयः संस्कृत्य [१५]रथम् ईरितारं[१५] देवान् प्रति गन्तारं स्तोमं सम्यक् कुर्वन्ति, एवम्। संस्कृत्य च नि अमृक्षाम[१६] नियमेन शोधितवन्तः, ततोऽप्यधिकं पुनरपि संस्कृतवन्त

---

१-१. वर्जितः मूको. २. गच्छत मूको. ३. जता वि[१]; जयता वि[२] अ ४. प्रसवा मूको. ५-५. युव यः वि[२] अ; युवं यां वि[१]. ६. धेहि वि[१]; देहि वि[२] अ. ७. वृद्धस्य मूको. ८. पट्टा वि[२] अ[१]. ९-९. महच्छन्दः मूको. १०. °क्रिरिति मूको. ११. सोऽश्विनावाजुहतावतम् मूको. १२-१२. नास्ति मूको. १३. °म् अस्य वि[१]. १४. ग्रसि° वि[२] अ[१]; ग्रसितम् वि[१]. १५-१५. रथ ईहिता° वि[२] अ[१]; रथ वि[१]. १६. अमषाम मूको.

इत्यर्थः। किमिव। योषणाम् न मर्ये यथा केचित् अभ्यङ्गोद्वर्तनस्नापनानुलेपनादिसंस्कारैः महताऽऽदरेण संस्कुर्वन्ति स्त्रियं जायादिकाम् राज्ञ्यादिकाम्[1] मर्ये षष्ठ्यर्थे सप्तम्येषा। मर्यस्य मनुष्यस्य, एवम्। किं कुर्वन्तः सन्तो वयं संस्कृतवन्तः। उच्यते—नित्यम् न सूनुम् तनयम् दधानाः यथा नित्यं शाश्वतम् औरसं सूनुं पुत्रं तनयं तनितारम् ऋणत्रयस्य विस्तारयितारम् अनुष्ठातारं काचित् स्त्री स्वोदरे धारयति, एवं स्वहृदये स्तोमं दधानाः धारयन्तो महताऽऽदरेण पर्यालोचयन्तः सन्त इत्यर्थः॥ १४॥

**वेङ्कट०** एतम्[2] युवयोः स्तोमम् अश्विनौ! कृतवन्तः। तदेवाऽऽह—कृतवन्तः भृगवः इव रथम्। ऋभवः कर्मयोगात् भृगव[3] उच्यन्ते, यद्वा रथकारा भृगवः। निमृष्टवन्तः[4] स्तुतिं युवयोः। जायाम् इव मनुष्ये, नित्यम् इव सूनुम् तनयम् औरसं पुत्रं पितुरङ्के, स्तोत्रं युवयोः निदधानाः॥ १४॥

[5]इति सप्तमाष्टके अष्टमाध्याये सप्तदशो वर्गः[5]॥

## [ ४० ]

[5]काक्षीवती घोषा ऋषिः। अश्विनौ देवता। जगती छन्दः[5]।

रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुविताय भूषति।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि॥ १॥

रथम्। यान्तम्। कुह। कः। ह। वाम्। नरा। प्रति। द्युऽमन्तम्। सुविताय। भूषति।
प्रातःऽयावानम्। विऽभ्वम्। विशेऽविशे। वस्तोःऽवस्तोः। वहमानम्। धिया। शमि॥ १॥

**उद्गीथ०** उत्तरं सूक्तम् 'रथं यान्तम्' इति चतुर्दशर्चम् आश्विनं घोषैव ददर्श। रथम् यान्तम् चिरागतावश्विनौ सोपालम्भमाह—हे नरा! नराकारौ! अश्विनौ! शूरौ! वा वाम् युवयोः स्वभूतं रथम् यागं यान्तम् इति सम्बन्धः कार्यः। अस्मदीयं यज्ञम् प्रति गच्छन्तम् कुह क्व यज्ञे कः ह हेति पदपूरणः। कोऽन्यो यजमानः द्युमन्तम् दीप्तिमन्तम् सुविताय सुगताय स्वर्गप्राप्त्यर्थमित्यर्थः। भूषति अलङ्करोति मण्डयति, स्तुतिभिर्हविर्भिश्च पूजयतीत्यर्थः। धिया प्रज्ञया विशिष्टया, युक्त इति शेषः, प्रातर्यावाणम् प्रातःप्रातः यातारं यज्ञं प्रति गन्तारम् विभ्वम् विभुं व्यापिनम् विशे-विशे मनुष्यस्यमनुष्यस्यार्थाय वस्तोर्-वस्तोः अहन्यहनि वहमानम् प्रापयन्तम् यत्र इष्टं तत्र युवां नेतारमित्यर्थः। रथपूजाद्वारेण रथवत एवात्र पूजोच्यते। एतदुक्तं भवति—कस्मिन् यज्ञे कः अन्यः यजमानो युवां स्तुतिभिः हविर्भिश्च पूजितवान्, येन अस्मद्यज्ञं चिरादागतौ स्थ इति शेषः॥ १॥

**वेङ्कट०** रथम् यान्तम् कस्मिन् देशे कः खलु युवयोः नरौ! प्रति भूषयति अलङ्करोति दीप्तिमन्तम्

---

१. राजादिकाम् मूको. २. एवम् वि[2] अ[1]. ३. ऋभव वि[2] अ[1]. ४. निमु° मूको. ५-५. नास्ति मूको.

अभ्युदयार्थम् प्रातयावाणम् सर्वेषु मनुष्येषु गन्तारम् अन्वहं धनं[1] प्रापयन्तम् कः कर्मणा स्तोत्रेण कर्मणिकर्मणि यज्ञे प्रतिभूषयति[2] ॥ १ ॥

कुह स्विद् दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥ २ ॥

कुह । स्वित् । दोषा । कुह । वस्तोः । अश्विना । कुह । अभिऽपित्वम् । करतः । कुह । ऊषतुः ।
कः । वाम् । शयुऽत्रा । विधवाऽइव । देवरम् । मर्यम् । न । योषा । कृणुते । सधऽस्थे । आ ॥ २ ॥[3]

उद्गीथ० कुह स्वित् दोषा रात्रौ, भवथः इत्यध्याहार्यम् । कुह वस्तोः क्व वा दिवा भवथः युवां हे अश्विनौ! । कुह क्व वा अभिपित्वम् अभिप्राप्तिम् करतः कुरुथः । कुह ऊषतुः क्व वा वसथः । कः यजमानः वाम् युवाम्, शयुत्रा शयने विधवा इव देवरम् यथा मृतभर्तृका स्त्री पत्युः भ्रातरम्, मर्यम् न योषा यथा च सर्वमेव[4] मनुष्यं सर्वा स्त्री सम्भोगकाले आ कृणुते सम्भोगार्थम् आत्माभिमुखं करोति, एवम् सधस्थे सहस्थाने यज्ञे वेद्याख्ये परिचरणार्थम् आत्माभिमुखं करोति परिचरतीत्यर्थः ॥ २ ॥

वेङ्कट० क्व स्वित्[5] रात्रौ भवथः[6], क्व दिवा अश्विनौ! । क्व अभिप्राप्तिं कुरुथः[7] । क्व वसथः[8] । कः वाम्, शयने विधवा इव देवरम् ( तु. या ३,१५ ), मनुष्यम् इव च योषा, आ-कुरुते सहस्थाने ॥ २ ॥

प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता गच्छथो गृहम् ।
कस्य ध्वस्रा भवथः कस्य वा नरा राजपुत्रेव सवनाव गच्छथः ॥ ३ ॥

प्रातः । जरेथे इति । जरणाऽइव । कापया । वस्तोःऽवस्तोः । यजता । गच्छथः । गृहम् ।
कस्य । ध्वस्रा । भवथः । कस्य । वा । नरा । राजपुत्राऽइव । सवना । अव । गच्छथः ॥ ३ ॥

उद्गीथ० प्रातः उषःकाले जरेथे युवां स्तूयेथे यज्वभिः । किमिव । जरणा इव कापया कापा इति वन्दिनः वाणी कथ्यते । यथा जरणौ जीर्णौ ऐश्वर्येण वृद्धौ ईश्वरौ राजानौ प्रातरुत्थापकस्य वन्दिनः कापया वाचा स्तूयेते, एवम् । किञ्च वस्तोर्वस्तोः अहन्यहनि 'यजता यष्टव्यौ' यज्ञगृहम् गच्छथः यागनिर्वृत्त्यर्थम् । किञ्च हे नरा! शूरौ! नराकारौ! वा अश्विनौ! कस्य यज्वनः सम्बन्धिनः अशुभस्य ध्वस्रा ध्वंसयितारौ विनाशयितारौ अद्य भवथः युवाम् । कस्य वा यज्वनः सवना सवनं यज्ञम् अव गच्छथः प्रतिगच्छथः युवाम् अद्य । दृष्टान्तसामर्थ्यात् शोभमानौ ऐश्वर्येण युक्ताविति शेषः । किमिव । राजपुत्रा इव ॥ ३ ॥

वेङ्कट० प्रातः स्तूयेथे कुष्ठजीर्णयेव[10] कपिकुलजातया । अन्वहं यष्टव्यौ गच्छथः गृहम् । तौ युवाम्

---

१. नास्ति वि[2] अ[1]. २. °भूसति वि[1]. ३. या. ( ३,१५ ) व्याख्यातेयमृग् द्र. ४. सर्वदेव मूको. ५. चित् वि[1]; सित् वि[2] अ[1]. ६. °त वि[2] अ[1]; °तः वि[1]. ७. °त वि[2] अ[1]; °तः वि[1]. ८. °त वि[2] अ[1]; °तः वि[1]. ९-९. जायतो यष्टुं मूको. १०. कुष्ठाजी° वि[2] अ[1]; कुष्ठंजी° वि[1].

कस्य ध्वंसकौ भवथः। कस्य वा हे नेतारौ! राजपुत्रौ इव शोभमानौ सवनानि प्रति गच्छथः ॥ ३ ॥

**युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे ।**
**युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥ ४ ॥**

युवाम् । मृगाऽइव । वारणा । मृगण्यवः । दोषा । वस्तोः । हविषा । नि । ह्वयामहे ।
युवम् । होत्राम् । ऋतुऽथा । जुह्वते । नरा । इषम् । जनाय । वहथः । शुभः । पती इति ॥ ४ ॥

**उद्गीथ०** युवाम् अश्विनौ दोषा रात्रौ वस्तोः अहनि च हविषा निमित्तेन हविर्भोक्तुमित्यर्थः, नि ह्वयामहे नियमेन आह्वयामहे। किमिव। मृगा इव यथा मृगौ [1]वारणा वारणौ[1] हस्तिनौ मृगण्यवः हस्तिमार्गणशीलाः कवलग्राहकाः कवलग्रहणार्थं नियमेन आह्वयन्ति, एवम्। कस्मात् कारणात् हविर्भोक्तुं नियमेन [2]आहूयेथे युवाम्[2]। उच्यते—यस्मात् युवम् युवाम् होत्राम् आहुतिम् ऋतुथा ऋतावृतौ यथाकालम् जुह्वते युवयोरर्थायाग्नौ प्रक्षिपते जनाय यजमानाय हे नरौ! शूरौ! इषम् अन्नम् वहथः दातुं प्रापयथः, दत्थ[3] इत्यर्थः, हे शुभः पती! शुभस्य वृष्ट्युदकस्य शोभनस्य वा स्वामिनौ! ॥ ४ ॥

**वेङ्कट०** युवाम् शार्दूलौ इव चारकौ मृगयवः रात्रौ अहनि च अभिमुखम् ह्वयामहे[4] हविषा। युवाम् आहुतिम् कालेकाले[5] जुह्वते हे नरौ! अन्नम् जनाय वहथः उदकस्य पती! ॥ ४ ॥

**युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा ।**
**भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥ ५ ॥**

युवाम् । ह । घोषा । परि । अश्विना । यती । राज्ञः । ऊचे । दुहिता । पृच्छे । वाम् । नरा ।
भूतम् । मे । अह्ने । उत । भूतम् । अक्तवे । अश्वऽवते । रथिने । शक्तम् । अर्वते ॥ ५ ॥

**उद्गीथ०** हे अश्विनौ! युवाम् ह युवामेव परि यती हविर्भिः अवगच्छन्ती परिचरन्ती सतीत्यर्थः, अहम् घोषा राज्ञः दीप्तस्य तपसेद्धस्य कक्षीवतः दुहिता। अथवा लुप्तोपममेतत् पदम्। उपमानसामर्थ्याच्च साधारणगुणाध्याहारः कार्यः। राज्ञो दुहितेव प्रगल्भा ऊचे स्तुतिभिः उक्तवत्यस्मि स्तुतवतीत्यर्थः। स्तुत्वा[6] च पृच्छे पृच्छामि वाम् युवाम् नरा! शूरौ!। प्रश्नेनात्र प्रार्थना लक्ष्यते प्रश्नपूर्वकत्वात्[7] प्रार्थनायाः। [8]प्रार्थय इत्यर्थः[8]। विज्ञाप्येदानीं प्रार्थयते—भूतम् मे अह्ने उत भूतम् अक्तवे अहरक्तुशब्देनात्र अहोरात्रनिर्वर्त्यं यागकर्म कथ्यते [9]तादर्थ्यात् ताच्छब्द्येन। तादर्थ्यचतुर्थी[9] चोभयत्र। भूतम् भवतम् युवाम् मे मम अह्ने अहर्निर्वर्त्ययागकर्मणः अङ्गभावायेत्यर्थः।

---

१-१. रवाणां मूको. २-२. आह्वयेथे यूयम् मूको. ३. ददथ मूको. ४. ह्वयमाने वि[२] अ[१]. ५. काले वि[२] अ[१]; लोकाले वि[१]. ६. स्तुना मूको. ७. प्रयत्नपू° मूको. ८-८. पार्थनाय मूको. ९-९. तार्थ्याः तछब्देन चातुर्थ्य चतुर्थी मूको.

अपि भूतं भवतम् अक्तवे। अक्तुरिति रात्रिनाम। रात्रिनिर्वर्त्यस्य च कर्मणः अङ्गभावायेत्यर्थः। अङ्गभावप्रतिपत्त्या च निर्वृत्ते यागे ततः [1]स्वर्गः। अश्ववते[1] रथिने अश्वरथवद्दृष्टफलयुक्तायेत्यर्थः। अर्वते स्वर्गति गन्त्रे मह्यं स्तोत्रे शक्तम् दातुं शक्नुतम् दत्तमित्यर्थः॥ ५॥

वेङ्कट० युवाम् खलु घोषा अहम्[2] अश्विनौ! परितो गच्छन्ती राज्ञः कक्षीवतः दुहिता ऊचे यदाऽमीभ्यः[3] सन्निहितेभ्यः, पृच्छामि च[4] वाम्[4] नरौ! वृद्धान् सन्निहितान् कीदृशौ अश्विनौ इति। तथा सति भूतम् मे दिवसाय। अपि च भूतम् रात्र्यै। तथा अश्ववते रथवते च अर्वते भ्रातृव्याय शक्तौ भवतम् निरसने इति॥ ५॥

[5]इति सप्तमाष्टके अष्टमाध्याये अष्टादशो वर्गः[5]॥

युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा॥ ६॥

युवम्। कवी इति। स्थः। परि। अश्विना। रथम्। विशः। न। कुत्सः। जरितुः। नशायथः।
युवोः। ह। मक्षा। परि। अश्विना। मधु। आसा। भरत। निःऽकृतम्। न। योषणा॥ ६॥

उद्गीथ० हे अश्विनौ! युवम् युवाम् कवी मेधाविनौ प्रज्ञावन्तौ स्थः भवथः परि सर्वतः, [6]सर्वस्मात् मेधाविनावित्यर्थः[6]। अत एव च कारणात् विशः मनुष्यस्य जरितुः स्तोतुः[8] यज्ञं प्रति गमनाय रथम् स्वरथम् नशायथः नशतिः व्याप्तिकर्मा ( तु. निघ २,१८ )। व्याप्नुथः[9]। अधितिष्ठथो[10] युवामित्यर्थः। किमिव। न कुत्सः न-शब्दोऽत्र पुरस्तादुपचारोऽपि सामर्थ्यात् उपमार्थः। कुत्स इव। कुत्सग्रहणाच्च साहचर्यादिन्द्रोऽपि गृह्यते। यथा इन्द्रः कुत्सश्च स्वरथमधितिष्ठतः, एवम्। उक्तं च मन्त्रान्तरे कुत्सस्य चेन्द्रस्य सरथगमनम्—'यासि कुत्सेन सरथमवस्युः' ( ऋ ४,१६,११ ) इति। किञ्च हे अश्विनौ! युवोः युवयोः अर्थाय उपदेशे वा मक्षा मक्षिका मधुकरी मधु आसा आस्येन मुखेन परि भरत सर्वतो हरति, सर्वौषधिरसभूतमेकत्रोपसंहरतीत्यर्थः। किमिव। निष्कृतम् न योषणा यथा संस्कृतम्[11] आहारं स्वयंहारिका स्त्री काचिद् एकत्र उपसंहरति, एवम्॥ ६॥

वेङ्कट० युवम्[12] कवी [13]परितः भवथः[13] रथम् अश्विनौ!। अथ जरितुः च सकाशं तं रथं प्रापयथः, कुत्सः न [14]यथा कुत्सः इन्द्रस्य[14] रथं मनुष्यान् प्रापयामास। युवयोः स्वभूतं खलु मक्षिका जातिः मधु आस्येन परि अभरत्, यथा निष्कृतम् मधु युवती बिभर्ति आस्येन। 'उत स्या वां मधुमन्मक्षिकाऽरपत्' ( ऋ १,११९,९ ) इत्युक्तम्॥ ६॥

---

१-१. तत्स्वर्गः अर्वते मूको; अर्वते अत्र मूको. २. अगम् वि[२] अ[१]; नास्ति वि[१]. ३. °मी वि[२] अ[१].
४. °वात् वि[२] अ[१]. ५. वा मूको. ६-६. नास्ति मूको. ७-७. सर्वस्मो मेधाविनामित्यर्थः मूको.
८. स्तोतुस्स्तुतयो मूको. ९. व्याप्नुतः मूको. १०. °ष्ठतो मूको. ११. स्तुतम् मूको. १२. युवाम् वि[१].
१३-१३. परित पथः वि[२] अ[१]; परिभवतथा वि[१]. १४-१४. नास्ति वि[१].

युवं ह भुज्युं युवमश्विना वशं युवं शिञ्जारमुशनामुपारथुः ।
युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ ७ ॥

युवम् । ह । भुज्युम् । युवम् । अश्विना । वशम् । युवम् । शिञ्जारम् । उशनाम् । उप । आरथुः ।
युवोः । ररावा । परि । सख्यम् । आसते । युवोः । अहम् । अवसा । सुम्नम् । आ । चके ॥७॥

**उद्गीथ०** हे अश्विनौ! युवम् ह युवामेव भुज्युम् भुज्युनामानं तुग्रपुत्रं समुद्रे विपन्ननावं सखिभिः त्यक्तम् उत्तारयितुम्, युवम् वशम् युवामेव वशं च राजानं हस्तिबलेन शत्रुभिः पराजीयमानं साहाय्यं कर्तुं स्तुत्याऽऽहूतवन्तं[1] प्रति तस्मिन्नेवाहनि, युवम् शिञ्जारम् अत्रिः शिञ्जारः, 'अत्रिम् शिञ्जारम्' (ऋ ८,५,२५) इति मन्त्रान्तरे दर्शनात्। युवामेव शिञ्जारम् अत्रिम् अग्निकूटाद् उत्तारयितुम्, उशनाम् 'वश कान्तौ'। कमनीयां स्तुतिं[2] च श्रोतुम्, उप आरथुः उपगतवन्तौ स्थः। अयं च इतिहासः[3] तत्प्रकारोऽपि[4] पुरस्तात् कुत्सेन (ऋ १,११२) कक्षीवता (ऋ १,११६) च प्रोक्तः[5]। एवम् च युवोः युवयोः सम्बन्धि सख्यम् सखित्वं स्तुत्यत्वस्तोतृत्वेज्यत्वयष्टृत्वलक्षणम् ररावा आसत इत्यनेन सामानाधिकरण्याद् अत्र[6] बहुवचनस्य स्थाने व्यत्ययेन एकवचनम्। अत्यर्थं रातारः स्तोतारश्च परि आसते अनुतिष्ठन्ति कुर्वन्तीत्यर्थः। अत उक्तगुणयोगात् अहम् घोषा युवयोः देयत्वेन सम्बन्धि सुम्नम् दृष्टादृष्टसुखम् अवसा हविरन्नेन प्रार्थनहेतुना आ चके कामये प्रार्थये ॥ ७ ॥

**वेङ्कट०** युवाम् ह[7] भुज्युम्[8] वशम् च रक्षणार्थम् उप-गतवन्तौ शिञ्जारम् उशनसं[9] च। युवोः दाता यजमानः परि उपास्ते अन्नेन[10] सख्यम् युवयोः। अहम् रक्षणेन सुखम् कामये[11] ॥ ७ ॥

युवं ह कृशं युवमश्विना शयुं युवं विधन्तं विधवामुरुष्यथः ।
युवं सनिभ्यः स्तनयन्तमश्विनाप व्रजमूर्णुथः सप्तास्यम् ॥ ८ ॥

युवम् । ह । कृशम् । युवम् । अश्विना । शयुम् । युवम् । विधन्तम् । विधवाम् । उरुष्यथः ।
युवम् । सनिऽभ्यः । स्तनयन्तम् । अश्विना । अप । व्रजम् । ऊर्णुथः । सप्तऽआस्यम् ॥ ८ ॥

**उद्गीथ०** युवम् ह युवामेव कृशम् दुर्बलम् व्याधितं व्याधिमुक्तिकरणेन[12], युवम् युवामेव हे अश्विनौ! शयुम् नाम [13]राजानं निवृत्तप्रसवाया[13] गोः धेनुत्वकरणेन[14], युवामेव विधन्तम् परिचरन्तं सर्वमेव मनुष्यादिकम् विधवाम् च वध्रिमतीं नाम योद्ध्रीं स्त्रियं सङ्ग्रामे शत्रुभिश्छिन्नहस्ताम् अनपत्यां च हिरण्मयहस्तप्रदानेन पुत्रदानेन च उरुष्यथः उरुष्यतीति रक्षार्थः। भूते च लट्। ईप्सितार्थसम्प्रदानेन परिरक्षितवन्तौ स्थ इत्यर्थः। युवम् युवामेव सनिभ्यः तादर्थ्ये चतुर्थ्येषा।

---

१. स्तुत्वाभूतवन्तं मूको. २. स्तोत्रं स्तुतिं मूको ३. °हासश्च मूको. ४. तपः प्रका° वि[2] अ[2]. ५. प्रोक्तम् मूको. ६. अस्य मूको. ७. नास्ति वि[2] अ[2]. ८. युवशम् वि[2] अ[1]; शम् वि[1]. ९. उशसनसं वि[1]; अनुशासनसं अ[2]; उशम वि[2]. १०. °न्नोन मूको. ११. नास्ति वि[1]. १२. व्याधियुक्तौ वि[1]; व्याधिमुक्तकम् वि[2] अ[2]. १३-१३. राजा तान्नि° मूको. १४. धेनुकरणत्वेन मूको.

सम्भक्तॄणामर्थाय स्तनयन्तम् गच्छन्तं हे अश्विनौ! व्रजम् मेघम् अप ऊर्णुथः अपाच्छादितवन्तौ स्थः, वृष्टिप्रदानाय विवृतद्वारं कृतवन्तौ स्थ इत्यर्थः, सप्तास्यम् सप्तमुखं बहुद्वारं चेत्यर्थः ॥ ८ ॥

वेङ्कट० युवाम् खलु कर्शितशरीरम् अपि वा कृशनामानम्, युवम् अश्विना! शयुम् ऋषिम् युवाम् परिचरन्तम्, युवाम् अपतिकां योषां च उरुष्यथः। युवम् धनार्थम् शब्दयन्तम् अश्विनौ! मेघम् अप ऊर्णुथः सर्पणशीलद्वारम् ॥ ८ ॥

जनिष्ट योषा पतयत् कनीनको वि चारुहन् वीरुधो दंसना अनु ।
आस्मै रीयन्ते निवनेव सिन्धवोऽस्मा अह्ने भवति तत् पतित्वनम् ॥ ९ ॥

जनिष्ट । योषा । पतयत् । कनीनकः । वि । च । अरुहन् । वीरुधः । दंसनाः । अनु ।
आ । अस्मै । रीयन्ते । निवनाऽइव । सिन्धवः । अस्मै । अह्ने । भवति । तत् । पतिऽत्वनम् ॥९॥

उद्गीथ० जनिष्ट योषा युष्मत्प्रसादाद् अहं योषा स्त्री जाता स्त्रीगुणोपेता संवृत्ता सुभगा भूतेत्यर्थः, यतः पतयत् पतति सम्भोगार्थं मत्सकाशं गच्छति कनीनकः कन्याकामो मम कन्यायाः कामयिता मत्पतिः[1]। किञ्च युष्मत्प्रसादादेव वि च अरुहन् विरोहन्ति च उद्गच्छन्ति चेत्यर्थः, वीरुधः ओषधयः। कीदृश्यः। दंसनाः 'दसि दंशनदर्शनयोः'। उपयोगेन अपक्षपणीयाः[2] दर्शनीया वा अनु पश्चात्[3]। कस्य। सामर्थ्याद् युष्मज्जनितवृष्टिकर्मणः। अथवा दंसना इति कर्माणि [4]वृष्टिलक्षणानि अनु लक्षीकृत्य। किञ्च अस्मै सिन्धवः[5] आपः आ रीयन्ते आगच्छन्ति[4]। किमिव। निवना इव यथा निवनेन[6] निम्नेन प्रदेशेन समुद्रं प्रति शीघ्रम् आगच्छन्ति नद्युदकानि, एवम्। किञ्च युष्मत्प्रसादादेव अस्मै अह्ने अह्न इति सप्तम्यर्थे चतुर्थी। अस्मिन् अहनि, वर्तमाने काल इत्यर्थः, यन्मया प्रार्थितम् पतित्वनम् पतित्वं पतिकर्म सम्भोगलक्षणम्, तत् भवति यादृश एव मया प्रार्थितः, तादृश एवेदानीं सम्भोगो भवतीत्यर्थः ॥ ९ ॥

वेङ्कट० जायताम् इयं योषा योषा युवतिः। पततु[7] च तस्याः[8] समीपं कन्याकामः पतिः। तस्मै कनीनकाय युवयोः कर्माणि लक्षीकृत्य वि[9] च रोहन्तु वीरुधः। प्रवणेन इव उदकानि अस्मै कनीनकाय ता वीरुधो गच्छन्तु च[10], अमुं च भजन्ताम्[11]। अपि च अस्मै अहन्तव्याय[12] भवतु तत् यौवनम् इति ॥ ९ ॥

जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः ।
वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥ १० ॥

जीवम् । रुदन्ति । वि । मयन्ते । अध्वरे । दीर्घाम् । अनु । प्रऽसितिम् । दीधियुः । नरः ।
वामम् । पितृऽभ्यः । ये । इदम् । सम्ऽएरिरे । मयः । पतिऽभ्यः । जनयः । परिऽस्वजे ॥ १० ॥

---

१. त्मन् पतिः मूको. २. उपेक्ष्मपेक्ष्मपणीया मूको. ३. पश्याम मूको. ४-४. वृष्टिलक्षणानि आपः मूको. ५. नास्ति मूको. ६ वनानिव° मूको. ७. पतनः वि[2] अ[1]. ८. तस्मात् वि[2] अ[1]. ९. पि मूको. १०. व वि[2] अ[1]. ११, °तम् वि[2] अ[1]. १२. आह° मूको.

उद्गीथ० युष्मत्प्रसादादेव केचित् सङ्ग्रामे अन्यत्र जीवम् प्राणान् धारयन्तम् अतिबलमपि शत्रुम् रुदन्ति रोदयन्ति दुःखयन्तीत्यर्थः। अन्ये वि मयन्ते निर्वर्तयन्ति[1] कर्माणि अध्वरे यज्ञे। अन्ये दीर्घाम् अतिमहतीम् प्रसितिम् जगत्स्थित्युत्पत्तिप्रलयानां प्रबन्धनकारणम् आत्माख्यम् अनु दीधियुः अनुपूर्वं शास्त्रोक्तेन क्रमेण ध्यायन्ति चिन्तयन्ति सततम् नरः मनुष्याः। ये तु वामम् वननीयम् इदम् कव्यम् पितृभ्यः समेरिरे सम्प्रेरयन्ति सम्प्रापयन्तीत्यर्थः, तान् मयः सम्भोगसुखं पतिभ्यः प्रयच्छन्त्यः सत्यः जनयः जायाः स्वर्गनारीलक्षणाः परिष्वजे प्रथमपुरुष-बहुवचनस्य स्थाने उत्तमपुरुषैकवचनमेतत्। परिष्वजन्ते। सम्भोगकाले ते पितृलोकसुखं स्त्रीसम्भोगजनितादिकम् अनन्तरम् अनुभवन्तीत्यर्थः ॥ १० ॥

वेङ्कट० [2]जीवम् आशासते† जायानाम्। निवेशयन्ति‡ ता यज्ञे। अपि च तासु[2] दीर्घाम् प्रसितिम् भुजयोः प्रबन्धनम् अनु दधति[3] पतयः। वननीयम् अपत्यम् पितृभ्यः ये इदम् सम्प्रेरयन्ति, तेभ्यः पतिभ्यः जायाः[4] परिष्वङ्गार्थम् सुखं कुर्वन्ति ॥ १० ॥

[5]इति सप्तमाष्टके अष्टमाध्याये एकोनविंशो वर्गः[5] ॥

न तस्य॑ वि॒द्म तदु॒ षु प्र वो॑चत॒ युवा॑ ह॒ यद्यु॑व॒त्याः क्षेति॒ योनि॑षु ।
प्रि॒योस्रि॑यस्य वृ॒ष॒भस्य॑ रे॒तिनो॑ गृ॒हं ग॑मेमाश्विना॒ तदु॑श्मसि ॥ ११ ॥

न । तस्य॑ । वि॒द्म । तत् । ऊँ इति॑ । सु । प्र । वो॒च॒त॒ । युवा॑ । ह॒ । यत् । यु॒व॒त्याः । क्षेति॑ । योनि॑षु ।
प्रि॒यऽउ॑स्रियस्य । वृ॒ष॒भस्य॑ । रे॒तिनः॑ । गृ॒हम् । ग॒मे॒म॒ । अ॒श्वि॒ना॒ । तत् । उ॒श्म॒सि॒ ॥ ११ ॥

उद्गीथ० तस्य द्वितीये पादे वक्ष्यमाणस्य वस्तुनः स्वरूपम् अतिप्रियत्वात् सत्यम् उतासत्यम्[6] इति तत्त्वम् न विद्म न जानीमो वयम्। तत् उ सु प्र वोचत उ सु इति पदपूरणौ। प्रवोचतेति च द्विवचनस्य स्थाने बहुवचनम्। तत् तद्वस्तुतत्त्वं सत्यम् उत मिथ्येति युवामेव प्रब्रूतम्। हे अश्विनौ! अहं तावद् अतिप्रणयात्[7] दुःखप्रत्ययत्वाद् एवमेतद् इति न श्रद्दधे इत्यभिप्रायः। किं तद्वस्तु यस्य स्वरूपं वयं तत्त्वतो न जानीमः। उच्यते— युवा ह यत् युवत्याः क्षेति योनिषु ह इति पदपूरणः। युवा यौवनान्वितः तरुणो मत्पतिः '[8]यदेतद् युवत्याः[8] यौवनान्वितायाः मम स्वभूतेषु गृहेषु क्षेति 'क्षि निवासगत्योः'। मम सम्भोगार्थं निवसति गच्छति वेति। किमनेन सन्दिग्धेन वस्तुना स्फुटं कुर्मो वयमेतत्। कथम्। उच्यते— प्रियोस्रियस्य प्रिया उस्रिया सम्भोगानाम् उत्स्राविणी दात्री यस्याहं तस्य प्रियोस्रियस्य मम पत्युः वृषभस्य मयि रेतसो वर्षितुः सेक्तुः रेतिनः। इनिरत्र भूमार्थे द्रष्टव्यः। बहुरेतस इत्यर्थः। गृहम् गृहमेव गमेम गच्छामो वयं भोगार्थम्। हे अश्विनौ! तत् सहगमनम् उश्मसि कामयामहे वयम्। येन सम्भोगप्रयोजनम् अवश्यं सिध्यति। अथवा प्रियोस्रियस्येति लुप्तोपममेतत्

---

१. निर्मथन्ते मूको. २-२. जीवन्तं प्रति भर्तारं रुदन्ति जायाऽपि प्रयच्छन्ति च यज्ञे दयानि पत्नय-स्तासाम् वि[२]. † °तं वि[२] अ[१]. ‡ °यति वि[१] अ[१]. ३. धारयन्ति च वि[१]. ४. जायाम् वि[२] अ[१]. ५-५. नास्ति मूको. ६. सत्यमृतमुन्नम् मूको. ७. °प्रमाणात् मूको. ८-८. तदेवत्याव° मूको.

पदम्। प्रियोस्त्रियस्येव प्रिया इष्टा [1]उस्त्रिया गौरुत्पतिता यस्य स प्रियोस्त्रियो वृषः[1], तस्य वृषभस्य रेतिनः प्रभूतरेतसः समीपं यथा गौरुत्पतिता सम्भोगार्थं गच्छति, एवं पतिगृहं स्वयमेव गच्छामो वयम्। तदेव स्वयं पतिगृहगमनं कामयामहे वयम् अवश्यम् सम्भोगकारणत्वादित्यभिप्रायः ॥ ११ ॥

वेङ्कट० न तत् सुखं वयं जानीमः। तत् यूयं सुष्ठु प्र वोचत। युवा ह यत् युवत्याः[2] प्रतिवसति[3] गृहेषु। प्रिययुवतेः वृषभस्य रेतस्विनः गृहम् गच्छेम हे अश्विनौ!। तत् वयं कामयामहे गृहम् इति ॥ ११ ॥

आ वा॑मगन्त्सुम॒तिर्वा॑जिनीवसू॒ न्य॑श्विना हृ॒त्सु कामा॑ अयंसत।
अभू॑तं गो॒पा मि॑थु॒ना शु॑भस्पती प्रि॒या अ॑र्य॒म्णो दुर्याँ॑ अशीमहि ॥ १२ ॥

आ। वा॒म्। अ॒ग॒न्। सु॒ऽम॒तिः। वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू। नि। अ॒श्वि॒ना॒। हृ॒त्ऽसु। कामाः॑। अ॒यं॒स॒त॒। अभू॑तम्। गो॒पा। मि॒थु॒ना। शु॒भः॒। प॒ती॒ इति॑। प्रि॒याः। अ॒र्य॒म्णः। दु॒र्यान्। अ॒शी॒म॒हि॒ ॥

उद्गीथ० आ वाम् अगन् वाम् युवाम् अश्विनौ! आगच्छम् आगता शरणमुपगता अहं घोषा सुमतिः सुस्तुतिः सती, शोभनया स्तुत्या स्तुवती सतीत्यर्थः, हे वाजिनीवसू! वाजम् अन्नं हविराख्यं तद्वती स्तुतिः वाजिनी, सा वसु धनं ययोः तौ वाजिनीवसू हविःस्तुतिधनावित्यर्थः, हे अश्विनौ!। कस्मात् कारणाद् अहं युवां शरणम् उपगतवती। यस्माद् मम हृत्सु हृदयेषु कामाः पतिसम्भोगेच्छाः [4]नि अयंसत निबद्धाः[4], अवस्थिताः इत्यर्थः। एतद् ज्ञात्वा अभूतम् भवतम् गोपा गोपितारौ मम हृदयदहनकामाग्निशमनं प्रति। सम्भोगकरणेन मां रक्षतमित्यर्थः, मिथुना मिथुनौ परस्परेण मिश्रितौ सहितावित्यर्थः, हे शुभः पती! वृष्ट्युदकस्य शोभनस्य वा स्वामिनौ!। किञ्च युष्मत्प्रसादात् प्रियाः पत्युरिष्टाः सत्यो वयम् अर्यम्णः अर्यमन्-शब्दः[5] श्वशुरवचनः यमं वरुणमिति यं वेद[6]। यथा अर्यम्णः श्वशुरस्य कामशत्रोः नियन्तुः वा मम पत्युः स्वभूतान् दुर्यान् अशीमहि शीघ्रं प्राप्नुयामेत्याशास्महे ॥ १२ ॥

वेङ्कट० आ गच्छतु वाम् सुमतिः हे अन्नवसू!। नि यम्यन्ताम् च अस्मदीयेषु[7] हृदयेषु कामाः अश्विनौ!। भवतम् गोपायितारौ मिथुनौ उदकपती!। प्रियाः सत्यो वयं[8] प्रदातुः पत्युः गृहान्[9] अशीमहि ॥ १२ ॥

ता म॑न्द॒साना॒ मनु॑षो दुरो॒ण आ ध॒त्तं र॒यिं स॒हवी॑रं वच॒स्यवे॑।
कृ॒तं ती॒र्थं सु॑प्रपा॒णं शु॑भस्पती स्था॒णुं प॑थे॒ष्ठामप॑ दुर्म॒तिं ह॑तम् ॥ १३ ॥

ता। म॒न्द॒साना॑। मनु॑षः। दु॒रो॒णे। आ। ध॒त्त॒म्। र॒यिम्। स॒हऽवी॑रम्। व॒च॒स्यवे॑। कृ॒तम्। ती॒र्थम्। सु॒ऽप्र॒पा॒नम्। शु॒भः॒। प॒ती॒ इति॑। स्था॒णुम्। प॒थे॒ऽस्थाम्। अप॑। दुः॒ऽम॒तिम्। ह॒त॒म् ॥

---

१-१. उस्त्रियायोग उत्पत्तिका वृषोपयागस्य मूको. २. °त्या वि[2] अ[1]; °त्याम् वि[1]. ३. प्रक्षिणोति वि[1]. ४-४. नि अयं सतत निबन्धा मूको. ५. अर्यमन् मूको. ६. वेदिं मूको. ७. °षु यज्ञेषु अ[1]. ८ नास्ति वि[1]. ९-९. प्रदातु प्रत्युग्रहान् मूको.

**उद्गीथ०** यौ युवां मया सौभाग्यं प्रार्थितौ, तौ युवाम् मन्दसाना वन्द्यमानौ मया स्तूयमानौ मनुषः मनुष्यस्य मत्पतेः स्वभूते दुरोणे गृहे आ[1] धत्तम् स्थापयतम् रयिम् सहवीरम् धनसदृशीं सपुत्रां माम्, घोषामित्यर्थः, आधाय[2] वचस्यवे षष्ठ्यर्थे चतुर्थीयम्, वचस्योः वच इच्छतः[3] युष्मद्वचनकारिणो मत्पतेः इत्यर्थः, कृतम् कुरुतम्, माम् उपभोग्यामिति शेषः। किमिव। तीर्थम् इव सुप्रपाणम् लुप्तोपममेतत्। सुखेन प्रपीयते उपभुज्यते अस्मिन् उदकमिति सुप्रपाणम् उपभोग्यम्, एवं हे शुभः पती! युष्मद्वचनकारिणो मत्पतेः उपभोग्यां मां कुरुतमिति सम्बन्धः कार्यः। किञ्च स्थाणुम् इव पथेष्ठाम् लुप्तोपममेतदपि। यथा स्थाणुं वृक्षं सामर्थ्यात् शुष्कं पथेष्ठां पथि स्थितम् अपहन्ति अपहिनस्ति अपगमयति वा कश्चित्, एवम् दुर्मतिम् सततम् असम्भोगेच्छालक्षणां[4] कुत्सितां मत्पत्युः बुद्धिम् अप हतम् अपगमयतम्, मम सम्भोक्तारं कुरुतमित्यर्थः॥ १३॥

**वेङ्कट०** तौ मोदमानौ[5] मनुष्यगृहे[6] आ धत्तम् रयिम् वीरसहितम् स्तुतिमिच्छन्त्यै मह्यम्। कुरुतम् च गच्छन्त्याः तीर्थम् पानाय सुप्रपाणम् शुभः पती!। स्थाणुम् च मार्गस्थम् अप हतम् दुर्बुद्धिम् च परिपन्थिनम्[7]॥ १३॥

क्व॑ स्विद॒द्य क॑त॒मास्व॒श्विना॑ वि॒क्षु द॒स्रा मा॑दयेते शु॒भस्पती॑।
क ईं॒ नि ये॑मे कत॒मस्य॑ जग्मतु॒र्विप्र॑स्य वा॒ यज॑मानस्य वा गृ॒हम्॥ १४॥

क्व॑। स्वि॒त्। अ॒द्य। क॒त॒मासु॑। अ॒श्विना॑। वि॒क्षु। द॒स्रा। मा॒द॒ये॒ते॒ इति॑। शु॒भः। प॒ती इति॑।
कः। ई॒म्। नि। ये॒मे॒। क॒त॒मस्य॑। ज॒ग्म॒तुः॒। विप्र॑स्य। वा॒। यज॑मानस्य। वा॒। गृ॒हम्॥ १४॥

**उद्गीथ०** स्तुत्वा आहूतयोः अश्विनोः विलम्बमानयोः घोषा पृच्छति—क्व स्वित् वा स्थाने अश्विनौ अद्य, अवस्थिताविति शेषः, कतमासु वा विक्षु मनुष्यजातिषु ब्राह्मणादित्रिवर्णलक्षणासु अवस्थितावद्य दस्रा दस्रौ शत्रूणाम् उपक्षपयितारौ दस्रनामानौ वा मादयेते हविर्भिः आत्मानं तर्पयेते शुभः पती शोभनस्य उदकस्य वा स्वामिनौ। कः ईम् नि येमे को नियच्छति एतावश्विनौ विधारयति। कतमस्य विप्रस्य वा विप्रो मेधावी। सामर्थ्याद् अत्र स्तोतोच्यते। स्तोतुः वा यजमानस्य वा जग्मतुः गतवन्तौ॥ १४॥

**वेङ्कट०** कस्मिन् जनपदे अद्य कतमासु च अश्विनौ प्रजासु दर्शनीयौ मादयेते स्वामिनौ उदकस्य। कः एतौ नि यच्छति[8]। कतमस्य[9] जग्मतुः[10] स्तोतुः[11] वा यजमानस्य वा गृहम्॥ १४॥

[12]इति सप्तमाष्टके अष्टमाध्याये विंशो वर्गः[12]॥

## [ ४१ ]

[12]सुहस्त्यो घौषेय ऋषिः। अश्विनौ देवता। जगती छन्दः[12]।

स॒मा॒नमु॒ त्यं पु॑रुहू॒तमु॒क्थ्यं१॒॑ रथं॑ त्रिच॒क्रं सव॑ना॒ गनि॑ग्मतम्।
परि॑ज्मानं विद॒थ्यं॑ सुवृ॒क्तिभि॑र्व॒यं व्यु॑ष्टा उ॒षसो॑ हवामहे॥ १॥

---

१. नास्ति मूको. २. अधाय मूको. ३. च्छतः मूको. ४. सततं संभा° वि[२] अ. ५. °ना मूको. ६. °हम् वि[२] अ[१]. ७. परिवर्धिनम् वि[२] अ[१]. ८. °तु वि[२] अ[१]. ९. °स्य वा वि[१,२]. १०. जगृहतुः वि[२] अ[१]; जगृहुः वि[१]. ११. नास्ति वि[१]. १२-१२. नास्ति मूको.

समानम् । ऊँ इति । त्यम् । पुरुऽहूतम् । उक्थ्यम् । रथम् । त्रिऽचक्रम् । सवना । गनिग्मतम् ।
परिऽज्मानम् । विदथ्यम् । सुवृक्तिऽभिः । वयम् । विऽउष्टौ । उषसः । हवामहे ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तं 'समानमु त्यम्' इति तृचं घौषेयः सुहस्त्यो ददर्श । हे अश्विनौ! युवयोः साधारणो[1] रथः । [2]त्यम् तम्[2] समानम् साधारणम् । उ इति पदपूरणः । पुरुहूतम् बहुभिः यज्वभिराहूतम् उक्थ्यम् प्रशस्यम् त्रिचक्रम् सवना 'सवनम्' ( निघ ३,१७ ) इति यज्ञनाम । सर्वयजमानानां यज्ञं प्रति गनिग्मतम् अत्यन्तम् गतवन्तम् परिज्मानम् सर्वतोगामिनम् विदथ्यम् विदथे यज्ञे भवम् रथम् सुवृक्तिभिः सुष्ठु दोषैः वर्जिताभिः स्तुतिभिः, स्तुत्वेति शेषः, वयम् हवामहे आह्वयामोऽस्यास्मद्यज्ञं प्रति । कस्मिन् काले । व्युष्टौ उषसः तमसां व्युच्छनवेलायाम्, उदयकाल इत्यर्थः ॥ १ ॥

**वेङ्कट०** सुहस्त्यो घौषेयः[3] । समानम् एव तम् बहुभिराहूतम् प्रशस्यम् रथम् त्रिचक्रम् सवनानि प्रति गच्छन्तं परितो गन्तारम् यज्ञहितम् स्तुतिभिः वयम् उषसः व्युष्टौ हवामहे ॥ १ ॥

प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथम् ।
विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमन्तमश्विना ॥ २ ॥

प्रातःऽयुजम् । नासत्या । अधि । तिष्ठथः । प्रातःऽयावानम् । मधुऽवाहनम् । रथम् ।
विशः । येन । गच्छथः । यज्वरीः । नरा । कीरेः । चित् । यज्ञम् । होतृऽमन्तम् । अश्विना ॥

**उद्गीथ०** एतद् ज्ञात्वा प्रातर्युजम् प्रातः उषःकाले अश्वैरात्मनो योक्तारं[4] हे नासत्यौ! अधि तिष्ठथः लोडर्थेऽत्र लट्, अधितिष्ठतम् आरोहतम् रथम् प्रातर्यावाणम् प्रातरेव यातारं यज्ञान् प्रति गन्तारं मधुवाहनम् मधुनो देवपानस्य अमृताख्यस्य वोढारम् । कुत एतत् । 'यो ह वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विना' ( ऋ ८,५,१९ ) इति मन्त्रान्तरे दर्शनात् । आरुह्य च विशः मनुष्यजातीः यज्वरीः यजनशीलाः प्रति येन रथेन गच्छथः युवां हे नरा! शूरौ! नराकारौ! वा, तेनैव रथेन कीरेः चित् स्तोतुः मम सुहस्त्यस्यापि[5] यज्ञम् होतृमन्तम् प्रशंसायां मतुबयम् । [6]प्रशस्तहोतृत्विक्सम्पन्नमित्यर्थः[6] । अथवा होमकार्यध्वर्युमन्तम्[7], प्रासयागकालमित्यर्थः । अथवा होतृशब्देन एतत्कार्यो होम उच्यते । होतृमन्तं होमवन्तं प्रासयागकालमित्येतदेवोक्तं भवति । गच्छतम् हे अश्विनौ! ॥ २ ॥

**वेङ्कट०** प्रातर्युज्यमानम् नासत्यौ! अधि तिष्ठथः प्रातर्गन्तारम् मधुनो वाहनम् रथम् । प्रजाः येन गच्छथः[8] यजनशीलाः नेतारौ! स्तोतुः च यज्ञम् ऋत्विग्भिः युक्तम् अश्विनौ! ॥ २ ॥

---

१. °णयोः वि[२]. २-२. अत्यन्तं मूको. ३. घोषेय वि[२]; घोषेयः वि' अ[१]. ४. यो वक्तारं मूको. ५. मनुष्यस्यापि वि[१]. ६-६. °त्रावृत्वि° मूको. ७. °कार्यमध्वमन्तं मूको. ८. °च्छतः मूको.

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसम् ।
विप्रस्य वा यत् सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥ ३ ॥

अध्वर्युम् । वा । मधुऽपाणिम् । सुऽहस्त्यम् । अग्निधम् । वा । धृतऽदक्षम् । दमूनसम् ।
विप्रस्य । वा । यत् । सवनानि । गच्छथः । अतः । आ । यातम् । मधुऽपेयम् । अश्विना ॥३॥

**उद्गीथ०** अध्वर्युम् वा अन्ययजमानाध्वर्युं वा मधुपाणिम् दानायोद्यतसोमहस्तम् । सुहस्त्यम् इत्येतत् आयातम् इत्यनेन सह सम्बध्यते । अग्निधम् वा ऋत्विग्विशेषम् । कीदृशम् । धृतदक्षम् आहितस्वकर्मोत्साहम्[1] दमूनसम् दममनसं वा दान्तमनसं वा विप्रस्य वा मेधाविनो वा सर्वस्य यजमानस्य सवनानि यज्ञान् प्रति यत् यदि गच्छथः भूते लट् । गतवन्तौ स्थो युवाम्, अतः सर्वतः सुहस्त्यम् मां प्रति आ यातम् आगच्छतं युवाम् । किमर्थम् । मधुपेयम् मध्विति सोम उच्यते, सोमं पातुमित्यर्थः । अथवा [2]सोमं पानार्हम्[2], पातुमिति शेषः, हे अश्विनौ! ॥ ३ ॥

**वेङ्कट०** अध्वर्युम् वा सोमपाणिम्[3] माम्[4] सुहस्त्यम् अग्निधम् वा धृतबलम् दममनसम् आ यातम् । तदेवाऽऽह—यद्यपि अन्यस्य विप्रस्य सवनानि गच्छथः, ततोऽस्माकं पेयमधु[5] आगच्छतम् इति ॥ ३ ॥

[6]इति सप्तमाष्टके अष्टमाध्याये एकविंशो वर्गः[6] ॥

## [ ४२ ]

[6]कृष्ण आङ्गिरस ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[6] ।

अस्तेव सु प्रतरं लायमस्यन् भूषन्निव प्र भरा स्तोममस्मै ।
वाचा विप्रास्तरत वाचमर्यो नि रामय जरितः सोम इन्द्रम् ॥ १ ॥

अस्ताऽइव । सु । प्रऽतरम् । लायम् । अस्यन् । भूषन्ऽइव । प्र । भर । स्तोमम् । अस्मै ।
वाचा । विप्राः । तरत । वाचम् । अर्यः । नि । रमय । जरितरिति । सोमे । इन्द्रम् ॥ १ ॥

**उद्गीथ०** उत्तराणि त्रीणि सूक्तानि 'अस्तेव सु प्रतरम्' 'अच्छा म इन्द्रम्' 'आ यात्विन्द्रः' इत्यादीनि एकादशर्चानि ऐन्द्राणि कृष्ण आङ्गिरसो ददर्श । अस्तेव अस्ता इव यथा अस्ता क्षेप्ता अस्यन्[7] धानुष्कः सु प्रतरम् सुष्ठु प्रवृद्धतरम् लायम्[8] हृदयानुप्रवेशिनं शरं च भूषन् इव स्तोमम् अलङ्कारस्थानीयं[9] च स्तोमम् अस्मै अस्येन्द्रस्य अर्थाय प्र भर[10] प्रहर प्रापय त्वं[11] हे ममान्तरात्मन्! । यूयमपि हे विप्राः! मेधाविनः! ऋत्विजः! वाचा स्तोत्रलक्षणया सह वाचम् शस्त्रलक्षणाम्

---

१. °स्वर्गकर्मो° वि[1]; °स्वन् कर्मो° वि[2] अ. २-२. सोमपा° मूको. ३. सापणम् वि[2] अ; सोमयानिः वि[1]. ४. °म् वा वि[1]. ५. वेव° मूको. ६-६. नास्ति मूको. ७. अस्य मूको. ८. नास्ति मूको. ९. चालाकार° मूको. १०. चर मूको. ११. त्वां मूको.

तरत[1] तरतिरत्र सामर्थ्याद् उच्चारणार्थः । उच्चारयत अस्येन्द्रस्यार्थाय । कस्मादेवं ब्रवीमि । यस्मात् सर्वस्तुतीनाम् इन्द्रः अर्यः स्वामी । त्वमपि हे जरितः! स्तोतः! अध्वर्यो! मम अन्तरात्मन्! वा नि रमय संस्कृतप्रभूतसोमप्रदाने[2] नियमेन रतिं कारय इन्द्रम् । क्व । सोमे सोमपाने इत्यर्थः ॥ १ ॥

**वेङ्कट०** कृष्णः । इषुं धनुषा संश्लिष्य शीघ्रम् सुष्ठु अस्यन् योद्धा इव अलङ्कुर्वन् इव अलङ्कारम् प्र भर स्तोमम् इन्द्राय । वाचा आत्मीयया विप्रा! तरत वाचम् शत्रोः, अभि रमय[3] स्तोत.! यज्ञे इन्द्रम् ॥ १ ॥

**दोहे॑न॒ गामुप॑ शिक्षा॒ सखा॑यं॒ प्र बो॑धय जरितर्जा॒रमिन्द्र॑म् ।**
**कोशं॒ न पू॒र्णं वसु॑ना॒ न्यृ॑ष्ट॒मा च्या॑वय मघ॒देया॑य॒ शूर॑म् ॥ २ ॥**

दोहे॑न । गाम् । उप॑ । शि॒क्ष॒ । सखा॑यम् । प्र । बो॒ध॒य॒ । ज॒रि॒त॒रिति॑ । जा॒रम् । इन्द्र॑म् ।
कोश॑म् । न । पू॒र्णम् । वसु॑ना । निऽऋ॑ष्टम् । आ । च्य॒व॒य॒ । म॒घ॒ऽदेया॑य । शूर॑म् ॥ २ ॥

**उद्गीथ०** द्वितीये पादे व्याख्यारम्भः क्रियते सुखार्थप्रतिपत्त्यर्थम् । हे जरितः! स्तोतः! मम कर्मात्मन्! वा[4] प्र बोधय अवगमय स्तुतीः, स्तुहीत्यर्थः । कम् । इन्द्रम् । कीदृशम् । जारम् अहल्याया [4]जारं वा[4], जरयितारं वा उपभोगानाम् उपभोक्तारमित्यर्थः । स्तुत्वा च दोहेन प्रपूरणेन च पयःप्रचारणेन परीक्ष्य बहुक्षीराम् गाम् उप शिक्ष शिक्षतिर्दानार्थः । अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः । उपशिक्षय प्रदापय मह्यम् अन्तरात्मरूपाय स्तोत्रे सखायम् सखिभूतम् इन्द्रम् । किञ्च कोशम् न यथा कोशं धनाधारताम्रकलशमञ्जूषाषष्ठ्यवेरादिकम् पूर्णम् वसुना सुवर्णरत्नादिधनेन न्यृष्टम् 'ऋ गतौ' । नीचैर्गतम् अधोमुखम् आच्यावयति प्रच्यावयति[5] विरेचयति कश्चित्, एवम् शूरम् दानशूरम् इन्द्रम् आ च्यावय विरेचय भाण्डागारम् । किमर्थम् । मघदेयाय मह्यं धनदानाय, प्रभूतं मह्यं दापयेत्यर्थः ॥ २ ॥

**वेङ्कट०** दोहनार्थम्[6] उप शिक्ष वशं नय सखायम् गाम् इति[7] इन्द्रम् आह । स्तुतिभिः प्र बोधय स्तोतः! इन्द्रम् भूतानाम् जरयितारम्[8] । पात्रम् इव उदकेन पूर्णम् वीचिभिः धनेन न्यृष्टम्[9] अभिमुखं कुरु धनदानार्थम् शूरम् इन्द्रम् ॥ २ ॥

**किम॒ङ्ग त्वा॑ मघवन् भो॒जमा॑हुः शिशी॒हि मा॑ शिश॒यं त्वा॑ शृणोमि ।**
**अप्न॑स्वती॒ मम॒ धीर॑स्तु शक्र वसु॒विदं॒ भग॑मिन्द्रा॒ भ॑रा नः ॥ ३ ॥**

किम् । अ॒ङ्ग । त्वा॒ । म॒घ॒ऽव॒न् । भो॒जम॑ । आ॒हुः॒ । शि॒शी॒हि । मा॒ । शि॒श॒यम् । त्वा॒ । शृ॒णो॒मि॒ ।
अप्न॑स्वती । मम॑ । धीः । अ॒स्तु॒ । श॒क्र॒ । व॒सु॒ऽविद॑म् । भग॑म् । इ॒न्द्र॒ । आ । भ॒र॒ । नः॒ ॥ ३ ॥

**उद्गीथ०** अङ्गेति सामान्याऽऽह्वानमुच्यते । अङ्ग! मघवन्! हे धनवन्! इन्द्र! [10]किम् त्वा[10] भोजम् आहुः

---

१. नास्ति मूको. २. संस्तुप्रभू° वि[2]. ३. °मतरत वि[1] अ[1]. ४-४. जाराया मूको. ५. प्राच्याव° मूको. ६. दोहार्थम् वि[1]. ७. इति मूको. ८. जनयि° वि[1] अ[1]. ९. घुष्ट° वि[2]; न्युष्ट° वि[1]; घष्ट° अ[1]. १०-१०. किञ्च मूको.

किमर्थं त्वां दातारं वदन्ति श्रुतिस्मृतयः विद्वांसो वा, यदि न ददासीत्यध्याहार्यम् । तस्मात् शिशीहि धनदानेन संस्कुरु माम्, धनं मे देहीत्यर्थः। किञ्च शिशयम् त्वा शृणोमि नित्यमेव च संस्कारकमहं त्वां शृणोमि आबालवृद्धजनेभ्यः[१] । अतः त्वत्प्रसादान्नित्यमेव अप्नस्वती[२] संस्कारवतीत्यर्थः, यागकर्मवती वा देवयागवतीत्यर्थः, मम धीः प्रज्ञा अस्तु भवतु । अथवा अप्नस्वती[३] रूपवती सगुणेत्यर्थः । मम धीः यागकर्म अस्तु हे शक्र! । किञ्च वसुविदम् विदिर्लाभे । धनस्य लब्धारं लम्भयितारं वा प्रसवितारं विसर्पिणमित्यर्थः[४], भगम् धनं गवादिकं हे इन्द्र! आ भर आहर नः अस्मभ्यम् दातुमिति शेषः, देहीत्यर्थः ॥ ३ ॥

वेङ्कट० सर्वे कथयन्ति त्वां स्तोतॄणां भोजकम् इन्द्र! मघवन्! । किम् इति प्रश्नार्थीयम् आहुरेवेत्यस्मिन्नर्थे पर्यवस्यति । प्रागपि दृष्टम्—'किमङ्ग वां प्रत्यवर्तिङ्गमिष्ठा' ( ऋ १,११८,३ ) इति । तथा सति तीक्ष्णीकुरु माम्[५] । शिशयम् हि त्वा शृणोमि स्तोतॄणां संस्कर्तारम् । कर्मवती मम बुद्धिः अस्तु शक्र! । शत्रुधनस्य लम्भकम् भाग्यम् इन्द्र! आ हर[६] अस्माकम्[७] ॥ ३ ॥

त्वां जना॑ ममसत्ये॒ष्विन्द्र संतस्थाना वि ह्व॑यन्ते स॒मीके॑ ।
अत्रा॒ युजं॑ कृणुते॒ यो ह॒विष्मा॒न् नासु॑न्वता स॒ख्यं व॑ष्टि॒ शूर॑: ॥ ४ ॥

त्वाम् । जना॑: । म॒म॒ऽस॒त्येषु॑ । इ॒न्द्र॒ । स॒म॒ऽत॒स्था॒नाः॑ । वि । ह्व॒य॒न्ते॒ । स॒म्ऽई॒के॑ ।
अत्र॑ । यु॒ज॑म् । कृ॒णु॒ते॒ । यः । ह॒विष्मा॑न् । न । असु॑न्वता । स॒ख्यम् । व॒ष्टि॒ । शूर॑: ॥ ४ ॥

उद्गीथ० हे इन्द्र! त्वाम् योद्धृजनाः ममसत्येषु सङ्ग्रामेषु सन्तस्थानाः प्रत्यवतिष्ठमानाः वि ह्वयन्ते विविधम् आह्वयन्ति सहायार्थम् समीके सङ्ग्रामे । सः[८] अत्र अस्मिन् आह्वातृजनमध्ये सङ्ग्रामे वा युजम् सहायम् इन्द्रम् कृणुते करोति, यः हविष्मान् यजमान इत्यर्थः । कस्मात् । यस्मात् असुन्वता तदर्थं सोमाभिषवम् अकुर्वता सह सख्यम् सखित्वम्, कर्तुमिति शेषः न वष्टि न कामयते नेच्छति भवान् शूरः इन्द्रः ॥ ४ ॥

वेङ्कट० त्वाम् जनाः ममसत्येषु युद्धेषु इन्द्र! वि ह्वयन्ते । तदेवाऽऽह[९] —सह तिष्ठन्तः विह्वयन्ते युद्ध इति । अस्मिन्नाह्वाने सति इन्द्रः तं सखायम् कुरुते, यः हविष्मान् भवति । न असुन्वता सख्यम् कामयते शूरः ॥ ४ ॥

धनं॒ न स्प॒न्द्रं ब॑हु॒लं यो अ॑स्मै ती॒व्रान्त्सोमाँ॑ आसु॒नोति॒ प्रय॑स्वान् ।
तस्मै॒ शत्रू॑न्त्सु॒तुका॑न् प्रा॒तरह्नो॒ नि स्वष्ट्रा॑न् यु॒वति॒ हन्ति॑ वृ॒त्रम् ॥ ५ ॥

धन॑म् । न । स्प॒न्द्रम् । ब॒हु॒लम् । यः । अ॒स्मै॒ । ती॒व्रान् । सोमा॑न् । आ॒ऽसु॒नोति॑ । प्रय॑स्वान् ।
तस्मै॑ । शत्रू॑न् । सु॒ऽतुका॑न् । प्रा॒तः । अह्नः॑ । नि । सु॒ऽअष्ट्रा॑न् । यु॒वति॑ । हन्ति॑ । वृ॒त्रम् ॥५॥

---

१. आववृचेनेभ्यः मूको. २. अवती मूको. ३ अस्वप्रस्वती मूको. ४. विसर्प° मूको. ५. रमाम् वि[२] अ[१]. ६. भर वि[१]. ७. °कम् इति अ[१]. ८. नास्ति मूको. ९ सदे° मूको.

उद्गीथ० धनम् न धनमिव यथा धनं सुवर्णरजतादिकम् स्पन्द्रम् स्पृहणीयं प्रार्थनीयम् बहुलम् प्रभूतम् यः कश्चिदीश्वरः कस्मैचित् महाब्राह्मणादिकाय अर्हते[1] दातुं संस्करोति, एवं स्पृहणीयान् प्रभूतांश्च यो यजमानः[2] अस्मै इन्द्राय दातुम् तीव्रान् तीव्ररसान्[3] सोमान् आसुनोति मर्यादयाऽभिषुणोति संस्करोति प्रयस्वान् हविरन्नवान् सुत्वा[4] सवनीयपुरोडाशादिहविरन्नवानित्यर्थः[5], तस्मै तदर्थं तस्य वा शत्रून्। कीदृशान्। सुतुकान् शोभनपुत्रसहितान् स्वष्ट्रान् अष्ट्रा प्रतोद उच्यते। तेन चात्र आयुधाग्रं लक्ष्यते। स्वष्ट्रान् सुप्रतोदान् शोभनायुधाग्रान् अपि सत इत्यर्थः। नि युवति निमिश्रयति पृथक्करोतीत्यर्थः। पृथक्कृत्य च हन्ति हिनस्ति वृत्रम् शत्रुजातम्। कस्मिन् काले एतद्यथोक्तं करोति। प्रातः अह्नः[6] प्रत्युषसि, दिवसस्य सम्बन्धिनि पूर्वाह्ण एव, [7]नाहव इत्यर्थः[7] ॥ ५ ॥

वेङ्कट० धनम् इव स्पन्दनशीलं गवाश्वात्मकं[8] दरिद्राय बहुलम् यः अस्मै इन्द्राय तीव्ररसान्[9] सोमान् आसुनोति हविष्मान्, तस्मै प्रातः एव अह्नः शत्रून् सुप्रेरणान् नि युवति शोभनाष्ट्रायुधान्, हन्ति च उपद्रवं तदीयम् इति ॥ ५ ॥

[10]इति सप्तमाष्टके अष्टमाध्याये द्वाविंशो वर्गः[10] ॥

यस्मिन् वयं दधिमा शंसमिन्द्रे यः शिश्राय मघवा काममस्मे ।
आराच्चित् सन् भयतामस्य शत्रुर्न्यस्मै द्युम्ना जन्या नमन्ताम् ॥ ६ ॥

यस्मिन् । वयम् । दधिम । शंसम् । इन्द्रे । यः । शिश्राय । मघऽवा । कामम् । अस्मे इति ।
आरात् । चित् । सन् । भयताम् । अस्य । शत्रुः । नि । अस्मै । द्युम्ना । जन्या । नमन्ताम् ॥

उद्गीथ० यस्मिन् इन्द्रे वयम् दधिम धारयामः अवस्थापयामः शंसम् स्तुतिं धनप्रार्थनाभिप्रायं वा, यः च मघवा इन्द्रः शिश्राय 'श्रिञ् सेवायाम्'। सेवते परया प्रीत्या गुणैरित्यर्थः, कामम् कमनीयं धनदानेन धनप्रार्थनाभिप्रायं वा अस्मे अस्माकं सम्बन्धिनम्, तस्य अस्य इन्द्रस्य प्रसादात् आरात् चित् सन् दूरेऽपि सन् भयताम् बिभेतु शत्रुः अस्मच्छत्रुः अस्मत्तः। किञ्च तस्मै अस्मै इन्द्राय द्युम्ना द्युम्नानि हविरन्नानि जन्या जन्यानि अस्मज्जने भवानि अस्मदीयानीत्यर्थः, नि नमन्ताम् भोज्यत्वेन प्रह्वीभवन्तु प्रियभोज्यानि भवन्त्वित्यर्थः ॥ ६ ॥

वेङ्कट० यस्मिन् वयम् निदधीमहि स्तुतिम् इन्द्रे, यः च श्रयति धनवान् अभिलषितम् अस्मासु, अस्य शत्रुः दूर एव तिष्ठन् बिभेतु, नि नमन्ताम् अस्मै इन्द्राय शत्रुजनपदभवानि अन्नानि ॥ ६ ॥

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम् ॥ ७ ॥

---

१. अहते मूको. २. यच्छमानः मूको. ३. तीव्रादसरान् मूको. ४ कृत्वा मूको. ५. हविरन्नसहशानित्यर्थः मूको. ६. अदः मूको. ७-७. निराहावेत्यर्थः मूको. ८. गवाश्वादियुक्तम् अ[१]. ९. °सात मूको. १०-१०. नास्ति मूको.

आरात् । शत्रुम् । अप । बाधस्व । दूरम् । उग्रः । यः । शम्बः । पुरुऽहूत । तेन ।
अस्मे इति । धेहि । यवऽमत् । गोऽमत् । इन्द्र । कृधि । धियम् । जरित्रे । वाजऽरत्नाम् ॥७॥

उद्गीथ० आरात् अस्मत्समीपात् शत्रुम् मदीयम् अप बाधस्व अपगमय दूरम् । केन[1] । उग्रः क्रूरः असह्यो वा यः तव स्वभूतः शम्बः वज्रः कुन्तो वा तेन हे पुरुहूत ! । किंच अस्मे अस्मभ्यम् धेहि देहि यवमत् यवसहितम्[2] गोमत् गोसहितं च । किम् । सामर्थ्यात् अन्नम्[3] । तच्च दधत् हे इन्द्र! कृधि कुरु धियम् वाजरत्नाम्[4] इदं यज्ञकर्म अन्नेन[5] रमणीयम् जरित्रे स्तोतुः ममार्थाय ॥ ७ ॥

वेङ्कट० समीपात् शत्रुम् अप बाधस्व दूरम् । अत्र यास्कः ( ५,२४ ) —'शम्ब इति वज्रनाम । शमयतेर्वा शातयतेर्वा' इति । उद्गूर्णः यः वज्रः पुरुहूत! तेन । अस्मासु नि-धेहि गोमत् यवमत् च धनम् इन्द्र! । कुरु कर्म स्तोत्रे रमणीयान्नम् ॥ ७ ॥

प्र यमन्तर्वृषसवासो अग्मन् तीव्राः सोमा बहुलान्तास इन्द्रम् ।
नाह दामानं मघवा नि यंसन्नि सुन्वते वहति भूरि वामम् ॥ ८ ॥

प्र । यम् । अन्तः । वृषऽसवासः । अग्मन् । तीव्राः । सोमाः । बहुलऽअन्तासः । इन्द्रम् ।
न । अह । दामानम् । मघऽवा । नि । यंसत् । नि । सुन्वते । वहति । भूरि । वामम् ॥ ८ ॥

उद्गीथ० यम् इन्द्रम् अन्तः मध्यतः प्र अग्मन् प्रकर्षेण गच्छन्ति प्राप्नुवन्तीत्यर्थः । के । सोमाः । कीदृशाः । वृषसवासः अग्नौ सोमस्य वर्षितृभिः अध्वर्युभिः अभिषुताः 'तीव्राः तीव्ररसाः[6] बहुलान्तासः 'आज्जसेरसुक्' ( पा ७,१,५० ), बहुलादानम् अन्ते येभ्यः सकाशात् ते बहुलान्ताः, इह परत्र च दृष्टफलस्य अनन्तस्य दातार इत्यर्थः । सः मघवा इन्द्रः न अह नैव दामानम् यजमानाय धनदानम् नि यंसत् नियच्छति विधारयति । किं तर्हि करोति । उच्यते । सुन्वते सोमाभिषवं कुर्वते यजमानाय नि वहति नियमेन प्रापयति ददातीत्यर्थः, भूरि बहु वामम् वननीयं धनम् ॥ ८ ॥

वेङ्कट० प्र गच्छन्ति यम् इन्द्रम् जठरे वृषाभिषुताः[7] तीव्राः सोमाः बहुलाग्राः प्रवेशवेलायाम्, सः मघवा दातारं यजमानम् न एव नि यच्छति, नि वहति सुन्वते बहु धनमिति ॥ ८ ॥

उत प्रहामतिदीव्या जयाति कृतं यच्छ्वघ्नी विचिनोति काले ।
यो देवकामो न धना रुणद्धि समित् तं राया सृजति स्वधावान् ॥ ९ ॥

उत । प्रऽहाम् । अतिऽदीव्य । जयाति । कृतम् । [8]यत् । श्वऽघ्नी । विऽचिनोति । काले[8] ।
यः । देवऽकामः । न । धना । रुणद्धि । सम् । इत् । तम् । राया । सृजति । स्वधाऽवान् ॥९॥

---

१. के मूको. २. यवसन्निहितम् वि[2] अ[1]. ३. किम् । अन्नम् वि[1]. ४. वाजरत्ना…वि[2] अ[1]. ५. अनेन मूको. ६-६. वा रसाः वि[1]; व रसाः वि[2] अ. ७. वृष्णमभि° वि[2] अ[1]; वृष्णामभि° वि[1]. ८-८. तु. ऋ १०,४३,५.

उद्गीथ० किंचान्यम् उपकारं करोति इन्द्रः यजमानस्य । उच्यते—उत अपि प्रहाम् प्रपूर्वस्य हन्तेर्विटि[1] अनुनासिकस्यात्वे कृते द्वितीयैकवचनान्तस्यैतद्रूपम् । प्रकर्षेण हन्त्रीम् इषुम् अशनिं शक्तिं वा आत्मीयाम् अतिदीव्य दीव्यतिरत्र गत्यर्थः । अतिरभिपूजितार्थे । अभिपूजितं गमयित्वा, दृढं प्रहृत्येत्यर्थः[2], जयाति [3]यजमानस्य शत्रुं जयतीन्द्रः[3] । किंच कृतम् यत् श्वघ्नी विचिनोति गृह्णाति काले । यदित्यत्र प्रकारवचनप्रत्ययो लुप्तो द्रष्टव्यः । यथा [4]कृतम् अयानां[4] मध्ये श्वघ्नी कितवः विचिनोति परीक्ष्य गृह्णातीत्यर्थः । एवमिन्द्रो युद्धकाले बलवन्तं शत्रुं परीक्ष्य गृह्णाति बधार्थम् । किञ्च यः मनुष्यः देवकामः देवान् स्तोतुं यष्टुं च कामयते, तस्यार्थाय धना स्वधनानि न रुणद्धि नावृणोति न धारयतीत्यर्थः । सम् इत् तम् राया सृजति स्वधावान् । इत् इति पदपूरणः । एवार्थे वा । तं देवकामम् मनुष्यम् राया धनेन संसृजत्येव संयोजयत्येवेत्यर्थः, स्वधावान् हविरन्नवान् इन्द्रः । अथवा अन्नवत्तया अत्यैश्वर्यं लक्ष्यते । ईश्वर इत्यर्थः ॥ ९ ॥

वेङ्कट० अपि च प्रहन्तारं प्रतिकितवम् अतिदीव्य[5] जयति[6] । कृतम् [7]यत् द्यूतकाले[7] विचिनोति श्वघ्नी[8] कितवः हस्तस्थेष्वक्षेषु प्रागेव निधानात् कृतत्वम् अक्षाणां जानाति । तद्वद् इन्द्रश्च बलवान् सम् सृजति एव तम् धनेन अव्यभिचारेण, यः यजमानः देवकामः न धनानि रुणद्धि ॥ ९ ॥

गोभि॑ष्टरेमा॒मतिं॑ दु॒रेवां॒ यवे॑न क्षु॒धं॑ पुरुहूत॒ विश्वा॑म् ।
व॒यं राज॑भिः प्रथ॒मा धना॑न्य॒स्माके॑न वृ॒जने॑ना जयेम ॥ १० ॥

गोभिः॑ । त॒रे॒म॒ । अ॒मति॑म् । दुः॒ऽए॒वा॑म् । यवे॑न । क्षु॒धम्॑ । पु॒रु॒ऽहू॒त॒ । विश्वा॑म् ।
व॒यम् । राज॑ऽभिः । प्र॒थ॒मा । धना॑नि । अ॒स्माके॑न । वृ॒जने॑न । ज॒ये॒म॒ ॥ १० ॥

उद्गीथ० हे पुरुहूत! इन्द्र! तव प्रसादात् गोभिः । 'अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति' ( या २,५ ) इति गोविकारे रसे गोशब्दोऽत्र वर्तते । गोभिः क्षीरादिगोरसैरित्यर्थः, उदकैर्वा वृष्टिलक्षणैः तरेम अतिगच्छेम अपनयेमेत्यर्थः, अमतिम् अविद्यमानमतिं प्रज्ञापहारिणीं तृषमित्यर्थः, दुरेवाम् दुरवगमाम् यवेन क्षुधम् बुभुक्षाम् विश्वाम् विश्वां सर्वप्रकारान्नविषयामित्यर्थः । किंच वयम् राजभिः सह प्रथमा प्रधानानि धनानि अस्माकेन अस्मदीयेन च वृजनेन बलेन जयेम प्राप्नुयाम ॥ १० ॥

वेङ्कट० पशुभिः तरेम दुष्टागमनां दारिद्र्यादागतां दुर्बुद्धिम्, यवेन[9] च क्षुधम् पुरुहूत! व्याप्ताम्[10] । वयम् राजभिः मुख्यानि धनानि लभेमहि । आस्माकीनेन बलेन जयेम शत्रून् इति ॥ १० ॥

---

१. हन्तेर्हि वि[1]; हन्तर्त्रि वि[2] अ[1]. २. प्रभृत्ये° मूको. ३-३. जायमानस्य शत्रं जयाति इन्द्रः मूको. ४-४. कृतमायासां मूको. ५. आदीप्य वि[2] अ[1]; अतिदीप्य वि[1]. ६. जनयति मूको. ७-७. यदित्युत्तकाले वि[2] अ[1]; यद्यतकाले वि[1]. ८. विश्वघ्नी वि[2] अ[1]; श्वघ्न वि[1]. ९. लवे° वि[2] अ[1]; ज° वि[1]. १०. °प्ता मूको.

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

**उद्गीथ०** बृहस्पतिः बृहतो महतः पतिः इन्द्रः नः अस्मान् परि पातु परिरक्षतु पश्चात् अस्माकं पृष्ठतः स्थितादित्यर्थः, उत अपि उत्तरस्मात् अधरात् पुरस्तात् मध्यतः समीपतश्च स्थितादित्यर्थः, अघायोः अघं पापं वधादिलक्षणम् अस्माकं कर्तुं कामयमानादित्यर्थः । परिरक्ष्य च नः अस्माकम् सखा इन्द्रः सखिभ्यः सखिभूतेभ्यः अस्मभ्यम् वरिवः धनम् कृणोतु[1] करोतु, ददात्वित्यर्थः[2] ॥ ११ ॥

**वेङ्कट०** सर्वाभ्यो दिग्भ्यो योऽघायुरागच्छति, ततोऽस्मान् इन्द्राबृहस्पती परि पाताम् । अपि च सखा इन्द्रः[3] सखिभ्यः अस्मभ्यम् धनम् कृणोतु ॥ ११ ॥

[4]इति सप्तमाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[4] ॥

[ ४३ ]

[5]कृष्ण आङ्गिरस ऋषिः । इन्द्रो देवता । जगती छन्दः, अन्त्ये त्रिष्टुभौ[5] ।

अच्छा म इन्द्रं मतयः स्वर्विदः सध्रीचीर्विश्वा उशतीरनूषत ।
परि ष्वजन्ते जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ १ ॥

अच्छ । मे । इन्द्रम् । मतयः । स्वःऽविदः । सध्रीचीः । विश्वाः । उशतीः । अनूषत ।
परि । स्वजन्ते । जनयः । यथा । पतिम् । मर्यम् । न । शुन्ध्युम् । मघऽवानम् । ऊतये ॥ १ ॥

**उद्गीथ०** अच्छशब्दोऽत्र अभ्यर्थे अनूषतेत्यनेन च सम्बध्यते । अच्छ अनूषत अभिष्टुवन्ति इन्द्रम् मे मम स्वभूताः मतयः । कीदृश्यः । स्वर्विदः स्वः-शब्दोऽत्र सर्वपर्यायः । सर्वगुणावेदिन्यः[5] प्रख्यापयित्र्य इत्यर्थः सध्रीचीः सहाञ्चनाः सहगमनाः[6] सहपूजा वा विश्वाः सर्वप्रकाराः उशतीः इन्द्रं कामयमानाः । अभिष्टुत्य[7] च परि स्वजन्ते ऊतये अवतिरत्र प्रीत्यर्थः । प्रीतये प्रीतिजननार्थमित्यर्थः ॥ १ ॥

**वेङ्कट०** अभिष्टुवन्ति मम इन्द्रम् स्तुतयः सर्वस्य लम्भयित्र्यः सङ्गताः व्याप्ताः कामयमानाः । परि स्वजन्ते, जायाः यथा[8] पतिम्[9], मर्यम् न मनुष्यम् इव च शुद्धम्, मघवानम् रक्षणायाऽऽह्वयम् ॥ १ ॥[10]

न घा त्वद्रिगप वेति मे मनस्त्वे इत् कामं पुरुहूत शिश्रय ।
राजेव दस्म नि षदोऽधि बर्हिष्यस्मिन्त्सु सोमेऽवपानमस्तु ते ॥ २ ॥

---

१. करोति वि[1] अ. २. ददातीत्यर्थः मूको. ३. इन्द्र मूको. ४-४. नास्ति मूको. ५. °गुणावेद्यः मूको. ६. सहनाः मूको. ७. °ष्टुत्वा° मूको. ८. नास्ति वि[1]. ९. पतिः मूको. १०. उत्तरार्धर्चस्य कृते तु. ऋ १,६२,११;१८६,७.

न । घ । त्वद्रिक् । अप॑ । वेति॑ । मे॒ । मनः॑ । त्वे इति॑ । इत् । काम॑म् । पु॒रु॒ऽहू॒त॒ । शि॒श्र॒य॒ ।
राजा॑ऽइव । द॒स्म॒ । नि । स॒दः॒ । अधि॑ । ब॒र्हिषि॑ । अ॒स्मिन् । सु । सोमे॑ । अ॒व॒ऽपान॑म् । अ॒स्तु॒ । ते॒ ॥

उद्गीथ० घ इति पदपूरणः । त्वद्रिक् त्वद्गामि परया भक्त्या स्मरणद्वारेण त्वां प्रत्याराधनाय गमनशीलमित्यर्थः, न अप वेति न कदाचिदपि अपगच्छति त्वत्तः मे मनः । किंच त्वे इत् त्वय्येव कामम् सोमप्रदानेच्छां धनेच्छां च हे पुरुहूत! [1]शिश्रय स्थापयामीत्यर्थः[1] । एतद् ज्ञात्वा राजा इव यथा राजा सिंहासने निषीदति, एवं त्वं हे दस्म! शत्रूणाम् उपक्षपयितः! दर्शनीय! वा इन्द्र! नि-षीद उपविश अधि बर्हिषि वेदिस्तरणबर्हिषि । उपरि निषण्णस्य च [2]सतः ते[2] तव इन्द्रस्य अस्मिन् अस्मदीये सु सोमे सुसंस्कृते[3] सोमे [4]अवपानम् अवकलनात्[4] श्रद्धाऽप्रतिहननात् सोमपानम् अस्तु भवतु ॥ २ ॥

वेङ्कट० न खलु त्वदभिमुखम् त्वत्तः अप[5] गच्छति मे मनः । त्वयि एव अभिलषितम् पुरुहूत! अहं स्थापयामि । [6]राजा इव[6] दर्शनीयः![7] अभि नि-षीद बर्हिषि । अस्मिन् सोमे सुष्ठु अवपानम्[8] अस्तु ते ॥ २ ॥

वि॒षू॒वृदिन्द्रो॒ अम॑तेरु॒त क्षु॒धः स इ॒द्रायो॑ म॒घवा॒ वस्व॑ ईशते ।
तस्येदि॒मे प्र॑व॒णे स॒प्त सिन्ध॑वो॒ वयो॑ वर्धन्ति वृष॒भस्य॑ शु॒ष्मिणः॑ ॥ ३ ॥

वि॒षु॒ऽवृत् । इन्द्रः॑ । अम॑तेः । उ॒त । क्षु॒धः । सः । इत् । रा॒यः । म॒घऽवा॑ । वस्वः॑ । ई॒श॒ते॒ ।
तस्य॑ । इत् । इ॒मे । प्र॒व॒णे । स॒प्त । सिन्ध॑वः । वयः॑ । व॒र्धन्ति॒ । वृ॒ष॒भस्य॑ । शु॒ष्मिणः॑ ॥ ३ ॥

उद्गीथ० [9]भक्ताभक्तयोः विषुवृत् इन्द्रः[9] । किञ्च मघवा अमतेः अविद्यमानमतेः प्रज्ञापहारिण्याः क्षुधः पिपासायाः रायः धनस्य स्थावरलक्षणस्य वस्वः वसुनो धनस्य जङ्गमलक्षणस्य ईशते व्यत्ययेनेदं बहुवचनमेकवचनस्य स्थाने । ईष्टे । किंच तस्य इत् तस्यैवेन्द्रस्य वृषभस्य वर्षितुः शुष्मिणः बलवतः प्रसादात्[10] स्वभूता वा इमे सप्त सप्तसङ्ख्याकाः सिन्धवः नद्यः गङ्गाद्याः प्रधानभूताः अम्बाचलेत्येवमाद्या वा अन्तरिक्ष्याः[11] प्रवणे निम्ने प्रदेशे स्थिताः सत्यः वयः[12] उदकं[13] उदककर्म वा अन्नम् व्रीह्यादिकम् वर्धन्ति जातस्य अर्थाय ॥ ३ ॥

वेङ्कट० विष्वक्प्रवर्तकः इन्द्रः अस्माकम् अमतेः[14] अपि च क्षुधः । सः एव[15] रायः धनवान् वासयितुः ईष्टे । तस्य एव इमे प्रवणे सप्त सिन्धवः नद्यः अन्नम् वर्धयन्ति वृषभस्य बलवतः ॥ ३ ॥

वयो॒ न वृ॒क्षं सु॑पला॒शमास॑द॒न्त्सोमा॑स॒ इन्द्रं॑ म॒न्दिन॑श्चमू॒षदः॑ ।
प्रैषा॒मनी॑कं॒ शव॑सा॒ दवि॑द्युतद्वि॒दत् स्व१॒॑र्मन॑वे॒ ज्योति॒राय॑म् ॥ ४ ॥

---

१-१. शिश्रयेत्यर्थः मूको. २-२. तस्ते मूको. ३. सुसंस्तुत वि[1]. ४-४. अपानवामकलनात् मूको. ५. अभि मूको. ६-६. नास्ति वि[1]. ७. °नीयः मूको ८. पवमानम् वि[2] अ[1]. ९-९. भक्षाभक्षयोर्विषुभिरिन्द्रः वि[1]; °षुभिरिन्द्रः वि[2] अ. १०. त्वत्प्रसा° मूको. ११. अन्तरिष्याः वि[1]; आन्त° वि[2] अ[1]. १२. पयः मूको. १३. उदकर्मोदकं वि[2] अ; उदकं मदकरं वि[1]. १४. अपि मतेः वि[2] अ[1]. १५. एका वि[2] अ[1].

वयः । न । वृक्षम् । सुऽपलाशम् । आ । असदन् । सोमासः । इन्द्रम् । मन्दिनः । चमूऽसदः ।
प्र । एषाम् । अनीकम् । शवसा । दविद्युतत् । विदत् । स्वः । मनवे । ज्योतिः । आर्यम् ॥ ४ ॥

**उद्गीथ०** वृक्षम् वयः [1]न वय इव[1] यथा वयः पक्षिणः वृक्षम् सुपलाशम् शोभनपर्णम् आसीदन्ति[2], एवम् सोमासः सोमाः मन्दिनः तर्पयितारः चमूषदः अधिषवणचर्मणि चमसपात्रेषु [3]वा सत्तारः स्थातारः[3] इन्द्रम् आ असदन् आसीदन्ति अधितिष्ठन्ति पीताः सन्तः। अधिष्ठितवतां[4] च सताम् एषाम् अस्मत् सोमानाम् अनीकम् समूहः[5] शवसा इन्द्रस्य बलेन शरीरवीर्यबुद्धिलक्षणेन उपलक्षितः, बलरूपेण विपरिणतः सन्नित्यर्थः, प्र दविद्युतत् प्रकर्षेण दीप्यते । इन्द्रः बलरूपेण प्रदीप्तश्च सन् विदत् वेत्ति दातुं जानाति, ददातीत्यर्थः, स्वः स्वर्गम् मनवे कार्यकारणयोः एकत्वोपचारात् अत्र कारणशब्देन कार्यमुच्यते । यजमानमनुष्यायेत्यर्थः । ज्योतिः तेजश्च ददाति आर्यम् आर्यस्य सर्वस्य जगतः स्वामिनः इन्द्रस्य स्वभूतमिन्द्रत्वं च प्रापयतीत्यर्थः ॥ ४ ॥

**वेङ्कट०** पक्षिणः इव वृक्षम् सुपर्णम् आ असीदन् सोमाः इन्द्रम् मदकराः चमससादिनः । प्र द्योतते एषाम् सोमानाम् अग्रम् वेगेन युक्तम् । प्रयच्छतु इन्द्रः आदित्याख्यम् ज्योतिः आत्मना[6] प्रेर्यम् मनुष्येभ्यः ॥ ४ ॥

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत् ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन् नोत नूतनः ॥ ५ ॥

[7]कृतम् । न । श्वऽघ्नी । वि । चिनोति । देवने[7] । सम्ऽवर्गम् । यत् । मघऽवा । सूर्यम् । जयत् ।
न । तत् । ते । अन्यः । अनु । वीर्यम् । शकत् । न । पुराणः । मघऽवन् । न । उत । नूतनः ॥

**उद्गीथ०** कृतम् न कृतमिव यथा कृतं नाम अयम्[8] अयानां मध्ये श्वघ्नी कितवः वि चिनोति परीक्ष्य[9] गृह्णातीत्यर्थः, देवने आस्फारे[10] । एवं भवानिन्द्रः संवर्गम्[11] सम्यगपां वृष्टिलक्षणानां वर्जयितारं मेघम् अन्तरिक्षे सर्वमेघानां मध्ये परीक्ष्य गृह्णाति । कदा । उच्यते—यत् यदा, मघवा भवानिन्द्रः सूर्यम् आदित्यं सर्तारं वा मेघम् [12]अन्तरिक्षे स्थितं[12] क्षारयतीत्यर्थः, जयत् जयति तदीयरसापहरणद्वारेण च वर्षास्वित्यर्थः । तत् ते तव स्वभूतम् वीर्यम् वीरकर्म आदित्यमेघजयलक्षणं त्वत्तः अन्यः भविष्यत्कालीनः न अनु शकत् त्वाम् अनुकर्तुं न शक्ष्यति, न पुराणः नापि चिरन्तनः अतीतकालीनः अशकत् हे मघवन्! इन्द्र!, न उत नापि नूतनः नवः वर्तमानकालीनः शक्नोति ॥ ५ ॥

**वेङ्कट०** यथा देवने परस्वस्य हन्ता कितवः कृतम् वि चिनोति, तथा तं मृगयते सूर्यम्, यदा[13]

---

१-१. गव इव मूको. २. °दति मूको. ३-३. वा सन्तार स्थाः तारा मूको. ४. °धितिष्ठवतां ५. समूहम् मूको. ६. आदित्यात्मना वि[1]. ७-७. अत्र या. (५,२२) द्र. ८. अय मूको. ९. अयानां मध्ये परी° वि[1]. १०. आस्तरे मूको. ११. नास्ति मूको. १२-१२. तं नष्टं मूको १३. यथा वि[1]; तथा अ.

सञ्छेत्तारम् मघवा सूर्यम् अजयत्[1]। [2]एतदेव प्रत्यक्षम्[2]—न तत् त्वदीयम् वीर्यम् अन्यः अनुकर्तुं शक्नोति, न प्रत्नः, न अपि नूतनः ॥ ५ ॥

[3]इति सप्तमाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[3] ॥

विशंविशं मघवा पर्यशायत जनानां धेना अवचाकशद्वृषा ।
यस्याह शक्रः सवनेषु रण्यति स तीव्रैः सोमैः सहते पृतन्यतः ॥ ६ ॥

विशम्ऽविशम् । मघऽवा । परि । अशायत । जनानाम् । धेनाः । अवऽचाकशत् । वृषा ।
यस्य । अह । शक्रः । सवनेषु । रण्यति । सः । तीव्रैः । सोमैः । सहते । पृतन्यतः ॥ ६ ॥

उद्गीथ० विशं-विशम् मघवा इन्द्रः सर्वान् जनान् परि अशायत पर्याप्नोति प्रतिगच्छतीत्यर्थः। गत्वा च जनानाम् यजमानजनानां स्वभूताः धेनाः[4] आहुतीः[5] [6]अवचाकशत् सत्येनाभिपश्यति हूयमानलक्षणाः[6] [7]ततस्ता अग्नौ दृष्ट्वा चाभिमुखेन[7] प्रतीच्छतीत्यर्थः। अथवा धेनेति वाङ्नाम। दर्शनेन चात्र श्रवणमुच्यते। वाचः स्तुतीः शृणोतीत्यर्थः, वृषा वर्षिता इन्द्रः। किञ्च यस्य अह यस्यैव यजमानस्य स्वभूतेषु सवनेषु तृषितः[8] शक्रः इन्द्रः रण्यति तृप्तिनिमित्तां प्रीतिं करोति, सः यजमानः तीव्रैः पटुरसैः सोमैः इन्द्रस्य तृप्तिनिमित्तां प्रीतिमुत्पाद्य तत्प्रसादात् सहते अभिभवति पृतन्यतः सङ्ग्रामं कर्तुमिच्छतः स्वशत्रून् ॥ ६ ॥

वेङ्कट० सर्वान् मनुष्यान् मघवा परि शेते जनानाम् [9]स्तुतीः अवदीपयन्[9] वृषा। यस्य एव शक्रः सवनेषु रमते, सः तीव्रैः प्रदीयमानैः[10] सोमैः अभिभवति शत्रून् ॥ ६ ॥

आपो न सिन्धुमभि यत् समक्षरन्त्सोमास इन्द्रं कुल्या इव ह्रदम् ।
वर्धन्ति विप्रा महो अस्य सादने यवं न वृष्टिर्दिव्येन दानुना ॥ ७ ॥

आपः । न । सिन्धुम् । अभि । यत् । सम्ऽअक्षरन् । सोमासः । इन्द्रम् । कुल्याःऽइव । ह्रदम् ।
वर्धन्ति । विप्राः । महः । अस्य । सदने । यवम् । न । वृष्टिः । दिव्येन । दानुना ॥ ७ ॥

उद्गीथ० आपः न यथा आपो वृष्टिलक्षणा भूमौ पतिताः सत्यः सिन्धुम् नदीं प्रति गच्छन्ति, कुल्याः इव ह्रदम् यथा च कुल्याः शब्दकारिणं प्रह्लादिनं वा समुद्रं प्रति गच्छन्ति, एवम् यत्[11] इन्द्रम् लिङ्गव्यत्ययः कार्यः। यम् इन्द्रम् अभि समक्षरन् आभिमुख्येन सम्यक् क्षरन्ति गच्छन्ति सोमासः सोमाः। तस्य अस्य इन्द्रस्यार्थाय वर्धन्ति वर्धयन्ति[12] विप्राः मेधाविनः ऋत्विग्यजमानाः। किम्। महः महत् पूजितं वा हविर्जातं च सदने स्थाने वेद्याख्ये, स्थिता इति शेषः। किमिव

---

१. अजनयत् वि[2] अ[1]. २-२. एतद्दर्शनेव प्रथानं वि[2] अ[1]. ३-३ नास्ति मूको. ४. धेनाहीः मूको. ५ आहुतिः मूको. ६-६. अपचाकशत् सत्येनाभिपश्यति हूयमानं वन्दं मूको. ७-७. ततस्तना अनादृष्ट्वा चानिमु° मूको. ८. तृषिता मूको. ९-९ स्तुतिं रवदीरयन् वि[2] अ[1]; स्तुतिरपदीपयन् वि[1]. १०. दी° वि[1]. ११. यम् मूको. १२. नास्ति मूको.

वर्धयन्ति। उच्यते—यवम् न वृष्टिः यथा यवं यवादि[1] सस्यं[2] वृष्टिः। कर्तरि कृत्। वर्षिता पर्जन्यः[3] दिव्येन दिविभवेन दानुना दानार्हेण वृष्ट्यादिकेन वर्धयति, एवम् ॥ ७ ॥

वेङ्कट० आपः इव समुद्रम् अभि[4] संक्षरन्ति यदा सोमाः इन्द्रम् कुल्याः इव च ह्रदम्[5], तदानीम् अस्य इन्द्रस्य वर्धयन्ति मेधाविनः महत्त्वम् यज्ञे यवम्[6] इव वृष्टिः दिवि भवेन दानेन वर्षणेनेति ॥ ७ ॥

वृषा न क्रुद्धः पतयद्रजःस्वा यो अर्यपत्नीरकृणोदिमा अपः ।
स सुन्वते मघवा जीरदानवेऽविन्दज्ज्योतिर्मनवे हविष्मते ॥ ८ ॥

वृषा । न । क्रुद्धः । पतयत् । रजःऽसु । आ । यः । अर्यऽपत्नीः । अकृणोत् । इमाः । अपः ।
सः । सुन्वते । मघऽवा । जीरऽदानवे । अविन्दत् । ज्योतिः । मनवे । हविष्मते ॥ ८ ॥

उद्गीथ० यच्छब्दो वाक्यद्वयेनापि सम्बन्धयितव्यः। वृषा न यथा गोवृषः ईर्ष्यालुत्वात् क्रुद्धः गोयूथेषु गच्छति प्रतिवृषभवधाय, एवम् यः इन्द्रः विद्युद्रूपः क्रुद्धः पतयत् पतति गच्छति रजःसु उदकेषु मेघोदरगतेषु मेघवधाय। यश्चेन्द्रो मेघं हत्वा आ अकृणोत् अर्वाक्करोति इमं लोकं प्रति प्रक्षिपति अर्यपत्नीः अर्यस्य सर्वस्य जगतः स्वामिन इन्द्रस्य पालयितव्या इमा वृष्टिलक्षणा अपः, सः मघवा इन्द्रः सुन्वते सोमाभिषवं कुर्वते जीरदानवे प्रायश्चित्ताध्यवसानेन क्षिप्रं हविषां दात्रे अविन्दत् लभते। लाभेनात्र तद्धेतुदानं लक्ष्यते। ददातीत्यर्थः। किं ददाति। ज्योतिः तेजो देवत्वलक्षणम्। मनवे मनुष्याय हविष्मते यजमानाय ॥ ८ ॥

वेङ्कट० वृषभः इव क्रुद्धः पतति लोकेषु। यः देवपत्नीः आ अकृणोत् इमाः अपः दासपत्नीः, सः सुन्वते मघवा क्षिप्रदानाय प्रायच्छत् ज्योतिः मनुष्याय हविष्मते इति ॥ ८ ॥

उज्जायतां परशुर्ज्योतिषा सह भूया ऋतस्य सुदुघा पुराणवत् ।
वि रोचतामरुषो भानुना शुचिः स्व१र्ण शुक्रं शुशुचीत सत्पतिः ॥ ९ ॥

उत् । जायताम् । परशुः । ज्योतिषा । सह । भूयाः । ऋतस्य । सुऽदुघा । पुराणऽवत् ।
वि । रोचताम् । अरुषः । भानुना । शुचिः । स्वः । न । शुक्रम् । शुशुचीत । सत्ऽपतिः ॥ ९ ॥

उद्गीथ० भूयाः इति मध्यमपुरुषवचनश्रुतेः[7] प्रत्यक्षकृतत्वान्मन्त्रस्य सम्बोधनपदम् अध्याहार्यम्। हे इन्द्र! तव परशुः वज्रः उत् जायताम् उत्साही भवतु, अस्मच्छत्रुवधे मेघवधे वा तव प्रसादाद् व्याप्रियतामित्यर्थः। केन सह। ज्योतिषा सह विद्युज्ज्योतीरूपेण त्वया सहेत्यर्थः। त्वमपि हे इन्द्र! भूयाः भव ऋतस्य उदकस्य वृष्टिलक्षणस्य सुदुघा सुष्ठु दोग्धा, अस्मदर्थं वर्षितेत्यर्थः। कथम्। पुराणवत् चिरन्तनवत्। अतीतकाले यथा अस्मदर्थं सुष्ठु वर्षिता अभूः त्वम्, एवम् इदानीमपि वर्षिता भवेत्यर्थः। अथवा पुराणवत् पुराणानामिव यथा

---

१. यवादिं वि[1] अ[1]. २ सम्यक् मूको. ३. वज्रो मूको. ४. नास्ति वि[2] अ[1]. ५ भूदम् वि[1]; भूतम् अ[1]; भ्रदम् वि[3]. ६ यद्वयम् वि[1] अ[1]. ७. °चनशब्दश्रु° वि[1] अ[1].

चिरन्तनानाम् अस्मत्पित्रादीनाम् अर्थाय वर्धिता अभूः त्वम्, एवम् अस्माकमपि वर्धिता भूयाः। किंच वि रोचताम् सुष्ठु प्रियः[1] तव भवत्वित्यर्थः, [2]अरुषः† अरुषतिः‡ आरोचनवर्णविषयवचनः[2] गत्यर्थे वा[3]। आरोचनवर्णः देवान् प्रति गन्ता वा अस्मत्सोमः भानुना स्वदीप्त्या, युक्त इति शेषः, शुचिः शुद्धः सुसंस्कृत इत्यर्थः। किञ्च स्वः न यथा आदित्यः शुक्रम् शोचिष्मद् दीप्तिमत् शुशुचीत [4]शोशुच्यते अत्यर्थं[4] दीप्यत इत्यर्थः। एवमस्य[5] सोमस्य पीत्वा अत्यर्थं दीप्यतां भवानिन्द्रः सत्पतिः सतां पाता रक्षिता ॥ ९ ॥ 'गोभिष्टरेम' इत्यादिमन्त्रद्वयं व्याख्यातार्थम्।

**वेङ्कट०** उत् जायताम् इन्द्रस्य वज्रः ज्योतिषा सह। अथ तस्य भूयात् सत्यभूतस्य सुदुघा माध्यमिका वाक् [6]प्रत्न इव[6] काले। वि रोचताम् आरोचमानः भानुना ज्वलन् आदित्य इव। ज्वलन् अत्यन्तदीप्तो भवतु सतां पतिः ॥ ९ ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम्।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः। तरेम। अमतिम्। दुःऽएवाम्। यवेन। क्षुधम्। पुरुऽहूत। विश्वाम्।
वयम्। राजऽभिः। प्रथमाः। धनानि। अस्माकेन। वृजनेन। जयेम ॥ १० ॥

[ पूर्वं ( ऋ १०,४२,१० ) व्याख्याता। ]

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः। नः। परि। पातु। पश्चात्। उत। उतऽतरस्मात्। अधरात्। अघऽयोः।
इन्द्रः। पुरस्तात्। उत। मध्यतः। नः। सखा। सखिऽभ्यः। वरिवः। कृणोतु ॥ ११ ॥

[ पूर्वं ( ऋ १०,४२,११ ) व्याख्याता। ]

[7]इति सप्तमाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[7] ॥

## [ ४४ ]

[7]कृष्ण आङ्गिरस ऋषिः। इन्द्रो देवता। जगती छन्दः, आद्यास्तिस्रोऽन्त्ये च त्रिष्टुभः[7]।

आ यात्विन्द्रः स्वपतिर्मदाय यो धर्मणा तूतुजानस्तुविष्मान्।
प्रत्वक्षाणो अति विश्वा सहांस्यपारेण महता वृष्ण्येन ॥ १ ॥

---

१. प्रीतय वि[१]. २-२. अयुषः अरुतिरारोच' वि[२] अ[१]. † °षिः वि[१]. ‡ नास्ति वि[१]. ३. नास्ति मूको. ४-४. शोच्यते दीप्यते अत्यर्थं वि[१]; शोच्यते वि[२] अ[१]. ५. अनमस्य मूको. ६-६. प्रत्नव वि[२] अ[१]. ७-७. नास्ति मूको.

आ । यातु । इन्द्रः । स्वऽपतिः । मदाय । यः । धर्मणा । तूतुजानः । तुविष्मान् ।
प्रऽत्वक्षाणः । अति । विश्वा । सहांसि । अपारेण । महता । वृष्ण्येन ॥ १ ॥

**उद्गीथ०** यः इन्द्रः स्वपतिः स्वभक्तानां पालयिता तुविष्मान् बलनाम्नां प्रदर्शनार्थत्वाद् अर्थाविरोधाच्च बलवानित्यर्थः। अथवा 'तु वृद्धौ' इत्यस्य किसि प्रत्यये परतः गुणे प्रतिषिद्धे उवङ्ङादेशे[1] कृते तुविरिति भवति रूपम्। तुविःप्रातिपदिकान्मतुप्। तुविष्मान् सर्वप्रकारवृद्धिमान् इत्यर्थः। अथवा तुविरिति बहुनाम्नः तुविशब्दस्यापि[2] ईषद्विकृतः पर्यायवचनो दंसशब्दस्य कर्मनाम्नो दंसःशब्दवत्[3]। तुविष्मान् बहुमान् बलपौरुषप्रज्ञानीत्यैश्वर्यात् सर्वस्तुतिविषयबहुत्ववान् वेत्यर्थः। मदाय अति आ यातु सर्वान् आगमनप्रतिबन्धान् अतीत्यास्मद्यज्ञं प्रत्यागच्छतु। कथम्। तूतुजानः क्षिप्रनामैतत्। क्षिप्रः त्वरमाण इत्यर्थः। केनायातु। धर्मणा धारयित्रा रथेन। किं कुर्वन्नायातु। प्रत्वक्षाणः प्रकर्षेण तनूकुर्वन् उपक्षपयन्नित्यर्थः। विश्वा सर्वाणि सहांसि शत्रुबलानि। केन प्रत्वक्षाणः। अपारेण अनन्तेन शरीरेण महता च सेनालक्षणेन वृष्ण्येन सामर्थ्यादत्र बलनामैतत्। बलेनेत्यर्थः॥ १ ॥

**वेङ्कट०** आ यातु इन्द्रः धनपतिः मदार्थम्, यः धारकेण त्वरमाणः वृद्धः प्रकर्षेण तनूकुर्वन् अति[4] गच्छति विश्वानि बलानि पारवर्जितेन[5] महता बलेन॥ १ ॥

सुष्ठामा रथः सुयमा हरी ते मिम्यक्ष वज्रो नृपते गभस्तौ ।
शीभं राजन्त्सुपथा याह्यर्वाङ् वर्धाम ते पपुषो वृष्ण्यानि ॥ २ ॥

सुऽस्थामा । रथः । सुऽयमा । हरी इति । ते । मिम्यक्ष । वज्रः । नृऽपते । गभस्तौ ।
शीभम् । राजन् । सुऽपथा । आ । याहि । अर्वाङ् । वर्धाम । ते । पपुषः । वृष्ण्यानि ॥ २ ॥

**उद्गीथ०** हे इन्द्र! सुष्ठामा शोभनस्थामा सुगमन इत्यर्थः, रथः तव स्वभूतः सुयमा सुयमौ, बद्धावित्यर्थः, हरी अश्वौ च ते तवैव स्वभूतौ। किञ्च नृपते! त्रैलोक्यस्य राजन्![6] मनुष्यादिप्रजानां पातः! वा तव गभस्तौ 'गभस्तिः' ( निघ २,४ ) इति बाहुनाम। बाहुसम्बन्धाच्चात्र हस्तो लक्ष्यते, बाहुसम्बद्धे हस्त इत्यर्थः। मिम्यक्ष गच्छति ( तु. निघ २,१४ ) सदा शत्रुवधाय तिष्ठतीत्यर्थः, [7]वज्रः च[7] त्वदीयः। एतैः स्तुतिभिः कारणैः शीभम् शीघ्रं हे राजन्! सर्वेश्वर! सुपथा शोभनेन स्वर्गमार्गेण आ याहि आगच्छ अर्वाङ् अस्मदभिमुखम्। आगतस्य च सतः ते तव पपुषः सोमं पीतवतः सम्बन्धीनि वृष्ण्यानि बलानि शरीरवीर्यशौर्यबुद्धिवृद्धिलक्षणानि वर्धाम स्तुतिभिः वर्धयाम इत्यर्थः॥ २ ॥

**वेङ्कट०** शोभनावस्थानः तव रथः, सुयमौ च अश्वौ[8]। संहतो भवति नृपते! तव[9] बाहौ वज्रः।

---

१. उवर्णादेशे मूको. २. °शब्दोऽपि मूको. ३. दंसश° मूको. ४. अभि वि[2] अ[1]; इति वि[1]. ५. परिव° मूको. ६. राज मूको. ७-७. वज्राश्वौ वि[1]; वज्रास्व वि[2] अ[1]. ८. वाश्वौ वि[1]. ९. त्रुटितम् वि[2] अ[1].

तथा सति शीघ्रम् राजन्! सुपथा आ याहि अभिमुखम् रथेन। वर्धयामः तव सोमं पीतवतः[1] बलानि ॥ २ ॥

एन्द्रवाहो नृपतिं वज्रबाहुमुग्रमुग्रासस्तविषास एनम् ।
प्रत्वक्षसं वृषभं सत्यशुष्ममेमस्मत्रा सधमादो वहन्तु ॥ ३ ॥

आ । इन्द्रऽवाहः । नृऽपतिम् । वज्रऽबाहुम् । उग्रम् । उग्रासः । तविषासः । एनम् ।
प्रऽत्वक्षसम् । वृषभम् । सत्यऽशुष्मम् । आ । ईम् । अस्मऽत्रा । सधऽमादः । वहन्तु ॥ ३ ॥

उद्गीथ० आ इन्द्रवाहः इन्द्रस्य वोढारः यज्ञं प्रत्याह्वातारः अस्मदृत्विज इत्यर्थः, नृपतिम् यजमानमनुष्याणां पातारम् वज्रबाहुम् शत्रुवधाय सदा गृहीतवज्रहस्तम् उग्रम् क्रूरम् अप्रसह्यम् उग्रासः [2]अन्ययजमानर्त्विग्भिः सम्यक्कर्मानुष्ठानविज्ञानेन[2] अप्रसह्याः तविषासः [3]ज्ञानकर्मसमुच्चयकारित्वाद् दिव्यसर्वगुणोपेतत्वाच्च[3] महान्तः एनम् इन्द्रम् प्रत्वक्षसम् प्रकर्षेण शत्रुबलानां तनूकर्तारम् वृषभम् वर्षितारम् सत्यशुष्मम् अविसंवादिबलम् ईम् अस्मत्रा। ईमिति पदपूरणः। अस्मत्रा अस्मान् प्रति सधमादः स्तुतिभिः हविर्भिश्च सहतर्पयितारः आ वहन्तु यागार्थम् ॥ ३ ॥

वेङ्कट० आ वहन्तु[4] इन्द्रस्य वोढारः नृपतिम् वज्रबाहुम् उद्‌गूर्णम् उग्राः प्रवृद्धाः एतम् प्रकर्षेण तनूकर्तारम् वृषभम् सत्यबलम् अस्मासु सहमाद्यन्तः ॥ ३ ॥

एवा पतिं द्रोणसाचं सचेतसमूर्जः स्कम्भं धरुण आ वृषायसे ।
ओजः कृष्व सं गृभाय त्वे अप्यसो यथा केनिपानामिनो वृधे ॥ ४ ॥

एव । पतिम् । द्रोणऽसाचम् । सऽचेतसम् । ऊर्जः । स्कम्भम् । धरुणे । आ । वृषऽयसे ।
ओजः । कृष्व । सम् । गृभाय । त्वे इति । अपि । असः । यथा । केऽनिपानाम् । इनः । वृधे ॥

उद्गीथ० एव एवम् उक्तेन प्रकारेण पतिम् सर्वस्य स्वामिनम् इन्द्रम् द्रोणसाचम् द्रुममयसोमपात्राणां सेवितारम् सचेतसम् सप्रज्ञं सर्वज्ञमित्यर्थः, ऊर्जः स्कम्भम् 'ऊर्ज बलप्राणनयोः'। बलस्य प्राणस्य वा जीवनस्य स्कम्भभूतम् आधारमित्यर्थः, धरुणे सर्वस्य जगतो धारयितरि यज्ञे आ वृषायसे। लोडर्थेऽत्र लट्। हविर्भिर्मर्यादया [5]सेक्तुमिच्छ तर्पय[5] हे अध्वर्यो!। तर्पयित्वा च ओजः कृष्व बलम् इन्द्रस्य कुरु। सम् गृभाय पुनरपि यागार्थं सङ्गृहाण त्वे अपि[6] त्वमपि हे इन्द्र!। यस्त्वम्[7] इनः सर्वस्येश्वरः स त्वम् केनिपानाम् मेधाविनाम् ऋत्विजां ( तु. निघ ३,२५ ) यथा यथावत् सर्वप्रकारया बुद्ध्या वृधे वर्धनाय [8]असः भव[8] ॥ ४ ॥

वेङ्कट० एवम् पतिम्[9] द्रोणकलशस्य सेवितारम् सर्वप्रज्ञम्[10] बलस्य धारकम् धरुणे[11] आ सिञ्चसे जठरे।

---

१. °वन्तो वि[1] अ[1]. २-२. अन्यः यजमानर्त्विग्भिः कर्मा° वि[1]; अन्यो यजमानर्त्विग्भिः सम्यक् कर्मा° वि[2] अ. ३-३. °समुच्चयकारित्वादिव सर्व° मूको. ४. °हतु मूको. ५-५. 'मिच्छत वयम् मूको. ६. अपि असः मूको. ७. यस्तम् मूको. ८-८. असंभवः मूको. ९. वदन्ति वि[2] अ[1]; वति वि[1]. १०. सर्वज्ञंप्र वि[1] अ[1]; सप्रज्ञं वि[2]. ११. कर्मसि मूको.

स त्वं बलम् कुरुष्व। सम् गृहाण चास्मानपि त्वयि, भवसि यथा त्वं मेधाविनाम् अस्माकं स्वामी वर्धनाय। 'कैनिपः'[1] ( निघ ३,१५ ) इति मेधाविनामसु पठितम्[2] इति ॥ ४ ॥

**गमन्नस्मे वसून्या हि शंसिषं स्वाशिषं भरमा याहि सोमिनः।**
**त्वमीशिषे सास्मिन्ना सत्सि बर्हिष्यनाधृष्या तव पात्राणि धर्मणा॥ ५ ॥**

गमन्। अस्मे इति। वसूनि। आ। हि। शंसिषम्। सुऽआशिषम्। भरम्। आ। याहि। सोमिनः।
त्वम्। ईशिषे। सः। अस्मिन्। आ। सत्सि। बर्हिषि। अनाधृष्या। तव। पात्राणि। धर्मणा ॥ ५ ॥

**उद्गीथ०** हे इन्द्र! त्वद्देयानि वसूनि धनानि अस्मे अस्मान् प्रति आ गमन् आगच्छन्तु[3], अस्मभ्यं धनानि देहीत्यर्थः। किञ्च हि यस्मात् अहम् शंसिषम् त्वां स्तौमि, तस्मात् स्वाशिषम् शोभना आशिषो यस्मिन् स स्वाशीः, तं स्वाशिषम् शोभनधनप्रार्थनायुक्तमित्यर्थः, भरम् सर्वस्य जगतो भर्तारं यज्ञं मम सोमिनः सोमसम्पादिनः स्वभूतम् आ याहि आगच्छ। आगत्य च यः त्वम् ईशिषे सर्वस्य, सः त्वम् अस्मिन् अस्मदीये वेदिस्तरणे बर्हिषि आ सत्सि आसीद उपविश। उपविश्य च अनाधृष्या असुररक्षोभिः अभिभवितुमशक्यानि तव स्वभूतानि पात्राणि सोमपात्राणि धर्मणा पानकर्मणा, योजयेति शेषः, पीत्वेत्यर्थः ॥ ५ ॥

**वेङ्कट०** गच्छन्तु मयि धनानि। आ शंसिसम् हि त्वाम् अहम् स्वाशिषम्। यज्ञम् आ याहि सोमिनः[4]। त्वम्[5] ईशिषे धनस्य। सः त्वम् आ सीद अस्मिन् बर्हिषि। तव सोमपात्राणि आधर्षयितुम् अशक्यानि कर्मणा[6] ॥ ५ ॥

[7]इति सप्तमाष्टके अष्टमाध्याये षड्विंशो वर्गः[7] ॥

**पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा।**
**न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः॥ ६ ॥**

पृथक्। प्र। आयन्। प्रथमाः। देवऽहूतयः। अकृण्वत। श्रवस्यानि। दुस्तरा।
न। ये। शेकुः। यज्ञियाम्। नावम्। आऽरुहम्। ईर्मा। एव। ते। नि। अविशन्त। केपयः॥

**उद्गीथ०** हे इन्द्र! तव प्रसादात् पृथक् पृथग्भूता[8] अन्यैः सुकृतिभिः सहेत्यर्थः, प्र आयन् प्रकृष्टया गत्या गताः स्वर्गं प्राप्ता इत्यर्थः, प्रथमाः [9]पूर्वे तव[9] देवहूतयः कर्तरि कृत्। देवानां यागार्थम्[10] आह्वयितारः यष्टार इत्यर्थः। किञ्च अकृण्वत कृतवन्तश्च श्रवस्यानि श्रवणार्हाणि दुष्टरा दुरनुकराणि[11] अन्यैः सुकृतिभिः दुष्प्रापाणीत्यर्थः। किञ्च ये न शेकुः नाऽशक्नुवन् यज्ञियाम् यज्ञमयीम् नावम् आरुहम् आरोढुम् यज्ञमनुष्ठातुमित्यर्थः, ते अयज्वानः

---

१. केनिपातः वि[1] अ[1]; केनपा वि[1]. २. तु. क्राचित्कः निघ. मूको. ३. आगन्तु मूको. ४. स्वामिनम् वि[2] अ[1]; तसांमिनि वि[1]. ५. नास्ति वि[2] अ[1]. ६. °णाम् वि[2] अ[1]; °णः वि[1]. ७-७. नास्ति मूको. ८. स्तुतः वि[1]. ९-९. पूर्वव मूको. १०. योगा° मूको. ११. तु. या ५,२५; °नुमरा° मूको.

तव क्रोधात् ईर्मा एव ईरणेनैव[1] अधोगमनेनैव नि अविशन्त नीचैरविशन्त अधोगतिं गता इत्यर्थः, केपयः कपूयाः दुष्पूया वा अपकर्माण इत्यर्थः ॥ ६ ॥

वेङ्कट० पृथक् [2]प्र गच्छन्ति[2] देवलोकान् प्रथमाः देवहूतयः[3] ये देवानाह्वयन्ति। अकुर्वत श्रवणीयानि यशांसि दुस्तराणि अन्यैः, ये शक्नुवन्ति यज्ञियाम् नावम् आरोढुम्। 'अथ ये नाशक्नुवन् यज्ञियां नावमारोढुम्, ईर्मैव ते न्यविशन्त, इहैव ते न्यविशन्त, ऋणेनैव ते न्यविशन्त, अस्मिन्नेव[4] लोक इति वा' ( या ५,२५ )। केपयः कुत्सितपूयाः शोधनीयकर्माणः ॥ ६ ॥

एवैवापागपरे सन्तु दूढ्योऽश्वा येषां दुर्युज आयुयुज्रे ।
इत्था ये प्रागुपरे सन्ति दावने पुरूणि यत्र वयुनानि भोजना ॥ ७ ॥

एव । एव । अपाक् । अपरे । सन्तु । दुःऽध्यः । अश्वाः । येषाम् । दुःऽयुजः । आऽयुयुज्रे ।
इत्था । ये । प्राक् । उपरे । सन्ति । दावने । पुरूणि । यत्र । वयुनानि । भोजना ॥ ७ ॥

उद्गीथ० एव एव एवमेव यथोक्तप्रकारेण 'न ये शेकुः' ( ऋ १०,४४,६ ) इत्यादिनैव प्रकारेणेत्यर्थः, [5]अपाक् वचनस्य[5] व्यत्ययोऽत्र कर्तव्यः। अपाञ्चः[6] अधोगतय इत्यर्थः, सन्तु तव क्रोधात् भवन्तु अपरे वर्तमानकालीना अपीत्यर्थः। के। दूढ्यः दुर्धियः देवयागं प्रति कुत्सितमतयः अयज्वाना इत्यर्थः। ये कीदृशाः। येषाम् अयज्वनां [7]स्वभूताः अश्वाः[7] दुर्युजः बलवत्त्वात् दुर्योजना अपि सन्तः आ युयुज्रे आभिमुख्येन युज्यन्ते रथेषु भृत्यैः। ये ईश्वराः अपि सन्तो न यजन्ते तवेत्यर्थः। किञ्च इत्था अमुना पूर्वोक्तेन प्रकारेण 'पृथक् प्रायन्' ( ऋ १०, ४४,६ ) इत्यादिनैव प्रकारेणेत्यर्थः, ये उपरे तेऽपि, अपरे वर्तमानकालीना इत्यर्थः। प्राक् सन्ति। प्रागित्यत्र पूर्ववत् लिङ्गवचनव्यत्ययः कार्यः। सन्ति इत्यपि[8] लोडर्थे लट्। प्राञ्चः सन्तु प्रकृष्टगतयो भवन्तु। तव प्रसादात् स्वर्गगामिनो भवन्त्वित्यर्थः। के। यत्र येषु पुरूणि बहूनि वयुनानि भोजना प्रज्ञानानि धनानि च दावने दानाय देवेभ्यो हविर्दानार्थमवस्थितानि न भोगार्थमेवेत्यर्थः[9]। येऽपि वर्तमानकालीनाः देवयाजिनः अस्मदादयः, तेऽपि तव प्रसादात् स्वर्गगामिनो भवन्त्वित्यर्थः ॥ ७ ॥

वेङ्कट० एवम् एव अपाचीनाः[10] [11]सन्तु अपरे, अस्मान् प्रति ये[11] दुर्बुद्धयः, अश्वाः येषाम् दुर्योजाः प्रबला रथेष्वायुज्यन्ते। अथ अमुत्र स्वर्गे भवन्ति, ये प्राक् मरणाद् देवानां दानाय भवन्ति उपरे अस्मिन् लोके, बहूनि यत्र कान्तानि भोजनानि विद्यन्ते ॥ ७ ॥

गिरींरज्रान् रेजमानाँ अधारयद् द्यौः क्रन्ददन्तरिक्षाणि कोपयत् ।
समीचीने धिषणे वि ष्कभायति वृष्णः पीत्वा मद उक्थानि शंसति ॥ ८ ॥

---

१. ईरक्षणेनैव वि[1]; ईक्षणेनैव वि[3]; ईरक्षरेनैव अ. २-२. नास्ति वि[2] अ[1]; प्रयच्छन्ति वि[1]. ३. °वभूत° मूको. ४. °व ते मूको. ५-५. अपात् गवच° मूको. ६. अश्वाचः वि[1]. ७-७. °तान् अश्वान् मूको. ८ वि मूको. ९. भोगतार्थ° मूको. १०. अवा° वि[2] अ[1]. ११-११. सत्वमस्माकं प्रतिभा वि[2] अ[1]; °प्रतिददा वि[2].

गिरीन् । अज्रान् । रेजमानान् । अधारयत् । द्यौः । क्रन्दत् । अन्तरिक्षाणि । कोपयत् ।
समीचीने इति सम्ऽईचीने । धिषणे इति । वि । स्कभायति । वृष्णः । पीत्वा । मदे । उक्थानि । शंसति ॥

**उद्गीथ०** गिरीन् हिमवदादीन् मेघान् वा । कीदृशान् । अज्रान् अजनान्[1] आकाशगामिन इत्यर्थः, रेजमानान् पक्षच्छेदभयात् भीतान् कम्पमानान् वा अधारयत् धारितवान् इन्द्रः पृथिव्याम् अन्तरिक्षे वा निश्चलान् कृतवानित्यर्थः । द्यौः द्युलोकः तन्निवासी वा जनः क्रन्दत् असुरराक्षसेभ्यो भीतः सन् आह्वयति इन्द्रम् आत्मनः परित्राणार्थम् । अन्तरिक्षाणि अनालम्बानपि अन्तरिक्षलोकान् कोपयत् कोपयति सङ्क्षोभयतीत्यर्थः । समीचीने परस्परं सङ्गते धिषणे द्यावापृथिव्यौ वि स्कभायति स्तभ्नाति अन्तरिक्षेण । किञ्च वृष्णः वर्षितॄन् स्वोदकस्य सेक्तॄन् सोमान् पीत्वा मदे सति [2]मत्तः सन्नित्यर्थः,[2] उक्थानि शस्त्राणि शंसति हेतुकर्मकर्तृत्वेन शंसयति वा होतारम् ॥ ८ ॥

**वेङ्कट०** मेघान् गमनशीलान् कम्पमानान् यः अधारयत्[3] । द्यौः भीता क्रन्दति । तथा[4] अन्तरिक्षाणि कोपयत् । समीचीने द्यावापृथिव्यौ अन्तरिक्षेण[5] वि स्कभ्नाति[5] । सोमम् पीत्वा मदे सति प्रशस्यानि[6] वचनानि[7] ब्रवीति ॥ ८ ॥

इमं बिभर्मि सुकृतं ते अङ्कुशं येनारुजासि मघवञ्छफारुजः ।
अस्मिन्त्सु ते सवने अस्त्वोक्यं सुत इष्टौ मघवन् बोध्याभगः ॥ ९ ॥

इमम् । बिभर्मि । सुऽकृतम् । ते । अङ्कुशम् । येन । आऽरुजासि । मघऽवन् । शफऽआरुजः ।
अस्मिन् । सु । ते । सवने । अस्तु । ओक्यम् । सुते । इष्टौ । मघऽवन् । बोधि । आऽभगः ॥

**उद्गीथ०** हे मघवन्! येन अङ्कुशेन आरुजासि आङ् ईषदर्थे । [8]वशीकरणार्थम् ईषत् पीडयसीत्यर्थः[8], शफारुजः शफैः आभिमुख्येन रोक्तॄन् परबलानां हन्तॄन् ऐरावतादीन् हस्तिनः, इमम्[9] अङ्कुशम् सुकृतम् सुसंस्कृतम् ते तव स्वभूतम् अहम् बिभर्मि मदभिमुखं धारयामि यागार्थं त्वामाह्वयन्नात्माभिमुखं करोमि । अधिष्ठितैरावतं गृहीताङ्कुशं च त्वाम् अहं यागार्थम् आह्वयामीत्यर्थः । एतद् ज्ञात्वा आगच्छ । आगतस्य च सतः[10] ते तव इन्द्रस्य अस्मिन् अस्मदीये सु सवने शोभने यज्ञे माध्यन्दिने वा सवने त्वद्भुक्ते अस्तु भवतु ओक्यम् ओक एव ओक्यम् । स्वार्थे यत् । ओको निवासः वेदिलक्षणः । आगत्य वेद्याम् उपविशेत्यर्थः । उपविश्य च सुते अभिषुते सोमे इष्टौ तव सोमेन यागे च सति हे मघवन्! बोधि बुध्यस्व स्तुतीरस्मदीयाः शृण्वित्यर्थः । श्रुत्वा च आभगः आभक्ता भवान् अस्माकं धनं दाने[11] आभिमुख्येन साधिता[12] भव इत्यर्थः ॥ ९ ॥ 'गोभिष्टरेम' इत्यादिमन्त्रद्वयं व्याख्यातार्थम् ।

---

१. अजातान् मूको. २-२. मत्तानित्यसन्नित्यर्थः वि[1]; मत्तानित्यसन्नित्यर्थः वि[2] अ. ३. °यन् मूको. ४. यथा अ[1]. ५-५. विष्टभ्ना° अ[1]. ६. प्रविश° वि[1]. ७. वर्चांसि अ[1]. ८-८. °कारणत्वमीषत् पीडयतीत्यर्थः मूको. ९. नास्ति मूको. १०. वसतः वि[1]. ११. दाने दानेन मूको. १२. बोधिता वि[1]; सेधिता वि[1].

**वेङ्कट०** इमम् बिभर्मि सुकृतम् ते अङ्कुशम् इति स्तुतिमाह। येन आभिमुख्येन रुजसि स्तुतः मघवन्! [1]परेषाम् अश्वान् शफैर्ये आरुजन्ति[1]। अस्मिन् अपि सु[2] सवने भवतु तव निवासः। सुतसोमे यज्ञे मघवन्! बुध्यस्व स्तुतीः आभजनीयः[3] ॥ ९ ॥

गोभिष्टरेमामतिं दुरेवां यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धनान्यस्माकेन वृजनेना जयेम ॥ १० ॥

गोभिः । तरेम । अमतिम् । दुःऽएवाम् । यवेन । क्षुधम् । पुरुऽहूत । विश्वाम् ।
वयम् । राजऽभिः । प्रथमाः । धनानि । अस्माकेन । वृजनेन । जयेम ॥ १० ॥

[ पूर्वं ( ऋ १०,४२,१० ) व्याख्याता ]

बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु ॥ ११ ॥

बृहस्पतिः । नः । परि । पातु । पश्चात् । उत । उत्ऽतरस्मात् । अधरात् । अघऽयोः ।
इन्द्रः । पुरस्तात् । उत । मध्यतः । नः । सखा । सखिऽभ्यः । वरिवः । कृणोतु ॥ ११ ॥

[ पूर्वं ( ऋ १०,४२,११ ) व्याख्याता ]

[4]इति सप्तमाष्टके अष्टमाध्याये सप्तविंशो वर्गः[4] ॥

## [ ४५ ]

[4]वत्सप्रिर्भालन्दन ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[4]।

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥ १ ॥

दिवः । परि । प्रथमम् । जज्ञे । अग्निः । अस्मत् । द्वितीयम् । परि । जातऽवेदाः ।
तृतीयम् । अप्ऽसु । नृऽमनाः । अजस्रम् । इन्धानः । एनम् । जरते । सुऽआधीः ॥ १ ॥

**उद्गीथ०** उत्तरं सूक्तम् 'दिवस्परि' इति द्वादशर्चम् आग्नेयं भालन्दनः वत्सप्रिः[5] ददर्श। दिवः परि प्रथमम्[6] द्युलोकस्योपरि पूर्वम्[7] जज्ञे जातः अग्निः आदित्यात्मना। अस्मत् परि अस्माकमुपरि द्वितीयम् जातः पार्थिवात्मना जातवेदाः उत्पन्नप्रज्ञानोऽग्निः। तृतीयम् अप्सु 'आपः' ( निघ १,२ )

---

१-१. °मश्वा वैर्य ··· रुजति वि[1] अ[1]; °मश्वं छदैयं अरुजन्त वि[2]. २. सुते मूको. ३. °य मूको. ४-४. नास्ति मूको. ५. °प्रीः वि[1]. ६. नास्ति वि[2] अ[1]. ७. प्रथमं पूर्वं वि[2] अ.

इत्यन्तरिक्षनाम अन्तरिक्षे विद्युदात्मना जातोऽग्निः नृमणाः नृषु मनुष्येषु अनुग्राहकत्वेन[1] आसक्तचित्तः। एवंरूपम् एनम् अग्निम् इन्धानः हविर्भिः दीपयन् जरते स्तौति स्वाधीः सुप्रज्ञः, नेतरः दुर्बुद्धिः ॥ १ ॥

**वेङ्कट०** वत्सप्रिर्भालन्दनः। अत्र वाजसनेयकम्—"'दिवस्परि प्रथमं जज्ञे अग्निः' इति। प्राणो वै दिवः प्राणाद् वा एष प्रथममजायत 'अस्मद् द्वितीयं परि जातवेदाः' इति यदेनमदो द्वितीयं पुरुषविधो अजनयत् 'तृतीयमप्सु' इति यदेनमदस्तृतीयमद्भ्योऽजनयद् 'नृमणा अजस्रम्' इति प्रजापतिर्वै नृमणा अग्निरजस्रः 'इन्धान एनं जरते स्वाधीः' इति यो वा एनमिन्धे स एनं जनयते स्वाधीः" ( माश ६, ७,४,३ ) इति ॥ १ ॥

**वि॒द्मा ते॑ अग्ने त्रे॒धा त्र॒याणि॑ वि॒द्मा ते॒ धाम॒ विभृ॑ता पुरु॒त्रा ।**
**वि॒द्मा ते॒ नाम॑ पर॒मं गुहा॒ यद्वि॒द्मा तमु॒त्सं यत॑ आज॒गन्थ॑ ॥ २ ॥**

वि॒द्म । ते॒ । अग्ने॒ । त्रे॒धा । त्र॒याणि॑ । वि॒द्म । ते॒ । धाम॑ । विऽभृ॑ता । पु॒रु॒ऽत्रा ।
वि॒द्म । ते॒ । नाम॑ । प॒र॒मम् । गुहा॑ । यत् । वि॒द्म । तम् । उ॒त्सम् । यतः॑ । आ॒ऽज॒गन्थ॑ ॥ २ ॥

**उद्गीथ०** अग्ने! विद्म जानीमः वयम् ते तव स्वभूतानि त्रेधा त्रिषु स्थानेषु पृथिव्याम् अन्तरिक्षे दिवि च स्थितानि त्रयाणि त्रीणि रूपाणि अग्निवाय्वादित्याख्यानि। विद्म जानीमश्च वयम् ते तव धाम धामानि स्थानानि विभृता विभृतानि पुरुत्रा बहुधा बहूनि वा गार्हपत्याहवनीयान्वाहार्यपचनानि शामित्राग्नीध्रीयधिष्ण्याख्यानि। विद्म जानीमश्च वयम् ते तव नाम परमम् प्रकृष्टं प्रधानम् गुहा गूढं संवृतम् अनिर्ज्ञातम् अवेदविद्भिः[2] यविष्ठ इत्यादिकम् यत् वेदे प्रसिद्धम्। विद्म जानीमश्च वयम् तम् उत्सम् उत्स्यन्दयितारम् उत्पादयितारं विकाराणाम् कारणात्मानम्, यतः आजगन्थ आगतवानसि त्वम् उत्पन्नवानसीत्यर्थः। [3]श्रुतिवचनाद् अण्डादिति[3] केचित् ॥ २ ॥

**वेङ्कट०** अत्र वाजसनेयकम्—"'विद्मा ते अग्ने त्रेधा त्रयाणि' इति। अग्निर्वायुरादित्य एतानि हास्य तानि त्रेधा त्रयाणि 'विद्मा ते धाम विभृता पुरुत्रा' इति यदिदं बहुधा विह्रियते 'विद्मा ते नाम परमं गुहा यद्' इति यविष्ठ इति वा अस्य तन्नाम परमं गुहा 'विद्मा तमुत्सं यत आजगन्थ' इत्यापो वा उत्सोऽद्भ्यो वा एष प्रथममाजगाम" ( माश ६,७,४,४ ) इति ॥ २ ॥

**स॒मु॒द्रे त्वा॑ नृ॒मणा॑ अ॒प्स्व॑१॒॑न्तर्नृ॒चक्षा॑ ईधे दि॒वो अ॑ग्न॒ ऊध॑न् ।**
**तृ॒तीये॑ त्वा॒ रज॑सि तस्थि॒वांस॑म॒पामु॒पस्थे॑ महि॒षा अ॑वर्धन् ॥ ३ ॥**

स॒मु॒द्रे । त्वा॒ । नृ॒ऽमना॑ः । अ॒प्ऽसु । अ॒न्तः । नृ॒ऽचक्षा॑ः । ई॒धे॒ । दि॒वः । अ॒ग्ने॒ । ऊध॑न् ।
तृ॒तीये॑ । त्वा॒ । रज॑सि । त॒स्थि॒वांस॑म् । अ॒पाम् । उ॒पऽस्थे॑ । म॒हि॒षाः । अ॒व॒र्ध॒न् ॥ ३ ॥

---

१. अत्रग्राह॰ मूको. २. वेद॰ मूको. ३-३. ॰नाद्ण्डादिति वि[२] अ; ॰ण्ड:निति वि[१].

उद्गीथ० समुद्रे महोदधौ त्वा त्वाम् अन्तर्गतम्[1] अग्निम् नृमणाः नृषु मनुष्येषु अनुग्राह्येषु अनुग्राहकत्वेनाऽऽसक्तमनाः वरुणः अप्सु अन्तः अपां मध्ये ईधे सन्दीपितवान् वाडवात्मना स्थितम्। किञ्च हे अग्ने! त्वाम् नृचक्षाः नृणां कृताकृतप्रत्यवेक्षणार्थं द्रष्टा आदित्यश्च ईधे सन्दीपितवान्। क्व। दिवः सम्बन्धिनि[2] ऊधन् ऊधनि रसाधारत्वाद् ऊधःस्थानीये आदित्यमण्डले यज्ञे वा। किञ्च तृतीये त्रयाणां पूरणे रजसि लोके अपाम् वृष्टिलक्षणानाम् उपस्थे उपगम्य आसनस्थाने अन्तरिक्षे त्वा त्वामग्निम् तस्थिवांसम् स्थितवन्तं विद्युद्रूपम् महिषाः[3] महान्तः स्तोतारः माध्यमिका देवगणा मरुदादयः अवर्धन् अवर्धयन्त[4] स्तुतिभिः ॥ ३ ॥

वेङ्कट० अत्र वाजसनेयकम्—" 'समुद्रे त्वा नृमणा अप्स्वन्तः' इति प्रजापतिर्वै नृमणा अप्सु त्वा[5] प्रजापतिरित्येतद् 'नृचक्षा[6] ईधे दिवो अग्न ऊधन्' इति प्रजापतिर्वै नृचक्षा आपो दिव ऊधः 'तृतीये त्वा रजसि तस्थिवांसम्' इति द्यौर्वै तृतीयं रजः 'अपामुपस्थे महिषा अवर्धन्' इति प्राणा वै[7] महिषा दिवि त्वा प्राणा अवर्धन्नित्येतत्" ( माश ६,७,४,५ ) इति ॥ ३ ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद् वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ ४ ॥

अक्रन्दत् । अग्निः । स्तनयन्ऽइव । द्यौः । क्षाम । रेरिहत् । वीरुधः । सम्ऽअञ्जन् ।
सद्यः । जज्ञानः । वि । हि । ईम् । इद्धः । अख्यत् । आ । रोदसी इति । भानुना । भाति । अन्तरिति ॥४॥

उद्गीथ० दावरूपः स्तूयते। अक्रन्दत् क्रन्दनेन आह्वानेन अत्र शब्दमहत्त्वं लक्ष्यते[8]। क्रन्दति महान्तं शब्दं करोतीत्यर्थः, अग्निः दावरूपः[9]। किमिव। स्तनयन् इव द्यौः यथा स्तनयन् द्यौः दीप्तो विद्युद्रूपः पर्जन्यः महान्तं शब्दं करोति, एवम्। किमन्यत् कुर्वन् तत् करोति। उच्यते—क्षाम क्षामायां पृथिव्याम् अटव्यामित्यर्थः, रेरिहत् आस्वादयन् वीरुधः ओषधीः समञ्जन् प्रदेशान्तरेण सङ्गच्छमानश्च, इतश्चेतश्च धावंश्चेत्यर्थः। अथवा क्षामाम् आस्वादयन् सन्तर्पयन्नित्यर्थः, वीरुधश्च [10]सम्प्रक्षयन् सन्तापयन्नित्यर्थः[10]। किञ्च सद्यः समाने काले एकेन क्षणेनेत्यर्थः[11], जज्ञानः जायमानः इद्धः दीप्तः वि अख्यत् दग्धव्यं वस्तु विविधं पश्यतीत्यर्थः। ईम् हि इति पदपूरणौ। किञ्च रोदसी अन्तः द्यावापृथिव्यौ अन्तरेण भानुना स्वदीप्त्या आ भाति मर्यादया दीप्यते ॥ ४ ॥

वेङ्कट० अत्र[12] वाजसनेयकम्—" 'अक्रन्ददग्निः स्तनयन्निव द्यौः' इति क्रन्दतीव[13] हि पर्जन्यः स्तनयन्[14] 'क्षामा रेरिहद् वीरुधः समञ्जन्' इति क्षामा[15] वै पर्जन्यो रेरिह्यमाणो[16] वीरुधः समनक्ति 'सद्यो जज्ञानो वि हीमिद्धो अख्यद्' इति सद्यो वा एष जज्ञान इदं सर्वं विख्यापयति 'आ रोदसी भानुना भात्यन्तः'

---

१. अन्तम् मूको. २. सम्बन्धीनि मूको. ३. हविषा मूको. ४. °यन्ति मूको. ५. तदा मूको. ६. नृच क्षुश्रा वि[२] अ[१]. ७. वैव मूको. ८. वक्ष्यते मूको. ९. देवरूपः मूको. १०-१० संप्रक्षपवन् सन्तर्प° मूको. ११. लक्षणेने° मूको. १२. नास्ति वि[१]. १३. क्रन्दवती वि[२] अ[१]; क्रन्दतीम वि[१]. १४-१४. °यन्निव द्यौः मूको. १५. क्षाम मूको. १६. रेरु° मूको.

इतीमे वै द्यावापृथिवी रोदसी ते एष भानुनाऽऽभाति” ( माश ६,७,३,२ ) इति वैद्युतस्य स्तुतिः, यद्वेयं दावाग्नेः[१] स्तुतिरिति ॥ ४ ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ ५ ॥

श्रीणाम् । उत्ऽआरः । धरुणः । रयीणाम् । मनीषाणाम् । प्रऽअर्पणः । सोमऽगोपाः ।
वसुः । सूनुः । सहसः । अप्ऽसु । राजा । वि । भाति । अग्रे । उषसाम् । इधानः ॥ ५ ॥

**उद्गीथ०** श्रीणाम् विभूतीनाम् उदारः उद्गमयिता दातेत्यर्थः । अथवा श्रीणां सेवनीयानां देवानां मध्ये उदारो दाता धनानाम् । आरेति प्रतोदाग्रे निखातं तुदनसाधनं लोहमयमुच्यते । उद्धृता आरास्थानीयाः प्रार्थना यतः स उदारः परेङ्गितं ज्ञात्वा अप्रार्थित एव दाता । श्रयणीयानां देवानां मध्ये पराभिप्रायं ज्ञात्वा अप्रार्थित एव धनानां दाता अग्निरित्यर्थः । धरुणः धारयिता च रयीणाम्, धनानाम्[२] ईश्वरश्चेत्यर्थः । न च[३] स्वाभिमतानां धनानां दाता । किं तर्हि । मनीषाणाम् मनसा अभीप्सितानाम् अर्थानाम् प्रार्पणः प्रापयिता सोमगोपाः सोमस्य [४]गोपायिता रक्षः[४] आदित्यः[५] । किञ्च वसुः धनम् अग्निः धनवदुपभोग्य इत्यर्थः । प्रशस्तो वा । आच्छादयिता वा सर्वस्य स्वतेजसा । सूनुः सहसः बलस्य पुत्रः बलेन मथ्यमानो जायते यस्मात् । अप्सु राजा अपां मध्ये दीपिता विद्युदात्मना । किञ्च वि भाति विविधं दीप्यते अग्रे उपरीत्यर्थः । कस्य । उषसाम् । इधानः इध्यमानोऽग्निहोत्रार्थः ॥ ५ ॥

**वेङ्कट०** श्रीणाम् उद्गमयिता धारकः रयीणाम्[६] अभिलषितानां प्रापकः सोमगोप्तृकः वासयिता सहसः सूनुः [७]अप्सु स्थितः[७] राजा [८]वि भाति[८] उषसाम् अग्रे समिध्यमानः ॥ ५ ॥

विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीळुं चिदद्रिमभिनत् परायञ्जना यदग्निमयजन्त पञ्च ॥ ६ ॥

विश्वस्य । केतुः । भुवनस्य । गर्भः । आ । रोदसी इति । अपृणात् । जायमानः ।
वीळुम् । चित् । अद्रिम् । अभिनत् । पराऽयन् । जनाः । यत् । अग्निम् । अयजन्त । पञ्च ॥ ६ ॥

**उद्गीथ०** यच्छब्दसम्बन्धात् चतुर्थे पादे व्याख्याप्रारम्भः कार्यः । पञ्च जनाः निषादपञ्चमाः[९] वर्णाः यत् यदा अग्निम् अयजन्त स्तुतिभिः हविर्भिश्च पूजयन्ति कर्मणा [१०]कुर्वन्ति वा[१०], तदा विश्वस्य सर्वस्य यज्ञस्य केतुः कर्ता पताकास्थानीयो वा प्रज्ञाभूतो वा सर्वस्य अग्निः[११] भुवनस्य भूतजातस्य गर्भः गर्भभूतश्च अन्तर्वर्तित्वात् रोदसी द्यावापृथिव्यौ[१२] आ अपृणात् आपूरयति स्वतेजसा

---

१. देवा° मूको. २. जनानाम् मूको. ३. व मूको. ४-४. गोपयिता ऋक्षः मूको. ५. आदिभ्यः मूको. ६. रमणीयाम् वि[२]; रमणीयम् अ[१]. ७-७. नास्ति वि[२] अ[१]. ८-८. पिभा° वि[२] अ[१]; बिभर्ति वि[१]. ९. पञ्चमा मूको. १०-१०. कुर्वन्निव मूको. ११. अग्निं मूको. १२. °व्योः मूको.

जायमानः ज्वालारूपो भवन्नित्यर्थः। किञ्च वीळुम् चित् दृढमपि अद्रिम् मेघं पर्वतं वा अभिनत् भिनत्ति वेगेन परायन् हविरादाय देवान् प्रति गच्छन् ॥ ६ ॥

**वेङ्कट०** विश्वस्य प्रज्ञापकः उदकस्य गर्भः आ पूरयति द्यावापृथिव्यौ जायमानः, दृढम् अपि मेघम् भिनत्ति परायन् परागच्छन्, यदा एनम् अग्निम् पञ्च जनाः यजन्ते[1] ॥ ६ ॥

[2]इति सप्तमाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[2] ॥

उ॒शिक् पा॑व॒को अ॑र॒तिः सु॑मे॒धा मर्ते॑ष्व॒ग्निर॒मृतो॒ नि धा॑यि ।
इय॑र्ति धू॒मम॑रु॒षं भरि॑भ्र॒दुच्छु॒क्रेण॑ शो॒चिषा॒ द्यामिन॑क्षन् ॥ ७ ॥

उ॒शिक् । पा॒व॒कः । अ॒र॒तिः । सु॒ऽमे॒धाः । मर्ते॑षु । अ॒ग्निः । अ॒मृतः॑ । नि । धा॒यि ।
इय॑र्ति । धू॒मम् । अ॒रु॒षम् । भरि॑भ्रत् । उत् । शु॒क्रेण॑ । शो॒चिषा॑ । द्याम् । इन॑क्षन् ॥ ७ ॥

**उद्गीथ०** उशिक् 'वश कान्तौ' इत्यस्य इजिक्प्रत्यये[3] परतः सम्प्रसारणे कृते उशिगिति भवति रूपम्। सर्वस्य कान्तः कामयिता वा हविषां स्तुतीनाञ्च मेधावी पावकः शोधयिता सर्वस्य अरतिः[4] हविरादाय गन्ता च देवान् प्रति निर्भर्त्संयिता वा। अत्र आङुपसर्गो द्रष्टव्यः; आरतिः[5] आरणः[6] आरयिता वा भूतानाम् सुमेधाः सुमतिश्च मर्त्येषु मनुष्येषु अग्निः अमृतः नित्यः नि धायि निहितः स्थापितः प्रजापतिना कर्मार्थम्। निहितश्च सन् उत् इयर्ति धूमम् अरुषम् आरोचनवर्णम् भरिभ्रत् अत्यर्थं धारयन् जगत्। 'इतो वा अयमूर्ध्वं रेतः सिञ्चति धूमं साऽमुत्र वृष्टिर्भवति' ( माश ७,४,२,२२ ) इति श्रुतेः। शुक्रेण शुक्लेन शोचिषा दीप्त्या द्याम् दिवम् इनक्षन् गच्छन् व्याप्नुवन् वा ॥ ७ ॥

**वेङ्कट०** कामयमानः शोधकः गन्ता सुप्रज्ञः मरणधर्मसु[7] अग्निः मनुष्येषु अमृतः नि-हितः। सोऽयं प्रेरयति धूमम् आरोचमानं रूपं धारयन्। उत् गच्छति शुक्रेण शोचिषा द्याम् व्याप्नुवन् ॥ ७ ॥

दृ॒शा॒नो रु॒क्म उ॒र्व्या व्य॑द्यौद् दु॒र्मर्ष॒मायुः॑ श्रि॒ये रु॑चा॒नः ।
अ॒ग्निर॒मृतो॑ अभव॒द्वयो॑भि॒र्यदे॑नं॒ द्यौर्ज॒नय॑त् सु॒रेताः॑ ॥ ८ ॥

दृ॒शा॒नः । रु॒क्मः । उ॒र्व्या । वि । अ॒द्यौ॒त् । दुः॒ऽमर्ष॑म् । आयुः॑ । श्रि॒ये । रु॒चा॒नः ।
अ॒ग्निः । अ॒मृतः॑ । अ॒भ॒व॒त् । वयः॑ऽभिः । यत् । ए॒न॒म् । द्यौः । ज॒नय॑त् । सु॒ऽरेताः॑ ॥ ८ ॥

**उद्गीथ०** दृशानः सर्वजनैः दृश्यमानः रुक्मः रोचनशीलः उर्विया उरुप्रातिपदिकात् प्रथमैकवचनस्य छान्दसोऽयम् इयादेशः। क्रियाविशेषणं चैतत् दुर्मर्षम् इति च। उर्विया उरु विस्तीर्णं दुर्मर्षं[8] दुरभिभवं च वि अद्यौत्[9] विविधं दीप्यते अग्निः आयुः हविरादाय देवेषु गन्ता।

---

१. यतन्ते मूको. २-२. नास्ति मूको. ३. जिक्प्रत्यये मूको. ४. अरार्ति मूको. ५. अरति मूको. ६. आरमन्नम् वि[2] अ[1]. ७. °णधर्माणेषु वि[2] अ[1]; मरणाधर्मिंषु वि[1]. ८. दुर्विषम् मूको. ९. नास्ति मूको.

किं व्यर्थं[1] दीप्यमानो विविधं दीप्यते। न। किं तर्हि। श्रिये रुचानः यजमानजनस्य दृष्टादृष्टश्र्यर्थं दीप्यमानः। किञ्च अग्निः अमृतः अमरणधर्मा अभवत् भूतः वयोभिः हविरन्नैः उपयुक्तैः। कस्मात् कारणाद् अग्निः हविरन्नैः अमृतो जातः। उच्यते— यत् यस्मात् एनम् अग्निम् द्यौः जनयत् जनितवती सुरेताः शोभनबीजविशिष्टाभिजातबान्धववत्वादित्यर्थः। विशिष्टाभिजनवन्तः [2]एभिर्हि वह्निभिः[2] अमृतत्वहेतुहविरन्नम् अदन्ति, नेतरे दुर्जातयः। एवम् अत्र अभिजनेन अमृतत्वेन च भवन्नत्वेन[3] च अग्निः स्तूयते ॥ ८ ॥

**वेङ्कट०** दृश्यमानः रोचमानः अत्यन्तं वि द्योतते। [4]दुर्धरम् अस्य आयुः[4] श्रिये च रोचते। सोऽयम् अग्निः अमृतः अभवत् वयोभिः अन्नैर्वनस्पतिभिः। यत् एनम् प्राणो जनयति [5]आदित्यो वा[5] सुरेतस्कः ॥ ८ ॥

यस्ते॑ अ॒द्य कृ॒णव॑द्भद्रशोचेऽपू॒पं दे॑व घृ॒तव॑न्तमग्ने ।
प्र तं न॑य प्रत॒रं वस्यो॒ अच्छा॒भि सु॒म्नं दे॒वभ॑क्तं यविष्ठ ॥ ९ ॥

यः । ते॒ । अ॒द्य । कृ॒णव॑त् । भ॒द्र॒ऽशो॒चे॒ । अ॒पू॒पम् । दे॒व॒ । घृ॒तऽव॑न्तम् । अ॒ग्ने॒ ।
प्र । तम् । न॒य॒ । प्र॒ऽत॒रम् । वस्यः॑ । अच्छ॑ । अ॒भि । सु॒म्नम् । दे॒वऽभ॑क्तम् । य॒वि॒ष्ठ॒ ॥ ९ ॥

**उद्गीथ०** यः मनुष्यः अस्मदादिकः ते तव अर्थाय अद्य अस्मिन्नहनि कृणवत् करोति हे भद्रशोचे! कल्याणदीप्ते! अपूपम् पुरोडाशम्, हविः निर्वपतीत्यर्थः, हे देव! घृतवन्तम् अभिघारणाज्येन तद्वन्तं हे अग्ने! तम् देवभक्तम् देवानां स्तुतिभिः हविर्भिश्च सम्भक्तारम् सेवितारम् प्र नय प्रापय प्रतरम् प्रकृष्टतरं स्वर्गदेशम्। किमर्थम्। वस्यः अच्छ वसून्याप्तुं[6] स्वधनानि प्राप्तुम् अभि सुम्नम् आभिमुख्येन सुखं च प्राप्तुम् यविष्ठ! युवन्! अयोग्यकर्मणा आत्मनोऽमिश्रयितृतम! वा ॥ ९ ॥

**वेङ्कट०** यः तुभ्यम् अद्य करोति कल्याणदीप्ते! पुरोडाशम् देव! घृतवन्तम् अग्ने!, तम् [7]प्र नय† प्रकृष्टतरं वसीयः‡ प्रति, तथा अभि नय सुखम् देवानां भक्तम् इमम् यविष्ठ![7] ॥ ९ ॥

आ तं भ॑ज सौश्रव॒सेष्व॑ग्न उ॒क्थउ॑क्थ॒ आ भ॑ज श॒स्यमा॑ने ।
प्रि॒यः सूर्ये॑ प्रि॒यो अ॒ग्ना भ॑वा॒त्युज्जा॒तेन॑ भि॒नद॒दुज्जनि॑त्वैः ॥ १० ॥

आ । तम् । भ॒ज॒ । सौ॒श्र॒व॒सेषु॑ । अ॒ग्ने॒ । उ॒क्थेऽउ॑क्थे । आ । भ॒ज॒ । श॒स्यमा॑ने ।
प्रि॒यः । सूर्ये॑ । प्रि॒यः । अ॒ग्ना । भ॒वा॒ति॒ । उत् । जा॒तेन॑ । भि॒नद॑त् । उत् । जनि॑ऽत्वैः ॥ १० ॥

**उद्गीथ०** यः[8] पूर्वोक्तः अपूपकारी यजमानः तम् एव आ भज दृष्टफलदानेन मर्यादया सेवस्व

---

१. व्यत्यर्थं मूको.　२-२. एभि हि वहि वि[1]; एहि वहि वि[2] अ[1].　३. भवान्नत्वेन मूको.
४-४. दुर्मरस्यायुः वि[1]; दुर्मारमस्या वि[2] अ[1].　५-५. °त्यो चा वि[2]; आरोचा अ[1]; पा वि[1].　६. वसून्याप्तुम् मूको.　७-७. नास्ति वि[1].　† यत वि[2] अ[1].　‡ प्रसीय वि[2] अ[1].　८. जनवन् मूको.

सौश्रवसेषु शोभनानि श्रवांसि अन्नानि येषु यागकर्मसु तानि सौश्रवसानि तेषु सौश्रवसेषु यागकर्मसु क्रियमाणेषु हे अग्ने! उक्थे-उक्थे शस्त्रे-शस्त्रे च शस्यमाने आ भज आसेवस्व इष्टफलदानेनैव। किञ्च प्रियः सूर्ये सूर्यस्य भवाति भवतु तव प्रसादात्। प्रियः अग्नेः[1] तव भवतु। लोडर्थे लट्। किंच उत् भिनदत् भिद्यतां[2] दूर्वादिवद् विसर्पत्वित्यर्थः, जातेन जनित्वैः जनिष्यमाणैश्च पुत्रपौत्रादिभिः ॥ १० ॥

**वेङ्कट०** [3]आ भज तम् अग्ने! सौश्रवसेषु सुश्रवोभिर्युक्तेषु[†][3] कर्मसु। तथा उक्थे-उक्थे आ भज शस्यमाने। सोऽयं स्तोता प्रियः भवतु सूर्ये, प्रियः च अग्नौ। सोऽयम् जातेन पुत्रेण जनिष्यमाणैः च उत् भिनदत् शत्रून् ॥ १० ॥

त्वाम॑ग्ने यज॑माना अनु॒ द्यून् विश्वा॒ वसु॑ दधिरे॒ वार्या॑णि ।
त्वया॑ स॒ह द्रवि॑णमि॒च्छमा॑ना व्र॒जं गोम॑न्तमु॒शिजो॒ वि व॑व्रुः ॥ ११ ॥

त्वाम् । अ॒ग्ने॒ । यज॑मानाः । अनु॑ । द्यून् । विश्वा॑ । वसु॑ । द॒धि॒रे॒ । वार्या॑णि ।
त्वया॑ । स॒ह । द्रवि॑णम् । इ॒च्छमा॑नाः । व्र॒जम् । गोऽम॑न्तम् । उ॒शिजः॑ । वि । व॒व्रुः ॥ ११ ॥

**उद्गीथ०** हे अग्ने! त्वाम् प्रति यजमानाः अनु द्यून् प्रत्यहम् विश्वा सर्वाणि नानाजातीयानि चरुपुरोडाशाज्यादीनि वसु वसूनि धनानि हविर्लक्षणानि वार्याणि वरणीयानि दधिरे दधति[4] धारयन्ति, त्वय्यग्नौ जुह्वतीत्यर्थः[5]। हुत्वा च अनन्तरम् त्वया अग्निना सह द्रविणम् धनं स्वर्गसुखलक्षणम् अनुभवितुम् इच्छमानाः इच्छन्तः सन्तः व्रजम् व्रजितारं नभसि सदा गन्तारम् आदित्यम् गोमन्तम् रश्मिमन्तम् उशिजः मेधाविनो यजमानाः वि वव्रुः विवृण्वन्ति विवृतमण्डलद्वारं[6] कुर्वन्ति अनुप्रवेशार्थम्, रश्मिमण्डलव्यतिरिक्तम् आन्तरपुरुषम् अनुप्रविशन्तीत्यर्थः। अथवा ऐतिहासिकपक्षे उत्तरोऽर्धो व्याख्यायते भिन्नवाक्यत्वेन। किञ्च त्वया अग्निना सह द्रविणं धनं देवहविर्लक्षणम् असुरैरपहृतम् अन्विष्यमाणा[7] व्रजं दुर्गपर्वतस्थं गोष्ठं गोमन्तं गोसहितम् उशिजः मेधाविनः। के। अङ्गिरस ऋषयः इन्द्रस्य सखायः वि वव्रुः असुरान् पराजित्य गोस्वीकरणार्थं विवृतद्वारं कृतवन्त इत्यर्थः ॥ ११ ॥

**वेङ्कट०** त्वाम् अग्ने! [8]यजमानाः दिवसेषु[8] विश्वानि वसूनि धारयन्ति रमणीयानि। त्वया सह असुरैरपहृतं गोधनम् इच्छमानाः गोमन्तम् व्रजम् देवाः वि वव्रुः ॥ ११ ॥

अस्ता॑व्य॒ग्निर्न॒रां सु॒शेवो॑ वैश्वान॒र ऋषि॑भि॒ः सोम॑गोपाः ।
अ॒द्वे॒षे द्यावा॑पृथि॒वी हु॑वेम॒ देवा॑ ध॒त्त र॒यिम॒स्मे सु॒वीर॑म् ॥ १२ ॥

अस्ता॑वि । अ॒ग्निः । न॒राम् । सु॒ऽशेवः॑ । वै॒श्वा॒न॒रः । ऋषि॑ऽभिः । सोम॑ऽगोपाः ।
अ॒द्वे॒षे इति॑ । द्यावा॑पृथि॒वी इति॑ । हु॒वे॒म॒ । देवाः॑ । ध॒त्त । र॒यिम् । अ॒स्मे इति॑ । सु॒ऽवीर॑म् ॥ १२ ॥

---

१. अग्ने हे मस्व वि[२] अ[१]. २. नास्ति वि[१]; भिद्यतोम वि[२] अ. ३-३. नास्ति वि[१]. † °श्रवोनिरुक्ते° वि[२] अ[१]. ४. दधन्ति मूको. ५. सतीत्यर्थः वि[१]. ६. °तमलद्वा° मूको. ७. अन्वेष्यमा° मूको. ८-८. °मानानामुदकेषु मूको.

**उद्गीथ०** अस्तावि स्तुतः अग्निः नराम् मनुष्याणाम् सुशेवः बहूपकारित्वात् सुसुखः वैश्वानरः विश्वेषां नराणां नेता कर्मसु प्रवर्तयिता विश्वैर्वा नरैः यागार्थं नीयमानः विश्वानरस्य वा अपत्यभूतः ऋषिभिः अस्माभिः सोमगोपाः सोमस्य रक्षिता रक्षः आदित्यः । इदानीं कृतकृत्याः सन्तो वयम् अद्वेषे द्वेषरहिते अस्माकमुपरि परस्परतो वाऽद्वेषे[1] द्यावापृथिवी हुवेम [2]आह्वयामः नः श्रेयसे[2] दृष्टादृष्टफलप्रदानायास्मभ्यम् । यूयमपि हे देवाः! कर्माङ्गदेवाः! अग्निसहिताः धत्त दत्त रयिम् धनं दृष्टादृष्टफललक्षणम् अस्मे अस्मभ्यम् सुवीरम् सुपुत्रसहितम् ॥ १२ ॥

इति वनवासीविनिर्गताचार्योद्गीथस्य कृतावृग्वेदभाष्ये षट्पञ्चाशोऽध्यायः ॥

**वेङ्कट०** स्तुतः अग्निः मनुष्याणां सुसुखः वैश्वानरः ऋषिभिः अस्माभिः, यः सोमेन रक्ष्यते । द्वेषवर्जिते[3] द्यावापृथिवी[4] हुवेम[5] । देवाः! यूयम् अपि नि-धत्त रयिम् अस्मासु सुपुत्रमिति ॥१२॥

[6]इति सप्तमाष्टके अष्टमाध्याये एकोनत्रिंशो वर्गः[6] ॥

ऋगर्थदीपिका चेयं[7] सप्तमश्चायमष्टकः ।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥

इति श्रीवेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने सप्तमाष्टके अष्टमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये सप्तमाष्टके अष्टमोऽध्यायः ॥

## सप्तमोऽष्टकः समाप्तः ॥



१. वाद्यते मूको. २-२. °ह्वयामानाश्रय वि[1]; °ह्वयामनश्रय वि[2] अ. ३. °तो वि[2] अ[1]. ४. °व्यि ··· वि[2]; °थिव्यौ अ[2]. ५ भुवेम वि[2] अ[2]; हुवेव वि[1]. ६-६. नास्ति मूको. ७. सेयं वि[1].

# शोधपत्रम्[1]

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २९४६ | ३ | अष्टा° | अष्टा° |
| २९४७ | १ | आजि° | आजी° |
| ,, | १७ | अभियमाणः | अभिपूयमाणः |
| २९५० | १९ | ईळेन्युः | ईळेन्युः |
| २९५७ | १५ | द्यलोकस्य | द्युलोकस्य |
| २९६७ | २२ | २. नास्ति मृको. | २. नास्ति वि[1,2] अ[1]. |
| २९८२ | १ | °र्ण्यप्रति । | °र्ण्यप्रति । |
| ,, | १५ | पवमान । | पवमान । |
| २९८४ | १६ | आदितेः । | अदितेः । |
| २९८९ | ११ | इन्द्रो | इन्दो |
| २९९५ | ८ | [5]प्रभुवसु° | [5]प्रभूवसु° |
| २९९७ | २३ | अ[1]; °ति वि[1]. | अ[1]. |
| ३००० | ३ | बहुसङ्ख्य° | बहुसङ्ख्य° |
| ,, | १२ | पष्ठा° | षष्ठा° |
| ३००६ | २ | जुष्टः | × |
| ३०२४ | १८ | वरिऽवंत् । | वीरऽवंत् । |
| ३०२५ | ९ | उत्ऽतमे । | उत्ऽतमे । |
| ३०२९ | ५ | गणानाः । | गृणानाः । |
| ३०३० | २३ | १. °मानः | १. °मान |
| ३ ३९ | १८ | प्रियः | प्रियः |
| ३०४९ | २ | त्वायत्त° | त्वदायत्त° |
| ,, | २१ | [13]दुच्छुनाम् । | दुच्छुनाम्[13] । |
| ,, | २३ | २. तदायत्त° वि[2]. अ[1]. | २. तदायत्त° वि[2] अ[1]; त्वायत्त वि[1]. |
| ३०५० | १७ | सत्यम्[12] महत् | सत्यम् महत्[12] |
| ३०५७ | १३ | शब्दवन्तः[4] | शब्दवन्तः |
| ,, | ,, | सोमरसं | सोमरसं[4] |
| ३०५९ | २ | वर्धयमानं | वर्धमानं |
| ३०६१ | २१ | ईरते । | ईरते । |
| ३०६४ | २१ | एति । | एति । |
| ३०६९ | १८ | शब्दायन् | शब्दयन् |
| ३०७४ | ५ | जिह्वाग्रे[2] | जिह्वाग्रम्[2] |
| ३०७६ | २० | पवमान | पवमान |
| ३०८१ | १७ | 'युद्धं प्रवि° | युद्धं 'प्रवि° |
| ३०८९ | २१ | नृऽशंसः | नृऽशंसः |
| ३०९३ | १२ | गृणीहीति | गृणीहीति[4] |
| ३०९७ | २२ | शब्दायन्तम् | शब्दयन्तम् |
| ३०९९ | ५ | च | च[1] |
| ,, | २६ | स्थापियं वि[2] अ[1]; | × |
| ३१०२ | २३ | अशि° | अशि° |
| ३१०३ | १५ | स्तोतृणाम्[5] | स्तोतृणाम् |
| ,, | ,, | प्रवर्द्धयिता | प्रवर्द्धयिता[5] |
| ३१०४ | १६ | पवसे | पवसे |
| ३११६ | १७ | °न्दिताः | °न्दिता |
| ३११९ | २२ | असोढा | असोढः |
| ३१२८ | १० | निर- | निर्- |
| ३१४२ | ४ | अवरान् | अवरान् । |
| ३१४४ | १७ | सुऽमतिम् । | सुऽमतिम् । |
| ३१४६ | १५ | रश्मिम् | रश्मिम् |
| ,, | २१ | यन्ति गो° | यन्ति गो° |
| ३१४८ | १२ | मुष्णातिना | मुष्णातिना |
| ३१५१ | ९ | भरण्याणि | × |
| ३१५४ | २६ | सूयमानः वि[1]. | × |
| ३१६३ | १४ | प्रथमं[3] | प्रथमं[13] |
| ,, | १६ | स[13] | स |
| ३१६५ | ४ | समुद्र° | समुद्द्र° |
| ३१६९ | १ | °स्पृहम् | °स्पृहम् |
| ,, | ३ | मंहिष्टम्[3] | मंहिष्ठम् |
| ,, | १७ | [10]°भूतकाय इव[10]° | भूतकाय इव |
| ,, | २५ | १०-१० 'कायेव वि[2] अ[1]. | × |
| ३१७८ | १५ | तिरः । | तिरः । |
| ,, | २४ | °च्छति | °च्छसि |

१. × इत्येतच्चिह्न-परामृष्टः पाठो नेष्टः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१८० | २२ | तपन्तम् । | तपन्तम् । |
| ३१८६ | २ | इति | इति[३] |
| ३१८७ | ११ | विधर्मिणि | विधर्मणि |
| ,, | २१ | उरुकुर्वाणः | उरु कुर्वाणः |
| ३१८९ | ४ | श्रिय° | श्रीय° |
| ,, | १९ | श्रिय° | श्रीय° |
| ,, | २३ | सक्षणिः | सक्षणिः |
| ३१९२ | १५ | ऊर्भिः | ऊर्मिः |
| ३१९३ | १६ | शोध्यते | शोध्यसे |
| ३१९४ | १६ | जरतीऽभिः | जरतीभिः |
| ३१९६ | ४ | सोमै । | सोमैं । |
| ३१९९ | ९ | ते[३] | ते |
| ,, | ,, | तेन | तेन[३] |
| ३२०१ | १७ | अर्थ | अर्धं |
| ३२०९ | ९ | मित्वा । | मित्वा । |
| ३२१५ | ४ | रक्षाभिः[२] | रक्षाभिः |
| ,, | ५ | दीप्तिभिः | दीप्तिभिः[२] |
| ,, | ,, | °वेष्ठितः | °वेष्टितः |
| ३२२२ | ७ | बुबुधे[४] असुरैः | बुबुधेऽसुरैः[४] |
| ,, | २२ | °त्रमा | °त्रेमा |
| ,, | २६ | विबुधैः | विबुधैः सुरैः |
| ३२२३ | १९ | अप्येकस्य | अप्येकस्य |
| ३२२४ | २३ | गोपयिता | गोपायिता |
| ३२२५ | १ | मेधः | × |
| ,, | २१ | त्रितः | त्रितः |
| ३२२७ | ९ | °चक्राणः । | °चक्राणः । |
| ३२२८ | १५ | इह । | इह । |
| ३२२९ | १२ | यापन° | यावन° |
| ,, | २३ | दशे | दृशे |
| ३२३० | १५ | आत्मानो | आत्मनो |
| ३२३२ | ३ | भवति[१] । यमी भवती | भवति यमी भवती । |
| ,, | २६ | चित्तमनुचित्तं | चित्तमनु चित्तं |
| ,, | ३० | १ भवति वि[१,२]; भवाति मूको. | × |
| ३२३४ | ११ | [६]सहस्रयुगलभूतौ अवासयत्[६] | [६]सह युगलभूतौ वासयन्[६] |
| ३२३४ | ३० | ६-६. °तो वि[२] अ[१]; °तौवास° वि[१]. | ६-६. सहस्रयुगलभूतौ (°तो वि[२] अ[१]) वास° मूको. |
| ३२३५ | ४ | योमौ | योनौ |
| ,, | २१ | यम | उद्गीथ° यम |
| ३२३७ | २७ | °चरा | °चरी |
| ३२३८ | १ | दुखम् | दुःखम् |
| ३२३९ | १५ | सुऽभद्रांम् | सुऽभद्राम् |
| ३२४३ | ७ | °ज्य.तिर्दी° | °ज्योतिर्दी° |
| ,, | १५ | ‘दुवेपृ | ‘दुवेपृ |
| ३२४४ | २० | अस्माकन् | अस्मान् |
| ३२४९ | ७ | [६]यस्मिश्च | [६]यास्मिंश्च |
| ३२५५ | ५ | °भृतिः[१] | °भृतिभिः[१] |
| ,, | २३ | यम्! | यम! |
| ३२५६ | ८ | सोम्यासः । | सोम्यासः । |
| ३२५७ | १३ | । रक्षांसि पिशाचाश्च | रक्षांसि! पिशाचाः! च । |
| ,, | १४ | प्रयच्छति[८] | प्रयच्छतु[८] |
| ३२५८ | ३ | श्वानौ । | श्वानौ । |
| ,, | ९ | दशये | दृशये |
| ३२५९ | २५ | °चरा | °चरी |
| ३२६० | ३ | अवरे[२] [३]उत्तिष्ठन्तु। पराः[३] तिष्ठन्तु[४] | अवरे[२]। [३]उत्तिष्ठन्तु पराः[३]। उत्तिष्ठन्तु[४] |
| ३२६१ | ७ | इह | इह |
| ,, | ,, | तेंऽवत्व° | तेंऽवन्त्व° |
| ३२६५ | ५ | श्रूतम् | शृतम् । |
| ,, | १९ | श्रृतम्। | शृतम् । |
| ३२६६ | १४ | सामर्थ्यात् | सामर्थ्यात् |
| ३२७६ | १६ | त्वाम् | त्वम् |
| ३२७७ | २४ | चतुर्विंशो | चतुर्विंशो |
| ३२८१ | १४ | अत उत्तरं कामं[१०] यज्ञार्हाः | यज्ञार्हाः ![१०] |
| ,, | २८ | १०. नास्ति वि[१]. | अत उत्तरं य° वि[१]; अत उत्तरं कामं य° वि[१] अ[१]. |
| ३२८४ | ९ | सृष्टसुखाः | सृष्टमुखाः |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३२८४ | २४ | हस्तग्राहस्य | आगच्छ हस्तग्राहस्य |
| ३२९५ | २७ | सम्बधिनी | सम्बन्धिनी |
| ३३१५ | ९ | मे यत्[३] | मे[३] |
| ,, | २६ | ३. नास्ति वि'; य वि[२]. | ३ मे य वि'; मे यत् अ'. |
| ३३२६ | २५ | अनन्तरमेव[१४] | यदा इह कश्चित् अवपश्यति युद्धं हिंसायुक्तम् उपस्थितम् अनन्तरमेव[१४] |
| ३३२८ | १४ | ववृत्यः | ववृत्युः |
| ३३२९ | ५ | पूर्जजा° | पूर्वजा° |
| ३३३४ | ३३ | स्तुवती | स्तुवन्ती |
| ३३३७ | २ | अपि ततो | विततान् |
| ,, | ३ | सन्तर्पितौ | सह अन्तर्हितौ |
| ,, | १९ | पचत् | पचति |
| ३३३८ | ८ | आत्मानो† | आत्मनो† |
| ३३४० | ३१ | °चरयम् | °चरीयम् |
| ३३४२ | १४ | अस्य | × |
| ,, | १७ | पिबेत् । स्वाशितः | × |
| ३३४३ | १ | पृथिव्याः । | पृथिव्याः । |
| ३३४४ | ३ | इदं | इदं |
| ३३४७ | ६ | सिहः । | सिंहः । |
| ३३५१ | ८ | मित्रा | मित्रो |
| ,, | १७ | सवस्याऽ° | सर्वस्याऽ° |
| ३३५२ | १३ | आ | × |
| ३३५८ | १३ | युस्मत्स° | युष्मत्स° |
| ३३६८ | ६ | आह । अग्नेः जनयित्रोः | आह अग्ने जनयित्रीम् । |
| ३३६८ | ७,८ | शम्या शम्याम् उद्गिरति । | × |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३३६८ | ८ | [२]इमाम् | [२]याम् |
| ३३६८ | ८ | यियक्षवः । शम्यागर्भाद् | यियक्षव इति शम्यागर्भाद् हि |
| ३३७२ | ६ | व्यत्येन | व्यत्ययेन |
| ,, | १८ | वेङ्कटाचार्य° | वेङ्कटमाधवाचार्य° |
| ३३७४ | ४ | पश्यन्तीव | पश्यन्तीह |
| ३३८१ | २ | तत् प्रवण | तत्प्रवणं |
| ,, | १५ | वत्सं° | वत्सं° |
| ३३८२ | २२ | दूषये[११] | दूये[११] |
| ,, | २४ | पित्रादिभ्यः अवधानम् । | यद्वा पित्रादिभ्यः अवहानम् । |
| ३३८७ | १७ | बभ्रणाम् | बभ्रूणाम् |
| ३३९१ | १९ | ईप्सितार्थे° | रुचितार्थे° |
| ,, | २२ | सर्वा | सर्वा एव |
| ३३९९ | १० | जैत्र | जैत्रं |
| ३४०६ | ३ | वा | हरितवर्णरश्मिकेश ! वा |
| ३४१२ | ९ | चित्-छब्दो | चित्-शब्दो |
| ३४१८ | १३ | °नावजु° | °नावाजु° |
| ,, | १९ | अन्तः । | अन्तः |
| ३४२० | १ | प्रातया° | प्रातर्या° |
| ३४२१ | २६ | °वंत्यया° | °वंर्त्यया° |
| ३४२२ | २७ | १-१. ··· मूको; ···मूको. | १-१. ···वि[१] अ; ··· वि[१]. |
| ३४३० | ६ | विप्रा ! | विप्राः ! |
| ,, | १७ | 'ऋ गतौ' | 'ऋषी गतौ' |
| ३४३४ | ७ | बधार्थम् | वधार्थम् |
| ३४३६ | ११ | दर्शनीयः ![७] | दर्शनीय ![७] |
| ३४३७ | ६ | अस्मत् सोमा° | अस्मत्सोमा° |
| ३४४३ | ६ | °धृष्या | °धृष्या |
| ३४४४ | १४ | अयज्वाना | अयज्वान |

